॥ ॐ ॥ श्रीगणेशाय नमः ॥ अथ वीरमित्रोदयाख्यधर्मशास्त्रं लिख्यते ॥ ० ॥ तत्र प्रथमं व्यवहाराख्यप्रकरणम् ॥ * ॥
॥ पुरतः प्रविलोक्य भर्गचापम्परतः कामपि कामकार्मुकश्रियाम् । पुलकाञ्चितपीनबाहुदण्डः [illegible]तनाद्रघुप्रकाण्डः ॥ १ ॥
स्वस्तिश्रीयुतवीरसिंहनृपतेराज्ञावशादुत्सुकः श्रीमित्राभिधपण्डितः प्रतिदिशङ्कीर्त्यानिशं मण्डितः । नानानिर्णयवर्णनं व्यव
निनां संख्यावताम्प्रीतिदं सम्प्राप्तव्यवहारसाधकमिमं कुर्वे प्रकाशम्परम् ॥ २ ॥ उद्भूतप्रभवप्रजापरिभवप्राग्भारभङ्गाङ्कुता
नन्ताकारमरागमस्मरतुधाराध्यन्निदिद्ध्यासनैः । धर्मैकाश्रयमाश्रयम्मुनिगिरामद्धासदुद्धारकम्प्रस्तौमि व्यवहारमच्युतमिवप्रा
क्प्रस्तुतम्प्राक्तनैः ॥ ३ ॥ परिभाषापरिष्कारः प्रमाणानान्निरूपणम् । विवादपदनिर्देशः प्रकीर्णकविवेचनम् ॥ ४ ॥ एवम्प्र
करणान्यत्र चत्वारि प्रथमे पुनः । लक्षणं व्यवहारस्य निरुक्तिर्मुनिभाषिता ॥ ५ ॥ व्यवहारस्य भेदाश्च स्वस्वलक्षणविचक्षणाः । सा
मान्यतो विशेषाच्च परिभाषाप्रकाशनम् ॥ ६ ॥ सामान्यपरिभाषायान्धर्माधिकरणेक्षणम् । दर्शने व्यवहारस्य राज्ञो विधिविवे
चनम् ॥ ७ ॥ प्राड्विवाकस्वरूपञ्च सभापतिसभासदाम् । निरूपणञ्च सभ्यानामयुक्तिकवचावचम् ॥ ८ ॥ केषाञ्चिन्मुख्यभि
ज्ञानामपि स्थानं सभास्थले । तत्प्रयोजनमादेयानादेयव्यवहारयोः ॥ ९ ॥ विवेचनमथो कार्य्ये सद्दूष्टकसभापतेः । प्रतिज्ञा
मस्कृतूनां पदानां सिद्धिशालिनाम् ॥ १० ॥ निरूपणमसद्दूष्टावदष्टेच सभापतेः । सद्दूष्टकस्य दोषोक्तिः सम्यक्दृष्टौ फला
भिधा ॥ ११ ॥ विशेषपरिभाषायां प्रत्यभियोगनिर्णयः । निह्नवादौ विधिस्तत्र निह्नवादिविवेचनम् ॥ १२ ॥ विलम्बो नरदानस्य
क्वचिन्नैव विलम्बनम् । आद्ये प्रकरणे त्वर्था विविच्यन्ते क्रमादमी ॥ १३ ॥ उपोद्धातप्रसङ्गाद्यैरन्येऽपि तदनुव्रताः । द्वितीये तु
साक्ष्यादिलक्षणान्तत्र साक्षिणः ॥ १४ ॥ असाक्षिणस्तत्र हेतुः साक्षिप्रश्नविधिस्ततः । तद्द्वैधे निर्णयः कौटसाक्ष्ये क्वचिददोषता
॥ १५ ॥ निर्णयो लिखितस्याथ तद्भेदास्तत्परीक्षणम् । साक्षिणां लिखितस्यापि शुद्धत्वेन प्रमाणता ॥ १६ ॥ भुक्तिर्विशेषणान्य
स्याश्चार्थापत्त्यनुमानता । लौकिकानाम्प्रमाणानामभावे दिव्यभावना ॥ १७ ॥ दिव्यभेदास्तदावस्था देशकालाधिकारिणः । त

न्यानुकारत्वद्विशेषविधयो विविधाक्रमात् ॥ १८ ॥ तेषामपि च शङ्खाद्याऽनुमानत्वेन मानतः । एतेष्वेव विवियन्ते येऽतार्थ्यकेम
तःक्रमात् ॥ १९ ॥ व्यवहारपदस्यादावस्मादृशो द्विष्टानि लक्षणम् । तेषां सामान्यमथ तद्भिदानां विविधा विधा ॥ २० ॥ एतेषां
सम्यग्व्यत्नेनुरीयेनुपुण्यकीर्तिकम् । यत्नोऽत्रमुप्रयुक्तस्तद्विविच्य प्रतिपाद्यते ॥ २१ ॥ अथ कोऽयं व्यवहारः ॥ ० ॥ प्रमाणगम्यार्थ
स्तम्भःपक्षप्रतिपक्षपरिग्रह इति चेन्न । वादादेरपि तत्त्वापत्तेः । लिखितादिःप्रमाणविशेषःपरिगृह्यत इति चेत् । तथापि तर्क
प्रत्यक्षविरोधात् । अनुमानादबहिर्भावाच्च तेषामव्यावर्तकत्वात् । अत एवान्यविरोधेन स्वसंबन्धितया कथनमित्यपि परास्तम् ।
प्रमाणान्तर्भावेन स्वरूपनिरूपणानौचित्यात् कथनादेर्व्यवहारपदवाच्यत्वे व्यवहारत्वापत्तेः पश्येदित्यादावनन्वयाच्च । उच्यते ।
ऋणादानादिलौकिकार्थविषयवाक्यैर्व्यवहारः । कथाव्यपदेशाभाववस्तुशास्त्रीयपदार्थविषयत्वात् । अभिकरणादिव्यव
हे शूद्रोऽयं यात्रैदि कार्यविषयककथायां न तत्र व्यवहारव्यपदेशः । अत एव यथायथं हेत्वाभासनिग्रहस्थानादियोजनमपि
युक्तम् । तच्च तत्र तत्र प्रदर्शयिष्यते । चतुष्पान्नमपि तस्य तद्विशेषत्वेनोपपादयिष्यते । यत्तु गोपालेन तत्रनिर्वचनेषु
प्रत्याहारत्वमेवास्येति मिथ्यमतत्वेनोपन्यस्य जयभङ्गफलकत्वात्स्थापनावसानत्वाच्च जल्पमेवायमिति निर्वचनं रत्नाकरैरमप्य
युक्तम् । संप्रतनाभियोगभेदेन उभयरूपत्वस्यैव युक्तत्वात् । वैतण्डिकस्य व्यवहारायोग्यत्वादस्य वितण्डात्मकत्वं परमसम्भवि ।
अन्यविरोधेन स्वसम्बन्धितया कथनमिति विज्ञानयोगिवचोऽप्येवं सति नायुक्तम् । न च पश्येदित्यनन्वयः । निर्णयार्थकथनत्वा
सर्वे निबन्धृभिरव्याख्यानात् । स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः । आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥ इति या
ज्ञवल्क्यवचनं यद्यपि व्यवहारपदान्यृणादानादीनि सामान्येन लक्षयति तथापि व्यवहारसामान्यलक्षणमपि समानसंबन्धिसंवेद्य
तयानतःप्रणीयते । तस्यायमर्थः । स्मृत्याचाराविरोधिधर्मप्रमाणातिक्रान्तरीत्यान्यैरभिभूतः पूर्ववासुरादिभ्यो व्यवहारदर्शि
भ्यो यद्यावेदयति तर्हि तदावेदनमनृणादिव्यवहारव्यपदविषयः । इति प्रसिद्धमृणादानादिलक्ष्यत्वेन मन्वाद्युक्तमुपधि

प्रमिति। एवञ्चार्थिनस्तार्थित्वमाधर्षकस्य प्रत्यर्थित्वं तयोर्विवादस्तु व्यवहार इति प्रतीयते। इदमेव च मिताक्षरायामन्य
विरोधेनेत्यादिना निष्कृष्टमुक्तम्। अन्यविरोधेनेत्यनुक्ते प्रश्नोत्तरादिरूपेण स्वसंबन्धिकथनमपि व्यवहारः स्यात्। स्वसम्बन्धि
तयेत्यनुक्ते एकसम्बन्धितया साक्षिणां कथनमन्यविरोधि भवत्येवेत्यस्याप्यर्थित्वापत्तिरतः स्वसम्बन्धितयेति॥ इदं चोत्तरचतुष्ट
येऽप्यनुगतं। न च सम्प्रतिपत्तावव्याप्तिः तत्रापि साध्यतया वादिना निर्दिष्टस्यासिद्धतया निर्देशे तद्विरोधपर्य्यवसानात्। अन्य
थोत्तरत्वभङ्गप्रसंगात्। यत्रापि द्वावपि भाषावादिनौ तत्रापि परस्परविरोधावश्यभावान्नाव्याप्तिः। इदं चाग्रे व्यक्तिभविष्यति।
यच्च कात्यायनेनोक्तं। प्रयत्नसाध्ये विच्छिन्ने धर्माख्ये न्यायविस्तरे। साध्यमूलस्तु यो वादो व्यवहारः स उच्यत इति। एतच्च व्यवहा
रहेतुव्यवहारस्वरूपोक्तिपरं तथा माधवीयपारिजातादिष्वेवं व्याख्यातम्। विहिताचरणनिषिद्धवर्जनादिप्रयत्नसाध्ये धर्मा
ख्ये वस्तुनि विच्छिन्ने विप्लुते सतीति व्यवहारहेतुरुक्तः॥ धर्माधर्मविप्लवस्यैव व्यवहारहेतुत्वात्। तथा च नारदः॥ मनुः प्रजा
पतिर्यस्मिन् काले राज्यमबूभुजत्। धर्मैकतानाः पुरुषास्तदासन् सत्यवादिनः। तदा न व्यवहारोऽभून्न द्वेषो नापि मत्सरः। नष्टे
धर्मे मनुष्येषु व्यवहारः प्रवर्त्तत इति। बृहस्पतिरपि। धर्मप्रधानाः पुरुषाः पूर्वमासन्नहिंसकाः। लोभद्वेषाभिभूतानां व्यवहारः
प्रवर्त्तत इति। न्यायेत्यादिना व्यवहारस्वरूपमुक्तम्। तत्र माधवीयव्याख्यानम्। न्यायः शिष्टसम्प्रतिपन्नं लौकिकमाचरणं
तस्य विस्तर इदं युक्तमिदमयुक्तमिति। उपपत्तिपुरःसरो निर्णयः। तस्मिन्विषयभूते तत्प्रवर्त्तकोऽर्थिप्रत्यर्थिनोः साध्यमूलसा
ध्यमृणादानादिपदं तन्मूलस्तद्विषयको यो विवादः स व्यवहार इति। मदनरत्ने तु न्यायः प्रमाणानि तस्य विस्तरः प्रवृत्तिर्यस्य त
स्मिन्विषय इति। साध्यमूलेत्यादि तुल्यम्। मदनरत्नाकरस्मृतिचन्द्रिकाकल्पतरुकारैः सर्वमेवेदं वचनं व्यवहारस्वरूपप
रतयापि व्याख्यानमुक्तम्। प्रयत्नसाध्ये कष्टसाध्ये पराभिभवेन स्वेच्छया भोक्तुमशक्ये गृहक्षेत्रादौ सति न्यायः प्रमाणं विस्तार्यते
प्रपंच्यते यस्मिन् तस्मिन् धर्माधिकरणे सदसि साध्यमूलेत्यादि पूर्ववत्। तेनापि प्रागुक्तमेवाविवक्षितमतस्तत्र्यपदकृत्येना

नीयमितव्यं । वयन्तु सर्वे सम्प्रत्ययन्त सामानाधिकरण्येन व्याचक्ष्महे । विहितानुष्ठानादिगोचरप्रयत्नसाध्ये धर्माख्ये न्यायवि
स्तरे । नीयते ऽर्थो ऽनेनेति न्यायः प्रमाणं श्रुतिस्मृत्यादि विस्तार्यते प्रवर्त्यते ऽस्मिन् श्रुत्यादि प्रमेय इत्यर्थः । विच्छिन्ने विविधं छिन्ने प्रमा
णापरिज्ञानमतात्पर्यानवधारणादिना दुर्ज्ञेये सति । यद्वा । धर्मश्चाख्यायते ऽनेनेति धर्माख्यो धर्मप्रतिपादक इति यावत् । न्या
यविस्तरे प्रमाणसमूहे श्रुतिस्मृत्यादौ प्रमादादिना विच्छिन्ने लुप्तप्राये सति साध्यमूलेत्यादिगतार्थमिति । हारीतः । स्वधर्मस्य
यथाप्राप्तिः परधर्मस्य वर्जनम् । न्यायेन क्रियते तत्तु व्यवहारः स उच्यत इति । न्यायेन प्रमाणेन । एतस्यापि पूर्वोक्त एवार्थः
॥ इति व्यवहारलक्षणम् ॥ * ॥ निरुक्तिमपि व्यवहारपदस्याऽमुमेवार्थमुपलक्षयति । सा च कात्यायनेनोक्ता । वि नानार्थे ऽव
संदेहे हरणं हार उच्यते । नानासन्देहहरणाद् व्यवहार इति स्मृत इति । अथ व्यवहारभेदाः नारदः । सोत्तरो ऽनुत्तरश्चेति स विज्ञे
यो द्विलक्षणः । सोत्तरो ऽभ्यधिको यत्र विलेखपूर्वकः पण इति । यदि पराजये हन्त तदा पराजयदण्डाभ्यधिकमेतावद्दास्ये
स्यामीति यत्र लिखनपूर्वकं प्रतिज्ञायते स सोत्तर इत्यर्थः । तद्रहितो ऽनुत्तर इत्यर्थात् उक्तम्भवति । स एव चतुष्पादश्चतुःस्थान
श्चतुःसाधन एव च । चतुर्हितश्चतुर्व्यापी चतुष्कारी च कीर्तितः । त्रियोनिर्द्व्यभियोगश्च द्विद्वारो द्विगतिस्तथा । अष्टाङ्गो ऽष्टादशपदः शतशाखस्तथैव च । धर्मश्च व्यवहारश्च चरि
त्रं राजशासनम् । चतुष्पाद्व्यवहारो ऽयमुत्तरः पूर्वबाधकः । तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिषु । चरित्रं तु स्वीकरणे
राज्ञीयान्तु शासनम् । सामाद्युपायसाध्यत्वाच्चतुःसाधन उच्यते । चतुर्णामपि वर्णानां रक्षणाच्च चतुर्हितः । कर्तॄन् तथा साक्षिण
श्च सभ्यान् राजानमेव च । व्याप्नोति यात्दृशो यस्माच्चतुर्व्यापी ततः स्मृतः । धर्मस्यार्थस्य यशसो लोकपङ्क्तेस्तथैव च । चतुर्णां करणा
देष चतुष्कारी प्रकीर्तितः । कामात्क्रोधाच्च लोभाच्च त्रिभ्यो यस्मात्प्रवर्तते । त्रियोनिः कीर्त्यते तेन त्रयमेतद्विवादकृत् । द्व्यभियो
गस्तु विज्ञेयः शङ्कातत्त्वाभियोगतः । शङ्का सतान्तु संसर्गात्तत्त्वं होढाभिदर्शनात् । पक्षद्वयाभिसंबन्धाद्विद्वारः समुदाहृतः ।

पूर्ववादस्तयोः पक्षप्रतिपक्षस्तदुत्तरः । भूतच्छलानुसारित्वात् द्विगतिः समुदाहृतः । भूतन्तत्त्वार्थसंयुक्तंप्रमादाभिहितंछलं । सजासपुरुषः सभ्यः शास्त्रंगणकलेखकौ । हिरण्यमग्निरुदकमष्टांगः समुदाहृतः । ऋणादानह्युपनिधिः संभूयोत्थानमेवच । दत्तस्यपुनरादानमशुश्रूषाभ्युपेत्यच । वेतनस्यानपाकर्मतथैवास्वामिविक्रयः । विक्रीयासंप्रदानंचक्रीत्वानुशय एवच । समयस्यानपाकर्मविवादः क्षेत्रजस्तथा । स्त्रीपुंसयोश्चसम्बन्धोदायभागोऽथसाहसः । वाक्पारुष्यंतथैवोक्तंदण्डपारुष्यमेवच । द्यूतंप्रकीर्णकञ्चैवेत्यष्टादशपदः स्मृतः । क्रियाभेदान्मनुष्याणांशतशाखोनिगद्यतेइति । यद्यपिप्रतिज्ञादीनां वक्ष्यमाणानांसाक्षाद्व्यवहारस्वरूपघटकत्वाद्व्यवहारपादकत्वंयुक्तम् । धर्मादीनान्तुतत्रसत्येस्थितोधर्मइतिनारदोक्तप्रकारेणैवनिर्णयमात्रहेतुत्वान्नसाक्षाद्व्यवहारःपादत्वमर्हं । याज्ञवल्क्यादिभिरतएवतेषामेवव्यवहारपादत्वमुक्तंनतुचत्वारिमिथ्येप्रदर्शयिष्यन्ते । तथापिनिर्णयास्यचतुर्थव्यवहारपादहेतुत्वेनगौणमेवव्यवहारपादत्वमेषामत्रोक्तं । व्यवहारपदेननिर्णयएववालक्ष्यते । तद्धेतुत्वन्तत्पादत्वमितितद्द्रष्टव्यम् । तथाचवृहस्पतिः । धर्मादीनांनिर्णयहेतुत्वंस्पष्टमेवाह । धर्मेणव्यवहारेणचरित्रेणान्पाज्ञया । चतुःप्रकारोभिहितः सन्दिग्धेर्थेविनिर्णयइति । गौणानामेवान्धर्मादिपादानामधिकरणकथनम् । तत्रसत्येस्थितोधर्मइत्यादिना । अत्रमाधवीयेचरित्रंतुस्वीकरणइतिपाठंलिखित्वादेशाचारचरित्रंतत्स्वीकारेतदेवनिर्णयहेतुरितिव्याख्यातम् । कात्यायनवचनस्तत्र । यद्यदाचर्यतेयत्रधर्म्यंवाधर्म्यमेववा । देशस्याचरणंनित्यंचरित्रन्तद्धिकीर्त्तितम् । चत्वारेऽस्वरेणतुचरित्रन्तुपुस्तकरणमितिपठित्वापुस्तमपञ्जिकेसर्वः । तत्करणमधिकरणंयस्येतिव्याख्यातन्तद्रूढिहीनाद्वचनान्तरशस्मादाचक्ष्यम् । तेषांनिर्णयहेतुत्वंप्रपञ्चितंकात्यायनेन । दोषाकारीतुकर्तृत्वंधनहारीस्वकन्धनं । विवादेप्राप्नुयादत्रसधर्मेणैवनिर्णयः । वाक्पारुष्यस्तेयादिदोषकारीव्यवहारप्रवर्त्तनमंतरेणैवाऽनुतापादिनाधर्माभिमुखोऽधर्माद्भीतस्स्वस्वस्यदोषकर्तृत्वंस्वयमभ्युपेति । यत्रधनस्वामीधर्माभिमुखाद्धर्मभीरोद्वाऽधम

B

णादेर्व्यवहारं विनैव स्वकीयं धनमाप्नोति तथोभयत्र संप्रतिपत्त्युत्तरं इति यावत्। धर्मेणैव निर्णय इत्यर्थः ॥ अत एवोक्तं तत्र सत्ये स्थितो धर्म इति। स्मृतिशास्त्रमनुयत्किंचित्प्रार्थितं धर्मसाधकैः। कार्याणां नियमार्थेषु व्यवहारः स्मृतो हि सः। धर्मसाधकैः सभ्यैः स्मृतिशास्त्रं साक्ष्यादिक्रियाप्रत्यायकमर्थिप्रत्यर्थिनोः कार्यनिर्णयार्थं प्रार्थितं प्रख्यापितं यत्र च तदनुष्ठाद्यव्यवहारप्रश्नेनेन निर्णयकरणमिति यावत्। तत्र च व्यवहारो निर्णयहेतुरित्यर्थः ॥ अत एवोक्तं। व्यवहारस्तु साक्षिषु तिष्ठति। साक्षिग्रहणं प्रमाणोपलक्षणम्। चरित्रविषयं वचनं पूर्वमेवोपवर्णितम्। न्यायशास्त्राविरोधेन देशदृष्टेस्तथैव च। यं धर्मं स्थापयेद्राजा न्याय्यं तद्राजशासनम्। न्यायशास्त्रं व्यवहारप्रतिपादकं स्मृत्यादिशास्त्रम्। तदविरोधेन देशदृष्टेर्देशाचारस्याविरोधेनेति। सम्प्रत्यान्तर्गतस्यानिष्कृष्यान्वयः राजायं धर्मं स्थापयेदाज्ञापयेत्तन्न्याय्यमुक्तं राजशासनं अन्यदन्याय्यमित्यर्थात्। तादृशशासनानुरोधेन निर्णयः कर्त्तव्य इत्यर्थः। धर्मादीनामुत्तरोत्तरस्य पूर्वपूर्वबाधकमुत्तरत्र विवक्ष्यते। असतां विषये स्तेयादीनां संसर्गात्पारदार्यस्तेयादिशंकातयाभियोगः। होडालिंगं चौर्यादिचिह्नं तद्दर्शनात्साक्षाद्दर्शनं वा होडादर्शनं तस्मादनेनैव चौर्यादिकृतमिति निश्चयरूपेणाभियोगस्तत्त्वाभियोग इत्यर्थः ॥ हिरण्यगन्धुदकानां यथासम्भवं व्यवहाराङ्गत्वं अष्टादशपदानां निरूपयिष्यन्ते क्रियाभेदादेकैकव्यवहारपदसम्बन्धिव्यापारभेदादनन्तरप्रकारत्वं शाश्वतम् ॥ इति व्यवहारभेदः ॥ * ॥ अथ सामान्यपरिभाषा ॥ तत्र धर्माधिकरणाख्यासभानिरूपणम्। वृहस्पतिः। दुर्गमध्ये गृहं कुर्याज्जलवृक्षान्वितं पृथक्। प्राग्दिशि प्राङ्मुखीं तस्य लक्षण्यां कल्पयेत्सभाम्। माल्यधूपासनोपेतां बीजरत्नसमन्विताम्। प्रतिमालेख्यदेवैश्च युक्तामग्न्यम्बुना तथेति। लक्षण्यां वास्तुशास्त्रोक्तं लक्षणेन तु लक्षिताम्। अग्न्यम्बुनेति समाहारद्वंद्वः। सभायां धर्माधिकरणत्वं कात्यायन आह। धर्मशास्त्रानुसारेण अर्थशास्त्रविवेचनम्। यत्राधिक्रियते स्थाने धर्माधिकरणं हि तदिति। तत्र सभ्योपवेशनमाह मनुः। यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रयः। राज्ञश्चाधिकृतो विद्वान्ब्राह्मणांस्तां सभां विदुरिति। त्रय इत्युपलक्षणम्। अधिकानामपि स्मृतत्वा

म्। तच्चवक्ष्यते। अधिकृतोविद्वान्प्राड्विवाकःस्तत्रप्रविशेत्सभाम्। सभामेवप्रविश्येदित्यादिवचनात्सभामुख्यंव्यवहारद
र्शनस्थानम्। अन्यान्यथमुख्यानिव्यवहारवचनादवगंतव्यानि। देशस्थानानिवादानांपञ्चचैवाब्रवीद्भृगुः। निर्णयंयेन
गच्छन्तिविवादंप्राप्यवादिनः। आरण्यास्तुस्वकैःकुर्युःसार्थिकाःसार्थिकैस्तथा। सैनिकाःसैनिकैरेवग्रामेप्युभयवासिभिः।
उभयानुमतञ्चैवगृह्यतेस्थानमीप्सितम्। कुलिकाःसार्थमुख्याश्चपुरग्रामनिवासिनः। ग्रामपौरगणश्रेण्यश्चातुर्विद्यश्च
वर्गिणः। कुलानिकुलिकाश्चैवनियुक्तानृपतिस्तथेति। स्वकैरारण्यकैः। ग्रामेपीत्यपिशब्दाद्ग्रामेऽरण्यादौचनिवसन्तितेउ
भयवासिभिर्निर्णयंकुर्युरुभयव्यवहाराभिज्ञत्वात्तेषां। कुलिकाःकुलश्रेष्ठाः। सार्थोग्रामदेवयात्रादौमिलितोजनसंघःतन्मु
ख्याःसार्थवाहादयः। पुरंमुख्यनगरम्। तस्मादर्वाचीनोग्रामः। इतिपुरग्रामनिवासिनोभेदः। सार्थःकुलिकादीनिपञ्चस्थाना
नितानिचारण्यकादीनामेव। ग्रामादीनिदशस्थानानिसाधारणानि। ग्रामोग्रामाकारेणावस्थितोजनः। पौरःपुरवासिनां
समूहः। श्रेण्योरजकाद्यष्टादशहीनजातयः। चातुर्विद्यःआन्वीक्षिक्यादिविद्याचतुष्टयोपेतः। वर्गिणोगणप्रभृतयः। इ
तिसभानिरूपणम्॥ * ॥ अथव्यवहारदर्शनविधिः। तत्रमनुः। व्यवहारान्दिदृक्षुस्तुब्राह्मणैःसहपार्थिवः। मन्त्रज्ञैर्मन्त्रि
भिश्चैवविनीतःप्रविशेत्सभाम्। तत्रासीनःस्थितोवापिपाणिमुद्यम्यदक्षिणम्। विनीतवेषाभरणःपश्येत्कार्याणिकार्थिणाम्।
प्रत्यहंदेशदृष्टैश्चशास्त्रदृष्टैश्चहेतुभिः। अष्टादशसुमार्गेषुनिबद्धानिपृथक्पृथक्। धर्मासनमधिष्ठायसंवीताङ्गःसमाहि
तः। प्रणम्यलोकपालेभ्यःकार्यदर्शनमारभेदिति। व्यवहारान्पूर्वलक्षितान्दिदृक्षुर्निर्णिनीषुः। पार्थिवोभिषिक्तक्षत्रियः। त
मेवाधिकृत्यप्रजापालनव्यवहारदर्शनादिविधानात्। यथावृत्तोभवेन्नृपइत्यादिषु। नृपग्रहणात्तुअन्यस्यापितत्स्थानापन्न
स्यप्रजापालनोपयिकंधर्मजातम्भवतीतिगम्यते। आसीनस्थितोवेतिसामर्थ्याद्यनुसारेणपूज्यापूज्यार्थिप्रत्यर्थ्यपेक्षयावाव्यव
स्थितोविकल्पः। दक्षिणपाण्युद्यमनंकार्यिणामवधानबोधनार्थं। विनीतवेषाभरणत्वन्तेषामपिप्रतिभानिवृत्त्यर्थमुपात्तं। प्र

न्वहमित्यनेनाह्निकवद्व्यवहारदर्शनस्यावश्यकतोक्ता। देशदृष्टाः श्रुतिस्मृत्यनुक्ता अपि देशाचाररूपास्तदविरुद्धा हेतवो युक्ति-
कलापाः। यथोदीच्यमध्यमानां कन्यां याचितुमागताय भोजनदानं कन्याप्रतिश्रवणात् प्रतिबद्धमतस्तस्मिन् कृते अवश्यं तस्मै कन्या-
दानव्येति निर्णेतव्यम्। एवमन्यदप्यूह्यम्। यथाह कात्यायनः। यस्य देशस्य यो धर्मः प्रवृत्तः सार्वकालिकः। श्रुतिस्मृत्यनुरोधे-
न देशदृष्टः स उच्यत इति। मार्गेषु व्यवहारपदेषु। निबद्धानि संबद्धानि धर्मनिर्णयोपयोगित्वात् धर्मासनं। सम्बीतांगो वस्त्राद्या-
वृतशरीर इत्यनेन नीतिशास्त्रोक्तं कर्मणादि परिहारोपयोगि सर्वमुपलक्षितम्। समाहितो विक्षेपशून्यः। विक्षेपदशायां न्ताव-
प्रतिभासायोग्यत्वाच्चित्तस्य लोकपालप्रमाणोपि नतदुपयोगी। याज्ञवल्क्यः। व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह। धर्मशा-
स्त्रानुसारेण क्रोधलोभविवर्जित इति। अत्र व्यवहारान्स्वयम्पश्येत्सभ्यैः परिवृतोन्वहमित्यनेनैव याज्ञवल्क्येन विहितस्य व्यवहा-
रदर्शनस्यानुवादो ब्राह्मणसाहित्यादि विधानार्थः। ब्राह्मणग्रहणं क्षत्रियादिव्युदासाय। सह युक्तेऽप्रधान इति व्याकर-
णस्मृतेः। सहार्थतृतीयया तेषामप्राधान्यं गम्यत इति। तत्प्रयोजनमदर्शनान्यथादर्शनयोर्न्नितेषां दोषः। किन्तु राज्ञ एवे-
ति बोधनम्। धर्मशास्त्रानुसारेणेत्यनेनैव क्रोधलोभविवर्जिते सिद्धे तद्वर्जनोपादानं क्रोधलोभाभ्यामदर्शनान्यथादर्शनयोर्दो-
षातिशयप्रदर्शनार्थम्। नच क्रियानुवादेनानेकगुणविधाने वाक्यभेदः। दर्शनकर्तृतया वाक्यान्तरप्राप्तेनावद्विशेषणवैशि-
ष्ट्यस्यैकार्थस्य बोधनात्तदनापत्तेः। पौरुषेयवाक्ये तात्पर्यानुरोधेन तस्यादोषत्वाच्च। ननु सर्वैर्पि व्यवहारदर्शनविधयो न तावत्के-
वलादृष्टार्थः। प्रजापालनौपयिकदुष्टादुष्टपरिज्ञानस्य दृष्टस्यावश्यकत्वात्। अत एव विज्ञानेश्वरः। अभिषेकादिगु-
णयुक्तस्य राज्ञः प्रजापालनम्परमो धर्मस्तच्च दुष्टनिग्रहं विना न सम्भवति। तत्परिज्ञानञ्च न व्यवहारदर्शनं विनेति व्यवहारदर्श-
नमहरहः कर्तव्यमित्युक्तम्। व्यवहारान् स्वयं पश्येदित्यादि। न च तदेव फलमिति वाच्यम्। स्वर्गादिफलस्यादर्शनान्यथाद-
र्शनयोः प्रत्यवायस्य च वचनान्तरैर्बोधनात्। तथा च कात्यायनः। स प्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः। ससभ्यः प्रेक्षको रा-

जास्वर्गे निष्ठति धर्मेतइति । अत्रब्राह्मणपुरोहितशब्देन अनियुक्तानान्तेषांग्रहणम् । सभ्यशब्देननियुक्तानाम् । बृहस्पतिर
पि । विप्रोधर्मद्रुमस्यादिःस्कन्धशाखेमहीपतिः । सचिवाःपत्रपुष्पाणिफलंन्यायेनपालनम् । यशोवित्तंफलरसोभोगोपयु
ह्पूजनम् । अजेयत्वंलोकपंक्तिःस्वर्गेस्थानञ्चशाश्वतम् । विदित्वैतान्न्यायरसान्समोभूत्वाविवादिनाम् । यत्रलोभादिकंराजा
धर्म्मंकुर्याद्विनिर्णयमिति । न्यायरसान्व्यवहारदर्शनफलानि । प्रत्यवायोपिमनुनोक्तः । विद्धोधर्मोह्यधर्मेणसभांयत्रोप
तिष्ठते । शल्यंचास्यनिकृन्तन्तिविद्धास्तत्रसभासदः । पादोऽधर्मस्यकर्त्तारम्पादःसाक्षिणमृच्छति । पादःसभासदःस
र्वान्पादोराजानमृच्छति । कर्तृसमपापाःसर्वेभवन्तीतितात्पर्यम् । ननन्यपापस्यान्यत्रसंक्रमसम्भवः । नारदोपि ॥ न्याय
मार्गादपेतन्तुज्ञात्वाचित्तंमहीपतेः । वक्तव्यन्तत्प्रियंनात्रसभ्यःकिल्विषीभवेत् । तत्प्रियंनवक्तव्यंराज्ञःमनोनुकूलमेवनवाच्य
म् । किन्तुन्याय्यएवंसतिसभ्योनकिल्विषीभवेदितिनञ्द्वयान्वयः । अधर्मतःप्रवृत्तंतंनोपेक्षेरन्सभासदः । उपेक्ष्यमा
णाःसन्दपानरकंयान्त्यधोमुखाः ॥ अन्यायेनापितंयान्तंयेनुयान्तिसभासदः । तेपितद्भागिनस्तस्माद्बोधनीयःसतैर्नृपइति ।
मनुः । राजाभवत्यनेनास्तुमुच्यन्तेचसभासदः । एनोगच्छतिकर्त्तारन्निन्दार्होयत्रनिंद्यतइति । किंचदृष्टापरिज्ञानोपाये
ष्वनेकेषुप्राप्तेषुविधावस्मिन्नभ्युपगम्यमानेऽयंनियमविधिः । स्वर्गादिफलप्रत्यवायपरिहारयोर्भव्यत्वेऽपूर्वविधिरितिवैरू
प्यंचापद्यते । व्यवहारदर्शनमात्रोपायकत्वंयदिदृष्टादृष्टपरिज्ञानस्यतर्हितदर्थेनयाऽनुष्ठानार्थतयाज्ञानस्येतिविधिर्व्यर्थः
। अथयथाभट्टसोमेश्वरेणानुष्ठानंविनाभूतस्यापिज्ञानस्यविध्यधीनांगत्वनिर्वाहायतदेवविद्युद्येत्यादिवाक्येनकर्माथेनयावि
धिरभ्युपगतोयथाचमिश्रादिभिर्लिंगादेवांगत्वंज्ञानस्येत्युक्तम् । तथाव्यवहारदर्शनस्यतदविनाभावेपिविधिरभ्युपेयताम् ।
नैवंकर्मानुष्ठानस्यापूर्वसाधनत्वात्तत्पर्यवसायिज्ञानविधिरविनाभावेप्युक्तः । दृष्टादृष्टपरिज्ञानस्यतुतदभावान्नांगापेक्षेति
वैषम्यम् । नचास्यापिप्रजापालनमदृष्टार्थमुपकुर्वतःपरम्परयाऽपूर्वपर्यवसानमित्यस्त्वङ्गत्वार्थएवविधिरितिवाच्यम्

। एवमपूर्वपर्यवसायिविधिसम्भवेपिश्रुत्यनुभावेऽनारभ्यविधेरध्ययनविधिप्रयुक्तार्थावबोधकत्वात्। अन्वयाध्ययनाध्यापनयोरप्रयुक्तत्वाच्च। ज्ञानस्यतुवाक्यादेवांगत्वंयदेवकरोतीतिश्रवणात्। येनकर्मणेच्छेत्तत्रजयाञ्जुहुयात्। एवंविनायकसम्पूजाग्रहहोमादेश्च विधानतः। कर्मणांफलसम्प्राप्तिरिति चश्रवणाज्जपहोमविनायकस्नपनग्रहयज्ञानामिवसम्पूर्णाधिकारनिवृत्तिश्चतद्विधिबोधिताध्ययनोपायकज्ञानाग्निजभङ्गपायान्तरस्यज्ञानाग्निद्वारकक्षेपप्रतिक्षेपात्। प्रजापालनंपरंज्योतिष्टोमाद्यपूर्वमेवस्वफलापूर्वंजनयतीत्यन्यदेतत्। अत्रब्रूमः। व्यवहारदर्शनोत्पन्नावेवविधेस्तात्पर्यम्। अन्येनुविषयस्तस्यनिमित्तफलोपाधिभेदेनाधिकारविषयःप्रयोगभेदस्त्वाग्निहोत्रंजुहोतीत्युत्पन्नस्ययावज्जीवस्यमग्निहोत्रंजुहुयात्। अग्निहोत्रंजुहुयात्स्वर्गकामइत्यत्रेव। अतोनवैरूप्यादिदोषः। दृष्टार्थतयातुनविधिरयम्प्रमाणान्तरसिद्धत्वात्तस्याःयद्यप्यव्यवहारशास्त्रेन्यायसिद्धानुवादकास्तवप्रायेविषयइत्येतस्यापितथात्वेनबाधकत्तथापिविधित्वेसम्भवत्यनुवादत्वमङ्गीकर्तुमसमर्थं। यत्रतुतदसम्भवस्तत्रतदेवाश्रीयतेव्यवहारशास्त्रत्वादिनिसकलनिबन्धस्वरसायातःसमाधिःदृष्टादृष्टपरिज्ञातेनुपायत्वादुपायान्तरप्राप्त्याव्यवहारदर्शनस्यपाक्षिकत्वतदास्यनियमविधित्वमेवाध्यापनादिविधीनामिवार्जनोपायतयानहृष्टदेवोपायाभावात्दुर्जनेप्रत्यवायकल्पनवद्दुपायान्तरात्दुष्टादुष्टपरीक्षयाप्रजापालनेप्यवसेयम्। स्मृत्यादीनाञ्चचैवर्णिकत्वानुवर्णाधिकारिकत्वात्। म्लेच्छादीनांयथाकथञ्चिद्दुष्टादुष्टपरिज्ञानेनप्रजापालनेपिनक्षतिः। नचैवंप्रजापालनविधेरप्यभिविक्तक्षत्रियाधिकारिकत्वादन्येषान्तत्रफलाभावेनाप्रवृत्तिः। दृष्टादृष्ट्यादिलाभार्थंकथंचित्प्रवृत्तावपितस्माद्धर्माभावप्रसङ्गोन्यथादर्शनादर्शनन्यायप्रवृत्त्यादिनाप्रत्यवायाभावापत्तिश्चेतिवक्तव्यम्। दयाहिंसादिसाधारणधर्मान्तर्भावेनप्रजापालनस्यतेषामपिधर्मजनकत्वात्। न्हपपदेनतत्त्वंयच्चसम्भवाच्च। तस्मादयमत्रनिष्कर्षः। अन्वर्गोपवादादिमूलभूतान्वयव्यतिरेकादिन्यायमूलकतायत्रसम्भवतितावद्व्यवहारशास्त्रस्यसर्वस्यममूलकताकल्पते। यद्वायेतदसम्भवस्तत्रादृष्टार्थक

नयावेद एव मूलं कल्प्यते । वास्तुसामुद्रिकादिविधिषु ज्योतिःशास्त्रायुर्वेदप्रामाण्यव्यवस्थापकत्वप्रसंगेनाचार्यैः स्मृत्यधिकार
शोव्यक्रमेव एतत्प्रपञ्चितम् । अत एवार्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिरित्युक्तम् । वचनविरोधे न्यायस्याबाधनादर्थशास्त्र
स्य च तन्मूलकत्वात् । यत्तु स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः इति वचनं तस्यायमाशयः । न्यायानुपष्टब्धस्मृत्यपेक्षया
न्यायोपष्टब्धा स्मृतिर्बलवतीति न्यायानुपष्टब्धस्मृतेस्तात्पर्यान्तरकल्पना कार्येति । तस्य चोत्सर्गापवादविषयव्यवस्थाविकल्पादि
रूपस्य न्यायस्य प्रत्यायकं हेतुमाह । व्यवहारत इति । वृद्धव्यवहारादन्वयव्यतिरेकादिरूपादनादिवृत्तव्यापारपर्यालोच्या
न्यायः प्रत्येतव्य इत्यर्थः । नारदोऽपि धर्मशास्त्रविरोधे तु युक्तियुक्तो विधिः स्मृत इति । धर्मशास्त्रयोर्विरोधे युक्तिर्न्यायः । न्यायप
र्यालोचनाभावे सोपपत्तिकं दोषमाह । बृहस्पतिः । केवलं शास्त्रमाश्रित्य न कर्तव्यो हि निर्णयः । युक्तिहीनविचारे हि धर्म
हानिः प्रजायते । चोरोऽचोरः साध्वसाधुर्जायते व्यवहारतः । युक्तिं विना विचारे तु माण्डव्यश्चोरतां गतः । असत्याः सत्यसङ्का
शाः सत्याश्चासत्यसन्निभाः । दृश्यन्ते भ्रान्तिजनकास्तस्माद्युक्त्या विचारयेत् । साध्वसाधुरिति छान्दसः सुलोपः । साधुर
साधुरित्यर्थः । व्यवहारतो निर्युक्तिकात् । अर्थशास्त्रं चात्र धर्मशास्त्रान्तर्गतमेव नीतिव्यवहारशास्त्ररूपं गृह्यते । औशनसा
द्यर्थशास्त्रस्य धर्मशास्त्रानुसारि स्वोपयनेनैव निरस्तत्वात् । विरोधोदाहरणं तु । हिरण्यभूमिलाभेभ्यो मित्रलब्धिर्वरा यतः ।
अतो यदेतत्प्राप्नाविमत्यर्थशास्त्रं धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितम् इति धर्मशास्त्रं । अनयोः क्वचित्तु व्यवहारे प्रव
र्तमाने विरोध आपतति । कस्यचित्प्रमाणतः पञ्च जयार्हस्य छलादिना जयेवधार्यमाणे सोऽत्यन्तमैत्रीयोग्यो मित्रं लभ्यते । अन्य
स्य तदवधारणे धर्मलाभो धर्मपरिहारश्च सत्यवादित्वात् । तत्र मित्रलाभमनपेक्ष्य धर्म एवानुरोद्धव्यः । द्वयोः प्रमाणयोरेक
मूलकत्वेन तुल्यबलत्वेऽपि प्रमेययोरर्थधर्मयोर्धर्मस्य प्राबल्यात् । प्रमाणबलाबलत्वे परीक्ष्येऽपि प्रमेयबलाबलानुरोधेन तस्य बाध्यत्वे
न शिष्टाकोपनयेत्यवस्थितत्वात् । किमुत समानबलाबलत्वे अत एव धर्मार्थसन्निपातेऽर्थग्राहिण एतदेवेति धर्मविरुद्धार्थग्र

हत्वा आपस्तंबेनैतच्छद्मरामृष्टं द्वादशवार्षिकं प्रायश्चित्तमुपदिष्टं । केचित्तु । गुरुम्वावालवृद्धौवाब्राह्मणंवाबहुश्रुतम् । आ
ततायिनमायान्तंहन्यादेवाविचारयन् । नाततायिवधेदोषोहन्तुर्भवतिकश्चन । प्रच्छन्नंवाप्रकाशंवामन्युस्तंमन्युमृच्छति ।
मन्युःक्रोधोमन्युंहन्तिनतुपुरुषःपुरुषान्तरमित्यर्थवादः । तथा आततायिनमायान्तमपिवेदान्तिगंरणे । जिघांसन्तञ्जिघां
सीयान्नतेनब्रह्महाभवेत् । जिघांसीयात्सन्नियाद्धन्ते दित्यर्थःइत्यादि । अग्निदोगरदश्चैवशस्त्रपाणिर्धनापहः । क्षेत्रदार
हरश्चैवषडेतेआततायिनःधनग्रहणेनप्राप्तावपिपृथक्क्षेत्रग्रहणाभिधानंस्वल्पस्यापिक्षेत्रस्यशासनाद्यारूढस्यहर्तुर्धनस्यचबहुत
रस्ययेनवृत्तिच्छेदएवंभवतितनावतोहर्ताततायीतिद्रष्टव्यम् । तथा उद्यतासिविषाग्निश्चशापोद्यतकरस्तथा । आथर्वणेनहं
ताचपिशुनश्चापिराजनि । यदभिधानेनावश्यम्प्राणात्ययोभवतीतितादृशपैशून्यस्यराजगामिनःकर्त्ता । भार्यातिक्रमकारीच
रंध्रान्वेषणतत्परःएवमाद्यान्विजानीयात्सर्वानेवाततायिनः । एवमाद्यानित्यनेनपधतुल्यस्वपीडाकारिणइत्युक्तम्भवति ।
उद्यतादिपदसमभिव्यवहारात्प्रवृत्तक्रियाएवाततायिनोनभूतभाविक्रिया । एतेषामाततायिनांवधेदोषाभावप्रतिपादकंव
चनकदंकमर्थशास्त्रम् । आत्मरक्षणार्थत्वात् । इयंविशुद्धिरुदिताप्रमाप्याकामतोद्विजम् । कामतोब्राह्मणवधेनिष्कृति
र्नविधीयतइत्यादिधर्मशास्त्रम् । दृष्टार्थत्वाभावात् । अनयोर्विरोधेसम्भवत्यपिआततायिनाततायिविषयत्वेनसामान्यविशे
षभावेनवाघ्यबाधकभावविपर्य्ययेधर्म्मशास्त्रत्वान्मान्यशास्त्रमेवबलवत् । आततायिवधेदोषाभावप्रतिपादनन्तुकथञ्चिदन्य
थात्मरक्षणासम्भवेआततायिवधमात्मरक्षणार्थंकुर्वतोऽनपराधत्वाद्राजदण्डाभावमात्रपरमर्थशास्त्रत्वात् । दुर्बलमित्युदा
हरणमर्थशास्त्रधर्मशास्त्रयोर्विरोधःस्यात् । अत्रविज्ञानेश्वरः । दोषाभावमाततायिवधेप्रतिपादयतांगुरुंवेत्यादिवचसांवि
ध्यन्तरशेषत्वादपिशस्त्रंवाशस्त्रादीनांविधिशक्तिप्रतिबन्धकानांश्रवणाच्चनस्वार्थम्परत्वंकिन्तुशस्त्रंद्विजातिभिर्ग्राह्यन्धर्मो
यत्रोपरुध्यतइत्युपक्रम्य । आत्मनश्चपरित्राणेदक्षिणानाञ्चसंगरे । स्त्रीविप्राभ्युपपत्तौचघ्नन्धर्मेणनदुष्यतीतिआत्मार

क्षणोदक्षिणादीनांयज्ञोपकरणानांरक्षणेयुद्धे च स्त्रीविप्रानुग्रहनिमित्तमवध्यानप्याततायिनोघ्नतोनदोषः । किमुततदन्यानितिकैमुतिकन्यायेनाततायिनमकूटशस्त्रेण घ्नन्नदोषभागितिदण्डापू

वमुक्तानतदर्थवादोयमुच्यते । गुरुमित्यादिगुर्वादीनवध्यान् स्वार्थपरतया मन्यमानानततायिवधेदोषोऽस्ति वचनादासादितस्तुम

न्यायेनस्तुतिप्रतीतेर्नगुर्वादीनांवध्यत्वप्रतीतिः । नहिंस्याद्ब्राह्मणान् गांचसर्वाश्चैवतपस्विनइतिमनु

नुवचनविरोधश्च । यच्च । आचार्यञ्च प्रवक्तारं मातरं पितरं गुरुम् । नहिंस्याद्ब्राह्मणान् गांचसर्वांश्चैवतपस्विनइतिमनु

वचनम् । तदपिब्राह्मणादिहननस्यवचनान्तरैरेवनिषिद्धत्वादाततायिनामपितेषांवधोमाकार्यइति । अर्थकास्वएवार्थव

दिति । तद्विरोधेपिगुर्वादयोनाततायिवधस्यदोषोजनकत्वे । ननुगुरुंवेत्यादिवचसांत्वन्मतेस्तुतिपरत्वेनाततायिवधदोषाभा

वाप्रतिपादकत्वादप्रसक्तदोषाभावप्रतिप्रसववैयर्थ्यमित्यनाततायिनामेवतेषांवधेदोषातिशयप्रतिपादनार्थत्वेनमानवस्मा

र्थवत्वमितिनतद्विरोधइतिचेत् । मैवम् । यस्यमतेतेयाम्वचनानामाततायिवधेदोषाभावप्रतिपादकत्वंतंप्रतिप्रतिप्रसवार्थ

त्वापादनेविरोधपादनेविज्ञानेश्वरतात्पर्यात्तर्हितस्यभवन्मतेदोषातिशयार्थत्वावश्यम्भावात्त्वन्मतेपितथैवास्तु । क्वचिद्विरो

धइतिचेत् । भ्रान्तोसि । उभयत्रगुर्वाद्युपादानेविरोधप्रसक्तेरपरिहार्यत्वात् । विज्ञानेश्वरमतेत्वर्थवादकल्पयोरन्यग

त्यसम्भवेहिंसानभिसन्धिनात्मरक्षणेप्रमादोपजातगुर्वाद्याततायिभिन्नाततायिवधेराजदण्डाभावलघुप्रायश्चित्तयोगुर्वा

दिविषयेऽपवादार्थमनुवचनमित्यदोषः । वस्तुतस्तुशस्त्रंद्विजातिभिर्ग्राह्यमित्यनेनोक्तस्याततायिवधेदोषाभावस्यप्राय

श्चित्तराजदण्डाभावयोश्चाचार्यादिविषयेऽपवादार्थमानवम् । आततायिवधेदोषाभावस्त्वपलायनादिनाकेनापिप्रकारेणा

त्मरक्षणासम्भवेबोध्यः । अन्यथावचनस्याहृष्टार्थत्वंहिंसादोषप्रतिपादकशास्त्रस्याततायिदोषेऽप्यनवाधश्चेत्युभ

यमप्यन्यायमापद्येत । गुर्वादिविषयकदोषाभावस्यप्रतिपादकार्थवादस्यवानाततायिगुर्वादिवधापेक्षयाततायिवधे

दोषाल्पत्वप्रायश्चित्ताल्पत्वेराजदण्डाभावश्चेत्यर्थवचनानिस्तुत्युपयोगिगुणवादइति ॥ * ॥ अत्रभट्टभवदेवः ॥ ● ॥ स्त्रा

ध्यायिनं कुले जातं हन्यादेवाततायिनम्। नतेन ब्रह्महा सः स्यान्मन्युस्तं मन्युमृच्छतीति। वसिष्ठवचनात्तदेकवाक्यतया वाग्रह्मा
दिश्रवणेऽपि गुर्वादिवाक्यानाम्प्रतिप्रसवविधित्वमेव नत्वर्थवादत्वम्। नच सुमन्तुवचनेनाततायिवधदोषोऽन्यत्र गोब्राह्मणादि
त्यनेन विरोधः। सूत्रच्छेदापरिज्ञानात्। तथाहि। सूत्रत्रयमिदम्। आततायिवधे नेत्येकं १। दोषोऽन्यत्रेत्यपरम् २। गोब्रा
ह्मणात्त्वातः प्रायश्चित्तं कुर्यादित्यन्यत् ३। नत्र ब्रह्मवधप्रायाश्चित्तम्‌ब्राय स्तैः सम्बन्धं कुर्यात्तस्याप्येतदेव प्रायश्चित्तमित्यभिधा
य सुमन्तुराह। आततायिवधेनेति। आततायिनो ब्राह्मणस्य वधे तत्तेन प्रायत्तमिति प्रथमस्य सूत्रस्यार्थः। दोषोऽन्यत्र। आ
ततायिव्यतिरिक्ते दोष इति द्वितीयस्य। गोब्राह्मणात्त्वातः प्रायश्चित्तं कुर्यादिति प्रायश्चित्ताङ्गस्नानविधायकम्। तत्र गोहेतु
कं स्नानम्। व्यासआह। अयन्तेयानि तीर्थानि त्रिषुलोकेषु निर्व्ययः। अभिषेकः समस्तेषाङ्गवांशृङ्गोदकस्य चेति। ब्राह्म
ण शब्देनात्र विधायकं वाक्यमुच्यते। तद्धेतुकं स्नानमघमर्षणादिजपादिपूर्वकम्। द्वंद्वैकवद्भावश्च गोब्राह्मणादिति। तेन
गोहेतुकब्राह्मणहेतुकस्नानाभ्यां प्रायश्चित्ताधिकारी भवतिनस्नानमाचेणेति तृतीयस्येति। यदपि भविष्यपुराणवचनम्।
हत्वानुप्रहरन्तं वै ब्राह्मणं वेदपारगम्। कामतोऽपि चरेद्धीरः द्वादशाब्दाख्यमुत्तमर्मिति। तदपिनाततायिवधविषयम्। प्र
हारशब्दस्य वधायकत्वात् तेनायमर्थः। यश्चक्षुरादिवयवानाम्प्रकर्षेणाहरणे प्रवृत्तस्तद्वधेऽपि कामतोऽपि द्वादशवार्षिकमेव
प्रायश्चित्तमित्यर्थ इत्याह। तदयुक्तम्। आचार्यं चेत्यस्य मानवस्योक्तयुक्तिवशादाततायि आचार्यादिवधे दोषप्रतिप्रसवार्थत्व
स्यापापादित्वात्तदेकमूलतया सुमन्तुवचनस्य मिताक्षरोक्तच्छेदेनैव व्याख्यातुमर्हत्वात्। तदुक्तच्छेदे दोषोऽन्यत्रेत्यस्य वैयर्थ्या
पत्तेश्च। गोब्राह्मणादित्यस्य स्नानहेतुत्वे पञ्चमीति व्याख्याने गोशब्दस्यावयविवाचकस्याऽवयवशृङ्गलक्षणायां लक्षितलक्षणापत्तेः
। गोस्नानाहेतुत्वात्। ब्राह्मणस्य ज्ञापकहेतुत्वाद्गोश्च कारकहेतुत्वस्य क्लिष्टस्य ग्रहणाद्वैरूप्यादिदोषप्रसङ्गाच्च। यदपि भविष्य
पुराणीयवचनव्याख्यानन्तदप्यन्तर्वहिर्मुद्रम्। ताडनादिवधपर्यन्तं तद्देहपीडने रूढस्य प्रहरते श्चक्षुराद्यवयवप्राकर्षण

येदेवेत्यर्थः। उत्कृष्टाततायिहननान्निवृत्तौपालमप्युक्तम्। बृहस्पतिना। आततायिनमुत्कृष्टं वृत्तस्वाध्यायसंयुतं। योन
हन्याद्वधप्राप्तं सोऽश्वमेधफलंलभेदिति। तेनोत्कृष्टाततायिवधनिवृत्तौतद्वधप्रसक्तप्रत्यवायपरिहारोऽश्वमेधफलञ्चसंयोगपृ
थक्त्वान्यायात्। यद्यपिगुरुम्वेत्युक्तं हन्यादितिश्रूयतेगुरोश्चशिष्यापेक्षयोत्कृष्टत्वमेवेतितत्रव्यवस्थेयंदुःखस्थानथापिगुरो
रपिसकाशात्कुलविद्यातपःप्रभृतिभिर्गुणैःशिष्यस्याप्युत्कर्षःसम्भवतीतिसुस्थैवतत्रापिव्यवस्थेयम्। गोत्वाततायिष्वपिविशेषे
णावध्यत्वविरोधिवचनाभावात्। एतेषाञ्चाततायितापयोजकव्यापारगोचरवर्त्तमानप्रवृत्तिकानामेवहन्तव्यानामप्याततायि
नांहननेदोषाभावेननुनिवृत्तव्यापारकाणामपि। उद्यतानांतुपापानांहंतुर्दोषोनविद्यते। निवृत्तानान्तथारम्भाद्ग्रहणान्नव
धःस्मृतइतिकात्यायनवचनादिति। तदपिनक्षोदक्षमम्। तथाहि। नहिंस्यादितिनिषेधावधारितस्यदोषस्यशस्त्रंद्विजा
तिभिरित्यादिनाततायिविषयेऽपवादमभिधायमदर्थवादत्वेनगुरुंवेत्याद्युक्ता मनुस्तुमनुसम्बर्त्तभविष्यादिवचनैर्गोब्राह्म
णादिविषयेतम्प्रतिप्रसूयचरितार्थेषुसर्वेषुवचनेषुकात्यायनीयमाततायिनिचोत्कृष्टाइत्यादिवचोपिमन्वादिवचनोपात्ताचा
र्यब्राह्मणाद्युत्कर्षमेवादायतदेकार्थकमेवोचितंननुतेषामुत्कृष्टाचार्यादिविषयकतयासंकोचकं। तपःस्वाध्यायजन्मतइत्य
नेनापिब्राह्मणत्वादिकृतोत्कर्षस्यैवोपलक्षणात्। किञ्चाततायिवधेदोषाभावस्योत्कर्षमात्रेणापवादस्त्वभिमतः। गौतमस्य
स्यैतत्पदस्यतदुपष्टम्भकत्वमधमवर्णावध्यत्वमुत्तमवर्णस्यततायिनोवदतः। तथाचसामान्यतोब्राह्मणत्वादिपुरस्कारेणतदप
वादकवाक्यानामार्थक्यमेवस्यात्। अस्योपसंहाविषयत्वात्। यत्रहिमित्रविन्दावत् द्वयोरर्थवत्त्वंतत्रसामान्यविशेषउपसं
हारःस्वीक्रियते। अनुत्कृष्टमनुधेत्वयादोषाभावस्यैवाभ्युपेतत्वात्। गुरुम्वेत्यादिवचनस्यप्रतिप्रसवविधित्वेनत्वयाभ्युपे
तानाङ्कात्यायनीयैकवचोनुरोधेनोत्कृष्टमात्रेणोपलक्षणत्वमानर्थकापरपर्यायएव। यद्वागोत्वब्राह्मणत्वादिनिमित्तप्रति
प्रसवेकृतेकात्यायनीयमुत्कर्षनिमित्तदोषातिशयप्रतिपादकम्भविष्यतीतिसमस्तवचनसामञ्जस्यसम्भवेवचनस्वरसभङ्गाश्री

करणाभ्यङ्गाङ्गीकरणमेव। उत्कृष्टवदनिमित्तोपपत्तिरपि योग्यत्वं। संयोगपृथक्त्वात्। नचाप्यश्वमेधपदमनर्थकंवा
तत्त्वान्यपापक्षयरूप [illegible]
सङ्गाद्विवक्षितमथवात्रश्रुतब्रह्महत्यातरणनतज्ज्ञ तोपपातनाशने। फलाभावादितिप्राच्यामेवव्याख्यानंसाधीयः। नारतस्य
येते। फलपदन्तुपक्षेऽस्मिन्नसमञ्जसंनिषिद्धनिवृत्ते। किञ्च। आततायिब्राह्मणादिवधस्यादोषताप्रतिपादकतया
नचाश्वमेधफलमत्रापिभवतीतिनात्यानर्थक्यमितिसमाधेयम्। भ्रूणमपीत्यादीनामुत्कर्षप्रतिपादकत्वात्। कथमुत्कर्षेदोषपरं कात्या
नवाभिमतेषुकात्यायनदेवलादिवचनेष्वपिवेदान्तगं। यच्चदेवलवचनम्भवतोदाहृतम्। उक्तान्यथासमाया
यनीयमाततायिनिघोत्कृष्टइतिवचस्तद्विरोधसमाधानमहंस्यात्। भ्रूणः उत्तमब्राह्मणविशेषः। दोषप्रसक्तेन
न्तंभ्रूणमप्याततायिनम्। निहत्यभ्रूणहानस्याद्दहत्वाभ्रूणहाभवेदिति।
नियमार्थमितिव्याख्यातञ्च। तदन्यसमञ्जसम्। नह्याततायिहननेदोषःकस्यापिसंमतः। किन्तुतद्धननेदोषाभावसमासम्। न
स्मादन्यथात्मरक्षणासम्भवेतद्धननेस्वहत्यैवभ्रूणहत्याप्रसज्यतइत्यात्मरक्षणविधिप्राप्तानुवादमात्रमेतदितिव्याख्येयम्
। तस्मादाततायिनिघोत्कृष्टइत्यादिकात्यायनवचनमस्मदुक्तरीत्यासुमन्तुसंवर्त्तादिवचःसमानार्थतयोत्कर्षप्रयुक्तदोषाभि
प्रायपरतयावावर्णनीयम्। ननुविरोधेव्यवस्थापकतयेयत्समतिदूरङ्गत्वाममतुप्रतिभातिसत्यपिगुरुत्वेऽप्यादीनाम्प्रतिप्र
सवविधित्वेनतेषामर्थशास्त्रत्वम्। अदृष्टदोषाभावस्याप्यदृष्टत्वेनदृष्टार्थत्वाभावात्। नचात्मरक्षणमात्रार्थत्वेनतथात्वेऽसि
प्रायश्चित्तप्रसङ्गात्। नचेष्टापत्तिः। नतेनब्रह्महाभवेत्। आततायिवधदोषोऽन्यत्रगोब्राह्मणशूद्रादिहत्यातदाप्रायश्चित्तंकु
र्यात्पापमेवाश्रयेदस्मानित्यादिषुपापतदभावयोःस्पष्टमवगमात्। तस्मात्सर्वंमतेप्यर्थधर्मशास्त्रविरोधोदाहरणमिदमि
त्यसङ्गतमिवेत्यलम्प्रसक्तानुप्रसक्तविचारप्रपञ्चेन। प्रकृतमनुसरामः। व्यवहारदर्शनकालमाह। कात्यायनः। सभास्था
नेषुपूर्वाह्णेकार्याणांनिर्णयंनृपः। कुर्याच्छास्त्रप्रणीतेनमार्गेणामित्रकर्षणः। दिवसस्याष्टमम्भागंमुक्त्वाभागत्रयन्तुयत्। स

कालो व्यवहाराणां शास्त्रदृष्टः परः स्मृत इति । अत्र सभास्थानेष्वित्यादि सर्वमनुवादः । कात्यायनेनैव वचनान्तरे विहितत्वात् ।
पूर्वाह्णमात्रं विधेयं तदपि दृष्टार्थं तदा बुद्धिप्रसादात्कार्यान्तराव्यावृतत्वाच्च । तत्र विशेषो दिवसस्याष्टमं भागमित्यादिनोक्तः ।
अष्टमो भागः प्रथमप्रहरार्द्धम् । भागत्रयं तदुत्तरमावर्त्तनात्प्राक्तनम् । अन्यथा पूर्वाह्णविधिविरोधात् । प्रथमप्रहरार्द्धस्या
गोपिनित्यहोमादिबाधपरिहारार्थं पर्युदस्ततया दृष्टार्थ एव । अत्र वर्ज्यास्तिथीराह । संवर्त्तः । चतुर्दशीममावास्यां पौर्णमासीं त
थाष्टमीं । तिथिष्वासु न पश्येत्तु व्यवहारं विचक्षण इति । एतत्प्रतिषेधस्त्वदृष्टार्थ एव दृष्टासम्भवात् । भोजनाग्नितदिग्ना
दिप्रतिषेधवत् । स्पष्टशास्त्रानुपलम्भे तु देशव्यवहारानुरोध्येव निर्णयः । कार्य इत्याह स एव । तस्माच्छास्त्रानुसारेण
राजा कार्याणि साधयेत् । वाक्याभावे तु सर्वेषां देशदृष्टमतं नयेत् । अत्र पूर्वार्द्धमनुवादः । उत्तरार्धं तु न्यायमूलकम् । म
नुः । जातिजानपदान्धर्मान्श्रेणीधर्मांश्च धर्मवित् । समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपालयेत् । जातिजानपदान् । जातिप्रयु
क्तान्देशप्रयुक्तांश्च धर्मान् । श्रेणयः एककर्मोपजीविनो वणिक्कृषीवलादयः । स्वधर्मं राजप्रवर्त्तितं धर्मं । मदनरत्ने तु स्वधर्मं दु
ष्टदण्डेन रूपमिति व्याख्यातम् । तदनुवादमात्रत्वापत्तेर्हेयम् । कुलधर्मलक्षणमभिहितम् । कात्यायनेन । गोत्रस्थितिस्तु या
येषां क्रमादायाति धर्मतः । कुलधर्मं तु तं प्राहुः पालयेत्तं तथैव तु । बृहस्पतिः । देशजातिकुलानां च ये धर्माः प्राक्प्रवर्त्तिताः ।
तथैव ते पालनीयाः प्रजा प्रक्षुभ्यतेऽन्यथा ॥ जनापरक्तिर्भवति बलं कोशश्च नश्यति । उद्वह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः
॥ मध्यदेशे कर्मकराः शिल्पिनश्च गवाशिनः । मत्स्यादाश्च नराः सर्वे व्यभिचाररताः स्त्रियः ॥ उत्तरे मद्यपा नार्यः स्पृश्या नृणां रज
स्वलाः । खशजाताः प्रगृह्णन्ति भ्रातृभार्यामभर्तृकाम् ॥ अनेन कर्मणा नैते प्रायश्चित्तदमार्हकाः इति सर्व इत्यनेन स्मृतिविरोधक
क्तः । पूर्वे इति कल्पतरौ पाठः । तत्र पूर्वदेश इत्यर्थः । दमो दण्डः । यत्तु स्मृत्यन्तरेष्वेतत्कर्मकरणे प्रायश्चित्तदण्डस्मरणम
देतद्वचनानुपात्तदेशविषयमिति । मदनरत्नाकरः । वयं तु प्रजाप्रक्षोभादिदृष्टदोषकथनाद्राज्ञा तच्च दण्डेन कार्यमेव । प्रा

यश्चिन्नाभावस्तुव्यवहारविषयः। परलोकसुखार्थम्प्रायश्चित्तंभवेदित्येवेतिनस्मृत्यंतरविरोधः। तत्रहेत्वव्यापकश्रुतिस्मृति
विरुद्धाचरणोव्यवहारप्रतिबन्धिकाशक्तिस्तज्जन्यपापस्यनाशिनरकजनिकास्त्येव। उपक्रमपर्यालोचनादेतावदर्थकत्वेव
चैतद्वचनोपपत्तौसर्वथादोषाभावकल्पनस्यानुचितत्वात्। अतएवस्वापस्तंबेनोक्तं। देशजातिकुलधर्माश्चाम्नायैरविरुद्धाः। प्र
माणमिति। येषांपरंपराप्राप्ताःपूर्वजैरप्यनुष्ठिताः। नस्यवत्तेनदुष्येयुराचारान्नेतरेपुनरिति। नदुष्येयुरव्यवहार्यासमदराज्ञा
स्वनभवेयुरित्यर्थः। अन्यथैतयोरेववचनयोःपरस्परविरोधाद्व्यवहारःस्यादितिब्रूमः। यानितुवचनानिव्यासः। वणिक्शि
ल्पिप्रभृतिषुकर्षकरंगोपजीविषु। अशक्तोनिर्णयेह्यन्यैस्तज्ज्ञैरेवतुकारयेत्। बृहस्पतिः। कीनाशाःकारुकाःशिल्पिकुसीदि
श्रेणिनर्तकाः। लिङ्गिनस्तस्कराःकुर्य्युःस्वेनधर्मेणनिर्णयम्। कीनाशाःकर्षकाः। कारुकावर्धक्यादयः। शिल्पिनश्चित्रकारा
दयः। कुसीदिनोवार्द्धुषिकाः। लिंगिनःपाशुपतप्रभृतयः। मनुः। आश्रमेषुद्विजातीनांकार्य्येविवदतांमिथः। नविब्रूयान्नृ
पोधर्म्मंचिकीर्षुर्हितमात्मनः। यथार्हमेतानभ्यर्च्यब्राह्मणैःसहपार्थिवः। सान्त्वेनप्रशमय्यादौस्वधर्म्मंप्रतिपादयेत्। आश्र
मेषुकार्य्ये। आश्रमसम्बन्धिनिकार्य्येविब्रूयात्। विरुद्धवचनस्यसामान्यतएवप्रतिषिद्धत्वात्। प्रशमय्यकोपमपनीय। बृ
हस्पतिः। तपस्विनांतुकार्य्याणित्रैविद्यैरेवकारयेत्। मायायोगविदांचैवनस्वयंकोपकारणात्। कोपकारणात्तेषांकोपप्रसं
गात्। कात्यायनः। सम्यक्विज्ञानसम्पन्नेनोपदेशम्प्रकल्पयेत्। उत्कृष्टजातिशीलानांगुर्वाचार्य्यतपस्विनाम्। सम्यग्विज्ञा
नसम्पन्नेनेतितृतीयांतम्पदम्। तथाचतज्ज्ञानोत्कृष्टजातिशीलानांगुर्वाचार्य्यतपस्विनामुपदेशम्प्रकल्पयेत्। कारयेत्। न
स्वयमुपदेशम्प्रकल्पयेत्। कारयेत्। नस्वयमुपदेशन्तेषांकुर्य्यादित्यर्थः। तानितःसर्वथाराज्ञोव्यवहारदर्शनप्रतिषेधप
राणिकिन्तुतत्तत्कार्य्येवणिकादीनामभियुक्तत्वात्तान्विहायनव्यवहारनिर्णयः। करणीयइत्येवम्पराणियथार्थः। अभियुक्ता
श्चयेयत्रयन्निबन्धनियोजनाः। तत्रत्यगुणदोषाणान्तएवहिविचारकाइति॥ तत्रतत्त्वमभियोगविशेषात्स्यादितिजैमिनिरा

पिसाधुशब्दाधिकरणेसूचयामास। अतएवचिकीर्षुर्हितमात्मनः। सान्त्वेनप्रशमय्यादौकोपकारणादिंत्यादिहेतुप्रदर्शनम्।
यथातत्त्वावधारणंस्वानिष्टनिवारणञ्चभवतितथाकौशलेननिर्वाहणीयमित्यत्रतात्पर्यम्॥ * ॥ अथप्राड्विवाकलक्षणम्। वि
वादेपृच्छतिप्रश्नम्प्रतिप्रश्नन्तथैवच। प्रियपूर्वंप्राग्वदतिप्राड्विवाकस्ततःस्मृतः। इतिबृहस्पतिः। व्यासोपि। विवादानुगतंपृ
ष्ट्वाससभ्यस्तत्प्रयत्नतः। विचारयतियेनासौप्राड्विवाकस्ततःस्मृतइति। गौतमेनतुबृहस्पतिवद्योगार्थः। प्राड्विवाकशब्दस्यद
र्शितः। प्राड्विवाकेवादिप्रतिवादिनौपृच्छतीतिप्राट्ताभ्यामुक्तंसभ्यैःसहविविच्यवक्तीतिविवाकइति। बृहस्पतिना। विचा
रयत्यभिधानाद्विविनक्तिइतिविवाकशब्दस्यव्युत्पत्तिरुक्ताविवक्तीतिविवाकइति। इतिगौतमेन। नारदहारीतौ। यथाशल्यंभि
षक्कायादुद्धरेद्यन्त्रयुक्तितः। प्राड्विवाकस्तथाशल्यमुद्धरेद्व्यवहारतः। इति। शल्यञ्चधर्म्मस्याधर्ममिश्रणम्। यथाचमनुः।
विद्धोधर्मोह्यधर्मेणसभांयत्रोपतिष्ठते। शल्यञ्चास्यनकृन्तन्तिविद्धास्तत्रसभासदइति अयञ्चराज्ञःस्वयंव्यवहारदर्शनेक्रिय
माणेऽस्यसहायःसप्राड्विवाकइतिस्मरणात्। यदातुसत्ताकार्यान्तरव्यग्रतयास्वास्थ्याभावेनवास्वयंव्यवहारदर्शनासमर्थस्त
दातत्प्रतिनिधिः। यदास्वयंनकुर्य्यात्तुनृपतिःकार्य्यदर्शनम्। तदानियुञ्ज्याद्विद्वांसंब्राह्मणंकार्य्यदर्शने। सोस्यकार्य्याणिस
म्पश्येत्सभ्यैरेवत्रिभिर्वृतः। सभामेवप्रविश्याग्र्यामासीनःस्थितएववा। इतिमनुवचनात्। सभ्ययहणाद्नमात्यादिनिवृत्तिः
त्रियहणात्संख्यान्तरनिवृत्तिः। सभ्यानामितिस्मृतिचन्द्रिकाकारः। तच्चदृष्टार्थत्वप्रसंगादयुक्तमित्युपलक्षणत्वमेवन्याय्यंत्र
पश्यतांह्ययथैवशास्त्रव्यवहारंनपेयात्तु। सभ्यैःसहनियोक्तव्योब्राह्मणःसहधर्मवित्। इतियाज्ञवल्क्यवचनाच्च। यदानकुर्य्यान्नृ
पतिःस्वयङ्कार्यविनिर्णयम्। तदातत्रनियुञ्जीतब्राह्मणंशास्त्रपारगम्। दान्तङ्कुलीनंमध्यस्थमनुद्वेगकरंस्थिरम्। परत्र
भीरुन्धर्म्मिष्ठमुद्युक्तंक्रोधवर्जितंइति। कात्यायनस्मरणाच्च। शास्त्रपारगंबहुशास्त्राभियोगशालिनम्। यथाचकात्यायन
एव। एकंशास्त्रमधीयानोनविद्यात्कार्यनिर्णयम्। तस्माद्बह्वागमःकार्य्योविवादेषूत्तमोनृपैः। एवंविधब्राह्मणाभावेक्षत्रि

नः स्वकादिक्रियाभिर्नित्यकामाधिकारयोस्तस्यैवग्रहणात्प्रजापालनाधिकाराच्च ॥ ० ॥ अथ सभ्याः । तत्र योगीश्वरः । श्रुताध्यय-
नसम्पन्नाः धर्मज्ञाः सत्यवादिनः । राज्ञा सभासदः कार्या रिपौ मित्रे च ये समा इति । श्रुतेन मीमांसाव्याकरणादिश्रवणेन वेदाध्यय-
नेन च संपन्नाः धर्मज्ञाः सत्यवादिनः । सत्यवदनशीलाः रिपौ मित्रे च समाः द्वेषरागशून्याः एवंविधाः सभासदः सभायां सदसि यथा-
सीदन्ति यथा दानमानसत्कारैः राज्ञा कर्त्तव्याः सभ्यत्वेन वरीतव्या इत्यर्थः । अनस्तेषामुपादेयत्वाच्चाध्यायोध्येतव्योपूर्वाह्णे नात्र पुरो-
हितस्य प्रवृत्तिरित्यादिवत्स्याप्यपिकर्त्तव्येन तु शूद्रेत्याद्यनेकवद्वदुक्तत्वं विवक्षितम् । यच्च यद्यपि कपिञ्जलनयेन त्रित्वमात्रेणापि
चरितार्थत्वं तथापि स्मृत्यन्तरोक्तबहुत्वविकल्पपरम् । तथा च बृहस्पतिः । लोकवेदज्ञधर्मज्ञाः सप्त पञ्च त्रयोऽपि वा । यत्रोपविष्टा वि-
प्राः स्युः सा यज्ञसदृशी सभेति । मनुना तु त्रय एवोक्ताः । यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रय इति । अत्र त्रिभ्यो न्यूनाः
सप्तभ्योऽधिकाश्च न कार्या इत्यत्र तात्पर्यं संख्यावैषम्यं तु भूयोऽल्पविरोधे भूयसां स्यात् । स धर्मत्वमिति न्यायेन विप्रतिपत्तावधिकसंख्या-
वचनमादरणीयं गुणसाम्ये । तद्वैषम्ये तु श्रमनम एकस्यानाज्ञपश्यतीति न्यायेन गुणवदल्पवचनमेवेति प्रदर्शनार्थम् । य-
त्तु चत्वारो धर्मज्ञाः पर्षत्त्रैविद्यमेव वा । सा ब्रूते यं स धर्मः स्यादेको वाध्यात्मवित्तम इति । योगीश्वरेणाविषमसंख्यत्वमपि वक्तव्यम-
पि चानादृतम् । ननु पूर्वोक्तानां धर्मकारकत्वापकहेतूनां सन्देहनिर्णयविषयत्वप्रक्रमात् । व्यवहारविषये तु त्र्यवराणां विषम-
संख्यानामेव सभ्यत्वं विशेषविधानादित्यवसेयम् । एते च ब्राह्मणा एव । मनुबृहस्पतिभ्यां विप्रपदोपादानात् । स तु सभ्यैः स्थि-
रैर्युक्तः प्राज्ञैर्मौलैर्द्विजोत्तमैः । धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैरिति द्विजोत्तमपदस्य चकात्यायनेनोपादानात् । नार-
दः । राज्ञा तु धार्मिकान्सभ्यान्नियुञ्ज्यात्सुपरीक्षितान् । व्यवहारधुरं वोढुं ये शक्ताः पुङ्गवा इव । धर्मशास्त्रेषु कुशलाः कुली-
नाः सत्यवादिनः । समाः शत्रौ च मित्रे च नृपतेः स्युः सभासद इति । पुङ्गवा इवेति स्मृतिचन्द्रिकायां पाठः । मदनरत्ने तु सद्गुणा
इति पठित्वा सद्गुणा उत्तमवृषभा इति व्याख्यातम् । कल्पतरावपि सद्गुणा इत्येव पाठः । स ब्राह्मणपुरोहितः सभ्य इति पूर्वोदा-

हूतकात्यायनवचनेब्राह्मणानांसभ्यानाञ्चभेददर्शनान्नियुक्तानियुक्तविशेषेणागोबलीवर्दन्यायेनसभ्यानांब्राह्मणानामपाक [illegible]
सहायत्वंव्यवहारदर्शनेऽवगन्तव्यम्। याज्ञवल्क्यस्यापि। व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह। [illegible] श्रुताध्ययनसम्पन्नाः [illegible]
श्रुताध्ययनसम्पन्नाइत्यादिवदतोभेदएवाभिप्रेतः। नच श्रुताध्ययनसम्पन्ना इत्यादिपूर्वे
ण्यादिवदतोभेदएवाभिप्रेतः। नचश्रुताध्ययनसम्पन्नाइत्यादिवचनाभेदावगतेः। तृतीयाप्रथमानिर्दिष्टानांविशेषणा [illegible]
वाक्यविहितब्राह्मणानुवादेनविशेषणविधानमात्रमितियुक्तम्। तृतीयाप्रथमानिर्दिष्टानांविशेषणत्वप्रसंगात्। कात्यायनसंवादवचनाभ
तात्पर्यगत्याविशेषणविधिर्न्नशङ्कनीयेतिचेत्। नविद्वद्भिरित्यनेनश्रुताध्ययनादेःपुनरुक्तत्वप्रसंगात्। कात्यायनवचनेनापि
। भेदकन्तुनियुक्तानांराज्ञोन्यथाकरणेनिवारणमावश्यकम्। अन्ययेनापितंयान्तमितिपूर्वोदाहृतकात्यायनवचनेनानि
वारणेदोषप्रतिपादनात्। अनियुक्तानांतुवचनान्यथावचनयोरेवदोषोननुराज्ञानिवारणे। अनियुक्तोनियुक्तोवाधर्मज्ञो
वक्तुमर्हति। दैवीवाचंसवदतियःशास्त्रमुपजीवतीतिवसिष्ठोक्तेः॥ सभावानप्रवेष्टव्यावक्तव्यंवासमञ्जसम्। अब्रुवन्विब्रु
वन्वापिनरोभवतिकिल्बिषीतिमनूक्तेश्च। नियुक्तेषुसभावानप्रवेष्टव्येत्यसङ्गतेः। नियोगःस्वीकारेसभाप्रवेशस्यावश्यकत्वा
दनियुक्तविषयमेवैतन्मनुवचनम्। यत्तुनारदेनोक्तम्। नानियुक्तेनवक्तव्यंव्यवहारेषुकिञ्चन। नियुक्तेनतुवक्तव्यमप
क्षपतितंवचइति। तच्चनङ्गीकृतसभाप्रवेशायदृश्याकार्यनिरभशाद्धाय आगतस्यादृशानियुक्तविषयंबोध्यमन्यथाम
न्वादिवचनविरोधात्। शान्तिकपौष्टिकाद्यर्थमिवव्यवहारदर्शनार्थेपुरोहितोपिराज्ञाधिकर्त्तव्यइत्याहव्यासः। राजापुरो
हितंकुर्यादुदीर्णंब्राह्मणंहितम्। श्रुताध्ययनसम्पन्नमलुब्धंसत्यवादिनमिति। उदीर्णमुद्युक्तंहितमित्यनेनसभ्यापेक्षया
प्यस्योच्छृङ्खलप्रवृत्तिकराजानिवारणेधिकोदोषस्तेनप्रसह्यापितन्निवारणमनेनावश्यंकार्यमितिसूचितम्। अतएववसि
ष्ठेन। राजापेक्षयापिदण्डव्यत्ययेतस्यप्रायश्चित्तमधिकमभिहितम्। दण्ड्योत्सर्गेराजैकरात्रमुपवसेत्त्रिरात्रम्पुरोहितः।
कृच्छ्रमदण्ड्यदण्डनेपुरोहितस्त्रिरात्रंराजेति। पुरोहितमितिचैकत्वंविवक्षितंपूगञ्छिनत्तिभार्यामुद्वहेदित्यादिवदुपादेयग

त्वात् । अथ सभ्यानां बलाबलम् । याज्ञवल्क्यः । नृपेणाधिकृताः पूगाः श्रेणयोऽथ कुलानि च । पूर्वं पूर्वं गुरु ज्ञेयं व्यवहार
विधौ नृणामिति । नृपेण सह अधिकृता व्यवहारदर्शने नियुक्ताः । पूगाः समूहाः । भिन्नजातीनां भिन्नवृत्तीनामेकस्थान
वासिनां ग्रामनगरादिस्थानाम् । श्रेणयो नानाजातीनामेकजातीयकर्मोपजीविनां संघाताः । हेडावुकतांबूलिककुविन्दचर्म
कारादीनाम् । कुलानि ज्ञातिसम्बन्धिबन्धूनां समुदायाः । एतेषां यत्पूर्वं पूर्वं पाठक्रमेण प्रथमावगतं तत्तद्गुरु बलवद् ज्ञेयं नृणां व्य
वहारिणां व्यवहारविधौ व्यवहारनिर्णये कार्ये । उत्तरोत्तरनिर्णीतो व्यवहारः कुदृष्टबुद्ध्यार्थिप्रत्यर्थिनोरन्यतरस्यापरितो
ये नृपाधिकृतपर्यन्तमपसवर्त्तते । न तु पूर्वकृत उत्तरेणेतरनिकर इत्यर्थः । नारदेन पुनर्नृपाधिकृतनिर्णीते तान्नृपः सविशेषमप
वर्त्तनमुक्तम् । कुलानि श्रेणयश्चैव गणाश्चाधिकृतो नृपः । प्रतिष्ठा व्यवहाराणां पूर्वेषामुत्तरोत्तरमिति । अत्र नृपपर्यन्तग्रहणं राजा
ध्यक्षोपलक्षणं नृपाधिकृतापेक्षया तस्याधिकत्वात् । तथा च नृपाधिकृतः प्राड्विवाकः सविशेषस्तत्कृतं नृपः सविशेषमपवर्त्तनमि
त्यर्थः । न त्वनुपगमनेऽसौ तेन सभ्येन सहाऽपूर्वैः सह सभ्यैर्व्यवहारे निर्णीयमाने यदि कुदृष्टवादी पराजितस्तदा द्विगुणं [illegible]
सौदण्ड्यः । यदि जयति तदा पूर्वसभ्या दण्ड्या यथाशास्त्रं तथा च वक्ष्यते । ननु पूगादीनां व्यवहारद्रष्टृत्वमेवासम्भावि । कुतस्तेषां
बलाबलम् । तथाहि राजनियोगेन वा व्यवहारद्रष्टृत्वमेतेषां स्वातन्त्र्येण वा । नाद्यः सहायत्वेन प्रतिनिधित्वेन प्राड्विवाकसपुरो
हितामात्यसभ्यानामेव सहायत्वेनैव नियोगविधानात् । न द्वितीयः प्रजापालनाधिकृतानामेव व्यवहारदर्शनाधिकारस्तदन्या
न्येषां स्वातन्त्र्यासम्भवात् । अथ पूर्वोपन्यस्तैर्वैश्यकृषिशिल्पप्रभृतिभिर्वृत्त्यादिभिर्वा बृहस्पत्यादिवचनैः पूर्वोपदिष्टसमाश्रय
यत्वेन नियोगावगमात् वणिगादिव्यवहारद्रष्टृत्वं पूगादीनां राजनियोगेनैवेति मन्तव्यम् । तथा सति राजप्राड्विवाकाभिहितानां
तन्नैरपेक्ष्येण द्रष्टृत्वाभावात् सर्वव्यवहारद्रष्टृत्वं प्राधान्येन व्यपदेशाभावान्नीतिन्यायेन तयोरेवेति कुलादिद्रष्टो व्यवहार [illegible]
मैतद्व्यनुपपन्नं द्रष्टृत्वाभावात् । मूर्द्धन्येन वर्णितेऽपि निषेधात्पूगादीनामप्रायः मूर्द्धन्यधर्मप्रतिलोमसहायत्वेनप्रवि

निश्चितयापि केवलानां तद्दृष्टत्वाभावादिति । अत्रोच्यते । मास्तु तेषां व्यवहारदर्शने कैवल्यं तथापि वणिगादिव्यवहारे तेषाम
भियोगाद्राजादीनामपि तत्र तत्प्रत्ययेन निर्णायकत्वात्तत्कृतप्राधान्यमादाय तत्कृतत्वव्यपदेशसम्भवात् दृष्टबुद्ध्या पुरावृत्तपुन
र्व्यवहारप्रवर्त्तनाय बलाबलं तेषामनेन वचनेनोच्यतेऽन्यथास्य वचनस्य निर्विषयतापत्तेरिति । वस्तुतस्तु । [illegible]
र्व्यवहारप्रवर्त्तनाय बलाबलं तेषामनेन वचनेनोच्यतेऽन्यथास्य वचनस्य निर्विषयतापत्तेरिति । प्रतिनिषेधभावस्यव्यासादिवचनैरभियोगावि
षयेनेन प्रतिषिद्ध प्रतिनिधिभावानामपि पूगादीनां पूगादिव्यवहारे प्रतिप्रसवः । प्रतिनिषेधभावस्य व्यासादिवचनैरभियोगावि
शेषात्क्रियत इति । प्राड्विवाकवाक्यैवल्यमपि वक्तुं शक्यत इति न किंचिदनुपपन्नम् । बृहस्पतिस्त्वमुमेवार्थं स्फुटयति । तथाचा
ह । राज्ञा ये विदिताः सम्यक् कुलश्रेणिगणादयः । साहसन्यायवर्ज्यानि कुर्युः कार्य्याणि ते नृणाम् ॥ कुलश्रेणिगणाध्यक्षाः प्रो
क्ता निर्णयकारिणः । येषामग्रे निश्चितस्य प्रतिष्ठानूत्तरो नराः ॥ विचार्य्य श्रेणिभिः कार्यं कुलैर्यन्न विचारितम् । गणैः श्रेण्यविख्या
तं गणाज्ञाननियुक्तकैः ॥ कुलादिभ्योऽधिकाः सभ्यास्तेभ्योऽध्यक्षोऽधिकः कृतः । सर्वेषामधिको राजा धर्म्यं यत्तेन निश्चितम् ॥
उत्तमाधममध्यानां विवादानां विचारणात् । उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धय इति ॥ कुलादिपदार्थो व्याख्यातः गणाग्र
हः पूगपर्य्यायः । आदिपदेन सभ्यादिग्रहणम् । नियुक्तकाः सभ्याः । साहसाख्यं व्यवहारपदम् । युक्तिश्चात्रेयम् । कुलादी
नां ज्ञात्यादिरूपाणां दाक्षिण्यादिनान्यथादर्शनमपि सम्भाव्यत इति कुदृष्टचोद्भावकवचनेन राजादीनामसंवः श्रेणीनामुदासी
नतया ततो बलवत्ता । पूगानां त्वेकस्थाननिवासमात्रसम्बन्धेऽपि भिन्नजातितया भिन्नवृत्तितया च ततोऽपि मिथोऽनपेक्षत्वादौदास्याद्
बलवत्त्वम् । नृपाधिकृतानां तु ततोऽपि निःसम्बन्धतया राज्ञा परीक्ष्याधिकृतानां राजभयादपि पक्षपातदाक्षिण्याद्यसम्भव इति
पूगेभ्यो बलवत्तरत्वं प्राड्विवाकस्य पुरोहितामात्यानाञ्च सुतरां प्रागुक्तहेतुद्वयादाधिक्यम् । नृपस्य साक्षाद्देवनृपाणां प्रजापालना
धिकाराद्विपक्षपातकीभूतदोषाधिक्यादन्यायं कुरुते यदि पतिः कस्तं निरोद्धुं क्षम इति न्याये प्रजाप्रक्षोभादिदृष्टस्पष्टदोषभया
दवश्यमपक्षपातसम्भवतीति सर्वेभ्यो बलवत्तरत्वम् । बुद्धितारतम्यमपि बृहस्पतिवचने स्पष्टमिति ॥ ❀ ॥ अथ केषांचित्

G

म्यभिन्नानामपि सभावस्थानं निरूप्यते ॥ कात्यायनः ॥ कुलशीलवयोवृत्तैर्वित्तवद्भिरमत्सरैः । वणिग्भिः स्यात्कतिपयैः कुलभूतैरधिष्ठितम् । अधिष्ठितं सदः इति प्रक्रमात् । कुलभूतैर्वृद्धैरित्यर्थः । तेषामुपयोगश्चोक्तस्तेनैव । श्रोतारो वणिजस्तत्र कर्त्तव्या दर्शितमिति । गणकलेखकसाध्यपालाख्यराजपुरुषाणामपि सभावस्थानमाह । कार्यकथनमुखेन बृहस्पतिः । नृपोऽधिकृतसभ्याश्च स्मृतिर्गणकलेखकौ । हेमाग्न्यम्बुस्वपुरुषाः साधनाङ्गानि वै दश । एतद्दशाङ्गकरणं यस्यामध्यास्य पार्थिवः । न्यायं पश्येत्कृतमतिः सा सभाध्वरसंमिता । दशानामपि चैतेषां कर्म प्रोक्तं पृथक्पृथक् । वक्ताध्यक्षो नृपः शास्ता सभ्याः कार्यपरीक्षकाः ॥ स्मृतिर्विनिर्णयं ब्रूते जयदानं दमं तथा । शपथार्थे हिरण्याग्नी अम्बु तृषितक्षुधयोः । गणको गणयेदर्थं लिखेन्न्यायं च लेखकः । प्रत्यर्थिसभ्यानयनं साक्षिणां च स्वपूरुषः । कुर्याद्रक्षेद्धनं चैव रक्षेदर्थिप्रत्यर्थिनौ सदा । एषां मुख्यो नृपोऽङ्गानां मुखं चाधिकृतः स्मृतः । बाहू सभ्याः स्मृतिर्हस्तौ जङ्घे गणकलेखकौ । हेमाग्न्यम्बु दृशौ ज्ञेयौ पादौ स्वपुरुषस्तथेति । अत्राधिकृतशब्दाभ्यां प्राड्विवाको गृह्यते । एतादशाङ्गकं सभारूपं शरीरं दशाङ्गमित्यर्थः । यस्यां सभायां शरीरतुल्यायां पार्थिवः सेवमङ्गबाध्यस्याधिष्ठानं तथा । अनेन क्षेत्रज्ञः शरीरमिव सांगां सभां समधिष्ठायान्तर्यामिवत्सर्वचरितानि पश्यंस्तदनुरूपस्वफलभोक्ता दाता च भवतीति सूचितम् । स्वपुरुषलक्षणं बृहस्पतिरेवाह । आकारयेद्रक्षेच्च साक्ष्यर्थिप्रतिवादिनाम् । सभ्याधीनः सत्यवादी कर्त्तव्यस्तु स्वपूरुषः । अयं च साध्यपालनामा स्मृत एव । तथा च व्यासः । साध्यपालकस्तु कर्त्तव्यो ब्राह्मणः साध्यसाधकः । अमायातो दृढः शूद्रः सभ्यानां च मते स्थित इति । गणकलेखकौ च द्विगुणायुतौ कर्त्तव्याविन्याह बृहस्पतिरेव । शब्दाभिधानतत्त्वज्ञौ गणनाकुशलौ शुची । नानालिपिज्ञौ कर्त्तव्यौ राज्ञा गणकलेखकौ । व्यासोऽपि । त्रिस्कन्धज्योतिषाभिज्ञः स्फुटं प्रत्ययकारकम् । श्रुताध्ययनसम्पन्नं कुर्यात्कश्चारये नृपः । स्फुटवर्णं नियुञ्जीत यद्वा लाक्षणिकं शुचिम् । स्फुटाक्षरं जितक्रोधमलुब्धं सत्यवादिनम् । त्रिस्कन्धं होरागणितसंहितारूपभेदयुक्तं ज्योतिःशास्त्रं तद्वेदिनम् । श्रुताध्ययनसम्पन्नमित्युक्तेर्गणको द्विजातिरुक्तः

ह सभ्यो लेखकोऽपि द्विजातिस्तथाह सभ्यो लेखकोऽपि नृपः शास्तेति यदुक्तं तदर्थे दण्डवधदण्डयोरङ्गकर्तृकत्वनियमार्थे । वाग्दण्डधिग्दण्डयोस्तु दमन
वाग्दण्डधिग्दण्डोऽनुप्राड्विवाकेनापि कार्यो । दण्डप्राप्यधनेवध्यवधेचराज्ञ एवाधिकारात् । वाग्दण्डधिग्दण्डस्त्ववाग्दण्डोऽविप्रायत्तोऽनन्तो
मात्रार्थत्वाद नियमः । तथाचवादनिर्णयदण्डाज्ञा ह्याप्ता स्वयं कर्त्तृत्वमभिधायोक्तमनेनैव धिग्दण्डस्य व्यवहारनिर्णयमात्रं कर्त्तव्यं परिमितमम् । पूर्वेषां
स्मृतेः । अर्थदण्डवधावुक्तौ राजायत्तावुभावपीति प्रतिष्ठिताप्रतिष्ठितसभास्वेतेषु सभ्यो निर्णयस्य प्रमाणमित्युक्तम्
तान्कश्चिदपि दण्डेनेवा मनधिकारात् । सर्वे रत्नकः सभास्ताराश्चापि व्यासेनोक्ताः । अर्थिप्रत्यर्थिनौ सभ्या लेखकः प्रेक्षकाश्चयः ।
धर्मवाक्येरञ्जयति सभा स्तारयिनाभिधात् ॥ अथञ्चपानुर्वर्ण्येयः कश्चिद्विशेषानभिधानात् । स्मृतिचन्द्रिकाकारमतेऽतु प्रड्विवाकः
नवर्जयेदिति । यत्नग्रहणाद्योगातिशयकीर्तनाच्चवैवर्णिकएव ॥ ● ॥ अथादेयानादेयाख्यव्यवहारविवेकः । याज्ञवल्क्यः ॥
मनोन्मत्तार्त्तव्यसनिवालभीतादियोजितः । असम्बन्धकृतश्चैव व्यवहारोनसिध्यति ॥ मत्तोमदनीयद्रव्येणोन्मत्तोवातपित्तश्लेष्म
सन्निपातग्रहसम्भवेनोपलक्ष्यमाणोन्मत्तः । आर्त्तोव्याधिविकलः । व्यसनमिष्टवियोगानिष्टसम्बन्धजनितंदुःखं तदाक्रान्तोव्यसनी
। वालोऽप्राप्तव्यवहारः । भीतोभयाकुलः । आदिग्रहणाच्छ्रुतविक्षेपकारणानामन्येषामप्युपसंग्रहार्थम् । एतैर्योजितः कृतो
निर्णीतइत्यावत् । एतैः सहयोजितइतिवा । एतेषामर्थिप्रत्यर्थिभावमापन्नाइत्यर्थः । तथासम्बन्धकृतोपि । अर्थिप्रत्य
र्थिसम्बन्धरहितैस्तदीयचेष्टितानभिज्ञैः कृतोनिर्णीतस्तैः सहकृतोवाव्यवहारोनसिध्यतिकृतोपिनिवर्त्तते । प्रवृत्तत्वनादृतैः स
हनिर्णयत्वेननोपादेयइत्यर्थः । नचासम्बन्धत्वमुदासीनत्वं सभ्यानांगुणएव । अनुदासीनेषूपाधिसम्भवात् । अतएवरि
पौमित्रेचयेसमाइत्युक्तमितिवाच्यम् । असम्बन्धपदस्यदेशादिसम्बन्धराहित्यपरत्वात् । व्यवहारनिर्णयस्यदेशाचारानु
रोधित्वात् । तथाचतदानभिज्ञनिर्णीतस्तदनभिज्ञार्थप्रत्यर्थिकोवेत्यर्थः । एवं चस्मृतिचन्द्रिकोक्तव्याख्यानेतुसम्बन्धाभावनिश्चये
संशयाभावेनतादृशव्यवहारस्यानुपादेयत्वौचित्यात् । पुरस्सृष्टमित्येवत्वसदसद्वाविवर्जितः । अनादेयोभवेद्वादोधर्मविद्भि

रुदाहृतइत्यस्याप्ययमर्थः। पुरराष्ट्रविरुद्धोयत्ननगरेराष्ट्रेचयाव्यवस्थापुरुतनीतद्विरोधापादकोव्यवहारोनादेयः। पौरजानपदक्षोभापादकत्वात्। केनचिन्निमित्तेनप्राचीनोपिराज्ञास्वराष्ट्रेप्रतिषिद्धःसोपिराज्ञास्वराष्ट्रेप्रतिषिद्धःसोपिराजाज्ञाभंगप्रसङ्गान्नाङ्गीकर्त्तव्यइति। यत्तुस्मरन्ति। गुरोःशिष्येपितुःपुत्रेदम्पत्योःस्वामिभृत्ययोः। विरोधेतुमिथस्तेषांव्यवहारोनसिध्यतीति। तन्नुगुरुशिष्यादीनामन्योन्यमात्यंतिकव्यवहारानुपादानपरन्नभवति। तेषामपिधनिकाधमर्णत्वादिनाव्यवहारनिवृत्तेरप्रत्यूहत्वात्। नचगुरुत्वशिष्यत्वपितृपुत्रत्वादिप्रयुक्तव्यवहारानादेयतापरमिदमितिवाच्यम्। तादृशस्याप्यनादेयत्वेनिर्णयाभावप्रसङ्गेनयुक्तिविरोधात्। नचाप्रसक्त्यानुवादमात्रमनादेयत्वाभिधानमितियुक्तम्। प्रसक्तेसत्त्वात्नथाहि। भार्य्यापुत्रश्चशिष्यश्चशिष्येभ्रातासहोदरः। प्राप्तापराधास्ताड्यास्युरज्वावेणुदलेनवा॥ पृष्ठतस्तुशरीरस्यनोत्तमाङ्गेकथञ्चन। अतोन्यथानुप्रहरन्प्राप्तस्याच्चौरकिल्बिषम्। शिष्यशिष्टिरवधेनाशक्तौवेणुविदलाभ्यांतदनुभ्यामन्येनघ्नन्राज्ञाशास्यइत्यादिभिर्मनुगौतमादिवचनैःशिष्यस्यशासनप्रकारविशेषनियतमादानादिक्रमेणगुरुर्य्येदिमहताडनाटङ्डेनोत्तमाङ्गेशिष्यंकोपावेशवशात्ताडयतितदास्मृत्याचारव्यपेतमार्गेणगुरुणाधर्षितः। शिष्योवैयात्यात्धर्माधिकरणम्प्रविशतिचेत्तद्गुरुपादृष्यरूपंव्यवहारपदन्नभवतीतिवक्तुमनर्हम्। तथादायभागप्रकरणेवक्ष्यमाणभूर्य्यापितामहोपात्तेत्यादिवचनात्पितामहोपार्जितभूम्यादौपितापुत्रयोःस्वाम्यसाम्येयदिपितामहेविषमविभागादिचिकीर्षति। तदापितापुत्रयोर्दायभागाख्यविवादपदमादायव्यवहारःप्रसज्यमानोनापह्नोतुशक्यःतथाः। दुर्भिक्षेधर्मकार्य्येचव्याधौसम्प्रतिरोधके। गृहीतंस्त्रीधनंभर्त्तानाकामोदातुमर्हतीतिवचनात्। दुर्भिक्षादिनिमित्तंविनैवयदिस्त्रीधनम्भर्त्तागृहीत्वाव्ययीकरोति। तयाचयाच्यमानोविद्यमानधनोपिशापान्नप्रत्यर्पयति। तदस्त्रीदानपदमादायजायापत्योरपिव्यवहारप्रवृत्तिःकेननिरोद्धुंशक्याएवंस्त्रीपुन्धर्माख्यविवादपदोपादानेनतुनयोरेवव्यवहारआवश्यकः। तस्मानन्यविषयत्वात्दृष्टादृष्टव्यवहारपदान्तर्गतानामन्वादिस्मृतिषु

म्रमप्रलपितमेवस्यात् । स्वामीभृत्ययोस्तुव्यवहारो वेतनादाननिरूपणे वक्ष्यते । गर्भदासादीनधिकृत्य च । यच्चैवं स्वामिनं
कश्चिन्मोचयेत्प्राणसंशयात् । दासत्वात्सविमुच्येत पुत्रभागं लभेत चेति ॥ नारदोक्तेस्तादृशानां तेषां दास्यात् मोचने पुत्रभा
गादाने च स्वामिना सह विवादो दुर्वारः । तस्मादिदं वचनं गुर्वादिभिः सह शिष्यादीनां व्यवहारो लोकद्वयहानिकर इति निवार्य
निन्दावहत्वादमुत्र नरकजनकत्वादित्येतत्परमेव । राजादिभिस्तु नायमुचितो व्यवहारो लोकद्वयहानिकरः ।
गुर्वादिभिः सह व्यवहारः शिष्यादी
मात्माअपि शिष्यादयो न परितुष्यन्ति चेत्तदा नेषां यथाशास्त्रं निर्णयकरणमदोष एव । गुर्वादिभिः सह व्यवहारः शिष्यादी
नामनादेयो राज्ञेत्यभिधानात्पुत्राद्यभिवारणपरं दृष्टादृष्टदोषइ तिध्येयम् । गुरुशिष्यौ पितापुत्रौ दम्पती स्वामिभृत्यकौ । ए
तेषां समवेतानां व्यवहारो न विद्यते ॥ इति मदनरत्नधृतबृहस्पतिवचनमप्येतदभिप्रायकमेव । मदनरत्नकल्पतरुरत्नाक
रेषु तु राजा यथाकथञ्चिदर्थमाकलय्य विवादोपशमं कुर्यात् न तु प्रतितरलेखकपूर्वकं विचारं कुर्यादिति व्याख्यातं तदसत् । कथं
चिदर्थानाकलने च तु ष्याद्व्यवहारप्रवर्त्तनस्यावश्यकत्वात् । पूर्वप्रदर्शिततात्पर्यवर्णनमन्तरा गत्यभावात् । एकस्य बहुभिः सा
र्धं स्त्रीणां प्रेष्यजनस्य च । अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः । इति नारदवचनम् । तस्यापि भिन्नार्थैरनेकैरेकस्य युग
पद्व्यवहारोनादेय इत्यर्थः । गवां द्रव्यं हरेद्यस्तु सर्वे विदं लंघयेच्च यः । एकघ्नतां बहूनां शस्त्रादिस्मरणाद्व्यवहारिण एकस्य
बहुभिस्ताडितस्य वा गणेन ताडयितृभिश्च सर्वैः कार्ये युगपदपि व्यवहारस्य युक्तत्वात् । भिन्नार्थैरपिक्रमेणापि व्यवहारादर्शनेन
तमदर्थानिर्णयप्रसंगात् । प्रतिज्ञादोषा अपि वक्ष्यमाणास्ताद्दृग्व्यवहारमादेयत्व एव पर्यवस्यन्ति ॥ ● ॥ अथ सदृष्टकसभाप
तेः कार्य्यं निरूप्यते । तत्रावेदयितुः प्रश्नप्रकारमाह । कात्यायनः । कालेकार्य्यार्थिनम्पृच्छेत्प्रणतम्पुरतः स्थितम् । किंका
र्य्यं का च ते पीडा मा भैषीर्ब्रूहि मानव ॥ केन कस्मिन् कदा कस्मात्पृच्छेदेवं सभागतम् । एवं पृष्टः कार्यं यथावेदयेत्तत्प्रकारमाह
। याज्ञवल्क्यः । स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः । आवेदयति चेद्राज्ञे व्यवहारपदं हि तदिति ॥ चेदित्यनेन यदि केन

चिह्नमभिज्ञानेन समावेदयेन्नार्हं न बलाद्दापयेदित्युक्तम्। तथाच मनुः। नोत्पादयेत्स्वयं कार्य्यं राजा नाप्यस्य पूरुषः इति। पिता
महोऽपि। न तु पश्येत्समुत्प्रेक्ष्य स्वयं वा पुरुषेण वेति। नारदोऽपि। न तु राजा वशित्वेन धनलोभेन वा पुनः। उत्पादयेत्तु कार्य्याणि
नराणामविवादिनाम्॥ तथोत्पन्नमपि कार्य्यं कार्य्यिणा तत्सम्बन्धिना वाऽनिवेदितं कश्चित्स्वगम्यापि न राजादिभिर्बलाद्ग्राह्य
णीयमित्यप्याह मनुः। न च प्रापितमन्येन ग्रसेदर्थं कथञ्चनेति। अन्येनासम्बद्धेन कथञ्चन रागलोभादिना। अर्थं कार्य्यं
स्वेन्द्रवशं कुर्य्यात्। अत एव पितामहः। न रागेण न लोभेन न क्रोधेन ग्रसेन्नृपः। परैरप्रापितानर्थान्नचापि स्वमनीषयेति। परैः
कार्य्यितत्सम्बन्धैः कार्य्यिसम्बन्धाः पुत्रभ्रात्रादयः। यो न भ्राता न च पिता न पुत्रो न नियोगकृत्। परार्थवादी दण्ड्यः स्याद्व्यवहारेषु
विब्रुवन्॥ इति नारदवचनात्। अर्थिना संनियुक्तो वा प्रत्यर्थिप्रहितोऽपि वा। यो यस्यार्थे विवदते तयोर्जयपराजयौ। इति का
त्यायनवचनाच्च। पितामहोऽमुमर्थं स्पष्टमाह। पिता माता सुहृद्वापि बन्धुः सम्बन्धिनोऽपि वा। यदि कुर्य्युरुपस्थानं वादं तत्र प्रव
र्तयेदिति॥ यः कश्चित्कारयेत्किञ्चिन्नियोगाद्येन केनचित्। तत्तेनैव कृतं ज्ञेयमनिवर्त्यं हि तत्स्मृतमिति॥ अनिवेदितानामादा
नापवादमाह स एव। छलानि चापराधांश्च पदानि नृपतेस्तथा। स्वयमेतानि गृह्णीयान्नृपस्त्वावेदकैर्विनेति। छलान्याह स ए
व। पथिभङ्गी पराक्षेपी प्राकारोपरिलङ्घकः। निपानस्य विनाशी च तथा चायतनस्य च। परिखापूरकश्चैव राजच्छिद्रप्रकाशकः
। अन्तःपुरं वासगृहं भाण्डागारं महानसम्। प्रविशत्यनियुक्तो यो भोजनं च निरीक्षते। विण्मूत्रश्लेष्मवातानां क्षेप्ता कामान्नृपा
ग्रतः। पर्य्यङ्कासनबन्धी चाप्यग्रस्थाननिरोधकः। राज्ञोऽतिरिक्तवेषश्च विधृतः प्रविशेत्तु यः। यश्चापद्वारेण विशेद्वेलायामत
थैव च। शय्यासने पादुके च शयनासनरोहणे। राजन्यासन्नशयने यस्तिष्ठति समीपतः। राज्ञो विद्विष्टसेवी चाप्यदत्तविहिता
सनः। वस्त्राभरणयोश्चैव सुवर्णपरिधायकः। स्वयंग्राहेण ताम्बूलं गृहीत्वा भक्षयेत्तु यः। अनियुक्तप्रभाषी च नृपाक्रोशक
एव च। एकवासास्तथाभ्यक्तो मुक्तकेशोऽवगुण्ठितः। विचित्रिताङ्गः स्रग्वी च परीधानविधूनकः। शिरःप्रच्छादकश्चैव छिद्रान्वे

यथा तत्परः । आसक्तौ मुक्तकेशश्च घाताकर्णाक्षिदर्शकः । दन्तोल्लेखनकश्चैव कर्णनासाविशोधकः । कलान्येतानि यश्चा
शङ्खभिन्नं परसन्निधावपि नि । राज्ञः शय्यायां शयनं तदीयासनोपवेशनं तस्याद्रुकारोहणमिति त्रीणि कलानि । वस्त्राभर
णयोश्चैवेत्यत्रापि स्वयं माहेश परिधायक इति योज्यम् । परिधायपदं समासान्तर्गतमपि बुद्ध्या निष्कर्षे स्वीयम् ॥ [illegible]
न्द्रिकाकारस्तु वस्त्राभरणयोश्चेत्यत्राह तयाहरक इति शेषमाह । तच्चेयम् । पूर्वव्याख्यानेनोपनेनोत्पेयाच्चाहारस्यायुक्तम् ।
मुक्तकेश इति द्विःपाठो संयतकेशमुण्डितकेशयोः समावेशार्थः । अपराधानाह नारदः । आज्ञालंघनकर्त्तारः स्त्रीवधो वर्ण
संकरः । परस्त्रीगमनं चौर्यं गर्भश्चैव पतिं विना ॥ वाक्पारुष्यमवाच्यं यद् दण्डपारुष्यमेव च । गर्भस्य पातनं चैवेत्यपराधा
दशैवेति । पदान्याह पितामहः । उत्क्रोशी सत्यघाती चाप्यग्निदस्तथैव तु । विघ्नं सकः कुमार्य्याश्च निधानस्योपभोज
कः । सेतुकरट्टकभेत्ता च क्षेत्रसञ्चारकस्तथा । अस्पृश्यो बन्धकश्चैव गरदस्तथैव च । राजद्रोहप्रकारश्चा तन्मुद्राभेदकस्त
था । तन्मन्त्रस्य प्रभेत्ता च बद्धस्य च विमोचकः । भोगदण्डौ च गृह्णाति दानं विक्रयमेव च । पटहाघोषणाच्छादी द्रव्यमस्वामि
कञ्च यत् । राजावलीढद्रव्यस्य चैवाङ्गविनाशनम् । द्वाविंशतिपदान्याहुर्नृपग्राह्याणि पण्डिता इति ॥ एतानि छलान्य
पराधपदानि च राज्ञा नावेदितान्यपि । स्वयं कुर्यादथ ज्ञात्वा विचारयेत् । यदा तु स्वयं ज्ञातुमशक्तस्तदा स्तोभकसूचकाभ्यां
राज्ञा ज्ञात्वा विचारयेत् । स्तोभकसूचकस्वरूपमुक्तं कात्यायनेन । शास्त्रेण निन्दितं त्वर्थं मुख्यो राज्ञा प्रचोदितः । आवेदयति
यः पूर्वं स्तोभकः स उदाहृतः । नृपेण विनियुक्तो यः परदोषानवेक्षिता । नृपस्य सूचयेज्ज्ञात्वा सूचकः स उदाहृत इति ।
शास्त्रेण निन्दितं छलादिकम् । अर्थी मुख्यः प्रयोजनं स्वधनलाभप्रयोजनक इति यावत् । राजनियोगानपेक्ष एव यः पर
पराधं राज्ञे निवेदयति । स स्तोभकोऽयमर्थः [illegible] न निवेदयति सूचक इत्यनयोर्भेदः । आवेदकमध्येवंविधेन नावेदनं का
र्यमित्याह उशना । सशस्त्रोऽनुचरो यश्च मुक्तकेशः [illegible] । वाहनस्थो यथा स्वगो वदन्दण्डमवाप्नुयादिति । मुक्तक

च्छइतिमाधवीयपाठः । विनीतवेषोवदेदितितात्पर्य्यम् । यदावेदकवचनंलेखकःफलकादिषुराजाज्ञयालिखेदित्याह
नारदः । रागादिनायदेकेनकोपितःकरणेवदेत् । तदोमितिलिखेत्सर्व्वंलेखकःफलकादिष्विति । करणेधर्माधिकरणे ।
ओमित्यनेनयथावेदितन्तथैवलिखेदित्युक्तम् । लिखनानन्तरकृत्यमाह । कात्यायनः । एवम्पृष्टःसयद्ब्रूयात्तत्सभ्यैर्ब्रा
ह्मणैःसह । विचार्यकार्य्यंन्याय्यञ्चेदाह्वानार्थमतःपरम् । मुद्रांवासंनिक्षिपेत्तत्रपुरुषंवासमादिशेदिति । न्याय्यंन्याया
दनपेतंमयाजन्मान्तरेसोदत्तमृणंयन्नप्रत्यर्पयतीतिदृष्ट्यादिवदिद्वत्चाप्यर्थयोग्यंयन्नभवतीत्यर्थः । तस्मिन्नावेदकेपुरुषंसाध्यपा
लनामानम् । आह्वानार्थमभियुक्तस्यप्रेषयेत् । तथाचवृहस्पतिः । यस्याभियोगंकुरुतेतत्त्वेनाशङ्कयाथवा । तमेवाह्वानये
द्राजामुद्रयापुरुषेणवा ॥ उत्तरदानेतस्यैवाधिकारइतिभावः । कात्यायनः । अधिकारेभियुक्तस्यनेतरस्यास्यसङ्गतेरि
ति । इतरस्याभियुक्तदेकार्यभिन्नस्य । असंगतेरसम्बन्धात् । अभियुक्तानामपिकेषाञ्चिदनाह्वानमाह । सएव । अकल्य
बालस्थविरविषमस्थक्रियाकुलान् ॥ कार्य्यातिपातीव्यसनीनृपकार्य्योत्सवाकुलान् । मत्तोन्मत्तप्रमत्तार्त्तभृत्यान्नाह्वानयेन्नृपः
। अकल्योव्याधितः । विषमस्थःसङ्कटापन्नः । क्रियाकुलोनित्यनैमित्तिककर्म्मकरणव्यग्रः । कार्य्यातिपाती । यस्यतदानीमा
गच्छतोगुरुतरकार्य्यहानिः । व्यसनी । इष्टवियोगादिजन्यशोकवान् । मत्तोमदनीयसेवनेनच्युतमतिः । उन्मत्तोग्रहा
द्याविष्टः । प्रमत्तस्तदानींसर्व्वत्रानवधानवान् । आर्त्तोविषादवान् । भृत्यग्रहणमस्वतन्त्रोपलक्षणम् । अतएवनहीनपक्षां
युवतिङ्कुलेजातांप्रसूतिकाम् । सर्व्ववर्णोत्तमाङ्कन्यान्ताज्ञातिप्रभुकाःस्मृता । इत्यत्रास्वतन्त्रस्त्रीणामाह्वानम्प्रतिषिद्धंस्वत
न्त्राणान्तासामाह्वानमाह । सएव । तदधीनकुटुम्बिन्यःस्वैरिण्योगणिकाश्चयाः । निष्कुलायाश्चपतितास्तासामाह्वानमि
ष्यतइति । नारदः । निर्वेष्टुकामोरोगार्त्तोयियक्षुर्व्यसनेस्थितः । अभियुक्तस्तथान्येनराजकार्य्योद्यतस्तथा । गवांप्रचारे
गोपालाःसस्यावापेकृषीवलाः । शिल्पिनश्चापितत्कालमायुधीयाश्चविग्रहे । अप्राप्तव्यवहारश्चदूतोदानोन्मुखोव्रतीविष

मस्याश्चनासाध्यानचैतानाह्वयेन्नृप इति । निर्वेष्टुकामोविवाहेत्तून्मुखः । एतेचकालान्तरमाह्वानयाः यदानुमताश्चा

ह्वानमावश्यकंतदापुत्रादियत्प्रतिनिधयः । इदमाह बृहस्पतिः । अप्रगल्भजडोन्मत्तवृद्धस्त्रीबालरोगिणाम् । पूर्वोत्तरं च

देद्बन्धुर्नियुक्तोयोथवानरः । बन्धुःपुत्रादिस्तस्यपरार्थवादित्वाभावात् । नियुक्तस्यतत्वादेव । प्रतिनिध्याह्वानेनयदिनति

धीन्हःकालातिपातासहत्वञ्चयत्रचप्रतिनिधिकरणप्रतिषेधस्तत्रयथाकथञ्चिदकल्याद्याह्वानमाहमनुः । कालन्देशञ्च

विज्ञायकार्याणाञ्चबलाबलम् । अकल्यादीनपिप्रेत्यैवेशाह्वापयेन्नृपः । ज्ञात्वाभियोगंयेपिस्युर्वनेप्रव्रजितादयः । तानप्या

ह्वापयेद्राजागुरुकार्य्येष्वकोपयन् । गुरुकार्येष्वाह्वापयेदितिसम्बन्धः । निमित्तसम्प्रमोचेयम् । गुरुकार्यनिमित्तमाह्वा

ययेदित्यर्थः । अकोपयन्सान्त्वयन् । प्रतिनिधिप्रतिषेधंक्वचिदाहकात्यायनः । ब्रह्महत्यासुरापानस्तेयगुर्वङ्गनागमे । अ

न्येषुचातिपापेषुप्रतिवादीनदीयते ॥ मनुष्यमारणेस्तेयेपरदाराभिमर्शने । अभक्ष्यभक्षणेचैवकन्याहरणदूषणे ॥ पा

रुष्येकूटकरणेन्द्रपद्रोहेतथैवच । प्रतिवादीनदातव्यःकर्त्तापिविवदेत्स्वयमिति ॥ पुनस्तेयग्रहणंसर्वत्रापिप्रतिनिधि

प्रतिषेधार्थमितिमदनरत्नाकरः । पूर्वंस्तेयग्रहणंब्रह्महत्यादिसंदिशात्सुवर्णस्तेयपरमितिनुवयम् । प्रतिवादीवादिप्र

तिवादिनोःप्रतिनिधिरीदृशेषुगुरुकार्येषुनग्राह्यमित्यर्थः । राजाह्वानमतिक्रामतोदण्डोबृहस्पतिनोक्तः । आहूतोयस्तुना

गच्छेद्दर्पाद्बन्धुबलान्वितः । अभियोगानुरूपेणतस्यदण्डम्प्रकल्पयेत् ॥ अभियोगभेदेनदण्डभेदस्तुकात्यायनेनोक्तः ।

आहूतस्त्ववमन्येतयःशक्तोराजशासनात् । तस्यकुर्यान्नृपोदण्डंविधिदृष्टेनकर्मणा ॥ हीनेकर्मणिपञ्चाशन्मध्यमेतुशताव

रः । गुरुकार्येषुदण्डःस्यान्नित्यपञ्चशतावरः । गुरुकार्येषुनित्यञ्चाशक्तौनिवेशेषणारापन्नानागमनेदण्डोनास्तीतिका

यितम् । व्यासेनतुस्पष्टमुक्तम् । पत्नीकर्त्तृनदेशेदुर्भिक्षव्याधिपीडिते । कुर्वीतपुनराह्वानदण्डेनपरिकल्पयेत् । आपन्ना

यमनागमनासम्भवहेतुभूतंविवक्षितम् । आवेदनायजिगमिषनाकृतावेदनेनवाकार्य्यान्तरवैपद्यादिनाराजाह्वानविज्ञं

वेशजल्पथादिनाप्रतिवादिनःप्रतिरोधश्चासेधापरपर्य्यायःकार्यइत्याहकात्यायनः । उत्पादयतियोहिंसान्देयमर्थानप्र
यच्छति । याचमानायदौःशील्यादाकृष्योसौनृपाज्ञया ॥ आवेद्यनृपेकार्य्यमसन्दिग्धेप्रतिश्रुते । तदासेधंप्रयुञ्जीतया
वदाह्वानदर्शनमिति । प्रतिश्रुतेविचार्यत्वेननिश्चितेप्रतिज्ञातेच । नारदोपि । वक्तव्येऽर्थेनतिष्ठन्तमुत्क्रामन्तञ्चतद्वचः ।
आसेधयेद्विवादार्थीयावदाह्वानदर्शनमिति । वक्तव्ये निर्णीतव्ये । आसेधस्यचातुर्विध्यमाहसएव । स्थानासेधःकालकृतःप्र
वासात्कर्मणस्तथा । चतुर्विधःस्यादासेधोनासिद्धस्तंविलंघयेत् ॥ स्थानासेधोयावन्निर्णयमस्मात्स्थानात्पदमपिनचलित
व्यमित्यादिरूपः । कालासेधःएतावन्तंकालङ्कार्यान्तरंनकरणीयमनिर्णीयामुंव्यवहारमितीदृशः । निर्णयावधिविदेशग
मनन्नकार्यन्त्वयेत्येवंविधःप्रवासासेधः । देशकालावधिरहितोनिर्णयमात्रावधिकःस्नानादिकर्मनिरोधःकर्म्मासेधःक्वचिदासे
धनिषेधस्तेनैवोक्तः । नदीसन्तारकान्तारदुर्द्देशोपप्लवादिषु । आसिद्धस्तम्परासेधमुत्क्रामन्नापराध्नुयात् । आसिद्धस्याप
राधाभावमुखेननिषेधउक्तः । दुर्द्देशेतिमाधवीयपाठोदुर्द्देशादुरवस्थेतितत्त्वार्थः । अतएवासेधानर्हासेधएवप्रत्युतदण्डउ
क्तः । कात्यायनेन । आसेधयंस्त्वनासेध्यंराज्ञाशास्यइतिस्थितिरितिनारदोपि । यस्त्विन्द्रियनिरोधेनव्याहारोच्छ्वासनादि
भिः । आसेधयेदनासेधैःसदण्ड्योनत्वतिक्रमम् । सएव । आसेधकालआसिद्धआसेधंयोतिवर्त्तते । सविनेयोन्यथाकुर्वन्नासे
द्धादण्डभाग्भवेत् । कात्यायनः । आसेधयोग्यआसिद्धउत्क्रामन्दण्डमर्हति । अनासेध्याउक्तास्तेनैव । वृक्षपर्वतमारूढा
हस्त्यश्वरथनौस्थिताः । विषमस्थाश्चतेसर्वेनासेध्याःकार्यसाधकैः । व्याध्यार्त्ताव्यसनस्थाश्चयजमानास्तथैवचेति । निर्वे
ष्टुकामइत्याद्याह्वाननिषेधप्रसंगेनासेधकर्मपिनारदवचनप्रागलेखि । वृहस्पतिरपि । शाखोद्वाहोद्यतोरोगीशोकार्त्ता
न्मत्तबालकाः । मत्तोवृद्धोभियुक्तश्चनृपकार्योद्यतोव्रती । आसन्नेसैनिकःसंख्येकर्षकोवापसंग्रहे । विषमस्थाश्चनासेध्याःस्त्री
सनाथास्तथैवचेति । संख्येयुद्धे । वापसङ्ग्रहइत्येकवद्भावोद्वंद्वे । तथाचवीजावापेतत्संग्रहेचेत्यर्थः । स्त्रियःसनाथाश्चेत्ययमपि

ज्ञापकानुसरणमन्यथाप्रसङ्गादित्ययुक्तम्। केचित्प्रतिभुवोनग्राह्या इत्याह। कात्यायनः। नस्वामीनचवैशत्रुः स्वामिनाधिकृतस्तथा। निरुद्धोदण्डितश्चैवसंशयस्थोनकुत्रचित्। नैवरिक्थीनरिक्तश्चनचैवात्यन्तवासिनः। राजकार्यनियुक्ताश्चयेचवैप्रव्रजितानराः। नाशक्तोधनिनेदातुन्दण्डंराज्ञेचतत्समम्। नाविज्ञातोग्रहीतव्यः प्रतिभूःस्वक्रियांप्रति। रिक्थीभ्रात्रादिः। रिक्तोनिर्धनः। अत्यन्तवासिनोनैष्ठिकब्रह्मचारिण इतिमिताक्षरादिषु। अन्यत्रवासिनइतिपठित्वादेशान्तरवासिनइतिमदनरत्नेव्याख्यातम्। अविज्ञातोविशेषतोपरिचितः। याज्ञवल्क्यः। भ्रातॄणामथदम्पत्योःपितुःपुत्रस्यचैवहि। प्रातिभाव्यमृणंसाक्ष्यमविभक्तेनतुस्मृतम्। नारदः। साक्षित्वम्प्रातिभाव्यञ्चदानंग्रहणमेवच। विभक्ताभ्रातरःकुर्युर्नाविभक्ताःपरस्परम्। इदमपिदृष्टार्थम्। तथाप्रतिभूभेदाःतत्कार्यंचऋणादानप्रस्तावेवक्ष्यते। प्रतिभुवोयद्युभाभावोऽर्थिप्रत्यर्थिनोरन्यतरस्यतदाकिंकार्यमित्यपेक्षितआहकात्यायनः। अथचेत्प्रतिभूर्नास्तिकार्ययोग्यस्तुविवादिनः। सरक्षितोदिनस्यान्तेदद्याद्भृत्यायवेतनम्। भृत्यायसन्नपुरुषायरक्षकायसाध्यपालायेत्यर्थः। अत्रैकत्वमविवक्षितम्। वादिनइत्युपलक्षणंप्रतिवादिनोपि॥ ● ॥ अथव्यवहारपादाःप्रतिज्ञादयःप्रस्तूयन्ते। तेचत्वारः। परस्परंमनुष्याणांस्वार्थविप्रतिपत्तिषु। वाक्यान्न्यायव्यवस्थानंव्यवहारउदाहृतः॥ भाषोत्तरक्रियासाध्यसिद्धिभिःक्रमवृत्तिभिः। आक्षिप्तचतुरंशस्तुचतुष्पादभिधीयतइतिवचनात् बृहस्पतिः। भाषापादोत्तरपादौक्रियापादस्तथैवच। प्रत्याकलितपादश्चव्यवहारश्चतुष्पदइति। कात्यायनोपि। पूर्वपक्षस्योत्तरपक्षःप्रत्याकलितमेवच। क्रियापादस्ततेनायंचतुष्पात्समुदाहृतः॥ बृहस्पतिः। मिथ्यायांचतुरःपादाःप्रत्यवस्कन्दनेतथा। प्राङ्न्यायेचसतुद्वयोर्द्विपात्सम्प्रतिपत्तिषु। तृतीयतुरीयपादयोःसम्प्रतिपत्तावसम्भवाद्द्विपात्त्वमिति। अत्रविज्ञानयोगिना। साध्यसिद्धिस्तत्सिद्धौसिद्धिमाप्नोति। विपरीतमतोन्ययेतियोगीश्वरोक्तेर्जयपत्रमथावधारणान्तस्तत्त्वचतुर्थपादः इत्यभिधायोत्तराभिधानानन्तरमर्थिप्रत्यर्थिनोः कस्यक्रियास्यादित्यादिपरामर्शलक्षणस्यप्रत्याकलितस्ययोगीश्वरेण

रमासपक्षतिथिवारार्थिप्रत्यर्थिनामतदीयजातिभिरादिशब्दोपात्तैश्चद्रव्यसंख्यानञ्जातिनामवयआदिस्थानवेलाक्षमालिंगा
दिभिर्ययोपयोगश्चिह्नितमितिकार्यमावमावेदनकालेलिखितमधुनोपयुक्तविशेषणसहितंलिख्यतइतिनानर्थक्यमितिभावः।
आदिशब्दग्राह्याणिचकात्यायनआह। निवेशकालंवर्षंचमासंपक्षंतिथिंतथा। वेलांप्रदेशंविषयंस्थानंजात्याकृतीवयः
। साध्यप्रमाणंद्रव्यञ्चसंख्यांनामतथात्मनः। राज्ञांचक्रमशोनामनिवासंसाध्यनामच। क्रमात्पितॄणांनामानिपीडामाहर्तृदा
यकौ। क्षमालिङ्गानिचान्यानिपक्षंसङ्कल्प्यकीर्तयेत्। कालोधनप्रयोगादिकालः। वर्षेपत्रलिखनकालीनंमासपक्षतिथयोवि
संध्यावन्दनादिक्रियोपलक्षितःकालोवेला। प्रदेशःक्षेत्रादिस्थलविशेषः। विषयोन्तर्वेद्यादिदेशः। स्थानंविवादास्पदीभूत
गृहादिग्रामादि। आकृतिरवयवसंस्थानविशेषः। वयस्तारुण्यादि। प्रमाणंनिवर्तनप्रस्थादि। आत्मनोराज्ञांचक्षेत्रादिभो
गकालीनाम्बष्ठवचनन्तदीयपित्रादिप्राप्त्यर्थं। निवासोनिकटगृहादिः। पितरोर्थिप्रत्यर्थिनोस्त्रियः। पीडाप्रतिभूप्रभृतीनाम्ब
निकादिकृता। आहर्ताप्रतिग्रहादिविषयवस्तुनिधानेन। दायकोदातृविक्रेतादिः। क्षमालिङ्गान्यात्मीयधनादेः। परोपभो
गाद्युपसाधकहननचिह्नानि ॥७॥ अन्यस्तुबोधसंग्रहकारोपि। अर्थवद्धर्मसंयुक्तंपरिपूर्णमनाकुलम्। साध्यवद्वाचकपदम्प्र
कृतार्थानुबन्धिच॥ प्रसिद्धमविरुद्धञ्चनिश्चितंसाधनक्षमम्। संक्षिप्तन्निखिलार्थंचदेशकालाविरोधिच। वर्षर्तुमासपक्षाहो
वेलादेशप्रदेशवत्। स्थानावसथसाध्याख्याजात्याकारवयोयुतम्। साध्यप्रमाणसंख्यावदात्मप्रत्यर्थिनामच। परात्मपूर्वजा
नेकराजनामभिरंकितम्। क्षमालिंगात्मपीडावत्कथिताहर्तृदायकम्। यदावेदयतेराज्ञेतद्भाषेत्यभिधीयते। इत्यर्थवत्
। प्रयोजनवत्। धर्मसंयुक्तम्। अल्पाक्षरप्रभूतार्थत्वादिगुणयुक्तम्। परिपूर्णमध्याहाराद्यनपेक्षम्। अनाकुलमसन्दिग्धा
क्षरम्। साध्यवत्। साधनीयार्थयुतम्। वाचकपदम्। गौणलाक्षणिकपदरहितं। प्रकृतार्थाविरोधिप्रागावेदितार्थेनसहस
म्बादि। प्रसिद्धलोकप्रसिद्धमनतिक्रान्तं। अविरुद्धम्पुरराष्ट्रप्राड्विवाकराजाद्यविरुद्धम्। पूर्वापराविरुद्धंव्यवहारिकधर्मा

प्रपञ्चितम्। तत्र नारदः। अन्यार्थमर्थहीनं च प्रमाणागमवर्जितम्। लेख्यहीनाधिकं भ्रष्टम्भाषादोषास्तदाहृता। एतान्स
एवविवृतवान्। अर्थसाधारणो येको सम्बन्धो यानियुक्तकः। लेखयेद्यस्तु भाषार्थमन्यार्थं तां विदुर्बुधाः। गणकार्य्यमेको वाय
द्युसम्बन्धी तदनियुक्तो वा लेखयेद्यस्यां भाषायामित्यर्थः। ब्रह्महायमिति द्वेषात्कोधाद्वापि वदेत्तु यः। साध्यं च मोचयेत्पश्चाद
र्थहीनां तु तां विदुः। उक्तं साध्यवादिना यस्यां न्युच्यते सा भाषार्थहीनेत्यर्थः। गणिते न तु लिखिते मेयेत साक्षेत्रगृहादिषु। यत्र
संख्यानं निर्दिष्टा सा प्रमाणविवर्जिता। संख्यानं संख्येति व्युत्पत्त्या संख्याग्रहणेन गणनं मानं मानानां परिग्रहः। विद्याप्राप्तं
धीर्वं कथं कीर्तं क्रमागतम्। नवेवं लिख्यते यत्र सा भावाच्छादनागमा। समामासस्तथापक्षस्तिथिर्वारस्तथैव च। यत्रैतानि न लि
ख्यन्ते लेख्यहीनां तु तां विदुः। अवश्यं यत्र पूर्वाक्षराण्यालेख्यन्ते द्विःस्थाने लेख्यहीनेत्यर्थः। लेखयित्वा तु तां भाषामनिर्दिष्टे तथो
भरे। निर्दिशेत्साक्षिणः पूर्वमधिकान्वा विनिर्दिशेत्। साक्षिण इति प्रमाणोपलक्षणं। व्युत्क्रमादत्वाधिक्यन्तेनाप्राप्तकालता
कथिता। यत्र स्यात्तु यथा पूर्वं निर्दिष्टं पूर्ववादिना। सन्दिग्धमेव लेख्येन भ्रष्टां भाषां तु तां विदुः। उभयम्पूर्वमिति पाठे पक्षद्व
यमपि प्रतिज्ञावादिनैव निर्दिष्टं स्यादित्यर्थः। कात्यायनः। अप्रसिद्धं निराबाधं निरर्थं निःप्रयोजनम्। असाध्यं वा विरुद्धं वाप
क्षाभासं विवर्जयेत्। अप्रसिद्धमाह। बृहस्पतिः। न केनचित्कृतो यस्तु सोऽप्रसिद्ध उदाहृतः। यथा। फलवद्धस्तसस्यष्टक्षेत्र
मपहृतमिति। मदीयं शशविषाणं गृहीत्वा न प्रयच्छतीत्यादि अप्रसिद्धमित्याह विज्ञानेश्वरः। बृहस्पतिना त्विदमसाध्योदाहर
णमुक्तं तच्च वक्ष्यते। निराबाधं निरुपद्रवं मदीयस्मिन्मन्दिरे दीप्यमानदीपकप्रकाशेनायं स्वमन्दिरे व्यवहरतीति प्रभृति निरर्थम
भिधेयहीनं मदीयं कचटतपजबगडदशं गृहीत्वा न ददातीत्यादि विज्ञानयोगी। बृहस्पतिवचनात्त्वन्यथा निरर्थकपदार्थः प्रती
यते। यथाह। स्वल्पापराधः स्वल्पार्थो निरर्थक इति स्मृत इति। एतस्योदाहरणं स्मृतिचन्द्रिकायां। अहमनेन सस्मितमीक्षि
तः। मामको शिक्षा तेनापहृतेत्यादीनि। निष्प्रयोजनं यथायं स्वेच्छन्तो अस्मद्गृहसन्निधौ सुस्वरमधीत इत्यादि मिताक्षरा स्मृतिच

स्त्यजेत्। परस्परविरुद्धानियःपदानिनिवेशयेत्। विरुद्धपदसंकीर्णाभावानस्यनसिध्यतीति। यत्तु। पुरराष्ट्रविरुद्धश्च यश्चराज्ञाविवर्जितः। अनेकपदसंकीर्णःपूर्वपक्षोनसिध्यतीतिस्मरणात्तस्यायमर्थः। राज्ञाविवर्जितोराजत्यक्तस्नुषादिविषयकर्णादानादिपदमिश्रितस्तुक्रियाभेदेनयुगपन्नसिद्ध्यतीति। मदीयारूपकाद्य न्तोनयावृद्ध्यानेनगृहीताःसुवर्णञ्चयदस्यहस्तेमयानिक्षेपीकृतमयमिदंमदीयक्षेत्रमपहरतीत्यनेकपदविषयस्यापिपक्षस्य क्रमेणाप्यनुपादेयत्वेतत्वनिर्णयाभावप्रसंगेनयुक्तिविरोधात्। बद्धप्रतिज्ञंयत्कार्यंव्यवहारेषुनिश्चितम्। कामन्तदपिगृह्णीयाद्राजानत्त्वबुभुत्सयेतिकात्यायनवचनविरोधाच्च। तस्माद्युगपत्पक्षाभासतेत्येवरमणीयम्। अनेकवस्तुसङ्कीर्णस्यापक्षत्वन्त्वपदसम्बद्धम्। हिरण्यरूपकवासांसिवानेनमत्तोवृद्ध्यागृहीतान्यस्यहस्तेमयानिःक्षिप्तान्यनेनापहृतानिचेत्येकस्मिन्नपिपदेयुगपदपीदृशपक्षोपन्यासस्यादुष्टत्वात्। साध्यंचविधिमुखेनप्रतिषेधमुखेनवापक्षनिक्षेपणीयमित्याहकात्यायनः। न्यायंमत्तेच्छतेकर्तुमन्यायंवाकरोत्ययम्। नलेखयतियस्त्वेवंतस्यपक्षोनसिध्यति। न्यायंस्वमित्यनेनममैतावद्धनमादायनददातीत्यादिप्रतिवन्धमुखतोपिलक्षिता। अन्यायंवेत्यनेनममेदमपहरतीत्यादिविधिमुखताप्रदर्शिता। वृहस्पतिरपि। प्रतिज्ञादोषनिर्मुक्तंसाध्यंसत्कारणान्वितम्। निश्चितंलोकसिद्धञ्चपक्षम्पक्षविदोविदुरिति। प्रतिज्ञादोषैःप्रतिज्ञासंन्यासादिभिर्मुक्तंरहितम्। तेचदर्शिताःप्राक्। साध्यंसाध्यार्हम्। प्रत्यर्थिधर्म्मविशिष्टधर्मिवचनमितियावत्। सत्कारणान्वितंस्फुटदोषरहितहेतुसहितम्। निश्चितंसन्देहाजनकंवाक्यरचनायुक्तन्नतुस्वयमेवनिश्चितंविप्रतिपन्नावर्थेनिश्चयाभावात्। लोकसिद्धंव्यावहारिकधर्माविरुद्धम्। अतएवमनुः। सत्यानभाषाभवतियद्यपिस्यात्प्रतिष्ठिता। बहिश्चेद्भाष्यतेधर्म्मान्नियताद्व्यावहारिकात्। प्रतिष्ठिताप्रसिद्धत्वादिदोषनिर्मुक्तादिभाषाप्रतिज्ञाव्यावहारिकधर्म्माविरुद्धाचसत्यायाह्यानभवतिराजादीनामित्यर्थः। भवदेवस्तु। यत्रश्रुतमात्रमेवसतिलोकानांसम्प्रत्ययस्तल्लोकसिद्धन्तेननिर्धनकृतोलक्षादिसंख्यधनाक्षेपोनपक्षइतिव्याचख्यौतद्वा

धरूपप्रतिज्ञादोषवत्त्वेनैवतादृशपक्षस्यनिराकरणात्। प्रतिज्ञादोषनिर्मुक्तमित्यनेनैवगतार्थे । अयञ्चपक्षः प्राक्पाण्डुलेख्यं
भूमिफलकादौकारयित्वाशोधितःपश्चात्पत्रेलेखनीयः। तथाचवृहस्पतिः । अधिकाञ्छातयेदर्थान्न्यूनांश्चपरिपूरयेत् ।
भूमौनिवेशयेत्तावद्यावदर्थोविनिश्चितः। शातयेदुद्धरेत् । भूमावितिपाण्डुलेख्ययोग्याधारोपलक्षणम् । अतएवाह । स
एव । पूर्वपक्षंस्वभावोक्तम्प्राड्विवाकोभिलेखयेत्। पाण्डुलेखेनफलकेततःपत्रेविशोधितमिति । स्वभावोक्तन्नभयाद्युपाधिनो
क्तम् । व्यासोपि । पाण्डुलेखेनफलकेभूमौवाप्रथमंलिखेत्। ऊनाधिकन्तुसंशोध्यपश्चात्पत्रेनिवेशयेत्। शोधनञ्चोत्तरयोग्य
तावधिविधेयम्। नततःपरमनवस्थापत्तेरदृष्टार्थतापाताच्च। तथाचनारदः। शोधयेत्पूर्ववादन्तुयावन्नोत्तरदर्शने। अव
ष्टब्धस्योत्तरेणनिवृत्तंशोधनम्भवेत्। अवष्टब्धस्योत्तरयोग्यस्ययस्त्वर्थंप्रगल्भत्वात्पक्षदोषगुणहानादानाभ्यांशोधयितुमश
क्तस्तस्यवक्तव्यार्थंनिर्धार्यसभ्यैरेवसंशोधनीयः। यथाहवृहस्पतिः। अभियोक्ताप्रगल्भत्वाद्वक्तुन्नोत्सहतेयदा। सभ्यैस्तुशोध
नन्तस्यकार्यमर्थानुरूपतइति। यदिभाषामशोधयित्वैवोत्तरन्दापयन्तिसभ्यास्तदारागाल्लोभाद्भयाद्वापीत्यादिनाचुक्तदण्डेनस
भ्यान्दण्डयित्वापुनःप्रतिज्ञालेखनपूर्वकंव्यवहारः। प्रवर्त्तनीयोराज्ञेतितात्पर्य्यम्। यदार्थ्यर्थप्रत्यर्थिनोर्लेखनापाठवञ्चना
कीयलेखकद्वारातौभाषोत्तरेलेखयतः। सचान्यतरपक्षपातेनान्यथालिखत्यन्यरन्तराज्ञाचौरवद्दण्डइत्याहकात्यायनः। अन्य
दुक्तंलिखेदन्यदर्थिप्रत्यर्थिनांवचः। चौरवच्छासयेत्तन्तुधार्मिकःपृथिवीपतिरिति। अत्रशासयेदित्युक्तेस्तत्प्रयोजनम्पुनस्ता
दृशकार्येवृत्तिनिरोधे॥ स्मृतितत्त्वेतुचौरवच्छासयेदित्येवपठितम्॥●॥ एवमुक्तलक्षणःपक्षश्चतुर्विधः। तथाचवृहस्पतिः। शं
काभियोगस्तत्त्वञ्चलभ्येर्थेभ्यर्थिनन्तथा। वृत्तेवादेपुनर्न्यायःपक्षेज्ञेयश्चतुर्विधः। चतुर्विधःपूर्वपक्षःप्रतिपक्षस्तथैवच। च
तुर्धानिर्णयःप्रोक्तःकैश्चिदष्टविधःस्मृतः॥भ्रान्तिःशङ्कासमुद्दिष्टातत्त्वन्तत्त्वार्थदर्शनम्। लभ्येर्थेभ्यर्थनंमोहस्तथावृत्तेपुनःक्रि
येति। नारदः। सारस्तुव्यवहाराणांप्रतिज्ञासमुदाहृता। तद्धानौहीयतेवादीतरंस्तामुत्तरोभवेत्। उत्तरउत्कृष्टोविज

येतियावत्। यद्यपिन्यायाख्यपञ्चावयववाक्यान्तर्गतप्रतिज्ञास्वरूपंसाध्यधर्मविशिष्टधर्म्मिवचनमात्रंतथाप्यत्रसत्कारणान्वितमित्युक्तत्वात्सहेतुकसाध्यविशिष्टधर्मिवचनंप्रतिज्ञेतिगम्यते। हेतोरपक्षभूतादधमर्णादिनिष्ठत्वेन्तदनंगीकृतंक्रियापादेनसिध्यतीतिध्येयम्। तथासतिस्थापनानुमानप्रयोगएवप्रतिज्ञा। प्रतिस्थापनानुमानप्रयोगएवचोत्तरमत्रपर्यवस्यति। अतएवस्मृत्युक्ताऽभयाभासायथायथमर्थान्तरमप्यनुयोज्यानुयोगासिद्ध्यादिनिग्रहस्थानहेत्वाभासादिष्वेवपर्यवस्यन्ति। ततश्चत्वंशतंमह्यन्धारयसि। घटत्वेनमत्तोगृहीतत्वावद्धत्वादितिभाषाशरीरम्। नधारयाम्यगृहीतत्वात्प्रविदत्वाद्वेत्याद्युत्तरशरीरम्। अवचनसाधुशब्दनियमस्तदनभिज्ञानामर्थार्थिप्रत्यर्थिनदर्शनात्। बोधकास्तुयेषांयेशब्दाः प्रसिद्धास्तैरेवभाषालिखनीयम्। प्रतिवादिसभ्यादीनांतदभिज्ञत्वेभाषाद्वयाद्यभिज्ञैस्तैरेवबोधनीयाइत्याद्यूह्यम्। अतएवविष्णुधर्मैध्यापनेपिसाधुशब्दनियमान्नारदउक्तः। संस्कृतैःप्राकृतैर्वाक्यैर्यःशिष्यमनुरूपतः। देशभाषाद्युपायैश्चबोधयेत्सगुरुःस्मृतइति। इतिप्रतिज्ञोपादोनिरूपितः॥●॥ अथोत्तरपादोनिरूप्यते। तत्रनिर्दोषायाम्भाषायांनिश्चितंतदर्थेनप्रत्यर्थिनोत्तरन्देयम्। तथाचबृहस्पतिः॥ विनिश्चितेपूर्वपक्षेग्राह्याग्राह्यविशोधिते। प्रतिज्ञार्थेस्थिरीभूतेलेखयेदुत्तरन्ततः। विनिश्चितेसंशयरहितज्ञानगोचरीकृतार्थेविशोधितेऽतएवस्थिरीभूतेलेखयेदितिवाचयेदित्यस्याप्युपलक्षणंवाचनपूर्वकत्वाल्लेखनस्य। इदञ्चार्थिसन्निधावेवलेखनीयमित्याह। याज्ञवल्क्यः। श्रुतार्थस्योत्तरंलेख्यंपूर्वावेदकसन्निधौ। श्रुतोभाषार्थोयेनप्रत्यर्थिनासःश्रुतार्थस्तस्येतिकर्त्तरिषष्ठी। तेनलेख्यमित्यर्थः। पूर्वावेदकोर्थी पूर्वपक्षादुत्तरोपन्यासइत्युत्तरंपूर्वपक्षोपमर्दकमुच्यतेयथाहतुर्नारदप्रजापती। पक्षस्यव्यापकंसारमसन्दिग्धमनाकुलं। अव्याख्यागम्यमित्येतदुत्तरन्तद्विदोविदुरिति। पक्षस्यव्यापकंनिराकरणसमर्थं। सारंन्याय्यम्। असन्दिग्धंसन्देहजनकनानार्थादिशब्दरहितं। अनाकुलंपूर्वापराविरुद्धम्। अव्याख्यागम्यमप्रसिद्धदेशभाषाभिधानेनाप्रसिद्धार्थपददुश्लिष्टविभक्तिसमासव्यवहितयोजनाव्यवधारण

कल्पनाविपरीतामसाध्याद्याभिधानेनवाचयन्क्लिष्टव्याख्यानेनदुर्गमार्थंनभवति । हारीतोपि । पूर्वपक्षार्थसम्बन्धमनेकार्थ मनाकुलम् । उपयुक्तमव्यस्तपदंव्यापकंनातिभूरिच । सारभूतमसन्दिग्धंस्वपक्षैकान्तसम्भवम् । अर्थैश्वाव्यमगूढार्थंन्देय मुत्तरमीदृशमिति । अनेकार्थमनेकेऽर्थाउपयुक्ताविशेषणादयोयत्रतत्तथा । नन्वनेकार्थपदयुक्तन्तस्यसन्दिग्धत्वेनदुष्ट त्वात् । अनाकुलमुक्तार्थम् । उपयुक्तशब्दैरन्यूनमनल्पं । अव्यस्तानिव्यस्यासयोजनानपेक्षाणिपदानियत्रतदव्यस्तपद म् । व्यापकम्परिपूर्णार्थं । नातिभूरि अनुपयोगिव्यस्तरहितम् । सारभूतत्वासन्दिग्धत्वेव्याख्याते । स्वपक्षैकान्तसम्भवम् । स्वपरिगृहीतपक्षएवैकान्तेननियमेनसम्भवतिनकथञ्चिदपिपक्षान्तरकक्षामवगाहतेतत् । अन्यद्व्यक्तार्थम् । शाठ्यदर्पा दिभिर्य्यदोत्तरंनददातिप्रतिवादीतदाकथञ्चित्सभ्यप्राड्विवाकेनराज्ञोत्तरन्दापनीयमित्याह । बृहस्पतिः । पूर्वपक्षेयथा र्थन्तुनदद्यादुत्तरन्तुयः । प्रत्यर्थीदापनीयःस्यात् सामादिभिरुपक्रमैः । प्रियपूर्वंवचःसामभेदस्तुभयदर्शनम् । अर्था पकर्षणन्दण्डस्ताडनंबन्धनन्तथा । उभयैश्चोद्यमानस्तुनदद्यादुत्तरन्तुयः । अतिक्रान्तेसप्तरात्रेजितोसौदण्डमर्हति । उभयैर्मृदुभिस्तीव्रैश्चोपायैरित्यर्थः । कात्यायनः । यथार्थमुत्तरन्दद्यादयच्छन्तञ्चदापयेत् । मोहाद्वायदिवाशाठ्याद्यन्नोक्तं पूर्ववादिना । उत्तरान्तर्गतंवापितद्ग्राह्यमुभयोरपि । मोहादिवशात्पूर्ववादिनाप्रागनुक्तमप्युत्तरान्तर्गतमुत्तराभिधानसम यएवप्रोच्यमानमुभयोरुत्तरवादिव्यवहारदर्शिनोर्यग्राह्यंग्रहणार्हम्भवतीत्यर्थः । उत्तरलेखनोत्तरन्तुनग्राह्यमित्यर्थसि द्धमपिस्पष्टार्थमाह । सएव । उभयोर्लिखितेवाच्येप्रारब्धेकार्यनिर्णये । अयुक्तन्तत्रयोब्रूयात्तस्मादर्थात्सहीयतइति ॥

● ॥ अथोत्तरभेदाः । तत्रकात्यायनः । सत्यंमिथ्योत्तरञ्चैवप्रत्यवस्कन्दनन्तथा । पूर्वन्यायविधिश्चैवमुत्तरंस्याच्चतुर्वि धमिति ॥ सत्यंसम्प्रतिपत्तिः । प्रत्यवस्कन्दनङ्कारणोत्तरम् । व्यासः । साध्यस्यसत्यवचनंप्रतिपत्तिरुदाहृता । यथारूप कृतंमह्यन्धारयसीत्युक्तेसत्यन्धारयामिदास्यामीतिच । यद्यपिभाषार्थस्यानिस्करत्वादनुत्तरत्वमस्याभाति । तथाप्य

भियोक्तासाध्यतयोपन्यस्तस्यसिद्धत्वोपन्यासात्साध्यत्वनिराकरणादुत्तरत्वमस्यावसेयम् । तथाचस्मरणम् । अनुज्ञाकारणं
यत्रपक्षवादीप्रपद्यते । प्रतिपत्तिस्तुसाज्ञेयाकारणेदूषणंपृथक् ॥ कारणम्परोक्तहेतुदूषणं । वादीप्रत्यर्थी । कारणोकारणो
त्तरेपृथक्दूषणम्भवेदित्यर्थः । नचास्याःसिद्धसाधनत्वेनसदुत्तरत्वेपूर्ववादिनोनिग्रहस्थानंस्यादितिशंक्यंइष्टापत्तेः । पर
जयेपिपूर्ववादिनोदण्डःपरंनभवतिअपराधाभावात् । वाचस्पतिस्तुतत्त्वनिर्णिनीषुकथायाःसिद्धसाधनस्यादोषत्वान्ननिग्रहो
पीत्याह । नचैवन्धर्माधिकरणप्रवेशपक्षलिखनेपूर्ववादिनोवृथेतिवाच्यम् । प्राक्प्रतिपन्नस्यानुतापवतःप्रत्यर्थिनःपश्चाद
पिसंप्रतिसम्भवात्सन्धिकरणोत्तरमिव । सन्धिकरणञ्चनिरूपयिष्यते ॥ ● ॥ मिथ्योत्तरन्तुनधारयामीत्यादि । यथाहकात्या
यनः । अभियुक्तोऽभियोगस्ययदिकुर्यादपह्नवम् । मिथ्यातत्तुविजानीयादुत्तरंव्यवहारतइति ॥ व्यासोपि । मिथ्यास्यात्साध्य
निह्नुतिरिति । साध्यस्यसहेतुकसाध्यस्यशुद्धस्यवानिह्नवोमिथ्योत्तरमित्यर्थः । केवलसाध्यनिह्नवस्यसंप्रतिपत्तिभिन्नो
त्तरान्तरेष्वपिप्रसंगादितिवाचस्पतिः । तच्चिन्त्यं । सहेतुकसाध्यनिह्नवस्यतत्रापिसम्भवात् । तस्मादपह्नवमात्रंकारणाद्यसं
वलितंमिथ्योत्तरम् । कारणप्राङ्न्यायसम्वलितन्तूत्तरान्तरेइतिवयम् ॥ ● ॥ एतच्चमिथ्योत्तरञ्चतुर्विधम् । मिथ्यैतन्नाभिजा
नामितदात्रनचसन्निधिः । अजातश्चास्मितत्कालइतिमिथ्याचतुर्विधमितिव्यासस्मरणात् । अत्रचमिथ्यैतदितिकण्ठतोप
ह्नवोनजानामीत्यादिरर्थतः । अतएवाहकात्यायनः । श्रुत्वाभाषार्थमन्यस्तुयदितम्प्रतिषेधति । अर्थतःशब्दतोवापिमिथ्या
तज्ज्ञेयमुत्तरमिति । अत्रवाचस्पतिः । भाषार्थस्यसहेतुसाध्यस्यमिथ्योत्तरेणनिह्नवेपिहेत्वपह्नवांशएवसरूपाविद्धिरुपस्था
पनादोषः । साध्यापह्नवांशस्तुकारणोत्तरादिव्यवच्छेदकतयात्रांतर्भाव्यते । तथाहि । गृहीतत्वाद्धारणेभाषावादिनासा
ध्यत्वेपन्यस्तेकालदेशविशेषगर्भायान्तस्यांमयानगृहीतइतिहेत्वभावशङ्कैवोच्यते । कालविशेषगर्भायान्तुतदानाहंजा
तइत्यर्थात् । देशविशेषगर्भायामपितदातत्राहंनासमित्यर्थात् । अतएवार्थिकभावाप्रतिषेधस्त्रिविधःसोपादेशमि

थ्योत्तरम् । आद्यस्तु केवलमिथ्योत्तरमिति । नचैवंग्रहणास्कन्दनयोरसन्निधानाजन्मनोरेवप्रतिपाद्यतास्तु किमर्थि
काग्रहणापर्य्यन्ततात्पर्य्येणेतिवाच्यम् । यद्यपि तदाजातस्तत्र संस्वनथापि न गृह्णातितदा दृशांसर्वेषांग्रहणाभावात् ततः सन्निधा
नजन्ममात्रस्य ग्रहणाव्याप्तत्वाद्व्यापकाभावात् । व्याप्यग्रहणाभावासिद्धेस्तत्कालीनजन्माभावसन्निधानाभावयोरेवग्रहणाभा
वसाधकता । नह्यनुत्पन्नो गृह्णात्यसन्निहितोवेति सम्भवतीति तावत्पर्य्यन्ततात्पर्य्यावश्यम्भावात् । अतएवसर्वेस्मिन्नपि मिथ्यो
त्तरेस्थापकस्य ग्रहणस्थापनाय क्रियोपन्यासइत्याह । ननूक्तं । साध्यानालिंगितहेत्वभावमात्रोपन्यासेऽर्थान्तरत्वापाता
त् । हेतुत्वस्य साध्यनिरूपितत्वेन तदभावमुखेन साध्याभावव्यवस्थापनएवस्थापनाद्दूषणासम्भवात् । उत्तरान्तरव्यवच्छेद
मात्रस्याद्दृष्टतार्थपत्तेश्च । यत्र तु पूर्ववादिनः पित्रर्णादिग्रहणहेतुकधारणादि प्रतिज्ञातत्राज्ञानद्वारकसाक्षाज्ज्ञानदपह्नवोमि
थ्योत्तरम् । तत्कालाजन्मतद्देशासन्निधानयोरेतदीययोस्तदीययोस्तदीयग्रहणाभावासाधकत्वात् । अतएवप्रकाशास्वामि
कयेनाष्टिकेनादत्तत्वादिकमपि प्रमापणीयमित्यभियुक्तस्मरणमपि संगच्छते । अन्यथा दूषणादत्तत्वाद्यनुपन्यासाद दत्तत्वा
दिप्रमापणमधिकंस्यात् । तेन तत्प्रतिपादनेदत्तत्वादेर्नाष्टिकोक्तत्वव्यास्कन्दकत्वादस्य प्रत्यवस्कन्दनरूपत्वात्तस्यैव तत्साध
नापत्तौ मिथ्याक्रियापूर्ववादइतिविरुद्धव । इष्टापत्तावुच्यमानायां मिथ्योत्तरभेदत्वोक्तिविरोधात् । प्रत्यवस्कन्दनन्नाम सार्थ
गृहीतम्परन्तु प्रतिदत्तम्प्रतिग्रहसम्बंधेत्यादि । यथाह नारदः । अर्थिनालेखितोयोर्थः प्रत्यर्थी यदि तन्तथा । प्रपद्यकारणं
ब्रूयात्प्रत्यवस्कन्दनंस्मृतमिति । प्रपद्यस्वीकृत्य । यद्यपि भाषार्थस्य न सर्वांशस्वीकारोत्रसम्प्रतिपत्तित्वापत्तेः । कारणान
र्थक्यापाताच्च । तथाचग्रहणेनधारणेमतेनचप्रत्यर्पणीयत्वे साध्यत्वेन प्रतिज्ञाते ग्रहणांशमभ्युपेत्य प्रतिदानेन प्रतिग्रहादि
नावाधारणम्प्रत्यर्पणीयत्वाभावम्प्रत्यर्थी साधयति । मिथ्योत्तराद्दतएवास्यभेदः । तत्र भाषार्थस्य सर्वस्यापह्नवात्त्वेकदेशा
नपह्नवात् । प्राङ्न्याये तु यथायथमुभयसंभवइति ततोपि भेदः । तच्चतत्रविवक्ष्यामः । यत्तु प्राङ्न्यायोधार्यमाणत्वादि सा

मान्याभावज्ञापकःकारणोत्तरन्तु नत्वं तज्ज्ञापकमिति तयोर्भेद इति वाचस्पतिनोक्तम्। नतु च्छम्। प्राङ्न्यायेनापि कारणमुखे नोभयोरपि ज्ञापनसम्भवात्। तस्मादस्मादुक्तमेव भेदकं न्याय्यः। त्रिविधञ्चैतत्। स्थापनाधिकबलन्तत्समबलवत्तदून बलञ्चेति। उदाहृतमेवाधिकबलम्। न च हि मह्यमयं शतस्य धारयः। प्रतिदेयतया मत्तो गृहीततावद्धनत्वादित्यादि भाषायाञ्चिर्य्यातनादिस्थलेऽव्यभिचारवारणायेदानीं तनधारणाद्युपपत्तिगम्यमपरिशोधितत्वादि विशेषणमर्थिनो वक्ष्य हृदिस्थमास्थेयं तथा च प्रतिदानाद्युपन्यासेन तदसिद्धिः। प्रत्यर्थिनोक्ता भवतीति ध्येयम्। कात्यायनोपि स्पष्टमाचष्टे। अर्थिनाभिहितो ह्यर्थः प्रत्यर्थी यदि तं तथा। प्रपद्य कारणं ब्रूयादाधर्य्यं भृगुरब्रवीत्। इति। आधर्यमधरमन्तु वेलमिमिति यावत्। पूर्वपक्षस्येति शेषः। पूर्वपक्षदौर्बल्योत्तरस्य प्राबल्यमर्थात्तदुक्तम्। अत एव नारदः। आधर्य्यं पूर्वपक्षस्य यस्मिन्नर्थवशाद्भवेत्। विवादे साक्षिणस्तत्र प्रमाणं मानेऽपलक्षणम्। प्रदीपकृतस्तु। धार्यमाणत्वेकारणं गृहीतत्वं प्रपद्य ब्रूयात्। परिशोधनादिकमिति शेषः। अपरिशोधितत्वादिकञ्च स्थापनाहेतुविशेषणं करणं रवेणाज्ञेयमित्याहुः। तन्न। व्यवहितयोजनाध्याहारयोर्विना कारणमनुचितत्वात्। कारणम्प्रपद्येत्यन्वयेतमित्यस्य साकांक्षत्वेनानन्वयप्रसंगाच। अन्ये तु प्रपद्य स्थापनाहेतुमभ्युपेत्य यत्तद्विपरीतवचनन्तत्कारणोत्तरमिति त्रितयपरमेवेदं वचनमिति वदन्ति। अत्राधिकसमबलकारणोत्तरयोः स्थापनाया आधर्य्यसम्भवे नैतद्वाक्यस्य त्रितयविषयत्वायोग इति वाचस्पत्युक्तम्। दूषणाङ्कारणोत्तरस्य त्रैविध्यन्तदुक्तं खण्डयद्भिरनुपदमेवोद्धरिष्यते। समबलमिय भूर्भट्टीयाक्रमागतत्वादित्येकेन भाषतेऽपरोपि तद्देवोत्तरयति सप्रतिपक्षरीत्येति। दुर्बलं कारणोत्तरन्तु मयेयं विंशतिवर्षावधि भूमिरमुकस्वामिकाधीनेतीभाषायां स्वामिनैव पञ्चवर्षावधिमयाहि मत्वान्मदीयेति सप्रतिपक्षरीत्योत्तरितमाधौ प्रतिग्रहे काते पूर्वान्तु बलवत्तरेति वचनाददन्तु वेलम्। अत्राधिकबले प्रतिवादिनः प्रमाणोपन्यासाधिकारः पूर्वपक्षसाधनाय। अन्ययोस्तु पूर्ववादिन एव। गुरावभिहिते हेतौ प्रतिवादिक्रिया

भवेत्। दुर्बलेवादिनःप्रोक्तमनुत्थैःपूर्वक्रियैवचेतिस्मरणात्। कारणात्पूर्वपक्षोपिउत्तरत्वम्प्रपद्यते। अतःक्रियासदाप्रोक्ता
पूर्वपक्षप्रसाधिनी॥ इतिकारणाद्बलवत्वात्। उत्तरत्वमुत्तमत्वम्। पूर्वपक्षबलवत्त्वहेतुकांपूर्ववादिनःक्रियाम्प्रतिपादयिता
कात्यायनेनोत्तरस्यापिबलवत्त्वउत्तरवादिनःक्रियेत्युक्तम्भवति। इदंवाचस्पतिमिश्रोक्तम्। व्यवहारतत्वकारभ्युपेतन्तुकार
णोत्तरत्रैविध्यमयुक्तम्। वचनानारूढत्वाद्युक्त्यभावाच्च। तथाहि। अर्थिनालेखितइत्यादिनारदवाक्यस्याधिकबलकार
णाविषयत्वेनकिञ्चिद्बीजमस्ति। प्रत्युततस्यतन्मात्रविषयत्वेत्रितयसाधारणकारणोत्तरस्वरूपाभिधायकवचनान्तराभावस्व
रूपाज्ञानप्रसंगः। भवताप्येतस्यत्रितयसाधारण्यान्यभ्युपगमाच्च। समानबलोनबलविषयवचनान्तराभावाच्च। यत्तोच्यतेवा
च्यायनीये। अर्थिनाभिहितोह्यर्थःप्रत्यर्थीयदितन्तथाप्रपद्यकरणंइत्यादिवाक्येनारदीयेवाधर्यंपूर्वपक्षस्येत्यादिवाक्येनावदा
धर्यंप्रदेोपादानात्समोनबलकारणोत्तरेक्वियोभवतुमनर्हैतदेकवाक्यतयार्थिनालिखितोयःप्रत्यर्थीइत्यपिनारदवाक्यमधि
कबलकारणोत्तरविषयमेवेति। तदबुद्धिपूर्वकम्। तथासतिनारदीयमेववचनद्वयमनर्थकम्प्रसज्यतइतिसामान्यविशे
षविषयत्वमेवतस्याभ्युपगन्तव्यम्। अस्त्वेवन्तथासतिसामान्यलक्षणानभिधानदोषोपिप्रतिक्षिप्तः। आधर्यैपितववचनयो
रुक्तयुक्त्याविचमात्रविषयत्वम्। समबलातिबलयोस्ताधर्य्याभावात्तदाक्षिप्तंलक्षणान्तरमूह्यमितिसर्वेसुस्थमितिचेन्न
आधर्य्यमुपमर्दकत्वंवाद्युपन्यस्तयद्वांगीकारेसाधारणादिकारणप्रतिदानाद्युपन्यासेनस्यैवसाध्यत्वाविर्भावेनदुक्तयहस
योःप्रमाणोपन्यासानपेक्षत्वमेव। इदमेवाभिप्रेत्यकल्पतरौलक्ष्मीधरोप्याह। आधर्य्यैप्रमाणानर्हत्वम्पूर्वपक्षस्येत्यर्थइति।
अतएवकारणेप्रतिवादिनीतिसामान्यतएवकारणोत्तरेप्रतिवादिनएवक्रियावक्ष्यते। तेनयत्रितयसाधारणत्वमस्यवच
सोन्यमतमुपन्यस्याधर्य्यैांकिविरोधाद्दूषितम्। तदप्युक्तम्। वस्तुतस्तुप्रमाणोपन्यासेनत्साभीचीन्यासामीचीन्यकृतंत्रैविध्य
मुत्तरान्तरेपिपारमार्थिकंसम्भवत्येवेतिकारणोत्तरमात्रेतदभिधानमर्हन्ततःपूर्वमुक्तापिदुर्ज्ञेयम्। स्वस्वाभिमानेनतुपक्षोत्त

रयोः सार्वत्रिकमधिकबलत्वमेव । अन्यथा विवादाप्रवृत्तिप्रसक्तेः प्रमाणोक्तिप्रत्याकलितयोस्तद्विवेचनार्थयोरनयोरेवोपयोगो
न्यथाधिकबलकारणोत्तरे तयोरनुपयोगाद्विफलत्वप्रसङ्गः । संप्रतिपत्तिवत् । गुरावभिहिते हेत्वाविद्यादेस्तु स्मरणस्य नका
रणोत्तरत्वैविध्येन क्रियाव्यवस्थापकत्वम् । कारणे प्रतिवादिनीति सामान्यवचनसंकोचस्य निर्युक्तिकस्य प्रसक्तेः किन्तु मिथ्या
द्युत्तरत्रैविध्येन । तथाहि गुरौ पूर्वपक्षोक्तहेत्वभ्युपगमेन कारणोत्तरे कारणोपन्यासात्प्राङ्न्याये च तदुपन्यासात्तयोः साध्यत्वा
विर्भावे वाद्युक्तसाध्ये साध्यत्वतिरोधानात्प्रतिवादिनः क्रिया । दुर्बले तूत्तरे मिथ्याख्ये भावरूपत्वेन भावप्रमाणाभावमात्रेणासिद्धेः
साध्यत्वानर्हे वादिसाध्यस्य साध्यत्वातिरोधानात्तस्य क्रिया । तुल्ये द्वयोरपि भावसाधकयोरर्थिप्रत्यर्थिनोः पूर्वक्रियापूर्वं ममे
दमिति वदतोऽन्यतरस्येत्यर्थः । इदञ्च साक्षिषूभयतः सत्स्वित्यादिवचनं व्याचक्षाणा निपुणतरमुपपादयिष्यामः । कारणात्पू
र्वपक्षोऽपीति कात्यायनीयन्तु प्रामाणिकत्वनिबन्धनपूर्वपक्षस्योत्तमत्वम्प्रतिपादतः यद्वा च पूर्ववादिनः क्रियावाक्यान्तरेणोक्तातद्विष
यत्वेनाप्युपपद्यत इति न किञ्चिदेतत् । अत एव मिताक्षराकल्पतरुरत्नाकरमदनरत्नस्मृतिचन्द्रिकाकारादिभिरिदमुपेक्षितम् ।
॥ ● ॥ प्राङ्न्यायलक्षणमाह । हारीतः । अस्मिन्नर्थे समानेन वादः पूर्वमभूत्तदा । जितोऽयमिति चेद्ब्रूयात्प्राङ्न्यायः स्यात्तदुत्त
रम् । कात्यायनबृहस्पती । आचारेणावसन्नोऽपि पुनर्लेखयते यदि । सोऽभिधेयो जितः पूर्वं प्राङ्न्यायस्तु स उच्यत इति । अतः प्रा
ङ्न्यायपदमन्वर्थम् । प्राङ्न्यायस्य च प्रागवस्थायां मिथ्याकारणान्यतरोत्तरोपादानेनैव व्यवहारप्रवृत्तिरिति प्राङ्न्यायसाधनेन तद्दे
घसिद्धम्भवतीति सम्भवति धार्यमाणत्वादि सामान्याभावनद्धं सोभयज्ञापकता प्राङ्न्यायस्येति मिथ्याकारणोत्तराभ्यामस्य भेदः ।
त्रिप्रकारश्च प्राङ्न्यायः । तथा च कात्यायनः ॥ विभावयामि कुलिकैः साक्षिभिर्लिखितेन वा । जितस्त्वेवमयायम्प्राक्प्राङ्न्यायस्त्रि
प्रकारकः । कुलिकैरिति प्राकृतव्यवहारदर्शिनामुपलक्षणम् । इत्युत्तरभेदाः ॥ ● ॥ अथोत्तराभासाः । यद्यप्युत्तरलक्षणर
हित्यादेवोत्तराभासत्वमर्थसिद्धम्भवतीति नोत्तराभासाः पृथग्वाच्याः । योगीश्वरादिभिरत एव नोक्ताः । तथापि स्पष्टीकरणाय

कैश्चिदुक्ताःतथाचमिताक्षराधृतवचनम्। संदिग्धमन्यत्प्रकृतादत्यल्पमतिभूरिच। पक्षैकदेशव्याप्यन्यत्तथानैवोत्तरम्भवेत्।
इति। एतच्चतत्रैवोदाहरणनिष्ठतयाव्याख्यातम्। सुवर्णशतमनेनगृहीतमित्युक्तेसत्यंगृहीतंसुवर्णशतंमाषकशत
ञ्चेत्येवंसन्दिग्धमुत्तरम्भवेदिति। प्रकृतादन्यत्सुवर्णशताभियोगेपणशतन्धारयामीति। अत्यल्पंसुवर्णशताभियोगेपञ्च
धारयामीति। सुवर्णशताभियोगेपञ्चशतानिधारयामीत्यतिभूरि। पक्षैकदेशव्यापिहिरण्यवस्त्राभियोगेहिरण्यंगृहीत
मित्येतावन्मात्राभिधानम्। व्यस्तपदम्पदान्तरेणाभियोगेपदान्तरमादायोत्तरम्। यथामदीयमेतावद्धनंधारयतीत्यभि
योगेऽनेनाहन्ताडितइत्यादि। अव्यापिदेशस्थानादिभाषाविशेषेणाव्यापि। यथामध्यदेशेवाराणस्याम्पूर्वदिगवस्थित
मदीयमनेनक्षेत्रमपहृतमित्यभियोगेनक्षेत्रमपहृतमिति। निगूढार्थमहंसुवर्णशतंधारयतीत्यभियोगेकिमहमेवास्मैधा
रयामीति। अत्रध्वनिनाप्राड्विवाकःसभ्यावर्थावान्यस्मैकस्मैचिद्वाधारयतीत्यादिसूचनसंभवान्निगूढार्थमिदम्। पूर्वापर
विरुद्धमाकुलंयथासुवर्णशतंमह्यंधारयतीत्यभियोगेधारयामिपरन्तुगृहीतमेवनेतिगृहीतम्परन्तुनधारयामीतिवाकार
णादुपन्यासमधारणादावक्तव्यैवोत्तरम्। व्याख्यागम्यम्। दुश्लिष्टसमासाध्याहारादिसापेक्षत्वेनमेयार्थम्। यथासुवर्णश
तविषयेपितृकृतर्णाभियोगेगृहीतवचनात्सुवर्णानांपितुर्नजानामीति। अत्रगृहीतशतस्सुवर्णस्यपितुर्वचनात्सुवर्णानांशतं
गृहीतमितिनजानामीत्यर्थविवक्षायामीदृक्षमसमर्थसमासाध्याहारादिसापेक्षत्वादुक्तत्तस्याभिमतार्थपरव्याख्यावगम्यार्थं।
असारं। न्यायविरुद्धम्। यथासुवर्णशतमनेनमत्तोवृद्ध्यागृहीतन्तस्यवृद्धिरेवदत्तानमूलमित्यभियोगेसत्यंवृद्धिर्मयाद
त्तामूलंतुनगृहीतमिति। अत्रकाचित्पूर्वपक्षानिराकरणात्क्वचिदसम्बद्धार्थत्वात्क्वापिविलंवितार्थप्रत्यायकत्वाद्यथाययम
नुत्तरत्वमवसेयम्। यद्यप्युदाहृतमसारम्पूर्वापरविरोधएवपर्य्यवस्यति। तथापिक्वचित्साक्षात्क्वचिन्न्यायविरोधात्तथात्व
मितिभेदकन्द्रष्टव्यम्। स्मृतिचन्द्रिकाकारस्तुकाकदन्तसद्भावोत्तरमिथ्यतइति। कात्यायनवचनञ्चात्रसंवादितवान्। का

कस्यदत्तानोसन्तिसन्तीत्यादियदुत्तरम्। असारमितितत्तेनसमन्नोत्तरमिष्यतइति। कात्यायनेनान्येप्युत्तराभासाउक्ताः। अप्रसिद्धंविरुद्धंयदत्यल्पमतिभूरिच। सन्दिग्धासम्भवाव्यक्तमन्यार्थञ्चातिदोषवत्। यच्चाव्यस्तपदमव्यापिनिगूढार्थंतथाकुलम्। व्याख्यागम्यमसारञ्चनोत्तरंस्वार्थसिद्धयइति। एतान्स्वयमेवसव्याचष्टे। चिह्नाकारसहस्रन्तुसमयंचाविजानता। भाषान्तरेणवाप्रोक्तमप्रसिद्धन्तदुत्तरम्। प्रतिदत्तंमयावाल्येप्रतिदत्तंमयानहीति। यदेवमाहविज्ञेयंविरुद्धन्तदिहोत्तरम्। जितःपुरामयावायमस्मिन्नर्थेविवक्षिते। पुरामयायमितियत्तदूनंचोत्तरंस्मृतम्। गृहीतमितिवाच्येतुकार्षन्तेनकृतंमया। पुरागृहीतंयद्द्रव्यमित्येतदतिभूरितु। देयंमयेतिवक्तव्येमयादेयमितीदृशम्। सन्दिग्धमुत्तरंज्ञेयंव्यवहारेबुधैःसदा। मयादेयमित्यत्राकारप्रश्लेषस्यापिसम्भवात्सन्दिग्धमिदम्। असम्भवमस्माभिर्देयन्धनमस्मात्प्रपौत्रपुत्रेषाटमित्येवमादि। अव्यक्तंसुखेनयदक्षराण्येवनिर्गीनुमशक्यानि। एतावुत्तराभासावुदिष्टावपिस्पष्टाविति नेनलक्षितौ। बलाबलेनचैतेनसाहसंस्थापितंपुरा। अनुक्रमेतन्मन्यन्तेतदन्यार्थमितीरितम्। एतेनचबलेनप्राबल्येनअबलेनदौर्बल्येनचपुरासाहसंमनुष्यमारणादिस्थापितंवाग्गोपितमितियावत्। इत्यादिप्रकृतानुपयोगित्वादन्यार्थमित्यर्थः॥ व्यस्तपदम्पदान्तरेणाभियोगेकृतेपदान्तरसंक्रमेणोत्तरमितिसोदाहरणंमिताक्षरायांव्याख्यातन्तत्प्रागेवोक्तम्। स्मृतिचन्द्रिकायान्तुपूर्वपक्षनिश्चयात्प्रागुच्यमानंसर्वमेवोत्तरंव्यस्तपदमितिव्याख्यातम्। व्यस्तम्पदंस्थानमुपन्यासावसरोयस्येतिव्युत्पत्तेः। भवदेवेनतुअव्यस्तपदव्यापीतिपाठंलिखित्वाऽनन्वितार्थपदव्याप्तमितिव्याख्यातंव्यवहारतिलके। तत्तुदोषान्तरसंकरादयुक्तमितिप्राच्यमेवव्याख्याद्वयमनुसन्धेयम्। उत्तरमित्येकवचनाद्ग्राह्यवक्ष्योयाद्युत्तरसङ्करादप्युत्तराभासत्वंसूचितम्। कात्यायनादिभिःस्पष्टमुक्तम्। पक्षैकदेशेयत्सत्यमेकदेशेचकारणम्। मिथ्याचैवैकदेशेचसंकरात्तदनुत्तरमिति। संकरादनुत्तरत्वबीजंकात्यायनेनैवोक्तं॥ नचैकस्मिन्विवादेतुक्रियास्याद्वादिनोर्द्वयोः। नचार्थसिद्धिरुभयोर्नचैकत्रक्रियाद्वयमिति। मि

ख्याकारणोत्तरयोः संकरेऽर्थिप्रत्यर्थिनोर्द्वयोरेकस्मिन्व्यवहारे क्रियोपन्यासः प्रसज्यते। मिथ्याक्रियापूर्ववादेकारणे प्रतिवादि
नीतिस्मरणात्। मिथ्यामिथ्योत्तरे। पूर्ववादे क्रियार्थिनः क्रियोपन्यास इत्यर्थः। यथा सुवर्णमनेन रूपकशतञ्चानेन गृहीत
मित्यभियोगे सुवर्णशतमगृहीतं रूपकशतं तु गृहीतमित्युत्तरे तत्र प्रतिवादिनं प्रतिवादीयं वा उत्तरेण यं व्यवहारं प्रवर्तयेत्। द्वयोरेव क्रियोपन्यासाभावे च
व्यवहारघटकभेदे व्यवहारद्वयप्रसक्तावेकसमाप्त्या व्यवहारान्तरप्रवर्तनेऽविरोधाद्युगपद्व्यवहारसम्भवरूपा युक्तिर्बीजम्।
अत एवतस्यां दशायां तत्प्रमाणमात्रसाध्यत्वे क्रमेणोत्तरत्वमेवेति नामिकं व्यवहारद्वयं तयोरेव प्रवर्तनीयमित्युक्तं मिताक्षरास्मृति
चन्द्रिकादिग्रन्थेषु। कारणे प्राङ्न्याये सङ्करे तु प्रत्यर्थिन एव क्रियाद्वयम्प्रसज्यते। कारणे प्रतिवादिनि प्राङ्न्याये कारणोक्तौ तु
प्रत्यर्थी निर्दिष्टो क्रियामिति स्मरणात्। यथा पूर्वोदाहरणे एव। यद्येवं ब्रूयात्तु सुवर्णशतं गृहीतम्प्रतिदत्तं रूपकशतं तु प्रागयं
व्यवहारमार्गेण मया पराजित इति। अत्र यद्यप्येकस्यैव प्रमाणद्वयोपन्यासः सर्वथापि प्रागुक्तयायुक्त्या युगपद्व्यवहारासंभवरू
पोऽनुत्तरत्वे वा असत्त्वे वापि कस्यचिद्व्यवहारप्रवृत्तिरिष्टैव। कारणोत्तरे प्राङ्न्यायस्थितिभिस्तद्विभावनीयम्। प्राङ्न्यायस्तु तद्व
र्णिभिर्जयपत्रेणावेतिक्रमश्चावश्यकः। एवमुत्तरत्रसङ्करेऽपि। यथानेनसुवर्णं रूपकशतं वस्त्राणि च गृहीतानीत्यभियोगेऽ
स्यं सुवर्णं गृहीतं प्रतिदत्तञ्च रूपकशतं न गृहीतम्वस्त्रविषये प्राक्पराजित इति। अत्र द्वयोः क्रिययोः पूर्वन्यायेनैकस्य क्रियाद्वय
मिति द्वयमप्यनुत्तरत्वे बीजम्। सम्प्रतिपत्तौ क्रियाभावाच्चतुःसङ्करेणोदाहार्य्यः सङ्करसम्भवमात्रेणानुमिताक्षराकारेणैवचतुःस
ङ्करे बीजम्। अत एवात्र सम्प्रतिपत्तेरुत्तरान्तरेण सङ्करसत्त्वोत्तरान्तरोपादानेन व्यवहारः प्रवर्तनीयः। सम्प्रतिपत्तौ कि
याभावादिति मितेनैवोक्तं। सङ्करस्य वैकल्पिकव्यवहारमावश्यकेऽर्थिप्रत्यर्थिनोरन्यतरेच्छया बोध्यः। यत्र तु प्रभूता
र्थविषयत्वमन्यतरोत्तरस्य फलवत्त्वम्वा व्यवहाराकरणेऽन्यतरस्य पीडातिरेकादिकं वा प्राप्नोति निगमकमस्ति तत्र तदुत्तरोपादा
नेनैव प्रथमो व्यवहारः प्रवर्तनीय इत्याह। हारीतः। यत्प्रभूतार्थविषयं यत्र वा स्यात्क्रियाफलम्। उत्तरं तत्र तज्ज्ञेयमसंकी

र्णमितोन्यथा । असंकीर्णे सङ्करप्रयुक्तव्यवहारयौगपद्यासम्भवदोषाभावात् । अतोन्यथा सङ्कीर्णमिति शेषः । तेन तत्रेच्छा
क्रमेण व्यवहारक्रमइतिभावः । सङ्करादनन्तरत्वे प्रागुक्तियुक्तिरनेन सूचिता । अतएव मिथ्योत्तरङ्कारणाञ्चस्यानामेकत्र
चेदुभे । सत्यं वापि सहान्येन तत्रग्राह्यं किमुत्तरमित्युक्त्वा तदुक्तं हारीतेन । उदाहरणं तु यथानेन सुवर्णरूपकशतं वस्त्राणि च
गृहीत्वा यद्यं प्रयच्छतीत्यभियोगे सुवर्णरूपकशतं न गृहीतं वस्त्राणि गृहीतानि प्रतिदत्तानीत्युत्तरे ऽत्र मिथ्योत्तरस्य प्रभूतार्थवि
षयत्वात्तदुपादाय क्रियार्थिनः प्रथमं व्यवहारो द्रष्टव्यः । पश्चादल्पविषयेकारणोत्तरमादाय प्रत्यपरक्रियाऽवलंबनो व्यवहारः
। एवं मिथ्याप्राङ्न्यायसङ्करेपि बोध्यं । सम्प्रतिपत्तिर्यदि सुवर्णादौ तत्र क्रियाफलाभावादल्पविषयमप्युत्तरोत्तरमादायैव व्यवहा
रो भवति । एवं तुल्यार्थविषयत्वेप्युत्तरयोर्यत्र प्रथमदृष्टे फलं तदुत्तरावलम्बनेन व्यवहारो द्रष्टव्यः । तथा चोक्तं । यत्र वास्याः क्रि
याफलमिति । अहं पूर्वं कथायानावर्थिप्रत्यर्थिनौ यदा । वादो वर्णानुपूर्व्यां स्यात्पाह्यः पीडामवेक्ष्य चेति बृहस्पतिः । अत्र वाचस्प
तिमिश्राः । भिन्नभिन्नावच्छेदेन कारणादिसंसर्गो सङ्करादनन्तरमिति । पक्षैकदेशे यत्सत्यमिथ्यादि वाक्यार्थ एव न सम्भवति ।
अवच्छेदभेदेन सांकर्य्यस्यैवाभावात् । किन्तु पक्षस्यैकदेशे विषये यदुत्तरं सङ्कीर्ण्येनेत्तमदमुत्तरं । शेषमेकदेशपदद्वयमनुवा
दः यथा शतन्न गृहीतं गृहीतमपि परिशोधितं वा न धारयाम्येवेत्यादि । यत्तु । शताभियोगे पञ्चशतं परिशोधिताः पञ्चविंशतिस्तु नै
व गृहीताः । पञ्चविंशतिस्तु धार्य्यन्ते देयाइत्युत्तरं । यच्च वस्तुभेदेन प्रागुदाहृतमन्त्रयत्प्रभूतार्थविषयमिति वचनात् । कारणो
त्तरमादाय प्रथमं विचारः कार्यः । पश्चात्तु पञ्चविंशतिरपह्नुता अर्थिप्रमाणेन वा साध्याः प्रत्यर्थिप्रमाणेन वा साध्याः । न चैवं नैक
स्मिन्नित्येतद्वचनविरोधः । न्यायमूलकत्वेनैतद्वचनस्य लब्धार्थप्रमाणपरिग्रहाबाधकत्वात् । सति चनिर्णयप्रमाणे तदंशसंश
यस्यावश्यं निरस्यत्वात् । न च यत्प्रभूतार्थविषयमित्येतद्वचनबलादेव लब्धार्थप्रमाणग्राह्यता । तथा सत्येतत्स्मृतीनां श्रुतिमूलक
तापत्तेः न चेष्टापत्तिः । असम्भवं मूलान्तरत्वस्यैव श्रुतिमूलकत्वप्रयोजकत्वात् । यूपहस्त्यादिस्मृतौ तथा सिद्धान्तवचनात् । अ

अचन्यायमूलकत्वस्यैवसम्भवात्। नचतादृशविषयासम्भव एव नचैकस्मिन्निति वचनस्यमूलमितियुक्तम्। वक्तुर्भ्रमविषयद
र्शनात्। नचेदृशमुत्तरंनदेयमित्युपदेशार्थमिदम्। यथावस्थितार्थकथनस्यानिषेद्धुमशक्तेः। विद्वाएवंविवदन्तेनत्वज्ञाइ
त्यपिवक्तुमशक्यम्। नचातएव तेपर्य्यनुयोज्याः। छलंनिरस्यभूतेभ्यःव्यवहारान्नयेन्नृपइतिवचनात्तादृशामपितत्त्वतोबोध्यत्वा
त्। नचवचनादेवास्योत्तरस्यहेयता। वचनस्यादृष्टार्थतापत्तेः। अपिच। अतन्नगृहीतमित्यस्यनाग्रहणमात्रमर्थः। अतप
दानर्थक्यप्रसङ्गात्। नापिअतार्थग्रहणं। विशेषनिषेधेशेषाभ्यनुज्ञापत्तेः। नापिअतपदम्पक्षप्राप्तानुवादः। एवंसत्येकदे
शस्यगृहीतत्वविभावनादेवस्यापकोनिह्नुतेलिखितेनैकमितिवचनादेतावद्वर्नान्तरपवादमेवलभेतेत्यतिष्टापादकमेवेदमुत्त
रंस्यात्। मिथ्याकारणयोर्वापीत्यादिवचनमप्येवन्नेयम्। तस्माद्यावत्प्रकृतविषयःसंशयोनुवर्त्ततेतन्निर्णायकञ्चप्रमाणंलभ्यते
तावद्विचारणीयमितिपरमार्थः। भवदेवप्रदीपादयोप्येवम्। तस्मादस्मदुक्तमेवपक्षैकदेशेयत्सर्व्वमित्यादेरर्थमिति। त
देतद्वागाडंवरमात्रार्थक्षोदक्षमम्। तथाहि। तिमाक्षरादुक्तरीत्यादृष्टार्थतयैवसकलवचनस्वरसाभङ्गसम्भवात्। नचै
कस्मिन्नित्यादिवचनपर्यालोचनयायुगपदनुत्तरत्वस्यैवास्यवर्णितत्वात्। क्रमिकान्तरत्वस्यसर्वैरपीष्टत्वात्। नचायौगपद्य
मेवनिर्वीजम्। युगपद्व्यवहारासम्भवस्यैतादृशविषयेउपपादितत्वात्। व्यवहारस्यचतुष्पात्त्वात्। क्रियारूपपादभेदेसा
ध्यभेदेनभाषारूपपादभेदेचानद्रूढितव्यवहारभेदप्रसङ्गस्यसचेतसादुरपह्नवत्वात्। किञ्चभवदुक्तरीत्यान्यायाभासमूलक
तयानचैकस्मिन्नित्यादेरप्रमाण्यप्रसङ्गः। यच्चैकदेशपदस्यैकविषयपरत्ववर्णनमेकदेशपदद्वयस्यचानुवादत्वप्रतिपादन
न्तदतिमन्दम्। एकदेशपदेरूढित्यागप्रसङ्गात्। सम्भवत्यस्मदर्थनार्थवत्त्वेनिरर्थकानुवादस्यानर्थक्यापरपर्य्यायस्याभ्युप
गमानौचित्याच्च। यच्चैकविषयसङ्करउदाहृतन्तदपिसन्दिग्धादिदोषसङ्कीर्णमसाधारण्येनैतद्वचनविषयतानर्हमितिस
मस्तवचनानर्थक्यं। यदप्युक्तं। असम्भवंमूलान्तरत्वस्यश्रुतिमूलकत्वंप्रयोजकत्वमिति। तदपिमीमांसानध्ययननिवन्धनम्।

नह्यसम्भवमूलकत्वमष्टकादिस्मृतीनांश्रुतिमूलकत्वेप्रयोजकम् । तथासतितुलापुरुषादिस्मृतीनांलोभादिमूलकत्वस्यसुतरां
सम्भवाच्छ्रुतिमूलकत्वाभावप्रसङ्गः । यथाऽऽहुर्वार्त्तिककाराः । रागद्वेषमदोन्मादप्रमादालस्यलुब्धता । कथानोत्प्रेक्षितुं शक्याः
स्मृत्यप्रामाण्यहेतवइति । यूपहस्त्यादिस्मृतीषुमुक्तकत्वेनाप्रणीतत्वानवधारणान्मूलभूतश्रुत्यकल्पनं कर्तृसामान्याभा
वादिति । भाष्याभिमताप्रामाण्येमूलयुक्तिः । हेतुदर्शनन्तदुपष्टम्भकमन्वाचयमात्रमितितत्रैवव्याचक्षाणमाकरे । वार्त्तिक
कारणानुदृढतरवैदिकपरिग्रहीतुप्रामाण्यमेवतासामभिमतमित्यर्पितदभियोगभाजांनदुर्लभम् । यद्यप्यपिवेत्याद्यसम्भ
वदुक्तिकस्वकपोलकल्पितविकल्पजालमुच्चाव्यखण्डितन्तदपिप्रस्तुतप्रतीपम् । तादृशोत्तरस्यसर्वैरभ्युपगन्तव्यत्वात् । अत
महणाभावस्तत्तदर्थस्यादुष्टत्वाच्च । अयमत्रसकलवचनसन्दर्भसमाधानाद्विष्कृष्टोऽर्थः । क्रियालिखितादिप्रमाणरूपाप्रत्य
वस्कन्दनेप्राड्न्यायेचप्रत्यर्थिनएवभवति । मिथ्योत्तरेचार्थिनएव । सम्प्रतिपत्तौनकस्यापीतिव्युत्पादयिष्यते । एवञ्चसत्येन
यत्रेतरेतराख्ययाणामुत्तराणांसङ्करस्तत्रप्रत्यर्थिनःकारणप्राड्न्यायसाधनायप्रमाणद्वयमर्थिनश्चस्वसाध्यसाधनायैकम्प्रमाण
म्प्राप्नोतियत्रकारणप्राड्न्याययोस्तत्रप्रत्यर्थिनःप्रमाणद्वयम् । यत्रपुनर्मिथ्याकारणमिथ्याप्राड्न्याययोर्वातत्रार्थिप्रत्यर्थिनो
रेकैकम्प्रमाणम् । नचयथाप्राप्तमेवमेवास्त्वितिवाच्यम् । प्रमाणंहिसाध्यसिध्यर्थंएकस्मिन्व्यवहारेचैकमेवसाध्यमेकस्यैवो
चितम् । तेनतत्रनोभयोःप्रमाणमेकस्यवाप्रमाणद्वयम्भवितुमर्हं । उभयोःसाध्याभावादेकसाध्यस्यचैकेनैवप्रमाणेनसिद्धा
वितरवैयर्थ्यात् । तस्माद्युक्तमुक्तंसङ्करस्तदुत्तरमिति । तथाचसर्वत्रपक्षव्यापकमेवोत्तरंदेयम्स्थापनीयञ्च । यत्रपुनःसर्व
व्यापकतयाविधमुत्तरन्नलभ्यतेकिन्त्वेकैकांशव्यापकमनेकमेवोत्तरम् । तत्रनानोत्तरवशेननानाप्रतिज्ञाःकल्याक्रमेणैकैकप्रतिज्ञा
यामेकैकोत्तरोपादानेनव्यवहारःप्रवर्त्तनीयोऽन्यथात्रनिर्णयाभावप्रसङ्गंसचानुचितः । छलंनिरस्येत्यादिवचनात् । सङ्करात्
तुत्तरमितिहेतूपादानादुक्तविधयासङ्करेनिराकृतेस्यादोवोत्तरत्वमित्यभिप्रायः । एतदेवव्यतिरेकमुखेनोक्तम् । यत्प्रभूतार्थ

विषयंयच्चास्यात्क्रियाफलम्। उत्तरन्तत्र तज्ज्ञेयमसङ्कीर्णमतोन्यथेति। अतोन्यथायोगपद्येसंकीर्णंस्यादितिप्रागेवव्या
ख्यातं। पक्षव्यापकानेकोत्तरविकल्पेतुन ज्ञातुविन्मसङ्करावसरः। तस्मान्नक्कापिसङ्करेसदुत्तरत्वमिति ॥●॥ अथक्रियापादः। त
च्चतदुपयोगिप्रत्याकलितम्प्रथमंनिरूप्यते। विज्ञानयोगिनानस्यव्यवहारपादत्वानभ्युपगमेपिक्रियादानोपयोगित्वाभ्युपगमा
त्। अन्येस्तुव्यवहारपादत्वस्यैवस्वीकारात्। क्रियापादप्रागभावत्वमुभयसंमतः। प्रत्याकलितन्नामभाषोत्तरयोरर्थिप्रत्यर्थि
भ्यांलेखितयोःक्रियोपन्यासनमन्वयेमध्येकस्यस्यात्काचास्मिन्पदेक्रियास्याद्धीनघादीवानयोर्मध्येकइत्यादिःसभ्यप्राड्विवा
कस्यसभापतेः। सभ्यस्यप्राड्विवाकस्यवापरामर्श उच्यते। तथाचवृहस्पतिः। येनुतिष्ठन्तिकरणेतेषांसभ्यैर्विभावना। कल
यित्वोत्तरंसभ्यैर्दातव्यैकस्यवादिनः। करणेधर्म्माधिकरणे। येनिष्ठन्तिवादिनःप्रतिवादिनश्चतेषामुत्तरंमिथ्यादिचतुर्भेदं
कलयित्वाविचार्य्यैस्तदुत्तरेकस्यक्रियोपन्यासउचितइति। निर्धार्य्यैविभाव्यतेसाध्यमनयेतिविभावनाक्रियाप्रमाणमिति
यावत्। एकस्यवादिनोर्थिप्रत्यर्थ्यन्यतरस्यसभ्यैर्दातव्या। उपन्यसनीयत्वेनाज्ञापयितव्येत्यर्थः॥ कात्यायनोपि। लिखिते
शोधितेसम्यक्सतिनिर्दोषउत्तरे। अर्थिप्रत्यर्थिनोर्वापिक्रियाकरणमिष्यते। क्रियाकरणंक्रियोपन्यासः। पुनर्वृहस्पतिः।
श्रुत्वापूर्वोत्तरंसभ्यैर्निर्दिष्टायस्यभावना। विभावयेत्प्रतिज्ञातंसोखिलंलिखितादिना। विभाव्यतेसाध्यतेसाध्यमनयेतिविभाव
नाक्रियैव। पूर्वोत्तरम्पूर्वपक्षमुत्तरञ्चेत्यर्थः। द्वंद्वैकवद्भावः। निर्दिष्टाबुद्ध्योपदिष्टा। कस्मिन्नुत्तरेकस्यक्रियाक्रियारहि
तञ्चकिमुत्तरमित्यपेक्षायामाह। व्यासः। प्राङ्न्यायकारणोक्तौतुप्रत्यर्थीनिर्दिशेत्क्रियाम्। मिथ्योक्तौपूर्ववादीतुप्रतिपत्तौनसा
भवेत्। प्राङ्न्यायकारणोत्तरयोःप्राङ्न्यायेकारणेचसाधितेऽर्थीसाध्यस्यग्रहणस्यधारणासाधकत्वाङ्गीर्थेसाधनम्प्रत्यर्थिनाभ्युप
गमाच्चेमितत्त्वैवसाध्यत्वाविभावात्तदुपन्यासकारिणएवप्रत्यर्थिनःप्रमाणोपन्यासस्तत्साधनायोचितः। अर्थिसम्बन्धविरहप्र
त्यर्थिसम्बन्धयोर्द्वयोरपितत्तैर्वानर्थक्यात्। मिथ्योत्तरेतुवादिनःप्रमाणदुर्भिक्षंयदिप्रतिज्ञातेऽर्थेप्रमाणाभावादेवप्रत्यर्थीभि

मतेऽर्थिप्रतिज्ञानसाध्यहेत्वभावः सिध्यतीति तत्परिहारायभावाभावयोर्भावस्यैवसाध्यत्वेऽपि चित्याचार्थिनएवक्रिया । सम्प्रतिपत्तौतुनैकस्यापिसाध्यमस्तीतिनिरर्थकत्वात्क्रियैवनास्तीत्यर्थः । वृहस्पतिः । प्रतिज्ञाम्भावयेद्वादीप्रत्यर्थीकारणन्तथा । प्राग्वृत्तवादिविजयञ्जयपत्रेणभावयेदिति । प्राग्वृत्तंप्राङ्न्यायःप्रतिज्ञाम्प्रतिज्ञानार्थइदञ्चपरिशेषान्मिथ्योत्तरविषयम् । जयपत्रेणेतिप्राङ्न्यायदर्शिप्रभृत्युपलक्षणम् । मनुः । अपह्नवेऽधमर्णस्यदेहीत्युक्तस्यसंसदि । अभियोक्तादिशेद्देशङ्करणंवान्यदुद्दिशेत् । दिशतिकथयतियथादृष्टमर्थमितिदेशःसाक्षी । मेधातिथिस्तु । व्यवहारादिप्रयोगदेशवर्त्तिनः । साक्षिणोदेशशब्देनलक्ष्यन्तइत्याह । अन्यत्कारणम्प्रमाणंसाक्षिभिन्नंलेख्यादि । मेधातिथिनातुकरणंवासमुद्दिशेदितिपठित्वाकरणशब्दः । प्रमाणसामान्यवाचकोपिगोवलीवर्दन्यायेनसाक्षीभिन्नकरणमाचष्टे । पृथगुपादानात् । करणंवासमुद्दिशेदितिपाठेप्ययमेवार्थइत्युक्तम् । यत्रमिथ्याप्रत्यवस्कन्दनयोःकात्स्न्र्यपक्षव्यापिनाः । यथाकश्चिच्छृङ्ग्याहिकयाकञ्चिदभियुङ्क्तेमदीयेयङ्गौरमुकस्मिन्कालेनष्टास्यगृहेदृष्टायतः । नत्वाभियुक्तउत्तरयतिमिथ्यैतत् । एतत्प्रदर्शितनाशकालात्प्रागेवास्यमद्गृहेऽवस्थितत्वादितिइदन्तावत्पक्षप्रतिक्षेपक्षमत्वमभिप्येतुत्तरत्वानर्हम् । कारणोपन्यासात्प्रभृत्युद्धमिथ्योत्तरम् । एकदेशाभ्युपगमाभावाच्चार्थिनालेखितोर्थइत्यादिप्रागुक्तप्रत्यवस्कन्दनलक्षणंनास्त्यन्दति । साध्यभेदायप्रतिज्ञाभेदापादकत्वाभावाच्चनपक्षैकदेशेयत्सत्यमित्युक्तसङ्करवद्युगपद्व्यवहारासम्भवत्वंतंयुगपदनुत्तरम् । तस्मात्कारणंमिथ्योत्तरमेवेदम् । अन्यतरसाधनेनापिविवादपर्यवसानात् । अत्रमिथ्याक्रियापूर्ववादइतिवचनात्कारणेप्रतिवादिनीतिवचनाच्चान्यतरस्ययथारुचिक्रियोपन्यासइतिमातियद्यपितथापिमिथ्याक्रियेत्यादेःशुद्धमिथ्याविषयत्वेनैतद्विषयत्वाभावात्कारणेप्रतिवादिनीतिवचनात् । प्रतिवादिनएवात्रक्रिया । नचास्यापिशुद्धप्रत्यवस्कन्दनविषयत्वादेतद्विषयत्वाभावप्रसङ्गेनकस्यापिक्रियाप्राप्तेर्नोतिनिर्णयप्रतिबन्धएवेतिवाच्यम् । यतःप्रसिद्धप्रत्यवस्कन्दनेपियद्दत्वाद्यभ्युपगमेनप्रतिदानादिकारणोत्तरतैवास्या

सम्भाविनीतिवाच्यम् । एकदेशाभ्युपगमस्यप्रायिकत्वात् । कारणोपन्यासस्यैवोत्तरान्तरासंकीर्णतयानत्वक्षव्याप्त्वावश्यंभा
वात् । एवंकृत्स्नपक्षव्यापिसप्राङ्न्यायंमिथ्योत्तरमपिद्रष्टव्यम् । यथाप्राक्तनाभियोगएव । यद्येवंप्रतिवदतिमिथ्यैतत् । यतः
प्रागयमस्मिन्नभियोगेमयाव्यवहारमार्गेणपराजितइति । अत्रापिप्राङ्न्यायकारणोक्ताविव्याप्तिप्राक्प्रदर्शितवचनात्प्रत्य
र्थिनएवक्रियोपन्यासः । प्राङ्न्यायसिद्धौप्रतिज्ञायाःप्रकटमेवमिथ्यात्वपर्यवसानात्स्वयमुक्तप्राङ्न्यायविषयत्वासम्भवादेतादृ
शप्राङ्न्यायविषयतायाश्चायवर्जनीयत्वात् । पक्षप्रतिक्षेपपक्षमस्यास्यप्रागवदेवानुत्तरत्वानर्हत्वात् । यत्रतुकारणप्राङ्न्याययोः
कृत्स्नपक्षव्यापितयैकोत्तरत्वन्तत्रप्रत्यर्थिनाप्राङ्न्यायएवसाधनीयः । कारणसाधनस्यतदन्तर्भूतत्वात् । यथारूपकशतम
नेनमामकंगृहीतमित्यभियुक्तःप्रतिवदतिसत्यंगृहीतम्प्रतिदत्तञ्चादिदानीमस्मैनधारयामि । अस्मिन्नेवार्थेप्रागमुनाहमभि
युक्तस्तत्पाद्यव्यवहाररीत्यामुम्पराजितवानिति । इदानींहीनपरिज्ञानोपायः । तत्रमनुः । बाह्यैर्विभावयेल्लिंगैर्भावमन्तर्ग
तंनृणाम् । स्वरवर्णेङ्गिताकारैश्चक्षुषाचेष्टितेनच । स्वरोविकृतोगद्गदत्वादिः । वर्णोप्यस्वाभाविकःकृष्णतादिः । इङ्गितंस्वे
दवेपथुरोमाञ्चादि । आकारोविकृतोभ्रुवक्रिमादिः । चक्षुःकातरम् । चेष्टितंवृथास्थानात्स्थानान्तरगमनादि । याज्ञव
ल्क्यः । देशाद्देशान्तरंयातिसृक्किणीपरिलेढिच । ललाटंस्विद्यतेचास्यमुखंवैवर्ण्यमेतिच । परिशुष्यत्स्खलद्वाक्योविरुद्धम्ब
हुभाषते । वाक्चक्षुःपूजयतिनोतथोष्ठौनिभुजत्यपि । स्वभावाद्विकृतिंगच्छेन्मनोवाक्कायकर्मभिः । अभियोगेथसाक्ष्येवादु
ष्टःसपरिकीर्तितः । मनोवाक्कायकर्मभिर्य्यःस्वभावाद्विकृतिङ्गच्छेतनभयादिनिमित्तमसावभियोगेसाक्ष्येवादुष्टःपरिकीर्ति
तः । मनःप्रकृतिविकृतिरेवंविविच्यदर्शयति । देशान्तरंयातिनचैकत्रावतिष्ठते । सृक्किणीओष्ठप्रान्तौपरिलेढिजिह्वयापुनःप
रिघटयतीतिकर्मणोविकृतिः । अस्यललाटंस्विद्यतेस्वेदबिन्दुवृन्दाङ्कितम्भवति । मुखंवैवर्ण्यंवर्णान्यत्वम्पाण्डुत्वकृष्णत्वादि ।
एतिप्राप्नोतीति । कायस्यपरिशुष्यत्स्खलद्वाक्यः । परिशुष्यत्वगद्गदंस्खलद्व्याहतम्पदवर्णोवाक्यंयस्यसः । बहुअनुपयुक्तमवि

रुद्धं पूर्वापरविरोधवद्भाषत इति वाचः ॥ परेङ्गिताकाराभ्यामिति वचनदानेन । यच्चासौ परस्य प्रतिवीक्षणेन न पूजयति नाभिनन्दति सी
ति मनोविकृतेर्लिङ्गम्परकीयमनोविकृतेरप्रत्यक्षत्वात् । तथा चोष्ठौ निर्भुजति वक्त्रयन्नु पर्यधोभावेन चालयतीति कायस्यैव
विकृतिः । मनुरेव । आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च । नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः । कात्यायनः । आका
रेङ्गितचेष्टाभिस्तस्य भावं विभावयेत् । प्रतिवादी भवेद्धीनः सोऽनुमानेन लक्ष्यते । कम्पः स्वेदोऽथ वैवर्ण्यमोष्ठशोषाभिमर्षणम् ।
भूलेखनं स्थानहानिस्तिर्यगूर्ध्वनिरीक्षणम् ॥ स्वरभेदश्च दुष्टस्य चिह्नमाहुर्मनीषिणः । प्रतिवादीति शब्देन परस्परप्रतिपक्ष
वादित्वादुभयोर्ग्रहणम् । अभिमर्षणमोष्ठयोः प्रान्तावलेहनं हृदुकवद्भावः । श्रीरामायणे । आकारश्छाद्यमानोऽपि न श
क्यो विनिगूहितुम् । बलाद्धि विवृणोत्येव भावमन्तर्गतं नृणाम् । अनेन च पराजयसम्भावनामात्रम्प्रतिपाद्यते तस्य च फलं क्रिया
दिपरामर्शे सभ्यादीनामवधानेन व्यवहारविषयविचारः । न त्वेतावता पराजयनिश्चयो साक्ष्यनिर्णयो वा नैसर्गिकनैमित्तिकवि
कारयोर्वैलक्षण्यस्य विवेक्तुमशक्यत्वात् । यद्यपि केऽपि निपुणतममनिर्विवेक्तुं शक्नुयात् तथापि न पराजयनिमित्तमसाक्षित्वनिबन्ध
नं वा दण्डादिकार्यं सम्भवति । न हि निपुणा अपि वगभियोगमूलकमरणानिश्चयेऽपि मृतकार्यमार्याः समाचरन्ति । योगीश्वरः ।
सन्दिग्धार्थं स्वतन्त्रो यः साधयेद्यश्च निष्पतेत् । न चाहूतो वदेत्किञ्चिद्धीनो दण्ड्यश्च स स्मृतः । सन्दिग्धमधमर्णादिभिरनभ्यु
पगतमेवार्थं यः स्वतन्त्रः । प्रमाणनिरपेक्ष एव साधयेदासेधादिना राजादिभ्योऽनिवेद्यैव तस्माज्जिघृक्षति तदुपरि दण्डाद्या
दयति वा स हीनो दण्ड्यश्च भवति । न परम्प्रकृतार्थहानिमाप्नोति प्रत्युत स्वातन्त्र्यनिबन्धनं राजदण्डमपि दातुमर्हति । यश्च स्वय
मभ्युपेतं साधनेन वा साधितया च्यमानो निष्पतेत् । पलायेत सोऽपि तथा दण्ड्यः । साधितं धनञ्च दाप्यः । यश्चाहूतोऽभियुक्तो राज्ञा
चाहूतः सदसि न किञ्चिद्वदति स प्रकृतार्थहानिं दण्डञ्च प्राप्नोति । प्रकरणात् दुष्टपरिज्ञानमेवमाभूदिति दण्ड्यग्रहणं स च
दण्ड्योऽपि पश्चात्तापार्थं न हीयत इति साध्यार्थान्न हीयत इत्यर्थात् हीनत्वदर्शनात्तन्माभूदिति हीनग्रहणं नारदोऽपि । अन्यवादी कि

याद्वेषीनोपस्थाताविरुत्तरः । आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः ॥ अन्यवादी तथा हीनः स एव विवृत्तवान । पूर्ववाद
म्परित्यज्य योऽन्यमालम्बते पुनः । वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः ॥ कात्यायनेनापि । आवयित्वा यदा कार्यं न्यजेदन्य
द्वदेदसौ । अन्यपक्षाश्रयस्तेन कृतो वादी स हीयते ॥ यस्तु कश्चिदभियुज्यमानः स्वमेनमभियुञ्जतइत्येवं विरुद्धमभिदधानस्ते
ऽप्यन्यवादीतया हीनइत्याह स एव । न मयाभिलिखितं कार्यं मभियुञ्ज्य परं वदेत् । विबुवं स भवेद्वंहीनन्तमपि निर्दिशेत् ॥ न
यः पत्रे विलिखितम्पूर्वपक्षमप्यन्यथाकुर्वन्नन्यवादीतया हीनइत्याह स एव । लेखयित्वा तु यो वाक्यमूनं वाभ्यधिकम्पुनः । वदेद्वा
दी स हीयेत नाभियोगमनुसोऽर्हति । अभियोगं पूर्वपक्षं नार्हति वादिन्ययोग्यो न भवतीत्यर्थः । क्रियाद्वेषी योऽनुपस्थानुहो
ननाया स्तेनैव विवरणं कृतम् । सभ्याश्च साक्षिणश्चैव क्रियाः प्रोक्ता मनीषिभिः । तां क्रियां द्वेष्टि यो मोहात् क्रियाद्वेषी स उच्यते ॥
आह्वानादनुपस्थानात्सद्य एव स हीयते । निरुत्तरतया हीनमप्याह स एव ॥ ब्रूहीत्युक्तोऽपि न ब्रूयात्सद्यस्तज्ञ्ज नमर्हति ।
द्वितीयेऽहनि दुर्बुद्धिर्विद्यात्तस्य पराजयम् । पराजयम्पराजयचिह्नहीनताम् । अतएव हारीतः । सोपदेशं हरेत्कालमबुवं
श्चापसंसदि । उक्तावचोऽविबुवंश्च हीयमानस्य लक्षणम् । सोपदेशं सव्याजम् । यथाह कात्यायनः । व्याजेनैव तु यत्रासौ दी
र्घकालमतिक्रमेत् । सोपदेशन्तु तद्विद्याद्वादहानिकरं स्मृतमिति । आहूतप्रपलायी । अभियोगपरिहारार्थमाह्वानबुद्ध्याप्र
च्छन्नचारी । एतेषामुत्तरोत्तरस्य हीनतागुर्वीति ज्ञापयितुं हीनम्पञ्चविधइत्युक्तं न परिसंख्यार्थमन्येषामपि हीनत्वस्मरणात् । ही
नत्वगुरुत्वज्ञापनन्तु सद्भूयस्त्वार्थं । तथा कात्यायनेन । अन्यवादी पश्चान्यं च क्रियाद्वेषी प्रागुक्तः । नोपस्थाता दशद्वेष
योऽशर्षैव निरुत्तरः । आहूतप्रपलायी च पक्षान्द्वात्रिंशतिम् । अपि पिविशेषं च तस्तेनैव । त्रिराहूतमनायातमाहूत
प्रपलायिनम् । पक्षात्त्रमतिक्रान्तं नियतं पक्षत्रयं सहीपतिः । कात्यायनेनैव प्रकारान्तरेणापि हीनत्वमुक्तः । आविनश्चव्यवहाराणामे
कं यत्प्रभेदयेत् । वादिनं चोभये चैव हीनन्तमपि निर्दिशेत् । आवितव्यवहाराणां सभ्यादीनां मध्ये एकमपि यः प्रभेदयेत् ।

P

अन्यद्वारानुरोधाद्भयोत्पादनेनेत्यर्थः । बृहस्पतिरपि । भयंकुर्वन्तिभेदंवाभीषणंवानिरोधनम् । एतानिवादिनोयस्यव्यवहारे
सद्दीयते । भयादीनिव्यस्तसमस्तानियेनकृतानिसद्दीयतइत्यर्थः । भयंकरोतिभीषणामन्यमुखेनभयोत्पादनमितिशेषः ।
मनुरपि । अदेश्यंयश्चादिशतिनिर्दिश्यापह्नुतेचयः । यश्चाधरोत्तरानर्थान्विगीतान्नावबुध्यते । अपदिश्यापदेश्यञ्चपुनर्य
स्त्वपधावति । सम्यक्प्रणिहितञ्चार्थंपृष्टःसन्नाभिनन्दति । असम्भाष्येसाक्षिभिश्चदेशेसम्भाषतेमिथः । निरुच्यमानम्प्र
श्नञ्चनेच्छेद्यश्चापिनिष्पतेत् । ब्रूहीत्युक्तश्चनब्रूयादुक्तञ्चनविभावयेत् । नचपूर्वापरंविद्यात्तस्मादर्थात्सहीयते । ज्ञातारः
सन्तिमेत्युक्त्वादिशेत्युक्तोदिशेन्नयः । धर्मस्थःकारणैरेतैर्हीनन्तमपिनिर्दिशेत् । अदेश्यमनुपयोगासम्यत्वादिनानिर्देशानर्हं
दिशतिकथयतियः । यश्चकथितमपिनमयेदमुक्तमित्यपलपति । यश्चाधरोत्तरानर्थान्पूर्वापराभिहितान्विगीतान्विरुद्धां
स्त्वेननावबुध्यते । यश्चापदेश्यंव्याजंपीडादिकमपदिश्योद्वाव्यापधावतिअपसरतिसभातः । यश्चसम्यक्प्रणिहितंसम्य
क्प्रणिधानेनाकलितमपिपरोक्तमर्थंपृष्टःसन्नाभिनन्दतिअनुवादप्रत्युत्तरदानादिनानाद्रियन्ते । मेधातिथिस्त्वदेशमि
तिपठित्वाभाषावादिविलिखितदेशभिन्नमसम्भावितंवादेशम् । यद्वाभियोक्तादिशेद्देशमित्यत्रैवदेशशब्देनसाक्षिणोव्याख्याय
साक्षिनिर्देशअकालेअसम्भावितःसाक्षिणोनिर्दिशतित्याचख्यौ । यश्चज्ञातारःसाक्षिणोमदुक्तेऽर्थेसन्तीतिसभायामुक्त्वाकेते
वदेत्युक्तोनवदेत्तान् । अथमामांज्ञातारः । यथार्थवाद्यहमितिजानानाःसाक्षिणइतियावत् । द्वितीयैकवचनान्तस्यास्म
च्छब्दस्यद्वितीयायाइत्यनेनमांइत्यस्यमाइत्यादेशः । ननुमेइतिषष्ठ्यन्तमेतत् । खलर्थमूनमितितन्निषेधात् । तेनमेतिसन्धि
रपिसमाहितइतिमेधातिथिः । आचार्यास्तु । व्याकरणाधिकरणेसन्धिकरणमत्रापशब्दइतिपूर्वपक्षप्रसङ्गेनवदन्तःय
ष्ठ्यंततामेवास्यमन्यंतेमेसन्तीतिसम्बन्धान्नतृतीयसम्बन्धप्रयुक्तषष्ठीप्रतिषेधावकाशइतितेषामभिसन्धिः । सन्तिज्ञातारइत्यु
क्तेतिकल्पतरुलिखितपाठस्तुनाकरएवाचार्यमेधातिथिभ्यामधृतत्वादितिध्येयम् । सिद्धान्तेत्वाचार्य्याणांशब्दसाम्यमवसमा

धिरभिमतः। एतैःकारणैर्व्यस्तैःसमस्तैर्वावादिप्रतिवादिनोरन्यतरं हीनं निर्दिशेदित्यर्थः। हीनवादितयादण्डार्हतामावज्ञ
प्रकृतार्थहानिरितिप्रमादपरिहारार्थमेवायम्प्रपञ्चः। छलन्निरस्येत्यादिवचनात्। अतएवनारदोपि। सर्वेष्वर्थविवादेषु
वाक्छलेनावसीदति। परस्त्रीभूम्यृणादानेशास्योप्यर्थान्नहीयतइति। अस्यार्थः। अर्थविवादेषुसर्वेषुवाक्छलेप्रमादाभि
धानेपूर्वप्रपञ्चितेपिनावसीदतिप्रकृतादर्थान्नहीयते। अत्रोदाहरणमात्रंपरस्त्रीत्यादि। एतेषुप्रमादाभिधानेपिशास्योद
ण्ड्योपियथानप्रकृतार्थाद्धीयते। एवंसर्वेष्वर्थविवादेष्वित्यर्थः। अन्यथापरस्त्रीत्यादेरानर्थक्यमेवभवेत्। अर्थविवादोपा
दानान्मन्युकृतेषुप्रकृतार्थादपिहीयतइत्यर्थादुक्तम्भवति। यथाहमनेनपादेनशिरसिताडितइत्यावेद्यमायादिसमयेह
स्तेनपादेनताडितइतिवदन्दण्ड्यःपराजितश्चभवति। मन्युकृतावेवादस्यदेवताडनादिकमयमस्मिन्नारोपावेदितवान्
धर्म्माधिकरणाइतिप्रतीतेः। अतएवदोषानुरूपंसंग्राह्यम्पुनर्वादोनविद्यतइतिवार्हस्पत्यःपुनर्वादनिषेधोपिमन्युकृ
तव्यवहारविषयएव। शाह्योदण्डमित्यर्थात्। असम्भाव्येसम्भावयन्नर्थैर्विजनइतियावत्। नेच्छेत्श्रुतमप्यश्रुतवत्कु
र्य्यात्। राजकार्य्यादिव्याजमुत्पाद्यग्रामान्तरङ्गच्छेत्। प्रहीत्यादिगतार्थम्। अस्मादेशमित्यादौप्रहीत्यादौचवकारोपि
पथ्यमदितव्यमितिशावरभाष्येकारीत्यस्मिन्प्रकरणेपुनरुक्तिर्नदोषइतिभगवान्मेधातिथिराह। क्वचिदर्थविवादेप्यर्थहा
निः। सन्दिग्धार्थमित्यनेनदर्शिता। नारदोप्याह। अनिवेद्यनृपेराज्ञेसन्दिग्धेऽर्थेप्रवर्त्तते। प्रसह्यसविनेतव्योनचाप्यर्थंस
सिध्यति। प्रवर्त्ततेसाधयतिबलादिनेत्यर्थः। बृहस्पतिरपि। आहूतप्रपलायीचमौनीसाक्षिपराजितः। स्ववाक्यप्रतिपन्नश्चही
नवादीचतुर्विधः। साक्षिपराजितःसाक्षिवचनात्पराजितः। स्ववाक्यप्रतिपन्नःस्वःप्रतिपत्तुरुत्तरहीनः। अनयोर्दृष्टान्तत्वे
नोपादानम्। यथाऽनयोरविप्रतिपन्नार्थहानिस्तथान्ययोरपीत्यर्थः। अत्राप्युत्तरोत्तरहीनताधिक्यप्रतिपादनार्थेचतुर्विधग्र
हणन्नपरिसंख्यार्थमन्यथान्येषान्तत्कथन्निरुध्येत। कस्मिन्कदाहीनकार्यमित्यत्रकालावधिरुक्तस्तेनैव। प्रपलायीचिप

क्षेपणमौनकत्तसंप्रभिर्दिनैः । साक्षिभिन्नस्तथा येन प्रतिपन्नश्च हीनकइति । साक्षिभिन्नस्तत्पराजितः यश्च सामान्यः साक्षिणोनि र्दिश्य पश्चाद्विशिष्यानिर्दिशन्ननुनाङ्गातारइत्यनेन हीनतयोक्तिस्तत्रापि कालावधिर्बृहस्पतिरेवाह । साक्षिणस्तु समुद्दि श्य यस्तु तान्न विवादयेत् । त्रिंशद्दिनिपक्षाद्वा तस्य हानिः प्रजायतइति । दैविकराजिकाग्न्यापेक्षयोल्लङ्घ्यतिक्रमेपिनदोषइत्य प्याह स एव । आचारकरणेदिव्यैकत्वोपस्थाननिर्णयं । नोपस्थितोयदा कश्चिच्छलन्तत्रनकारयेत् । दैवराजकृतोदोषस्त स्मिन्कालेयदाभवेत् । अवधिप्यागमात्रेणान भवेत्सपराजितः ॥ इति आचारकरणे व्यवहारकरणं । छलन्तत्रकारयेदिति वदतायत्रवचनेनार्थहानिः प्रतिपादिता तत्रैव पुनर्विवादाभावोन्यत्रतु हीनतानिमित्तं दण्डं कृत्वा पुनर्वादः प्रवर्तनीय एवेतिस्फु चितं यतआह । कात्यायनः । पलायनानुत्तरत्वादन्यपक्षाश्रयेणवा । हीनस्य गृह्यते वादो न स्ववाक्यजितस्य चेति । स्ववाक्य जितस्येति प्रकृतार्थहानिनिमित्तोपलक्षणन्तेनैव विवृतमिदम् । योहीनचिह्नैनजितस्तस्योद्धारम्विदुर्बुधा । स्ववाक्यहीनोय स्तु स्यात्तस्योद्धासेनविद्यतइति । उद्धारः पुनर्व्यवहारः । अत्रापि स्ववाक्यहीनइति प्रकृतार्थहानिनिमित्तोपलक्षणम् । विवा दमुपक्रम्य राजानं वस्त्वयित्वान्योन्यं यो वादिप्रतिवादिनौ स्वयमेव विवादान्निवर्तनेनयोरुभयोरपि दण्डमाह बृहस्पतिः । पू र्वोत्तरे सन्निविष्टे विचारे सम्प्रवर्त्तिते । प्रथमं ये मिथो यान्ति दाप्यास्ते द्विगुणन्दमम् । मिथइत्यनेन राज्ञोनिवेदनमकृत्वैवान्यो न्यमित्युक्ते राजवचनमवगम्यते । कात्यायनस्तु स्पष्टमाह । आवेद्य प्रगृहीतार्थं प्रथमं यान्ति ये मिथः । सर्वे द्विगुणदण्डाः स्यु विप्रलम्भान्नृपस्य तइति । द्विगुणोदण्डस्तु पराजयनिमित्तदण्डापेक्षया । नतु विवादास्पदीभूतद्रव्यापेक्षया अद्रव्यविवादेष्व व्याप्तेः । राज्ञे निवेद्यान्योन्यं समाधाने तु सेधं तेनैव वा सन्धिं कारयेत् तु न दण्डइत्यर्थः । सिद्धं स्फुटीकृतं बृहस्पतिना । पूर्वोत्तरे भिलिखिते प्रक्रान्ते कार्यनिर्णये । द्वयोर्नरयोः सन्धिः स्यात् यः समकोरिव । साक्षिसभ्यविकल्पस्तु भवेन्नोभयोरपि । दो षायमानौ सन्धिं कुर्यातां तौ विचक्षणौ । प्रमाणं समतायत्र भेदः आत्मचरित्रयोः । तत्रराजाज्ञयासन्धिरुभयोरपिशस्यते ।

धर्मार्थोपग्रहः कोर्तिर्भवेच्छान्येन भूभृतः । नक्लिश्यन्ते साक्षि सभ्यावैरञ्च विनिवर्त्तते । निग्रहानुग्रहन्दण्डं धर्मं प्राप्नुयशोऽय
शः । विग्रहाज्जायते नृणां पुनर्दोषस्तथैव च । तस्मात्कुलगणाध्यक्षधर्मज्ञाः समदृष्टयः । अद्वेषलोभाद्ब्रूयुस्तत्कर्त्तव्यं
विजानतेति । साक्षिसभ्यविकल्पइति । उभयोरर्थिप्रत्यर्थिनोः किमेते वक्ष्यन्तीति साक्षिसभ्यविषयको विकल्पो भवेत्तत्र
कार्य्यनिर्णयेदोलायमानौ सन्देहदोलारूढौ यावर्थिप्रत्यर्थिनौ सन्धिं कुर्यातान्तौ विचक्षणौ चतुरौ पराजयजनिताप्रतिष्ठादि
तिरोधानादित्यर्थइति कल्पतरुः । रत्नाकरस्तु साक्षिणां सभ्यानाञ्च विकल्पः परस्परविरोधइत्याह । प्रमाणसमतेति । यत्र
सभ्यानां वादिद्वयपक्षे प्रमाणसाम्यं प्रतिभाति । यत्र च शास्त्रचरित्रयोर्भेदः शास्त्रेण शास्त्रान्तरेण चरित्रेण व्यवहारेण चरित्रान्तरे
णा भेदो विप्रतिपत्तिर्नतु शास्त्रव्यवहारयोः परस्परम्भेद इति व्याख्यानं धर्मशास्त्रविरोधे व्यवहारस्यार्थशास्त्रत्वेन दुर्बलत्वात् ।
तत्र राजाज्ञया सन्धिः कार्य्यत्वेन प्रशस्यते । धर्म्मार्थोपग्रहादिहेतुत्वात् । निग्रहानुग्रहाद्व्यवस्थानिवर्त्तकत्वाच्च । तस्मादि
त्यादिना राजाज्ञैव केवलं न सन्धिहेतुः कुलगणाध्यक्षादिवचोपि राजवस्तुनयेति प्रतिपाद्यते । एतच्च प्रत्याकलितं सभ्यैर्वश्य
मादर्तव्यमित्याह नारदः । प्रमाणानि प्रमाणज्ञैः परिपाल्यानि यत्नतः । सीदन्ति हि प्रमाणानि प्रमाणैरव्यवस्थितैः । अ
स्यार्थः स्मृतिचन्द्रिकाकारेणैवमुक्तः । अव्यवस्थितैः प्रमाणैः प्रमाणानि प्रमाणानां कर्त्तारः प्रमाणशब्देन लक्ष्यन्ते । तेसीदन्ति वि
नश्यन्ति निर्णयं नाप्नुवन्ति । अतः प्रत्याकलनकौशलेन प्रमाणज्ञैः सभ्यैर्यत्नतस्तानि प्रमाणानि परिपाल्यानि यथा व्यवस्था
दुःस्थितानि न भवन्ति तथा विवेचनीयानीत्यर्थइति । वयन्तु अव्यवस्थितैर्मूलशैथिल्यादिना दुःस्थितैः प्रमाणैः प्रमाणानुग्रा
हकैस्तर्कैः प्रमाणानि साक्ष्यादीनि सीदन्ति निर्णयाक्षमाणि भवन्ति हि यतोऽतः प्रमाणज्ञैः प्रमाणानि यत्नतः परिपाल्यानि स
तर्कपरिष्कृतानुग्रहेण तत्त्वनिर्णयफलानि कार्य्याणीति व्याचक्ष्महे । अनयोश्च व्याख्यानयोस्तारतम्यन्तत्त्वविद्भिर्विवेचनी
यम् । इदञ्च प्रत्याकलितव्यवहर्तृसम्बन्धाभावाद्व्यवहारदर्शिमात्रकर्तृकत्वान्न व्यवहारपादचतुष्टयान्तर्भूतमिति मिता॰

Q

प्रत्याकारस्य संमतं तन्नत्वनुपादेयमेतदन्तरेण तृतीयक्रियापादानवतारात् । यथाहुः । कृतस्याभिधानानन्तरमर्थिप्रत्यर्थिनोः
कस्य क्रिया का वा क्रियेति परामर्शलक्षणस्य प्रत्याकलितस्य योगीश्वरेण व्यवहारपादत्वेनानभिधानाद्बहुभिः स्मृतिभिरभिधा
नाच्च व्यवहारपादत्वमिति । अपरार्कस्तु । साध्यसिद्धिपदेन जयपराजयावधारणलक्षणप्रत्याकलितं योगीश्वरेण समे
ऽप्याया गृह्यत इति वदन् क्रियोपन्यासोत्तरकालीनविचारस्य सभ्यैः क्रियमाणस्य प्रत्याकलितमुक्तं तामभिप्रैति । सम्यग्भिस्तु न
रेण क्रियापादेनापि जयपराजयावधारणलक्षणप्रत्याकलितपादस्य निक्षिप्तत्वमेवेति ब्रुवाणो वाचस्पतिमिश्रः देवाननुलक्ष्यापि स्मृ
त्यन्तरस्मृतिचन्द्रिकाकारौ मिताक्षराकारवदेवोत्तरलेखमात्रानन्तरभावितानां हीनपरिज्ञानस्याधिकरणं क्रियादानात्क्रिया
पादप्राग्भावितामप्रत्याकलितमभिसन्दधतो व्यवहारोपयोगित्वात् हस्त्यादिवचनाच्च [illegible] व्यव
हारपादत्वमपरे तदनभ्युपगतमभ्युपगतवन्तौ क्रियापादप्राग्भावित्वमेव तु तस्य युक्तम् । ये तु निष्कृष्टकारणवद्व्यादिचतुष्पाद
व्यवहारपादत्वमस्तु न वेत्यन्यदेतत् । यत्तु । साध्यसिद्धेर्व्यवहारफलत्वान्न व्यवहारपादत्वं युक्तमिति । तन्न । व्यवहार
भावनया फलापवर्गिण्याः फलनिरूप्यत्वेन तत्फलस्य तदंशत्वेन तत्पादत्वे बाधकाभावात् । अत एव चत्वारि पादानीति मीमांसका
नामुल्लेखः । नव्यस्तु प्रतिभुवा बुदयनाचार्यस्तु प्रमाणोपन्यासमेव प्रत्याकलितमभिमन्यन्ते । तदाहुः । पत्रमपि परीक्ष्यं
नर्थादि प्रतिभादिनैव सः । पृच्छोपक्रमत्वेन द्वितीयोपयोगात् । सम्भवे पित्तयोर्विषयोपस्थापनमात्रपर्यवसानात्सभ्यैर्व्यव
परीक्षकत्वमप्यपि पूर्वपक्षोत्तरपक्षप्रत्याकलितनिष्कर्षभेदेन चतुष्पाद्व्यवहारपूर्वप्रवर्तनात्फलतो नर्कादिविशेषः । एवञ्च
र्तृकत्वेऽपि व्यवहारतएव व्यापारकत्वापत्त्यविचारे विभ्रमावलात् । तस्मादप्यनिपुणो देशकस्तथापि देशसंसर्गमनुमेयम् । वस्तुत
स्तु न प्रमाणोपन्यासस्तेषां प्रत्याकलितत्वेनाभिप्रेतः । किन्तु सभिकर्तृकः प्रमाणोपष्टम्भकतर्कादिपरामर्श एव । यतो वाद्य
स्तीय कथायां व्यवहारवत्पूर्वपक्षोत्तरपक्षौ साभिमतसुच्चेनुकसाध्यनिर्देशमात्रपरौ किन्तु पूर्वपक्षिणा कण्टकोद्धारोत्तरपक्षद्

प्रमाणपुरःसरं स्वपक्षे स्थिरीकृते सिद्धान्तवादिना तदुभयप्रतिक्षेपेण स्वपक्षसाधकप्रमाणकप्रमाणप्रथमप्रस्थापनं क्रियते । त
मस्थैर्ये सत्युभयविवेकाख्यप्रथमाकलिते न विकल्पयेत् एकतरपक्षनिर्द्धारणरूपः क्रियते न तावता कथासमाप्तिर्वादे कल्पवितण्डा
वोस्तु सभिकादीनामुत्तरोपि व्यापारो विद्यत इत्यादि लक्षणसमाकरे । अथ यनुमाख्यादि विलक्षणं मानमुत्तरभेदे नानियतम्प्रागु
पन्यासानर्हमिति तन्पूर्वोत्तरपादान्तर्गतिरस्य । अतएव प्रथमाकलितस्यात्रोत्तरे कस्यचित्क्रियेत्यादि विसर्गस्तस्यैव तस्य प्रथमा
कलितस्य प्राच्यत्वं प्रमाणोपन्यासात् न तु प्रतोत्तत्वमेव स्थेयकृतं प्रमाणसाध्यसाधुत्वविवेकस्य प्रमाचेत्यस्तु विस्तरः । एवम्प्रथमा
कलितमाकलितम् ॥ ● ॥ अधुना क्रियापादो विविच्यते । तत्र कात्यायनः । वादिना यदभिप्रेतं स्वयं साधयितुं स्फुटम् । त
त्साध्यं साधनं येन तत्साध्यं साध्यतेऽखिलम् । सारभूतम्पदं ग्राह्यम्मुक्तानिःसारान्विवर्जयेदपि । संसाधयेत्क्रियायान्तु नानुग्राह्यान्त
रवर्जिताम् । पक्षद्वयं साधयेद्यातामुक्ता दूरतः क्रियाम् । क्रियां बलवतीं मुक्त्वा दुर्बलां योऽवलम्बते । मुक्तेऽपि धृते सभ्यैः पुनः
सानानुयात्क्रियामिति ॥ नात्र बलवतीम् । तेन प्रागेव प्रबलप्रमाणमुक्त्वा दुर्बलप्रमाणालम्बनेन पराजितस्य पश्चात्प्रबलोप
प्रमाणोपन्यासावसरो नास्तीत्यर्थः ॥ अतएवाह नारदः । निर्णिक्ते व्यवहारे तु प्रमाणमफलं भवेत् । लिखितं साक्षिणो वापि पू
र्वमावेदितं न चेदिति । निर्णिक्ते शोधिते । अव्यवहारजयपत्रं यावच्च स्वधारणं प्रापितमित्यावत् । पूर्वमेव तु दुर्बलप्रबलसकल
प्रमाणोपन्यासकृते तु सर्वप्रमाणानुसारेणैव निर्णयो नैकतरमात्रानुसारेण तत्कृत्वा निरस्तोयमिधानात् । पश्चाद्दुद्भावितं तु कृत्रि
मत्वादिशंकाकलंकितमित्यनुपादेयमेवेत्यर्थः । अतएव पूर्ववाक्येपि भुक्तेपि पुनर्नैरन्तिचोक्तम् । सएव च यथा । यत्केषुधाम्येषु नि
ष्फलाप्रावृषेगुणाः । निर्णिक्तव्यवहाराणाम्प्रमाणमफलन्तथेति । उत्तरे यत्र निवेशिते साध्यसिद्धेः साधनाय तत्साधनं नि
र्दिशन्कुर्यादित्यपेक्षिते याज्ञवल्क्य आह । ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् । तत्तदुत्तरं लिखितानन्तरमर्थीत्र
र्थ्यमित्यर्थः । साध्यं सोस्यास्तीत्यर्थी साध्यवान् । सद्य एवाविलंबेन प्रतिज्ञातस्य प्रतिज्ञाविषयस्यार्थस्य साध्यस्य साधनम् ।

साध्यतेऽनेनेतिसाधनम्प्रमाणम् । साध्यादिलौकिकमलौकिकंवालेखयेत् । लेखकद्वारास्वयम्वालिखेदित्यपिद्रष्टव्यम् । दृष्टार्थत्वात् । अत्रसद्यइतिवदनुत्तराभिधानेकालविलंवनमप्यनुमन्यते । तच्चविशेषपरिभाषायांविवक्ष्यते । अर्थीलेखयेदित्यनेनसंप्रतिपत्तौनकस्याप्यर्थित्वमितिनकोपिसाधनंलेखयेदितिपादद्वयेनैवव्यवहारनिर्वाहः । तथाचोक्तंद्विपात्सम्प्रतिपत्तिरितिमिथ्योत्तरेपूर्ववादिनएवार्थित्वात्सएवसाधनंलेखयेत् । कारणोत्तरप्राङ्न्यायोत्तरयोस्तुप्रत्यर्थ्येवसाध्यवान्कारणप्राङ्न्याययोस्तस्यैवसाध्यत्वादितिसएवलेखयेदित्युक्तम्भवति । तेनप्राङ्न्यायकारणोक्तौतुप्रत्यर्थीनिर्दिशेत्क्रियाम् । मिथ्योक्तौपूर्ववादीतुप्रतिपत्तौनसाभवेत् । मिथ्याक्रियापूर्ववादेकारणेप्रतिवादिनि । प्राङ्न्यायेपितथैवस्यात्प्रतिपत्तौनसाभवेदितिव्यासादिस्मृत्युक्तेर्थोर्थिपदेनसंक्षेपतः । सर्वएवोक्तोभवति । अत्रचापवादेस्वरः । साहसस्तेयपारुष्यगोभिशापात्ययेस्त्रियाम् । विवादयेत्सद्यएवकालोऽन्यत्रेच्छयास्मृतइत्यत्रसद्योविवादयेदुत्तरन्दापयेदित्यमेनप्रत्यर्थिपक्षस्यलिखनेविलंवप्राप्तौसाहसादिषुतत्पक्षमपिसद्यएवलेखयेदितियोपवादःसयदिप्राग्भावावादिपक्षलिखनेविलम्बोन्यायप्राप्तः । प्रत्यर्थिपक्षलिखनविलम्बःस्यात्तदैवघटतेनान्यथेत्येतद्वाक्यव्याख्यानेयदर्थिपदेनप्रत्यवस्कन्दमप्राङ्न्याययोःप्रत्यर्थ्येवाऽर्थीजातइतिसएवसाधनंलेखयेदिति । प्रत्यर्थिनोपियहणमितिमिताक्षराकारेणव्याख्यातन्तत्पूर्वापरविरोधात्सन्दर्भविरोधाच्च । तदतिसाहसम् । भावोत्तरवादिपक्षमात्रलेखनपरत्वंयद्यनयोर्वाक्ययोस्तर्हिसाधनपदान्वयेसमासानुपपत्तेः । सन्दर्भविरोधाच्च । साधनलेखनस्यैवोत्तरलिखनोत्तरमाकांक्षितत्वात् । साहसादिष्वप्युत्तरभेदव्यवस्थयाद्वयोरपिपूर्ववाक्योपात्तसाधनलेखनस्यैवसद्यस्त्वोक्षिप्तोत्तरलेखनविलंवापवादोपपत्तेः । नचोत्तरलेखनंसर्वत्रप्रत्यर्थिनएवेतितद्विलंवानुमतिविमन्योस्तम्प्रत्येवप्रतिपादनमर्हमितिवाच्यम् । एतावतापिक्रियोपन्यासप्रतिपादकवचनस्यार्थिपदेनभावावादिमात्रग्रहणायहेतुनियामकाभावात् । प्रत्युतमिथ्याक्रियेत्यादिवचनार्थसंग्रहायद्वयोरपिग्रहणमर्थिपदेनेष्यस्यैवयुक्तत्वात् । एवंसतिमिताक्षरायाम्पूर्वापरविरोधा

पादनमज्ञानविलसितमिवेष्यास्तांतावत् ॥ * ॥ वृहस्पतिः । द्विप्रकाराक्रियाप्रोक्तामानुषीदैवकीतथा । एकैकानेकधाभिन्नामु
निभिस्तत्त्ववादिभिः । साक्षिलेख्यानुमानञ्चत्रिविधामानुषीक्रिया ॥ साक्षिलेख्यानुमानमितिद्वंद्वैकवद्भावः । साक्षीद्वादशभे
दस्तुलिखितन्दशधास्मृतम् । अनुमानन्तुद्विविधन्नवधादैविकीक्रिया । इदंसंख्याभिधानन्ननियमायभेदान्तराणामपिप्र
माणप्रकरणेवक्ष्यमाणत्वात् । कात्यायनः । लिखितंसाक्षिणोभुक्तिःप्रमाणन्त्रिविधंविदुः । लेशोद्देशस्तुयुक्तिःस्याद्दिव्यानी
द्दविषादयः । लेशोन्यथानुपपन्नोधर्मस्तस्योद्देशोविमर्शोयुक्तिरित्यर्थः । पूर्ववादेपिलिखितेयथाक्षरमशेषतः । अर्थीतृ
तीयपादेतुक्रिययाप्रतिपादयेत् । पूर्ववादोभाषालिखितम्पूर्वपक्षमयालिखितंउत्तरमितियावत् । तृतीयपादःप्रत्याकलि
तस्य । तस्मिन्प्रतिक्रिययाप्रमाणेनप्रतिपादयेत्साध्यमितिशेषः । भाषोत्तरप्रत्याकलिताख्यपादत्रयेसतिक्रिययास्वकार्य्य
मर्थीसाधयेदितितात्पर्य्यार्थः । कार्य्यंक्रियापादौव्याचष्टेव्यासः । कार्य्यंहिसाध्यमित्युक्तंसाधनन्तुक्रियोच्यते । द्विभेदासा
प्रनष्टैयामानुषीदैवकीतथेति । साधनम्प्रमाणम्प्रत्याकलितस्यतृतीयव्यवहारपादत्वमभ्युपगच्छतास्मृतिचन्द्रिकाकारे
णैवमिदम्वचोव्याख्यातं । मिताक्षराकारमतेतुतृतीयपादक्रिययेतिसंमुखएवार्थः । साक्षीद्वादशभेदइत्यादिप्रमाणप्रकरणे
प्रपञ्चयिष्यामः । याज्ञवल्क्यः । प्रमाणंलिखितम्भुक्तिःसाक्षिणश्चेतिकीर्त्तितम् । एषामन्यतमाभावेदिव्यान्यतमसुच्यत इ
ति । दिव्येष्वन्यतममित्यर्थः । कात्यायनः । यद्येकोमानुषींब्रूयादन्योब्रूयात्तुदैविकीं । मानुषीन्तत्रगृह्णीयान्नतुदैवींक्रियांन्नृ
पः । यद्येकदेशप्राप्तापिक्रियाविद्येतमानुषी । सात्राह्यानतुपूर्णापिदैवकींवदतांनृणाम् । एकदेशप्राप्तासाध्यैकदेशवि
षया । अत्रयद्येकोवदोमानुषींसाध्यान्यतमांक्रियांस्वपक्षसाधकतयोपन्यस्यत्यन्यस्तुतत्प्रतिपक्षतयादैविकीन्तदर्थादि
तरवादिपक्षसिद्ध्यसिद्ध्योःस्तुल्यत्वेननदिव्यापेक्षेतिप्रथमवचनार्थः । एवमेकोपिवादीसाध्यानेकत्वेसाध्यैकदेशमपियद्दि
प्रमाणेनसाधयतितदैकदेशविभावितन्यायेनैकदेशान्तरस्यापिसिद्धेर्वक्ष्यमाणत्वान्नदिव्यावसरइतिद्वितीयवाक्यार्थः । दि

R

वविधिर्दृष्टः सर्वार्थो यं सर्वेषु मेनेति । कात्यायनः । गूढसाक्षिकामानुप्राप्तं दिव्यैः परीक्षणम् । युक्तिलेश्योऽन्निनाकारे बाऽऽत्मशु

द्धेऽपि तैर्न साम् । अन्येषु साक्षिके दैवीं श्रवणाद्विनिर्दिशेत् । दैवसाध्ये पौरुषेयीं न लेख्यं वा प्रयोजयेत् । बृहस्पतिः । मणि

मुक्ताप्रवालानां कूटकर्त्ता सहारकः । हिंसकोऽन्याङ्गनासेवी परीक्ष्यः शपथैः सदा । महापापाभिशापेषु निक्षेपहरणे तथा ।

दिव्यैः कार्य्यं परीक्षणं राज्ञा सत्स्वपि साक्षिषु । चिरन्तनोपांशुकृतचिरनष्टेषु साक्षिषु । प्रदुष्टेषु समानेषु दिव्यैः कार्य्यं विनि

र्णयेत् । अत्र सत्स्वपि साक्षिष्विन्यनेनैवादृष्टविषये साक्षिणः पूर्णमवगच्छन्ति । सम्भवन्तोऽपि साक्षिणः कूटतया पापाः प्रदु

ष्टा इति विवक्षितमनुयायुज्यताम् । चिरन्तनकृतमेकपांशुकृते रहस्यविकृतमप्यनेन लेख्यानुसम्भवमेवोपलक्षयति । चिरनष्टा

श्चिरनष्टेषु प्रदुष्टेषु समानेष्विन्यनेनासाक्षिवन्निमित्तानुपलक्षिमवान् । व्यासः । प्रथमे यत्नाभियुक्तो साक्षिणस्तथा प

रे । परेऽभ्यस्तनथा चान्ये तं वादं शपथैर्नयेत् । भिद्यन्ते विप्रतिपद्यन्ते । कात्यायनः । समकं साक्षिणां यत्र द्वैधस्तत्रापि शोध

येत् । प्राणान्तिकविवादेषु विद्यमानेषु साक्षिषु । दिव्यमालम्बते वादी न पृच्छेत्तत्र साक्षिणः । साक्षिषु विद्यमानेष्वपि न वादो

धावष्टम्भेन दिव्यमालम्बनमित्यर्थः । समकं साक्षिणां यत्रेति । कर्तोऽथ्यार्थायावादिभ्यामुपन्यस्तानां साक्षिणां गुणतः संख्या

तश्च तुल्यत्वमित्यर्थः । व्यासः । न मयैतत्कृतं लेख्यं कूटमेतेन कारितम् । अधरीकृत्य तत्पत्रमर्थे दिव्येन निर्णयः । लेख्यदोषा

पनेन लेख्येन निर्णयात् समेतदाचरुपसाक्षिषु सुनरान्तरान्तपूर्वसम्यायेनदोषेऽप्यवनामनुपासम्भवे दिव्येन निर्णयः कार्य्य इत्यर्थः

। प्रजापतिः । यत्नाममगोचैर्व्यल्लेख्यं तुल्यं लेख्यं कञ्चिद्भवेत् । अगृहीतधनेन वा कार्य्यो दिव्येन निर्णयः । मूललेख्येन नाममगो

चैस्तुल्यं लेख्यान्तरं विपरीतार्थं यदा तदा तद्ग्रहणीतकर्द्विव्येन निर्णयः कार्य इत्यर्थः । कात्यायनः । यत्रस्यात्सोपधं लेख्यन्त

द्वाच्यं वितंयदि । शोधयेत्तनु दिव्येन राजा धर्मासनस्थितः । सोपधं यत्र तल्लक्षतं यत्र मिथ्याऽन्तरे पूर्ववादिनः क्रियादानं ने

त्तरवादिन इति प्रागुक्तत्वात्साधावादिनो लानुपप्रमाणसम्भवादुत्तरवादिनस्तत्त्व सम्भवान्मानुषसम्भवे च दिव्यानवसरा

दितिन्यायोमूलमिति । यदितत्रापिभाषावादिनोदिव्यभिन्नप्रमाणाभावस्तदानकश्चिदभियोक्तारन्दिव्येषुविनियोजयेत् ।
अभियुक्तायदातव्यन्दिव्यन्दिव्यविशारदैरितिकात्यायनीयादुत्तरवादिनएवदिव्यन्देयम् । पूर्वार्द्धेनार्थिनादिव्यनिषेधात्प्र
त्यर्थिनोर्थात्सिद्धौपुनःपरार्द्धेनतद्विधानस्यसिद्धेसत्यारम्भोनियमार्थइतिन्यायेननिषेधदार्ढ्यार्थत्वात् । प्राङ्न्यायकारणोत्तर
योःक्रियापदमुभयक्रियापरमपिमिथ्योत्तरेमानुषमात्रपरंकात्यायनीयानुरोधात् । नचैवमनुषंगानुपपत्तिः । तदर्थकत्वयो
भयान्वयस्यानुषङ्गहेतुत्वन्नयावदर्थकत्वस्यविरुद्धार्थकत्वेव्यवायवत्सन्निधिबाधेनानुषङ्गस्यतुल्ययोगितानिबन्धनस्यभङ्गः
। किञ्चिदर्थानन्वयेपितुल्ययोग्यतायाःसत्वात्तदभङ्गात् । यदातुप्रत्यर्थीसन्दिहानस्तदातस्याधिकारनिश्चयाभावान्मानु
षप्रमाणाभावेपिनदिव्यंकिन्त्वर्थिनोधिकारनिश्चयादितिध्येयम् । मचनकश्चिदितिकात्यायनवचनविरोधः । अधिकारानि
श्चयेतत्प्रवृत्त्यसम्भवात् । धनन्धनीसाधयतीतिलोकप्रवादोपीत्थम्भूतविषयाभिप्रायकएव । यत्रविवादविषयेप्रत्यर्थीसन्दिहा
नस्तत्रतस्योत्तरानर्हतयेतिव्यवहारतत्त्वलिखनन्त्वतत्त्वमेव । अज्ञानरूपमिथ्योत्तरार्हत्वात् । अज्ञानस्यनिश्चयाभावरूपस्यस
न्देहेपिसम्भवात् । प्रत्यर्थिनएवसर्वत्रोत्तरकर्तृत्वाच्च । यदातुद्वयोरपिमानुषप्रमाणाभावोदिव्यानध्यवसायश्चतदानिर्ण
योपायमाह । पितामहः । लेख्यंयत्रनविद्येतनभुक्तिर्नचसाक्षिणः । नचदिव्यावतारोस्तिप्रमाणन्तत्रपार्थिवः । निश्चेतुंयेन
शक्याःस्युर्वादाःसन्दिग्धरूपिणः । तेषान्नृपःप्रमाणंस्यात्सर्वस्यप्रभुरयंयतइति । तादृग्व्यवहारेनृपेणोभयापीडयास्वेच्छ
याकाचनव्यवस्थाकल्प्यादेयासोभाभ्यामनतिक्रमणीयेत्यर्थः । दिव्यावान्तरभेदादिसर्वंदिव्यप्रकरणेवक्ष्यामः ॥ ● ॥ अथ
निर्णयापरपर्यायःसिद्धिपादः । येषांप्रत्याकलितंव्यवहारपादइत्यभिमतन्तेषांसिद्धेःफलत्वाद्व्यवहारपृथग्भावोऽन्येषा
म्प्रत्याकलितस्यचतुष्पात्त्वमेवतुसर्वंमतेव्यवहारस्य । याज्ञवल्क्यः । तत्सिद्धौसिद्धिमाप्नोतिविपरीतमतोन्यथेति । तस्य
प्रमाणस्यसिद्धौनिःशङ्कप्रामाण्यव्यवस्थितौसत्यांप्रमाणोपन्यासकर्तासिद्धिंजयलक्षणामाप्नोति । अन्यथाप्रामाण्यसिद्धौवि

परीक्षमविकम्पराजयलक्षणमाप्नोति । नारदः । सारस्तु व्यवहाराणां प्रतिज्ञा समुदाहृता । तद्धानौ हीयते वादी तरंस्ता मुत्तरो भवेत् ॥ तरन्निर्वाहयन् । उत्तरः उत्कृष्टो विजयीति यावत् । निर्णयप्रकारमाह । व्यासः । प्रमाणैर्हेतुचरितैः शपथेन नृपाज्ञया । वादीसंप्रतिपत्त्या वा निर्णयोऽष्टविधः स्मृतः ॥ विवृतवानेतत्स एव । लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम् । अनुमानं विदुर्हेतुस्तर्कं चेति मनीषिणः । देशस्थितिः पूर्वकृता चरितं समुदाहृतम् । अर्थानुरूपाश्शपथाः स्मृताः सव्यधटादयः ॥ तेषामभावे राजाज्ञां निर्णयन्तु विदुर्बुधाः । इति प्रमाणत्रयं सतर्कौ पष्टश्च मनुमानं चरितादि चतुष्टयमित्यष्टविधहेतुकत्वान्निर्णयस्याष्टविधत्वं यद्यपि भुक्तिरप्यनुमानमेव । तथापि प्रत्याकलितकालीनैः सभ्यानामनुमानमिहानुमानपदेन विवक्षितम् । धर्मेण व्यवहारेण चरित्रेण नृपाज्ञया । चतुःप्रकारोऽभिहितः सन्दिग्धेऽर्थे विनिर्णय इति वृहस्पत्युक्तानां धर्मादीनां निर्णयहेतुत्वं प्रागेव तत्र सत्ये स्थितो धर्म इत्यादिना तेनैव विवृतं प्रागेव निरूपितं स एव । एकैको द्विविधः प्रोक्तः क्रियाभेदान्मनीषिभिः । क्रियाभेदान्मानुषदैविकक्रियाभेदात् । धर्मनिर्णयस्य द्वैधमाह स एव । सम्यग्विचार्य कार्य्यं न्तु युक्त्या सम्परिकल्पितम् । परीक्षितन्तु शपथैः सज्ञेयो धर्मनिर्णयः । प्रतिवादीप्रपन्नो तयत्र धर्मः स निर्णयः । दिव्यैर्विशोधितः सम्यक् द्वितीयः समुदाहृतः । प्रतिवादीप्रपन्नोऽत्यस्य काकाक्षिवदुभयत्र सम्बन्धः । यत्र प्रतिवादी युक्त्या सम्यग्विचार्य सम्परिकल्पितन्निर्धारितम्पुनः शपथैः पुत्रशिरःस्पर्शादिभिः परीक्षितं कार्यम्प्रपन्नो नांगीकुर्य्यात्स आद्यो धर्मनिर्णयः दिव्यैर्धटादिभिर्विशोध्यतः प्रतिवादी यत्र कार्य्यम्प्रपन्नो न स द्वितीयो धर्माख्यो निर्णय इत्यर्थः । व्यवहारनिर्णयस्यापि द्वैविध्यमाह स एव । प्रमाणैर्निश्चयो यस्तु व्यवहारः स उच्यते । वाक्छलानुसरत्वेन द्वितीयः परिकीर्त्तितः । प्रमाणपदेनात्र साक्षिणो लिखितञ्च । व्यक्त्यभिप्रायेण च बहुवचनम् । भुक्तेरनुमानत्वाद्दिव्यस्य धर्मनिर्णयान्तर्भावात् । वाक्छलानुसरत्वेन । वाक्छलेनानुसरत्वेन च यो निश्चयो द्वितीयो व्यवहारस्स इत्यर्थः । चरित्रनिर्णयस्यापि भेदद्वयन्तेनैवाभिहितम् । अनुमानेन निर्णी

नश्चरित्रमितिकीर्त्तितम् । देशस्थित्याद्वितीयन्तुशास्त्रविद्भिरुदाहृतम् । अनुमानेनभुक्तिमुक्तिसरूपेणयोनिर्णयस्तदेकञ्च
रित्रम् । देशस्थित्यायेनिर्णयस्तद्वितीयञ्चरित्रमित्यर्थः । राजाज्ञानिर्णयस्यापिद्विभेदनाभिहितमतेनैव । प्रमाणसहितमाद्य
सुराजाज्ञानिर्णयःस्मृतः । शास्त्रसभ्यविरोधेचतथान्यःपरिकीर्त्तितः । प्रमाणसहितासराजाज्ञाआद्योनिर्णयइत्यन्वयः । शास्त्रा
णांसभ्यानाञ्चविरोधेपरस्परंविप्रतिपत्तौयाराजाज्ञासद्वितीयोराजाज्ञारूपोनिर्णयइत्यर्थः । ननुशास्त्राणांसभ्यानाञ्चविरोध
स्यवासम्भवोस्मृत्यपेतादिकारिणांसभ्यानान्दण्ड्यत्वात् । नचशास्त्राणाम्परस्परविरोधेसभ्यानाञ्चेत्यर्थइतिवाच्यम् । सभ्यविरो
धोपन्यासानर्थक्यात् । शास्त्रविरोधेन्यायोपलब्धशास्त्रानुसारेणनिर्णयःकार्यइत्यस्यार्थस्यस्मृत्योर्विरोधेन्यायस्तुबलवान्व्यव
हारतः । धर्म्मशास्त्रविरोधेतुयुक्तियुक्तोविधिःस्मृतः । केवलंशास्त्रमाश्रित्यनकर्त्तव्योहिनिर्णयः ॥ युक्तिहीनविचारेहिधर्म्म
हानिःप्रजायते । न्यायाधिगमेतर्कोप्युपायस्तेनाभ्यूह्ययथास्थानंगमयेदित्यादियोगीश्वरनारदबृहस्पतिगौतमादिवचोभिः
निर्धारितत्वात् । नादृष्टविषयेराजाज्ञानवसरात् । अनीदृशराजाज्ञायानिषिद्धत्वाच्चेतिचेत् । उच्यते । यत्रशास्त्रविरोधेन
सवाक्ययोन्यतरार्थविनिगमकःसभ्यप्राड्विवाकस्यसमापतेन्नैहृदयमारोहतिचिरतरंमीमांसितोपिमादृशशास्त्रविरोधेतत्रभू
लकेवासमाधेयेसभ्यविरोधेराजकृतव्यवस्थावादिप्रतिवादिभ्यांमन्तव्येत्येतदर्थकमिदंवचनम् । अतएवपितामहः । वचनं
प्राग्लिखितन्निश्चितंयेनशक्याःस्युरित्यादि । धर्मादीनाञ्चतुर्णाम्पूर्वस्योत्तरेणोत्तरापेक्षयादुर्बलत्वमाहनारदः । धर्मश्चव्यवहा
रश्चचरित्रंराजशासनम् । चतुष्पाद्व्यवहारोयमुत्तरःपूर्वबाधकइति । व्यवहारस्यधर्मबाधकतामाह । बृहस्पतिः । शा
स्त्रंकेवलमाश्रित्यक्रियतेयत्रनिर्णयः । व्यवहारःसविज्ञेयोधर्मस्तेनावहीयते । शास्त्रशब्देनशास्त्रोक्तसाक्ष्यादिप्रमाणन्तेनयो
निर्णयःक्रियतेसव्यवहारः । तेनधर्मःशपथादिकृतोनिर्णयोवहीयतेबाध्यते । मानुषप्रमाणेसतिदिव्यानवकाशात् । अतए
वाहकात्यायनः । युक्तियुक्तन्तुकार्य्यंस्यादिव्यंयत्रविवर्जितम् । धर्म्मस्तुव्यवहारेणबाध्यतेतत्रनान्यथा । चरित्रव्यवहा

र्वाधकतामाह । बृहस्पतिः । देशस्थित्यानुमानेन नैगमानुमतेन वा । क्रियते निर्णयस्तत्र व्यवहारस्तु बाध्यते । नैगमाः पौ
र्वाणाजः । नैगमानुमतेनानुमानेनेति सम्बन्धः सामानाधिकरण्येन । बाणहादेशस्थित्यपेक्षः । अनुमेयार्थे स्फुटयति का
त्यायनः । प्रतिलोमप्रसूतेषु तथा दुर्गनिवासिषु । विरुद्धं नियतम्प्राज्ञस्तन्धर्मेण न विचालयेत् । निर्णयन्तु यदा कुर्य्यान्तेन च
र्मेण पार्थिवः । व्यवहारस्त्वरित्रेण तदा तेनैव बाध्यत इति । स्मृतिविरुद्धमपि नियतं नान्न विचालयेद्राजा । एतच्छासनस्य
चरित्रबाधकमाह । बृहस्पतिः । विहाय चरितं चारं यत्र कुर्यात्पुनर्नृपः । निर्णयं सा नुपाज्ञा चरितं चाच्यते तयेति । चरि
त्राचारं पूर्वपूर्वाचरितमाचारम् । यद्यपि तत्र धर्मेण विचालयेदित्युक्तम् अनुविहाय चरितं चारमित्युच्यते । तेन विरोधः प्रतिभा
ति । तथापि यदि तद्विचालनेपुरराष्ट्रादिक्षोभो न भवति । तदा स्मृत्यादिविरुद्धत्वानं दूरीकृत्य स्मृत्यादि विरोधो राजाज्ञया नि
र्णयः कार्य्य इति तात्पर्य्यम् । अत एव पुरराष्ट्रस्य विरुद्धस्य विवादस्यानादेयत्वमुक्तम् । पुरराष्ट्रक्षोभापादकतया । तदना
पादकतया तु स्मृत्याद्यनुरोध एव कार्य्यो राज्ञेति । अत एवाह कात्यायनः । विरुद्धं न्यायतो यत्तु चरितं कल्प्यते बुधैः । एवमा
अनिरस्येत चरितं नतु म्लेच्छपायेति । म्लेच्छपायविरुद्धं चरितं न यत्र भूमितिकल्प्यते । तत्र म्लेच्छपायात्तचरितं निरस्यते वा
ध्यत इत्यर्थः । यथोक्तप्रकारनिरिक्तप्रकारे तेषां बाध्यबाधकताकल्पने दोषमाह । कात्यायनः । अनेन विधिना युक्तं बाधकं
प्युदुत्तरम् । अन्यथा बाधनं यत्र तत्र धर्मो विहन्यत इति । इति निर्णयपादः ॥ ● ॥ पुनर्न्यायः पुनरपि निर्णयानन्तरं भवेत्
चेदनेपराजितस्य दण्डार्हत्वन्तथापि यदि स पराजितमपि स्वयमपराजितमेव मनुते पूर्वव्यवहारे कुदृष्टत्वभ्रमात्ततो द्विगुणं दं
ण्डमभ्युपगमय्य राज्ञा सभ्यान्तरोपादानेन पुनर्व्यवहारः साधोयो द्रष्टव्य इत्याह नारदः । तीरितञ्चानुशिष्टञ्च यो मन्येत विध
र्मतः । द्विगुणान्दण्डमादाय पुनस्तत्कार्यमुद्धरेत् । तीरितं समापितं निर्णयपर्यन्तम्प्रापितमिति यावत् । पारतीरकर्मसमाप्ता
विन्यस्य निष्ठान्तं रूपम् । अनुशिष्टमर्थिप्रत्यर्थिनौ प्रतिकथितञ्च जयपराजयपत्रे वारोपितम् । विधर्मतो धर्मविपरीतं कुदृष्ट

मितियावत् । योर्थिप्रत्यर्थिनोरन्यतरो मन्येत स पराजयनिमित्तन्दण्डंद्विगुणमादायांगीकृत्य तत्कार्यम्पुनरुद्धरेत् । चतु
ष्पाद्व्यवहारप्रवर्त्तनेन निर्णाययेत् । याज्ञवल्क्यः । दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु । सभ्याः सजयिनो दण्ड्या द्विवा
दाद्द्विगुणन्दमम् । यो मन्येताजितोस्मीति न्यायेनापि पराजितः । सभायान्तं पुनर्जित्वा दापयेद्द्विगुणन्दमम् । यस्यापवादमा
ह । मनुः । तीरितञ्चानुशिष्टञ्च यत्र क्वचन यद्भवेत् । कृतन्तद्धर्मतो विद्यान्न तद्भूयो निवर्त्तयेत् । धर्मतः कृतञ्चेत्कृतमेव विद्या
दित्यर्थः । नारदः । साक्षिसभ्यावसन्नानां दूषणे दर्शनम्पुनः । स्वचर्य्यावसितानान्तु प्रोक्तः पौनर्भवो विधिः । साक्षिसभ्यावस
न्नानां साक्षिद्वारे सभ्यद्वारे वावसन्नानाम्पराजितानां दूषणे साक्षिषु सभ्येषु वा दोषोद्भावनेऽन्यतरेण कृते पुनर्दर्शनं व्यवहार
दर्शनम् । राज्ञा कार्य्यमिति शेष ॥ स्वचर्य्यावसितानां स्वचर्य्यया स्वव्यापारेण पूर्वापरविरुद्धभाषणादिनाऽवसितानाम्पराजि
तानान्तु पौनर्भवः पुनरुद्भवः पुनर्भवः पुनर्व्यवहारप्रवृत्तिरिति यावत् । तत्सम्बन्धिविधिर्नोक्तः कर्त्तव्यत्वेनाभिहितो मुनिभिरि
त्यर्थ ॥ वृहस्पतिः । पक्षावनानुत्तरत्वादन्यपक्षाश्रयेण च । हीनस्य गृह्यते वादो न स्ववाक्यजितस्य तु । वादो गृह्यते पुनर्न्यायो
भवतीत्यर्थः । स्ववाक्येन पूर्वापरविरुद्धेनोत्तरापरिस्फूर्त्त्या स्कन्दितेन वा यो जितस्तस्य तु न भवतीत्यर्थः ॥ वृहस्पतिकात्यायनौ । कु
लादिभिर्निश्चितेपि सन्तोषं न गतस्तु यः । विचार्य्य तत्कृतं राजा कुकृतम्पुनरुद्धरेत् । वृहस्पतिः । निश्चित्य बहुभिः सार्धं ब्राह्म
णैः शास्त्रपारगैः । दण्डयेज्जयिना सार्धं पूर्वं सभ्यांस्तु दोषिणः । जयिना पूर्वव्यवहारजयिना । नारदः । दुर्दृष्टे व्यवहारे
तु सभ्यास्तन्दण्डमाप्नुयुः ॥ न हि जातु विना दण्डं कश्चिन्मार्गेवतिष्ठते । मनुः । अमात्यः प्राड्विवाको वा यत्कुर्युः कार्यमन्यथा । तं
सर्वं नृपतिः कुर्य्यात्तान्सहस्रन्तु दण्डयेत् । सहस्रपणान्दण्डं व्यवहारेऽनुक्तसंख्यया संख्यायाः पणगतत्वेन परिभाषितत्वात्
। एतच्च दण्डनिरूपणप्रस्तावे विवेचयिष्यामः । यत्र द्विगुणो दण्डः सहस्राधिकस्तत्रामात्यप्राड्विवाकयोरपि स एव । अन्य
त्र सहस्रमेव । अमात्यप्राड्विवाकयोर्मुख्यत्वेन दण्डाधिक्यस्योचितत्वात् । इति पुनर्न्यायः ॥ ● ॥ निर्णयानन्तरं जयन्तञ

यिनेजयपत्रदानम्। पराजिताद्दण्डादानम्। सपणविवादेपणादानम्। धनिनेधनदापनञ्च। तथाचव्यासः। व्यवहा रान्स्वयंदृष्ट्वाश्रुत्वावाप्राड्विवाकतः। जयपत्रन्ततोदद्यात्परिज्ञानायपार्थिवः॥ पुनर्न्यायादिप्रसक्तौप्राङ्न्यायपरिज्ञानाय। वृहस्पतिः। प्रतिज्ञाभावनाद्वादीप्राड्विवाकादिपूजनात्। जयपत्रस्यचादानाज्जयीलोकैर्निगद्यते। योगीश्वरः। सपण श्चेद्विवादःस्यात्तत्रहीनन्तुदापयेत्। दण्डञ्चस्वपणञ्चैवधनिनेधनमेवच॥ वृहस्पतिः। अपराधानुरूपश्चदण्डोत्रपरिक ल्पितइतितत्रजयपत्रप्रकारंलेख्यप्रस्तावे। दण्डपणादानेदण्डनिरूपणेधनिनेधनदानमृणादानप्रकरणेवक्ष्यामः॥

॥ अथसभ्यःप्राड्विवाकसहितस्यसभापतेरन्यथाव्यवहारदर्शनेसर्वथादर्शनाभावेचदोषकथनम्। तत्रान्यथादर्शनेदो षमाह। मनुः। यस्त्वधर्मेणकार्य्याणिमोहात्कुर्य्यान्नराधिपः। अचिरात्तंदुरात्मानंवशेकुर्वन्तिशत्रवः॥ कात्यायनः। अस्व र्ग्यालोकनाशायापरानीकभयावहा। आयुर्बीजहरीराज्ञामस्तिवाक्येस्वयंकृतिः॥ तस्माच्छास्त्रानुसारेणराजाकार्याणिसा धयेत्। वाक्याभावेतुसर्वेषांदेशदृष्टेनसंनयेत्॥ अदर्शनेदोषमाह। महाभारतेकृष्णद्वैपायनः। अर्थिनामुपसन्नानां यस्तुनोपैतिदर्शनम्। सुखेषुसक्तोन्तृपतिःसतप्येतन्नृगोयथेति। नृगोनामराजा। रामायणेवाल्मीकिः। पौरकार्याणियो राजानकरोतिसमास्थितः। व्यक्तंसनरकेघोरेपच्यतेनात्रसंशयइति। समास्थितःसुस्थितः। अनेनदुःस्थितस्यादर्शनेन दोषइतिसूचितम्। अतएवानुकल्पतयादुःस्थितस्यस्वप्रतिनिधिप्राड्विवाकनियोगःप्रागुक्तः। प्राड्विवाकस्यसभ्यानाञ्चा न्यथादर्शनादर्शनयोर्दोषइतिप्रागेवप्रपञ्चितंव्यवहारदर्शनविधिविचारप्रस्तावे। सम्यग्व्यवहारदर्शनेफलमप्याह मनुः। कामक्रोधौतुसंयम्ययोर्थान्धर्मेणपश्यति। प्रजास्तमनुवर्त्तन्तेसमुद्रमिवसिन्धवः। इदंदृष्टफलम्। अदृष्टमपि फलमाहनारदः। एवंपश्येत्सदाराजाव्यवहारान्समाहितः। वितत्येहयशोलोकेवृत्तःप्राप्नोतिविष्टपम्॥ वृहस्पतिः। एवं शास्त्रोदितंराजाकुर्वन्निर्णयपालनम्। वितत्येहयशोलोकेमहेन्द्रसचिवोभवेत्। फलान्तराण्यपिव्यवहारदर्शनविधिप्र

स्त्रावेभिहितानि ॥ ● ॥ अथकृतनिवृत्तिः । तत्र मनुविष्णू । यस्मिन्यस्मिन्विवादे तु कौटसाक्ष्यं कृतम्भवेत् । तत्तत्कार्य्यं निवर्त्ते
तकृतं चाप्यकृतम्भवेत् ॥ नारदः । स्त्रीपुंसयोर्बहिर्ग्रामादन्तर्वेश्मन्यरातिषु । व्यवहारः कृतोप्येषु पुनः कर्त्तव्यतामियात् ॥ मनु
नारदौ । सत्यानभाषा भवति यद्यपि स्यात्प्रतिष्ठिता । बहिश्चेद्भाष्यते धर्म्मान्नियताद्व्यावहारिकात् ॥ नियताद्व्यावहारिकात् ।
नियतव्यावहारिकधर्मबाह्यविषया या भाषा सा यद्यपि प्रतिष्ठिता साक्षिलेख्यादिप्रमाणवती भवति तथापि सत्या ग्राह्या न भवति
। यथा पुत्राद्यन्वयोपेतं कश्चिदभियुङ्क्ते सर्वस्वं मह्यमनेन प्रतिश्रुतमिदानीं न ददातीति । मनुः । योगाधमनविक्रीतं योगदान
प्रतिग्रहम् । यत्र वाप्युपधिम्पश्येत्तत्सर्वं विनिवर्त्तयेत् ॥ बलाद्दत्तम्बलाद्भुक्तम्बलाद्यच्चापि लेखितम् । सर्वान्बलकृतानर्थानकृ
तान्मनुरब्रवीत् । योगश्छद्म । आधमनमाधीकरणम् । उपधिश्छलम् । पूर्वोत्तरश्लोकाभ्यां छलकृतस्य सर्वव्यवहाराणां निवर्त्तनं
सार्वत्रिकमित्युक्तम्भवति । एवमुत्तरश्लोकेपि बलकृतसर्वव्यवहाराणामपि । योगीश्वरः । मत्तोन्मत्तार्त्ताध्यधीनैर्बालेन स्थ
विरेण वा । असम्बद्धकृतश्चैव व्यवहारो न सिध्यति । अध्यधीनो दासः । अधिकमधीनमित्युत्पत्तेः । असम्बद्धेन वादिप्र
तिवाद्यसम्बद्धेन कृतस्तत्प्रतिनिधिभूय सम्पादितः । समासान्तर्गतमपि कृतपदम्प्राकृतनृतीयान्तैरपि बुध्या निष्कृष्य सम्बन्धनी
यम् । नारदः । यद्बालः कुरुते कार्य्यमस्वतन्त्रस्तथैव च । अकृतन्तदपि प्राहुः शास्त्रे शास्त्रविदो जनाः । स्वतन्त्रोपि हि यत्का
र्य्यं कुर्य्यादप्रकृतिङ्गतः । तदप्यकृतमेवाहुरस्वतन्त्रः स हेतुतः ॥ कामक्रोधाभिभूतार्त्तभयव्यसनपीडिताः । रागद्वेषपरीता
श्च ज्ञेयास्त्वप्रकृतिङ्गताः ॥ तथा दासकृतङ्कार्य्यमकृतम्परिचक्षते । अन्यत्र स्वामिसंदेशान्न दासः प्रभुरात्मनः । पुत्रेण च कृतं
कार्य्यं यत्स्यादच्छन्दतः पितुः ॥ तदप्यकृतमेवाहुर्दासः पुत्रश्च तौ समौ ॥ कात्यायनः । नक्षेत्रगृहदासानां दानाधमनविक्र
या । अस्वतन्त्रकृताः सिद्धिम्प्राप्नुयुर्नानुवर्णिताः । नानुवर्णिताः स्वतन्त्रेण पित्रादिना नानुमताः । अनुमताः सिद्ध्येयुरेवेत्यर्था
दुक्तम्भवति । अत एवाह । स एव । प्रमाणं सर्व एवैते पण्यानां क्रयविक्रये । यदि संव्यवहारं ते कुर्वन्तो ह्यनुमोदिताः ॥ क्षे

त्रादीनान्तथैवास्तुभ्रातापितृसुतःसुतः। निसृष्टाःकार्यकरणेगुरुणायदिगच्छता। निसृष्टार्थस्तुयोयस्मिंस्तस्मिन्नर्थेप्रभु
स्तुसः। तद्गृहीतान्कृतंकार्यैनान्यथाकर्तुमर्हति। बृहस्पतिरपि। यःस्वामिनानियुक्तस्तुधनायव्ययपालने। कुसीदकृषीवा
णिज्येनिसृष्टार्थस्तुसःस्मृतः॥ प्रमाणन्तत्कृतंसर्वैलाभालाभव्ययोदयम्। स्वदेशेवाविदेशेवास्वामीतन्नविसंवदेत्। अनुम
त्यभावेपिकुटुम्बभरणार्थमस्वतंत्रकृतमृणादिव्यवहारंस्वतंत्रोननिवर्तयेदित्याह। मनुः। कुटुंबार्थेध्यधीनोपिव्यवहा
रंयमाचरेत्। स्वदेशेवाविदेशेवातंस्वामीनविचालयेत्। अध्यधीनःपुत्रभ्रातृपुत्रदासादिः॥ * ॥ अथस्वतंत्रास्वतंत्रलक्ष
णम्। तत्रनारदः। स्वातन्त्र्यंतुस्मृतंज्येष्ठेज्यैष्ठ्यंगुणवयःकृतम्। तथा। अस्वतंत्राःप्रजाःसर्वाःस्वतंत्रःपृथिवीपतिः। अस्वतं
त्रःस्मृतःशिष्यआचार्येतुस्वतंत्रता॥ अस्वतंत्राःस्त्रियःपुत्रादासादयश्चपरिग्रहः। गर्भस्थैःसदृशोज्ञेयःआष्टमाद्वत्सराच्छि
शुः। बालआषोडशाद्वर्षात्पौगण्डश्चेतिशब्द्यते। परतोव्यवहारज्ञःस्वतंत्रःपितरावृते। जीवतोरस्वतंत्रःस्याज्जरयापि
समन्वितः। तयोरपिपिताश्रेयान्बीजप्राधान्यदर्शनात्। अभावेबीजिनोमातातदभावेतुपूर्वजः। कात्यायनः। पितास्वतं
त्रःपितृमान्भ्राताभ्रातृव्यएवच। कनिष्ठोवाऽविभक्तस्योदासःकर्मकरस्तथा। पितृमान्पितायस्यतंत्रइत्यर्थः। अविभक्तस्यःअ
विभक्तधनः। हारीतः। दानार्थेवाधनार्थेवाधर्मार्थेवाविशेषतः। आदानेवाविसर्गेवानस्त्रीस्वातन्त्र्यमर्हति। नारदः। स्वतं
त्राःसर्वएवैतेपरतन्त्रेषुनित्यशः। अनुशिष्टौविसर्गेचविक्रयेचेश्वरामताः। एतेपूर्वोक्ताराजादयः। स्वतंत्रस्यपित्रादेरपिवि
षयविशेषेणस्वातन्त्र्यमित्याह। कात्यायनः। सुतस्यसुतदाराणांवशित्वमनुशासने। विक्रयेचैवदानेचवशित्वन्नसुतेपितुः
। एतदप्यनापदीतिवक्ष्यते। इतिसामान्यपरिभाषा॥ ● ॥ अथविशेषपरिभाषा। तत्रयाज्ञवल्क्यः। अभियोगमनिस्तीर्य
नैनंप्रत्यभियोजयेत्। अभियुक्तश्चनान्येननोक्तंविप्रकृतिंनयेत्॥ अभियुज्यतइत्यभियोगोऽपराधःऋणादिर्मदीयंगृहीत्वान
प्रत्यर्पयतीत्यादिरर्थिनोपन्यस्तस्तमनिस्तीर्यापरिहृत्यैनमभियोक्तारन्नप्रत्यभियोजयेत्। युगपद्व्यवहारस्यप्रतिज्ञाभे

देनासम्भवात्। प्रत्यभियोगानर्थक्यात्। इत्ययम्प्रत्यभियोगानर्थक्यादित्ययम्प्रत्यर्थिनम्प्रत्युपदेशोन्यवादित्वेनहीनतापरि
हारार्थः। यद्यपिप्रत्यवस्कन्दनंप्रत्यभियोगरूपमेव। तथापिस्वापराधपरिहारार्थत्वादनेनप्रतिषिध्यते। अन्येनाभियुक्तंचा
निस्तीर्णतदीयाभियोगमर्थीनाभियुञ्जीत। अन्याभियोगापेक्षयात्रप्रत्यभियोगशब्दोनुवादत्वेनयथाकथंचिन्नेयः। अयम
पियुगपद्व्यवहारासम्भवनिबन्धनोर्थिनम्प्रत्युपदेशः। किञ्चउक्तमावेदनसमयेयदुक्तन्तद्धिप्रकृतिंविरुद्धस्वभावतांननयेत्।
नप्रापयेत्। यद्वस्तुयत्प्रकारेणावेदनसमयेनिवेदितन्तत्तथैवतद्भाषायांलेखनीयंनान्यथेत्ययमप्यर्थिनएवान्यवादित्वनिब
न्धनहीनतापरिहारार्थएवोपदेशः। यद्यपियथावेदितमर्थिनेत्यत्रैवेदमुक्तमितिपुनरुक्तमाभातितथापितद्वस्त्वन्तरावेदनप्र
तिषेधकमिदन्तुपदान्तरसंक्रमनिवारकमित्यपुनरुक्तता। तद्यथारूपकशतंमदीयम्वृद्ध्यानुगृहीत्वानप्रयच्छतीत्यावेद्य
भाषायांवस्त्रशतंवृद्ध्यागृहीत्वानप्रयच्छतीतिवस्त्रादानपदएववस्त्वन्तरगमनम्। रूपकशतंवृद्ध्यागृहीत्वामदीयेनप्रय
च्छतीत्यावेद्यभाषायांरूपकशतंमदीयम्बलादपहृतवानितितस्मिन्नेववस्तुसाहसाख्यंविवादपदंलेखयतीति। तत्रयथाश
ब्दोपादानादत्रचविप्रकृतिपदोपादानात्। वस्त्वन्तरगमनेह्येकत्रैवविवादपदेप्रकारभेदमात्रंप्रकारवाचिथाल्प्रत्ययेनप्र
त्याय्यते। पदान्तरसंक्रमेतुविरुद्धस्वभावताव्यक्तेतिभावः। अभियोगमनिस्तीर्य्येत्यस्यापवादमाहसएव। कुर्यात्प्रत्यभियो
गन्तुकलहंसाहसेषुच। कलहेवाग्दण्डपारुष्यरूपे। साहसेषुच। विषशस्त्रादिकृतप्राणव्यापादनादिषुयदिसम्भवति
प्रत्यभियोगस्तदास्वाभियोगमनिस्तीर्य्यापिअभियोक्तारम्प्रत्यभियोजयेत्। ननुप्रतिज्ञान्तरत्वापत्त्यायुगपद्व्यवहारासम्भवस्य
प्रत्यभियोगप्रतिषेधबीजस्यात्रापितौल्यात्कथन्तत्प्रतिप्रसवः। प्राङ्न्यायप्रत्यवस्कन्दनयोस्तुपूर्वपक्षोपमर्दकत्वेनोत्तरत्वश्च
यालक्षितयोःप्रत्यभियोगत्वेपिनप्रतिज्ञान्तरापत्त्यायुगपद्व्यवहारासम्भवदोषइतिवैषम्यम्। अन्यथातयोरुत्तरत्वमेवनस्यात्प्र
तिषेधस्तत्प्रतिषेधप्रसक्त्वादितिचेन्नयद्यप्यत्रापियुगपद्व्यवहारासम्भवस्तुल्यस्तथापिन्यूनदण्डप्राप्तयेधिकदण्डनिवृत्तयेच

लहंसाहसयोःप्रत्यभियोगः ॥ सार्थकोन्यत्रनिरर्थकइतिप्रतिप्रसवोपदेशः ॥ तथाहि । अनेनाहंत्ताडितःशप्तोवापूर्वमं
यंमत्प्राणव्ययायव्यापारंकृतवानित्यभियुक्तोयद्याह । सत्यमेतत्तथापिमत्तःपूर्वतरमयन्ताडनादिममकृतवानितिप्रत्यभियो
गेतस्मिंश्चसाधितेदण्डाल्पत्वम्प्रत्यभियोगस्यफलम् । तथाचनारदः । पूर्वमाक्षारयेद्यस्तुनियतंस्यात्सदोषभाक् । पश्चाद्यः
सोप्यसत्कारीपूर्वेतुविनयोगुरुरिति । विनयोदण्डः । यदातुयुगपद्द्वयोस्ताडनादिषुप्रवृत्तिस्तत्राधिकदण्डनिवृत्तिःप्रत्यभियो
गफलम् । तदप्याहसएव । पारुष्येसाहसेचैवयुगपत्सम्प्रवृत्तयोः । विशेषश्चेन्नलभ्येतविनयःस्यात्समस्तयोरिति । तेनाय
मत्रतात्पर्यार्थः ॥ पूर्वपक्षोपमर्दनरूपप्रत्यभियोगस्यप्रतिज्ञोत्तरत्वेनयुगपद्व्यवहारासम्भवरूपप्रत्यभियोगस्यप्रतिज्ञोत्तरत्वेन
युगपद्व्यवहारासम्भवेरूपदोषाभावादेवाप्रतिषिद्धत्वम् । कलहादिषुयुगपद्व्यवहारासम्भवेसत्यप्यर्थवान्प्रत्यभियोगःक्रिय
माणोनदुष्यति । पूर्वपक्षानुपमर्दनरूपोनर्थकश्चप्रत्यभियोगोनकार्य्यःऋणादानादिषुविवादेष्विति । यथायंमदीयमृणमि
यदियत्वावृद्ध्यागृहित्वानप्रयच्छतीत्यभियोगेमह्यमप्ययंधारयतीतिप्रत्यभियोगोनकार्य्योनिष्प्रयोजकत्वात्प्रतिज्ञान्तरत्वाच्चेति
। इतिप्रत्यभियोगनिर्णयः ॥ ● ॥ अथनिह्नवादिविधिर्निह्नवादिविवेचनञ्च । तत्रयाज्ञवल्क्यः । निह्नुतेलिखितंनैकमेकदे
शविभावितः । दाप्यःसर्वंन्नृपेणार्थेनग्राह्यस्त्वनिवेदितः । नैकमनेकं । निषेधार्थनकारस्यासमासत्वान्नलोपोनञ्इतिनका
रलोपाभावेनैकधेतिवद्रूपम् । अर्थिनाभियुक्तंसुवर्णरजतवस्त्रादिवस्तुभाषालिपियांलिखितमुत्तरलेखनवेलायाम्प्रत्यर्थीयःसर्वमे
वनिह्नुतेमिथ्यैतदित्यपलपति । सोर्थिनैकदेशेप्रतिज्ञाविषयभूतकतिपयवस्तुनिभाविते लिखितंसाक्ष्यादिप्रमाणवलादङ्गीका
रितःसर्वमप्यर्थिप्रतिज्ञातंन्नृपेणदाप्यर्थिनेदापनीयः । यस्त्वर्थीर्थिनैवव्यामोहप्रमादादिनाभाषापत्रशोधनावधिनानि
वेदितःपश्चान्निवेद्यतेप्राक्प्रामादादिनाविस्मृतमयेदमितिसन्नृपेणनग्राह्योनादत्तव्यःप्रमाणादिप्रत्याकलनेनेत्यर्थः । न
नुछलंनिरस्यभूतेनव्यवहारान्नयेन्नृपइत्यनेनविरुद्धमिदम् । तथाहि । भूतन्तत्त्वार्थयुक्तंयत्प्रमादाभिहितंछलमित्युक्तेभूतेन

वस्तुतत्त्वानुसरणेन छलप्रमादामर्षाद्युभिहितं निरस्य व्यवहारान्नृपो नयेत्। निर्णीयपश्चात्तं प्रापयेत्। तस्मादर्थिप्रत्यर्थिनौ स्वयमेव निवेदयतः। साक्ष्यादिनैरपेक्ष्येण स्वयमेव साक्ष्यादयोपि शपथादिभिर्भावितास्तत्त्वमेव प्रतिपादयन्तितथा सभ्येनस भापतिना यतितव्यमिति भावः। एवञ्चैकदेशस्य प्रमाणसिद्धावप्येकदेशान्तरस्य सिद्धिः कुतस्त्या अन्यविषयप्रमाणेनान्यसिद्धेरसम्भवात्। छलप्रसक्तेर्दुर्वारत्वात्। एवं प्रमादादिविस्मृतस्य प्रामाणिकस्यार्थस्यानादरे छलं व्यक्तमेव। कात्यायनवचनविरोधश्चैवं सति। यदाह। अनेकार्थाभियोगेपि यावत्संसाधयेद्धनी। साक्षिभिस्तावदेवासौ लभते साधितन्धनमिति साक्षियहणं लेख्याद्युपलक्षणम्। अत्रापरार्कः। अपह्नववादिनः सावष्टम्भयन्मिथ्योत्तरन्तद्विषयंनिह्नुतइत्यादि। यथार्थिनाभियुक्तः प्रत्यर्थी वमुत्तरयति भवदभियुक्तानामर्थानां मध्ये यद्येकमपि भवान्साधयति तदा सर्वमहं दास्यामीति तदोदाहरणात्स्य कात्यायनवचनन्तु सावष्टम्भमिथ्योत्तरविषयन्तेनासाधितांशेऽर्थिना प्रमाणान्तरमुपादेयन्तदभावेपि साधितमात्रलाभेन सन्तोष्टव्यम्। अनेकार्थाभियोगेतु सर्वार्थापलायिना। विभाविते कदेशेन देयं यदभियुज्यतइति नारदवचोपि सावष्टम्भमिथ्योत्तरविषयमेवेत्याह। तदनुपपन्नम्। सपणश्चेद्विवादः स्यादित्यनेनास्य गतार्थतापत्तेः। ईदृशावष्टंभस्य पणादनतिरेकात्। नच पणस्य राज्ञा ग्रहणमस्यत्वर्थिनेति भेद इति वाच्यम्। एतादृशभेदस्याप्रयोजकत्वात्। सपणान्तापयेदित्येतावन्मात्रस्यैव तदर्थत्वात्। प्रतिज्ञानुरोधित्वात्पणत्वस्य निह्नवमात्रस्यात्र प्रतीतेः सावष्टम्भनिह्नवविषयत्वाकल्पनाया अप्रमाणकत्वाच। एवं नारदवाक्येपि नचत व्यपलायिनेति विशेषोपादानादवष्टम्भसहितनिह्नवप्रतीतिरिति वाच्यम्॥ अन्यथासिद्धतात्पर्यग्राहकाभावे सावष्टम्भत्वरूपविशेषपरत्वस्यानियतत्वात्। वाचस्पतिचण्डेश्वरौ त्वाहतुः। यत्रैकदेशसिद्धिरेकदेशान्तरसिद्ध्यविनाभूता तद्विषयं योगीश्वरनारदयोर्वचनं तदतिरिक्तविषयन्तु कात्यायनीयमिति। तदप्यसत्। निह्नवापादानवैयर्थ्यात्। अनिह्नवेपि तस्य युक्तियुक्तत्वात्। प्रत्यवस्कन्दनप्राङ्न्यायोत्तरयोरप्येकदेशे कारणादिसाधने तद्विनाभूतैकदेशान्त

रेकारणादिविरुद्धेर्दुर्वारत्वात् ॥ यत्तु वाचस्पतिनाऽपसक्रान्तेप्यादिनासपणञ्छेदित्यादितन्नयोगीश्वरवचनएवसंवादि मत्तेनस्पष्टमेवगतार्थत्वंप्रदर्शितमितिमहान्प्रमादःविज्ञानयोगिनस्तात्कुः। यथाभूतानुसरणेनच्छलनिरासेनचव्यवहारनिर्ण येभवतितथाविधेयमितिमुख्यःकल्पः। नत्वहेतुः। भूतमप्यनुपन्यस्तंहीयतेव्यवहारतइतितस्यायमर्थः। यतोभूतंवस्तुतत्त्वम प्यनुपन्यस्तमकथितंवादिप्रतिवाद्यन्यतरेणसाक्ष्यादिनाबानद्व्यवहारतोव्यवहाररीत्याहीयते। यद्यपिपश्चात्प्रमाणेनसाध्य तेप्रमाणंविनैवचैकदेशविभावनेनतथापिवादिप्रतिवादिसम्बन्धत्वेनहीनम्भवति। पश्चाद्दादिनाप्रमाणान्तरेणसाधनमपिप्रा क्प्रतिज्ञाकालेननिवेदितत्त्वेनलभ्यते। तथासर्वापह्नववकारिणाकतिपयानिवस्तूनिसाक्ष्यादिभिरंगीकारितेनान्यपिसाक्ष्यात्प्र माणेनासाधितान्यप्यभियोक्त्रादातव्यतयाप्रतिवादिनःसकाशाद्धीयंतइति। तस्माद्दादीप्रतिवादिनोःसाक्ष्यादिषुवादिगूढा ञ्छयताकूटकारित्वादिनायदाभूतानुसरणमशक्यंतदाचतुष्पाद्व्यवहारमार्गेणप्रवर्तितेव्यवहारेभूतानुसरणाभावेपिसत्य भ्यसभापतेर्दोषलेशोनास्तिरागलोभादिभिरन्यथाशास्त्रकारित्वाभावादित्यर्थः। अत्रोदाहरणं। निह्नुतेलिखितंनैकमिति । एकदेशेप्रत्यर्थिनामिथ्यावादित्वेनिश्चितेऽन्यविषयेपिमिथ्यावादित्वसम्भवात्। अर्थिनश्चैकदेशेसत्यवादित्वनिश्चयेऽन्य विषयेपिसत्यवादित्वसम्भवादितीदृशसम्भावनात्मकतर्कानुगृहीतात्तस्मादेववचनात्सर्वमर्थिनेप्रत्यर्थीसङ्घात्दापनीयः। प्रति ज्ञाकालेवानिवेदितमिदानीमुपन्यस्यन्नेकदेशविभावनानिमित्तान्यलाभेनेदानीमुपन्यस्यतीतिसम्भावनारूपतर्कानुगृहीतमे तदेववचनमनिवेदितस्यादापनेप्रमाणमित्येतत्तर्कोवावाक्यानुसारेणसभ्येनसभापतिनानिर्णयेक्रियमाणेयदिसहस्रशतमे प्यंशेवस्तुनोन्यथात्वम्भवति। तर्हितस्यनदोषइतितात्पर्यमेतदभिप्रायकमेवगौतमवचनम्। न्यायाधिगमेतर्कोभ्युपायस्ते नाभ्यूह्ययथास्थानंगमयेदिति। अयेचतेनैवोपसंहृतंतस्माद्राजाचार्यावनिंद्याविनिश्चैकदेशविभावितप्रागनिवेदितनिवे दकयोर्वादिप्रतिवादिनोर्हीनतामात्रप्रतिपादकमिदंयाज्ञवल्क्यादिवचनमितिवाच्यम्। सर्वदापोनयाह्यःदेयंयदभि

युज्यतइतिवचनात्। हीनतामात्रप्रतिपादनपरत्वेतदभिधानानर्थक्यात्। कात्यायनवचनन्तु। यत्रापिव्याप्तिगृहीतबह्वर्थ
विषयाभियोगःपुत्रादेस्तद्रिक्थहरस्यक्रियते। सचाभियुक्तोहन्तावदत्रकिमपिनजानामियावत्प्रमाणेनायंसाधयतितावद्दा
स्यामीत्युत्तरयति। तत्रासौनिह्नववादीनभवति। तेनैकदेशविभावितोपिनक्वचिदप्यसत्यवादीतिपूर्वोक्ततर्कानवतारात्तदनुगृ
हीतमेतद्वचनमत्रनप्रवर्त्ततइतिसामान्यविषयत्वान्निह्नवोत्तरमपहायाज्ञानोत्तरईदृशेप्रवर्त्ततइतिनतेनसहास्यविरोधः
भिन्नविषयत्वात्। ननुऋणादिषुविवादेषुस्थिरप्रायेषुनिश्चितम्। ऊनेवाभ्यधिकेवार्थेप्रोक्तेसाध्यन्नसिध्यति। अर्थिनायावा
नर्थोभाषायांलिखितस्ततोन्यूनेऽधिकेवार्थेसाक्षिभिःप्रोक्तेसर्वमेवसाध्यंनसिध्यतीतिप्रतिज्ञाप्रमाणयोर्विसंवादित्यर्थकेनानेनका
त्यायनवचनेनप्रत्युतसाक्ष्यादिविभावितैकदेशस्याप्यसिद्धिरायाति। तत्सिद्धान्तदविभावितैकदेशसिद्धिर्दूरापास्ता। उच्य
ते। यत्रवादीसकलप्रतिज्ञातार्थसाधनत्वेनसाक्षिलेख्यादिकमुपन्यस्यति। ततश्चन्यूनोधिकोवार्थोविभाव्यते। तत्रकूटसम्भा
वनयाकृत्स्नसाध्यासिद्धिः। तत्रापिनिश्चितंनसिध्यतीतिवचनात्संशयनादवस्थेप्रमाणान्तरेणसम्भवतानिर्णयःकार्य्यः। क्व
चिन्निरस्येतिनियमात्। इतिकात्यायनीयस्यास्यवचनस्यार्थः। यत्रतुवाद्येवम्वदति। एतावन्तंशमंमैतेसाक्षिणोलेख्यंवास्ति
। अन्यमंशमलौकिकप्रमाणेनविभावयिष्यामीतितत्रोक्ततर्कानुगृहीतान्नित्याह्नुतइत्यादियोगीश्वरनारदवचनादेकदेशवि
भावनेपिकृत्स्नसाध्यसिद्धिर्न्नोलौकिकप्रमाणंप्रतीक्षेतयोगीश्वरवचनस्यअज्ञानोत्तरेतुयावानंशोलौकिकेनप्रमाणेनप्रमितस्ता
वानेवततोनिर्धार्य्योन्यस्तुदिव्यान्तरसम्भवेनसिध्यत्येव। अनेकार्थाभियोगेपीतिवचनात्। अतएवाभिप्रायात्। प्रागुपन्य
स्तंवचनम्। यद्व्येकदेशव्याप्तापिक्रियाविद्येतमानुषी। साग्राह्यानतुपूर्णापिदैविकीवदतांनृणामिति। कात्यायनीयन्तेन
नकापिविरोधलेशइति। वयन्तुकृत्स्नंनिरस्येत्यस्याविधेहेतुरयंभूतमप्यनुपन्यस्तमित्युपेद्भलकः। यतोभूतन्तत्त्वमप्यनुपन्यस्तं
व्यवहारतोहीयतेवादिप्रतिवादिभ्यामनुपन्यस्तम्प्रमाणतोसाधितंहीयतेहानिमाप्नोतिव्यवहारतोव्यवहाररीत्येतितस्यार्थः

। तदुपपादनं निह्नुते लिखितं नैकमित्यादि तस्यायमर्थः । वादिनः कतिपयांशे सत्यवादिनोऽन्यांशेपि सत्यवादित्वसम्भवा
त्प्रतिवादिनश्च सर्वापह्नववादिनः कतिपयांशे मिथ्यावादित्वनिश्चयादन्यांशेपि तत्सम्भवात्सर्वमर्थं नृपेणार्थिने दाप्यो दाप
यितुं योग्यो भवति । निरुत्तरत्वात् । एवं प्रागनिवेदितोऽर्थिनार्थो भूतोपि प्रामाणिकोपि न ग्राह्यो यद्दशादीनि यदित्वाय
मर्थः सत्यः स्याद्भाषायामेव निवेदितः स्यादित्याक्षेपेऽर्थिनोपि निरुत्तरत्वात् । तस्मादुत्तरदानसमये प्रत्यर्थिभिरज्ञादि
भिरेवं बोधनीयो यावदन्येनांशेन तव मिथ्यात्वनिश्चयस्तावदेवापह्नोतव्यमन्यत्सम्प्रतिपत्तव्यम् । कश्चिदप्यंशोऽनेन भवदुपरि सा
धितेन तव निरुत्तरत्वापत्तेः । एवं वाद्यपि भाषासमये सावधानेन त्वया स्वीयं यावदस्ति साध्यमेतदुपरि तत्सर्वं स्मारं स्मारं लेखनी
यमन्यथा तदंशे निरुत्तरतानवापद्येतेति बोधनीयः । एवं साक्षिणोपि प्रमादादिभ्यः प्रच्यावनीयाः । तथा सत्यनायासेन तत्त्वा
नुसरणं सम्भवति । न चावश्यकमन्यथादित्यादिना तत्त्वानुसरणं कथं स्यादिति सर्वथा तत्त्वानुसरणेनैव व्यवहारपर्य्यवसानं वि
धेयमिति तत्त्वं निरस्यान्यस्यैव विधेः सर्वांशे येन सतत्त्वाविधिर्येन तदापनं सर्वस्य विधीयते च निवेदितमग्रहणं वा प्रतिषिध्येत ।
नारदवाक्येपि देयन्तदनुयोग्यमित्येवार्थः । न चैवं दाप्यइत्यादीनामानर्थक्यमेव स्यादिति वाच्यम् । यतो लौकिकव्यवहारापष्ट
म्भेनैवमेवं प्रतिभाति तस्मात्तत्त्वानुसरणायान्यतरस्मादीदृशि विषये दित्थमेव ग्राह्यमित्यत्र तात्पर्य्यात् । कात्यायनादिवचनाना
मप्यत्रैव तात्पर्य्यम् । ऋणादिषु विवादेष्वित्यतोऽप्ययमेवार्थो दृढतामुपैति । यतः प्रमाणप्रतिज्ञाविसम्वादिमतो निश्चयाभाव
स्तत्तत्त्वानुसरणाय प्रमाणान्तरादरणमावश्यकमिति । अत एव वाक्साहसादौ प्रतिज्ञार्थैकदेशविभावनेपि नैकदेशे प्रमाणान्त
रानुसरणे साहसिनो हि राजदण्डमात्रं न प्रत्यर्पणं कस्मैचिद्द्रव्यस्यापि चौर्य्ये प्रत्यर्पणमस्ति । तथापि कतिपयचौरः सर्वं दाप्य इ
ति लोके प्रसिद्धतरत्वाद्बुद्धिमद्गृहस्थावदिय चौर्य्यं गतमस्य च सविधे प्रमाणमितमियदस्तीति चौराभियोक्तारः साधयन्ति तदा त
तएव सर्वं लभ्यते । यदि त्वनष्टमपि कियन्नष्टसाधनावष्टम्भेन लघुमुपन्यस्यन्ति तर्हि मिथ्यावादित्वान्नाष्टिकएकदण्ड्यो भवति

इत्यपि लोके प्रसिद्धतरम् । अनेनैवाभिप्रायेणाह कात्यायनः । साध्यार्थांशेऽपि गदिते साक्षिभिः सकलं भवेत् । स्त्रीसङ्गे सा
हसे चौर्ये यत्साध्यम्पारकीर्त्तितमिति । तत्सानुसरणं स्मृत्योर्विरोधे कथं स्यादित्यपेक्षायामाह । स्मृत्योर्विरोधे न्यायस्तु बलवान्
व्यवहारतः इति । व्याख्यानञ्चैतत्प्रागेव । अर्थशास्त्रधर्मशास्त्रयोर्विरोधे धर्मशास्त्रानुसरणेनैव तत्सानुसरणमित्याह । अर्थशा
स्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिरिति । इदमपि प्रपञ्चितम्प्राक् । तस्मादस्मन्मतेऽकलंनिरस्याशुतदन्तप्रघट्टकेन कलं
निरासतत्सानुसरणावश्यम्भावप्रतिपादनमेवैकवाक्यतया लभ्यत इति भ्रमः । इति निह्नववादिविचारः ॥ ● ॥ अथोत्तरदानेवि
लम्बाविलम्बव्यवस्था । तत्रोयोगीश्वरेण । ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनमिति क्रियोपन्यासे सद्यस्त्वं विदधतोत्तरदा
नेविलम्बोऽप्यनुमत इति प्रतीयते । तदाह बृहस्पतिः । आलीनत्वाद्भयात्तेनात्प्रत्यर्थी स्मृतिविभ्रमात् । कालम्प्रार्थयते यत्र तत्रै
व लब्धुमर्हति । एकाहन्त्र्यहम्पञ्चाहं सप्ताहम्पक्षमेव वा । मासं चतुःत्रयं वर्षं लभतेऽसत्यपेक्षयेति । कात्यायनः । समक्षं तेषु का
र्येषु सद्य एव विवादयेत् । कालातीतेषु वा कालं दद्यात्प्रत्यर्थिने प्रभुः । प्रभुर्विचारकः । अत्रालेखयतां ह्यर्थं प्रत्यर्थीकारणा
द्यदि । कालं विवादं याचेत तस्य देयो न संशयः । सद्यो वैकाहम्पञ्चाहं त्र्यहं वा गुरुलाघवात् । लभेतासौ त्रिपक्षं वा सप्ताहं वा
वत्सरादिषु । अत्रव्यवस्था तेनैवोक्ता । सद्यः कृते सद्य एव वादः समातीते दिनं क्षिपेत् । षडहकेऽत्र वत्सप्ताहं द्वादशाहि
के । विंशत्यहे दशाहेतु मासार्द्धं वा लभेत सः । मासं विंशत्समातीते त्रिपक्षम्परतो लभेत् । कालं शक्तिं विदित्वा तु कार्याणां च बलाब
लावलम् । अल्पं वा बहु कालं वा दद्यात्प्रत्यर्थिने प्रभुः । यो वा यस्मिन्समाचारः पारम्पर्यक्रमागतः । तत्प्रतीक्ष्य यथान्यायं दाप
येदुत्तरं नृपः । मूलं वा साक्षिणो वापि परदेशस्थिता यदा । तत्कालो भवेत्पुंसां स्वदेशे वक्तुमागमान् । दिनमासार्द्धमासं वा च
तुःसंवत्सरेऽपि वा । क्रियास्विव्यनुरूपस्तु देयः कालः परेण तु । लेखयतः प्रार्थिन इति शेषः । अर्थे स्त्वन्वयः । कालो देयोऽत्र
ह्रेति शेषः । समातीते संवत्सरातीते । यस्मिन्देशे कुत्रादौ भूतग्रहे न विवादास्पदीभूतधनमस्मुष्मान्पुरुषाल्लब्धमिति वादी

र्थं कथयतिसद्य उच्यते। तत्र विषयेषु सा मूलभूतानां साक्षिणां वा स्वदेशे आगमात् आगमनावधिपक्षमुत्तरं दाप्य इत्येवं भवेत्। दात व्य इत्यर्थः। अत्रापवादमाह याज्ञवल्क्यः। साहसस्तेयपारुष्यगोभिशापात्यये स्त्रियाम्। विवादयेत्सद्य एव कालोऽन्यत्रेच्छ या स्मृतः॥ साहसं विषशस्त्रादिभिः प्राणव्यापादनमित्यादि। सहसावलावष्टम्भेन स्तेनापकृतम्। गौर्दोग्ध्री। अभिशापः पातका भिशंसनं। अत्ययः प्राणधनातिपातः। द्वन्द्वैकवद्भावादेकवचनं। स्त्रियां कुलस्त्रियां चारित्रविषये विवादे। दास्यां स्त्रियां स्वत्व विवादे कर्मकरस्य कालातिपातविषये विवादे। सद्य एव प्रागुक्तकालप्रतिक्षामकृत्वैव विवादयेदुत्तरं दापयेत्। अन्यत्रे त द्भिन्नऋणादिविवादे कालः उत्तरदानकाल इच्छया अर्थिसभ्यसभापतीनामनुमत्या स्मृतः उक्तो मन्वादिभिः। अत्यये विवादवि षयीभूतवस्तुविनाश इति। कल्पतरौ साहसादिषूत्तरकालदानविलम्बेऽन्यतरस्य क्षतिरवश्यंभाविनीति सद्य एवोत्तरलेखन मृणादिषु विलम्बेऽपि न क्षतिस्तथेति सोऽप्यनुमतः। सर्वैकाद्यादिरूपेण प्रागुक्तवचनैर्विवक्षितो यत्र तु नवा यत्र निकोऽव्यवस्था तथ्या र्थ्यादीक्षयेति तात्पर्यम्। अत एवाह नारदः। गहनत्वाद्विवादानामसामर्थ्यात्स्मृतेरपि। ऋणादिषु हरेत्कालं कामं तत्त्व बुभुत्सया इति। नारदः। गोभूहिरण्यस्त्रीस्तेयपारुष्यात्ययिकेषु च। साहसेष्वभिशापे च सद्य एव विवादयेत्॥ अभिशापः पापाभिशंसनम्। तस्य पारुष्यभेदेन ग्रहणेऽप्यादरार्थं पुनर्वचनम्। आत्ययिकं कात्यायनेनोक्तम्। यपैति गौरवं यत्र विना शस्यागसत्वच। कालं तत्र न कुर्वीत कार्यमात्ययिकं हि तदिति। अन्यत्रापि सद्य एवोत्तरदानमाह। कात्यायनः। धेनावनडु हि क्षेत्रे स्त्रीषु प्रजनने तथा। विनाशे यात्रिके कूटे तथैव क्रयविक्रये। कन्यायां दूषणे चैव कलहे साहसे निधौ। उपधिकूट साक्ष्ये च सद्य एव विवादयेत्। प्रजननमपत्यविवाहः। अन्यत्र विवादासम्भवात्। उपधिः कूटगणकादिक्षतव्यवहारः। विनाशे यात्रिक इति न सामानाधिकरण्ये। किन्तु विनाशे सति यत्र यात्राग एव सम्पद्यत इत्यर्थे नैक एव विषय इति कल्पतरौ कर त्ना करौ। तन्न। सति सप्तम्यनुषङ्गयोः प्रतीतिविपरीतयोः कल्पनानुपपत्तेर्वा शब्दस्वरसाच्च पृथग्विषयताया एवाचित्यात्। वस्तु

मस्तु विनाशस्त्याग एव वेति प्रथमान्त एव पाठस्तथा चायमर्थः । यत्रोत्तरदानविलम्बे सति गौरवं वस्तुनो मूल्यादि ह्रसितं व्यपे
ति वस्तुन एव वा विनाशो ध्वंसः त्यागः प्रच्यवो वा भवति तत्रोत्तरदानकालमेकाहादिरूपं न कुर्वीत सद्य एवोत्तरं दापयेदित्यभिप्रा
यः । बृहस्पतिकात्यायनौ । साहसस्तेयपारुष्यगोभिशापे तथात्यये । भूमौ विवादयेत्क्षिप्रमकालेऽपि बृहस्पतिः ॥ अभिशापे
नोद्वद्वैकवद्भावः । अकालेऽराज्यादावपि । बृहस्पतिरिदमाहेत्यर्थः । इत्युत्तरदाने विलम्बाविलम्बव्यवस्था समाप्ता च विशे
षपरिभाषा ॥ ● ॥ इति श्रीमत्सकलसामन्तचक्रचूडामणिमञ्जरीधिमञ्जरीनीराजितचरणकमलश्रीमन्महाराजाधिराज
प्रतापरुद्रतनूजश्रीमन्महाराजमधुकरसाहसूनुश्रीमन्महाराजाधिराजचतुरुदधिजलवलयवसुन्धराहृदयपुण्डरी
कविकाशदिनकरश्रीवीरसिंहदेवोद्योगितश्रीहंसपण्डितात्मजश्रीपरशुरामसूनुसकलविद्यापारावारपारीणधुरीण
जगद्दारिद्र्यमहागजपारीन्द्रविद्वज्जनजीवातुश्रीमन्मित्रमिश्रकृते श्रीवीरमित्रोदयाभिधनिबन्धे व्यवहारप्रकाशे परिभाषा
परिष्काराख्यं व्यवहारमातृकापरपर्यायम्प्रथमप्रकरणम् ॥ १ ॥ ● ॥ ● ॥ ● ॥ ● ॥ ● ॥ ● ॥ ● ॥ ● ॥ ● ॥ ● ॥

॥ अथ प्रमाणनिरूपणाख्यं द्वितीयम्प्रकरणमारभ्यते । तत्र प्रमाणभेदप्रमाणविषयव्यवस्थे क्रियापादप्रस्तावे विविक्ते । अ
धुना साक्ष्यादिप्रमाणानामवान्तरभेदः प्रस्तूयते । तत्र साक्षिस्वरूपमाह मनुः । समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिध्यतीति
। समक्षदर्शनस्य साक्ष्यहेतुत्वम्पाणिनिरपि स्मरति । साक्षाद्द्रष्टरि संज्ञायामिति । तत्तु व्युत्पत्तिमात्रमव्यापकत्वात् । श्रुत
साक्ष्यादीनामपि साक्षिव्यवहारविषयत्वात् । अत एव श्रवणादित्युपलक्षणम्प्रमाणमात्रस्य विवादविषयप्रमाता साक्षीति वि
वक्षितम् । साक्षिप्रयोजनमाह । नारदः । सन्दिग्धेषु तु कार्येषु द्वयोर्विवदमानयोः । दृष्टश्रुतानुभूतत्वात्साक्षिभ्यो व्यक्तिदर्श
नमिति । दृष्टश्रुताभ्यामनुभूतत्वादित्यर्थः । यद्वा । दृष्टत्वात्श्रुतत्वादनुभूतत्वाच्चेत्यर्थः । अनुभूतत्वादित्यनेन चगोवृषन्याये
न प्रमाणान्तरजन्योऽनुभवो गृह्यते । व्यक्तिदर्शनं विवेकज्ञानम् । कात्यायनः । अर्थिप्रत्यर्थिसान्निध्यादनुभूतन्तु यद्भवेत् । तद्वा

र्यैरेव भावयेत्। वादयेत्युपलक्षणम्। वाद्यपि प्रतिवादिना तज्जातीयैरेव विभाव्यः। तथा च नारदः। श्रेणीषु श्रेणिपुरुषाः स्वे
षु वर्गेषु वर्गिणः। बहिर्वासिषु बाह्याः स्युः स्त्रियः स्त्रीषु च साक्षिण इति। मनुरपि। स्त्रीणां साक्ष्यं स्त्रियः कुर्युर्द्विजानां सदृशा
द्विजाः। शूद्राश्च सन्तः शूद्राणामन्त्यानामन्त्ययोनयः॥ श्रेणिपुरुषाणां सत्यपि वर्गित्वे पृथङ्निर्देशो गोवृषन्यायेन। प्रयोज
नन्त्वात्यावश्यकत्वबोधनम्। वर्गिणश्च दर्शिताः। कात्यायनेन। लिङ्गिनः श्रेणिपूगाश्च वणिग्व्रातास्तथापरे। समूहस्था
श्च ये चान्ये वर्गास्तानब्रवीद्भृगुः॥ दासचारणमल्लानां हस्त्यश्वायुधजीविनाम्। प्रत्येकैकसमूहानां नायका वर्गिणः स्मृताः॥
तेषां वादः स्ववर्गेषु वर्गिणस्तेषु साक्षिणः। अत्र सर्वत्र न्यूनाधिकविशेषणोपादानमदोषाय अन्यतमाभावेऽप्यभीरुत्वसत्यवदन
शीलत्वस्यैव साक्षित्वप्रयोजकस्योपलक्षणार्थत्वात्तेषां॥ ● ॥ ते च साक्षिणः कियत्संख्याकाः कुत्र ग्राह्या इत्यपेक्षायामाह। बृहस्प
तिः। नव सप्त पञ्च वा स्युश्चत्वारस्त्रय एव वा। उभौ वा श्रोत्रियौ ख्यातौ नैकं पृच्छेत्कदाचन॥ लिखितादिषु स एवाह। लिखितौ
द्वौ तथा गूढौ त्रिचतुष्पञ्च लेखिताः। यदृच्छा स्मारिता कुल्यास्तथा चोत्तरसाक्षिणः॥ दूतकः खटिकायाही कार्यमध्यगतस्तथा।
एक एव प्रमाणं स्यान्नृपो ऽध्यक्षस्तथैव च। खटिकायाही गणकः एक एवेत्येवकारो बाह्यापेक्षया नैकं पृच्छेत्कदाचनेत्यनेनोक्ताया
अनावश्यकत्वार्थो न नियमार्थोऽदृष्टार्थत्वप्रसंगात्। त्र्यवराः साक्षिणो ज्ञेया इति योगीश्वरीयमप्येतदभिप्रायकमेव लिखितादी
नामुभयानुमतत्वग्राह्यत्वमेकस्यापीत्याह योगीश्वरः। उभयानुमतः साक्षी भवत्येकोपि धर्मवित्। यद्यपि श्रौतस्मार्तक्रियापर
धर्मप्रधानाद्युत्यादिविशेषणोपादानात्त्र्यवराणामपि धर्मवित्त्वं समानन्तथापि तेषामुभयानमुमतानामपि भवत्येव साक्षित्वं द्वयो
रेकस्य चोभयानुमत्यैवेति भेदः इति मिताक्षरा। नारदोपि। उभयानुमतो यः स्याद्द्वयोर्विवदमानयोः। स साक्ष्येकोपि साक्षित्वे
प्रष्टव्यः स्यात्सुसंसदि। आप्तत्वेन राजादिभिरवधारितोप्येकः साक्षीत्याह व्यासः। शुचिः क्रियश्च धर्मज्ञः साक्षी यस्त्वनुभूतवाक्।
प्रमाणमेकोपि भवेत्साहसेषु विशेषतः। इति। अनुभूता यथार्थत्वेन प्रमिता वराः वाग्यस्येत्यनुभूतवाक्। कात्यायनः। अभ्यंतरस्तु

निःक्षेपेष्वाद्यमेकोपि वाच्यते । अर्थिना प्रहितः साक्षी भवेदेकोपि याचिते ॥ याचितइति निःक्षेपविशेषणं । न्यायतो वादक्य आपीति वाचस्पतिः । मदनरत्ने तु याचितं विवाहाद्यर्थं याचितगृहीतमाभरणादिकं याचितकमिति याचितमित्याह । निःक्षेपविशेषणं वैयर्थ्याद्याचिते तस्मिन्नभ्यन्तरस्यैकस्य साक्षित्वप्रसङ्गाद्बहिर्मान्वयप्रसक्तेश्चोपरैव व्याख्या प्रत्याकुलादिरपस्थविवादे नन्निर्मेनैकोपि साक्षी स्यादाह । स एव । संस्कृतं येन यत्पण्यं तत्तेनैव विभावयेत् । एकएव प्रमाणं स विवादे तत्र कीर्तितः ॥ इदं च बहूनामसंभवे वा व्यवादिनोर्द्वयोरेकस्यैवानुमतिप्रदर्शनार्थं न नियमार्थम् । अदृष्टार्थत्वप्रसङ्गादिति ध्येयम् ॥ ● ॥ अथ साक्ष्यसम्भवे प्रतिषेधरहितानां साक्ष्यमुक्त्वा पनां सूचयितुमसाक्षिणोपि स्मृतिषूक्ताः । अत्र च साक्षिप्राभावेऽप्रतिषिद्धानामन्यैश्चाद्वेकतिपयप्रतिषेधवत् । नारदः । असाक्ष्यपि हि शास्त्रेषु दृष्टः पञ्चविधो बुधैः । वचनाद्दोषतो भेदात्स्वयमुक्तिर्मृतान्तरइति । श्रोत्रियाद्यास्तु वचनात्स्तेनाद्या दोषदर्शनात् । भेदाद्विप्रतिपत्तिः स्याद्विवादे यत्र साक्षिणाम् ॥ स्वयमुक्तिरनिर्दिष्टः स्वयमेवैत्य यो वदेत् । सूचीत्युक्तः स शास्त्रेषु न स साक्षित्वमर्हति ॥ मृतान्तरोर्थिनि प्रेते मुमुर्षुश्राविताहृते । वचनादसाक्षिणः श्रोत्रियाद्यानाह । स एव । श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजितादयः । असाक्षिणस्ते वचनान्नात्र हेतुरुदाहृतइति । तापसा वानप्रस्थाः प्रव्रजितादयइत्यादिशब्देन शङ्खलिखिताभ्यामुक्ताः पित्राविवदमानादयो गृह्यन्ते । तथा च तावुः । पित्राविवदमानगुरुकुलवासिपरिव्राजकवानप्रस्थनिर्ग्रन्थाः साक्षिणइति । पित्राविवदमाननिर्ग्रन्थयोर्दोषादप्यसाक्षित्वसम्भवे वचनादप्यसाक्षित्वेन विरोधः । दोषादसाक्षिणोपि तेनैव दर्शिताः । स्तेनाः साहसिकाश्चण्डाः कितवा वञ्चकास्तथा । असाक्षिणस्ते दुष्टत्वात्तेषु सत्यं न विद्यते । चण्डाः कोपनाः । कितवा द्यूतकृतः । योगीश्वरस्त्वसाक्षित्वमात्रविवक्षया सर्वानेतानेकीकृत्याह । स्त्रीबालवृद्धकितवमत्तोन्मत्ताभिशस्तकाः रङ्गावतारिपाखण्डिकूटकृद्विकलेन्द्रियाः ॥ पतिताप्तार्थसम्बन्धिसहायरिपुतस्कराः । साहसी दृष्टदोषश्च निर्धूताद्यास्त्वसाक्षिणइति । अत्र वृद्धग्रहणं श्रोत्रियादीनामवचनादसाक्षिणां नारदाद्युक्तानामुपलक्षण

म् । स्त्रीबालादिग्रहणमन्येषामपि दोषात् साक्षित्वनिषेधाभिधानाम् । आद्यग्रहणाद्वैदादसाक्षिणां स्वयमुक्तमृतान्त
रस्य ग्रहणम् । न च स्त्रिया असाक्षित्वं स्त्रीकृतव्यवहारातिरिक्ते स्त्रीणां साक्ष्यं स्त्रियः कुर्युरिति वचनात् । बालोऽप्राप्तव्यवहारः
वृद्धोऽशीतिकावधिः मत्तो मदनीयद्रव्येण । उन्मत्तो ग्रहाद्याविष्टः । अभिशस्तो महापातकाभिशस्तः । स्तार्वैकः । रङ्गावता
रीचारणः । पाखण्डिनो निर्ग्रन्थप्रभृतयः । कूटकृत् कूटपटलेख्यादिकारी । विकलः श्रोत्रेन्द्रियादिदोषवान् । पतितो निश्चितब्रह्म
हत्यादिः । आप्तः सुहृत् । अर्थसम्बन्धि विप्रतिपद्यमानार्थसम्बन्धी । सहायः एककार्यकारी । रिपुः शत्रुरन्यतरस्य । साहसी
बलावष्टम्भेन कार्यकारः । दृष्टदोषो दृष्टासत्यवचनः । निर्धूतो बन्धुभिस्त्यक्तः । भेदादसाक्षित्वं च संख्यागुणसाम्ये । अन्यथा
द्वैधे बहूनां वचनं समेषु गुणिनां वचः । गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तमाः । बहुत्वं परिगृह्णीयात् साक्षिद्वैधे नराधिपः । स
मेषु च गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमानिति याज्ञवल्क्यमन्वादिवचनविरोधापत्तिः । मनुसाक्षिणां लिखितानाञ्च निर्दिष्टा
नाञ्च वादिनाम् । तेषामेकोऽन्यथा ब्रूते भेदात् सर्वेऽप्यसाक्षिण इति । कात्यायनेनैकस्यान्यथावादित्वे सर्वेषामेव भेदादसाक्षि
त्वमुक्तं तद्विरोध इति चेन्न । त्रयाणां साक्षिणामेकस्यान्यथावादे द्वितीयस्य तत्तुल्यस्य सप्रतिपक्षितत्वात् तृतीयस्यैकतयानपे
क्षितेन निर्णयहेतुत्वमिति कात्यायनतात्पर्यात् । सप्रतिपक्षितावशिष्टानामन्येन कत्वेन तत्र एव निर्णयहेतुत्वं च याज्ञवल्क्यतात्पर्या
न् । मूलभूतन्यायविरोधेऽनयोर्वचनयोरेवमवश्यं संकोचनादिति वाचस्पतिः । पञ्चषष्ठोऽपि साक्षिष्वधिकगुणस्यैकस्याप्यन्य
थावादित्वे तद्विरुद्धार्थाभिधायिनां सर्वेषामन्येषामसाक्षित्वम् । अधिकगुणस्याप्येकस्य तत्तुल्यस्य विरुद्धाभिधानादसाक्षित्व
मिति सर्वेऽपि तेन साक्षिण इति न मन्वादिविरोध इति मदनरत्नकारः । वयन्तु गुणवत्सैव तन्मध्यस्थानां न पश्यामि एकेना
पि बहूनां प्रतिबन्धाच्चेत्यादिन्यायेन प्राधान्यात् गुणवतः साम्ये वादिनिर्दिष्टानामेकस्याप्यन्यथावादित्वे संख्याधिक्येऽपि गुणव
त्तरत्वाभावे सर्वेषामसाक्षित्वं द्वैधे बहूनामित्यत्रापि विनिगमकान्तराभावे बहुत्वमेव विनिगमकमतः स्वसंख्यानपेक्षमेव गुणवत्त

मध्यमात्वंयाह्यवचनत्वेहेतुमाहेतिब्रूमः । स्वयमुक्तेरसाक्षित्वमपिविवृतंकात्यायनेन । यःसाक्षित्वेनैवनिर्दिष्टोनाहूतोनैवदेशितः । ब्रूयान्मिथ्येतितथ्यंवादण्ड्यःसोपिनराधमइति । अयमत्रसाक्षीतिज्ञानवानान्तरोर्थिप्रत्यर्थिनोरन्यतरःसमृतोयस्येतिमृतान्तरस्यसाक्षित्वमपिसहेतुकंविवृतंनारदेनैव । योर्थःश्रावितव्यःस्यात्तस्मिन्नसतिचार्थिनि । कतद्दद्दनुसाक्षित्वमित्यसाक्षीमृतान्तरइति । येनार्थिमाप्रत्यर्थिनावायोर्थःस्वीयःश्रावयितव्यःस्याच्छ्रावणीयत्वेनाभिमतोभवेत्तस्मिन्नर्थिप्रत्यर्थिनोरन्यतरस्मिन्नसतिमृतेप्रोषितेवाऽभिमतार्थेवानिरूपितेसाक्षित्वंककस्मिन्नर्थेवदतुकस्यवाकृतेवदत्वित्यर्थः । सामान्यतोयश्रावयोःकश्चिद्व्यवहारसम्बन्धोस्तितत्वंसाक्ष्याभाव्यमित्येतावान्मात्रमुक्तंविशिष्यचव्यवहारविषयोनतस्मैश्रावितःश्रावयिताचनास्तिसपृष्टोपिविशिष्यविषयाज्ञानादसाक्षीतियावत् । इदमेवाभिप्रेत्योक्तंमुमूर्षुःश्रावितादूतइति । मुमूर्षुग्रहणमश्रावणप्रयोजकाभावपरम् । तथाचसएव । श्रावितोनातुरेणापियस्त्वर्थोधर्मसंहितः ॥ मृतेपितत्रसाक्षीस्याद्षट्सुचान्वाहितादिष्वित्याह । अत्रश्रोत्रियादयोनसाक्षिणःकार्यास्तेषांरागादिशून्यानांसत्यवादित्वातिशयेपितपःस्वाध्यायाग्निहोत्रादिव्यासङ्गेनश्रावितार्थविस्मरणसम्भवात्तत्पूज्यानाञ्चधर्माधिकरणप्रवेशाह्वानादयोनौचित्याचेत्यर्थः । अकृतास्तुतत्वंजानन्तोभवन्त्येवसाक्षिणः । अतएवोक्तमुभौतुश्रोत्रियौग्राह्याविद्यादि । अन्यथासर्वथासाक्षित्वनिषेधेतद्विरोधःस्यात् । तथाचनात्रहेतुःरसत्यवादित्वप्रयोजकोहेतुःस्तेमत्वादिनोदाहृतइत्यर्थः । वचनादित्यस्यापिसाक्षित्वकरणनिषेधकवचनादित्यर्थः । एकोलुब्धस्त्वसाक्षीस्याद्बह्व्यःशुच्योपिनस्त्रियः । स्त्रीबुद्धेरस्थिरत्वाच्चदोषैश्चान्येपियेवृताइतिमनुः । अलुब्धएकोपिपुमान्साक्षीभवतिबह्व्यःशुच्योलोभादिदोषरहितास्त्रियःसाक्षिण्योनभवतितत्रहेतुःस्त्रीबुद्धेरिति । एकोलुब्धस्त्वसाक्षीतिमेधातिथिनान्याभिमतत्वेनेमम्पाठमभिप्रेत्यान्योव्यकारप्रश्नेवेणालुब्धोप्येकोनसाक्षीकिम्पुनर्लुब्धइत्येवंव्याचक्षते । तयाद्वयोरभ्यनुज्ञानम्भवति । स्त्रियस्त्वलुब्धोबह्व्योपिनसाक्ष्याहाःकिमुताश्शुचयइतिभणितम् । तत्रान्ये

त्विषयत्वर सबीजमेकस्य प्रागेव निरस्तत्वात्स्त्रीसाक्ष्यपर्युदासायानुवादे तु यथोक्तपातेष्युपपन्ने तत्र चैकस्यालुब्धस्य पुंस्त्वेन प्र
तिप्रसवपूर्वकं स्त्रीणां सर्वथा निषेधपरत्वे सन्दर्भसामञ्जस्यमिति । अलुब्ध इत्यकारप्रश्लेषं विनैव पूर्वपाठ एव लुब्धत्वे देकोन सा
क्षी अलुब्धस्त्वेकोऽपि पुमान्साक्षीति जीमूतवाहनेनैवं व्याख्यातम् । तत्र लुब्धानां बहूनामप्यसाक्षित्वे एकपदत्वे यथ्थमिति व्यवहार
तत्वे टूवरमुक्तं तदप्युत्तरवाक्यशेषत्वादस्यानन्यगतिदृष्टव्यम् । शुचिर्मानिङ्गोप्रान्दसो गुणवचनादुकारान्ताद्देव वोतो गु
णवचनादिति तद्विधानात्तद्दिकाराद्भिन्न इतिवा समर्थनीयम् । अन्येऽपि स्त्रीव्यतिरिक्ता अपि रागद्वेषादिदोषायेवृता आक्र
न्ता चिन्ता सोऽपि न साक्षिणः । यद्यपि केचन स्त्रीअसाक्षितया पृथगप्युक्तास्तथापि सर्वेषां पृष्टाकोटेन बकुमशक्ततयाऽनुक्ततुल्य
त्वार्थमिदमुक्तम् । अत एव मेधातिथिः । सामान्यविशेषाभिधानं हि सर्वैर्यथाकारमन्यन्त इत्याह । मनुरेव । नार्थसम्बन्धि
नो नाप्ता न सहाया न वैरिणः । न दृष्टदोषाः कर्तव्या न व्याध्यार्ता न दूषिताः । न साक्षी नृपतिः कार्यो न कारुककुशीलवौ । न श्रो
त्रियो न लिङ्गस्थो न सङ्गेभ्यो विनिर्गतः । नाध्यधीनो न वक्तव्यो न दस्युर्न विकर्मकृत् । न वृद्धो न शिशुर्नैको नान्त्यो न विकलेन्द्रियः
। नार्तो न मत्तो नोन्मत्तो न क्षुत्तृष्णोपपीडितः । न श्रमार्तो न कामार्तो न क्रुद्धो नापि तस्कर इति । अत्र सर्वेषु विशेषणे रसत्यसंभा
वना विस्मरणादिकमसाक्ष्यनिमित्तमुपलक्ष्यते । अत एव वृद्धविकलेन्द्रियविकर्मकृत्तस्करादीनां गोवृषन्यायेन पुनरुपादानं
अत्र बहवः ग्राह्याः स्पष्टार्थाः । अन्ये मेधातिथ्यानुसारेण विव्रियन्ते । अर्थसम्बन्धिन उत्तमर्णाधमर्णौ आद्यः उत्तमर्णो ह्यधमर्णधन
नेन पराजीयमानस्तदानीमेव शेषाविष्टो धमर्णाद्दूर्णं प्राप्यादातुम्प्रयतत इति तच्चितानुवृत्तिरधमर्णस्य तदनुगुणाकौटसाक्ष्यहेतु
त्वेन संभाव्यते । उत्तमर्णो निर्धनेऽधमर्णे स्वसाक्षितया धनं प्राप्य स स्मैन दर्पयिष्यतीति बुद्ध्या तदनुगुणवादी सम्भाव्यते । न
यार्थः प्रयोजनं तत्सम्बन्धिनो वादिप्रतिवादिनोरन्यतरस्याद्येषां तु प्रयोजनं सिसाधयिषितं तत्रोपकारगन्धान्न साक्ष्याही
इत्यादि सर्वत्र कौटसाक्ष्यसम्भावनोन्नेया दृष्टदोषा अन्यत्र कृतकौटसाक्ष्याः । व्याध्यार्ता वचनविसंवादापादकव्याधिपीडा

मन्तः । दूषिता अभिशस्ताः । नृपतेरसाक्षित्वं कृताभिप्रायेणातो न प्राक्तननारदोक्तिविरोधः लिङ्गस्योपन्यासादिः । संगेभ्यो विनि
र्गतः परित्यक्तः पित्रादिगुरुजनसंसर्गात् वृद्धानुपसेवनादस्यासत्यसम्भवना । अध्यधीनो बन्धकीकृतः । तस्य तदाज्ञावशवर्ति
त्वात् । वक्तव्यो निन्दास्पदम् । विकर्मकृत् अधर्माभीरुः । वृद्धविकलेन्द्रिययोर्वार्द्धकस्वभावहेतुकेन्द्रियवैकल्येन भेदः ।
आर्त्तः शोकेन । नारदोऽपि । दासनैःकृतिकाश्राद्धवृद्धस्त्रीबालचाक्रिकाः । मत्तोन्मत्तप्रमत्तार्त्तकितवग्रामयाजकाः । महापथि
कसामुद्रवणिक्प्रव्रजितातुराः । व्यङ्गैकश्रोत्रियाचारहीनक्लीबकुशीलवाः । नास्तिकव्रात्यदाराग्नित्यागिनोऽयाज्ययाजकाः । ए
कस्थालीसहायारिचरज्ञातिसनाभयः । प्राग्दृष्टदोषशैलूषविषजीव्याहितुण्डिकाः । गरदाग्निदकीनाशशूद्रापुत्रोपपातिनाः ।
क्लान्तसाहसिकाश्रान्तनिर्धूतान्त्यावसायिनः । भिन्नवृत्तासमावृत्तजडतैलिकमूलिकाः । भूताविष्टनृपद्विष्टवर्षनक्षत्रसूचकाः
अघशंस्यात्मविक्रेतृहीनाङ्गभगवृत्तयः । कुनखिश्यावदन्मित्रध्रुक्शठशौण्डिकाः । ऐन्द्रजालिकलुब्धोग्रश्रेणीगणवि
रोधिनः । वधकश्चित्रकृत्भ्रंशः पतितः कूटकारकः । कुहकः प्रत्यवसितस्तस्करो राजपूरुषः । मनुष्यपशुमांसास्थिमधुक्षीराम्बु
सर्पिषाम् । विक्रेता ब्राह्मणश्चैव द्विजो वार्द्धुषिकस्तथा । च्युतः स्वधर्मात्कुलिकः सूचकोऽहीनसेवकः । पित्रा विवदमानश्च
भेदकृच्चेत्यसाक्षिणः । श्रेण्यादिषु तु वर्गेषु कश्चिच्चेद्द्वेष्यतामियात् । तस्य तेभ्यो न साक्ष्यं स्याद्द्वेष्टारः सर्व एव ते । नैःकृतिकः प
रापकारशीलः । चाक्रिकस्तैलिकः । प्रमत्तः सदाऽनवहितः महापथिको महापथगामी । सामुद्रवणिग्वहित्रवाही एकः श्रो
त्रियो द्वयोरनुमतेः । एकः श्रोत्रिय इति पृथग्वा प्राय श्रोत्रं च प्रागेवमत् । अपरार्के तु युग्मैकेति पठित्वा युग्मौ द्वाविति व्याख्या
तम् । एकस्थाली सहाय एकपाकभोजीति । सहाय्योऽन्यतरसाहाय्यकारी मिश्रचण्डेश्वरौ । मदनरत्नकारस्तु । ए
कस्थाली सहाय इति विशेषणद्वयम्पृथक्पृथगेकस्थाली स्थाल्यधिकरणकः पाको लक्ष्यते । स एको यस्येत्येकस्थालीति व्याच
ख्यौ । समासान्तविधेरनित्यत्वादेकस्थालीत्यत्र न ड्यूतश्चेति न कप् । अर्द्धपिप्पलीत्यादिवन्न ह्रस्व इति च समादधे । अरिच

रः भूतपूर्वः शत्रुः । भूतपूर्वं चरट् । कल्पतरौ त्वरिधर इति पठित्वा शस्त्रधर इति व्याख्यातम् । ज्ञातयः सगोत्राः स्वनाभयो मातुल-तत्सुतमातृष्वस्रीयादयः । शैलूषः स्त्रीणां नर्तयिता । कुशीलवस्तु रंगोपजीवी नट इति भेदः । वीषजीवी विषक्रयजीवीति मदनरत्ने । विषवैद्य इति जीवी रत्नाकरे । अहितुण्डिकः । सर्पक्रीडोपजीवी व्यालग्राही । कीनाशः कर्कशः क्षुद्रो वा । कृपण इतितु मदनरत्ने । उपपातितस्तु उपपातकीति कल्पतरुः । मदनरत्ने तूपपातक इति पठितम् । उपसमीपम्पातकं यस्येति विगृह्य पातकयुक्त इति व्याख्यातश्च । क्लान्तो निखिन्नः अश्रान्तोऽनवरतकर्मकारीति मदनरत्ने । अशान्त इति पठित्वाऽयोग्य-कर्मकारीति रत्नाकरे । निर्बन्धुतो बान्धवैस्त्यक्त इति मदनरत्ने । ग्रामराजकुलश्रेण्यादिभिर्निःसारित इति रत्नाकरे । लो-कभयशून्य इति भवदेवः । मूलं विप्रलंभस्तत्कारीति कल्पतरुः । मूलकर्म तु कार्म्मणमित्यमरकोशात्तत्कारीति तु युक्तम् । अ-पराङ्कीणातु पैपिक इति पठित्वा पैपिकपूपादिविक्रयीति व्याकृतम् । वर्षसूचको वृष्टिशकुनवेदी । नक्षत्रसूचको ज्यौतिषि-कः । अघशंसी परकीयपापप्रकाशकः । हीनाङ्गस्तु उचितपरिमाणान्न्यूनाङ्गः । व्यङ्गस्तु छिन्नाङ्गुल्यादिरिति भेदः । भग-वृत्तिर्भार्यादास्यादिसम्भोगमूल्योपजीवी शङ्कः वृषभनर्तनजीवीति मदनरत्नरत्नाकरयोः । कुहको दाम्भिकः । प्रव्रजितः प्र-व्राज्यादिच्युतः । कुलिको राज्ञा व्यवहारपरिच्छेदकतया नियुक्तः । अस्य च साक्षित्वकरणे निषेधो विधिस्त्वकृतसाक्ष्य इति क-ल्पतरुः । मदनरत्ने तु कुलं ब्राह्मणादिगणास्तदधिकारी कुलिक इति व्याख्यातम् । सूचको राज्ञा परदोषान्वेषणपूर्वकं तस्यैत-न्निवेदने नियुक्तः । भेदकृन्मित्रादिप्रीतिभङ्गकर्त्ता । श्रेण्यादिष्वित्यस्याय मर्थः । येषु श्रेण्यादिषु यस्यैकापि द्वेष्यतां प्रभुता-माप्नस्तदीयविवादे तच्छ्रेण्यादिनिविष्टाः सर्व एव न साक्षिणस्तत्र हेतुर्द्वेष्टारः सर्व एवेति । तच्छ्रेण्यान्तर्गतैकद्वेष्यानुबन्धक-तवैरनिर्य्यातनार्थमन्यथावादित्वसम्भवात् । अत एव नारदः । बालोऽज्ञानादसत्यात्स्त्रीपापाभ्यासाच्च कूटकृत् । विब्रूयाद्बा-न्धवस्नेहाद्वैरनिर्य्यातनादरिरिति । कात्यायनः । तद्वृत्तिजीविनो ये च तत्सेवाहितकारिणः । तद्बन्धुसुहृदो भृत्या आप्ताश्च

पुनसाक्षिणः। मातृष्वसुः सुताश्चैव पितृष्वस्टसुतास्तथा। मातुलस्य सुताश्चैव सोदर्य्यसुतमातुलाः॥ एते सनाभयः प्रोक्ताः साक्ष्यन्तेषु न योजयेत्। कुल्याः सम्बन्धिनश्चैव विवाह्यो भगिनीपतिः। पिता बन्धुः पितृव्यश्च श्वशुरो गुरवस्तथा॥ तथा वृहस्पतिः। मातुः पिता पितृव्यश्च भार्याया भ्रातृमातुलौ। भ्राता सखा च जामाता सर्ववादेष्वसाक्षिणः। परस्त्रीपानसक्ताश्च कितवाः सर्वदूषकाः। उन्मत्तार्त्ताः साहसिका नास्तिकाश्च न साक्षिण इति। अत्र मातृष्वस्रादिशब्दानां संबंधिशब्दत्वादर्थेनारभ्यतरस्य एतादृशसंबन्धिनो न साक्षिणः सम्बन्धिनि स्नेहादन्यत्र वैरसम्भवादिति ध्येयं॥ शंखलिखितौ। शुल्कगुल्माधिकृतौ दूतो वेष्टितशिराः स्त्रियरुकुलवासिनः परिव्राजकवाणप्रस्थतिर्यञ्चाः शंखा व्यालग्राहिण इति अत्राऽसाक्षिण इति प्रकृतं शुल्काधिकृतः शुल्कग्रहणस्थानाधिकारी। गुल्मः स्वस्थाननिवेशितः पदातिसमूहस्तदधिकृतः वेष्टितशिराः कृतवेषो मूर्द्ध्व्याध्यभिभूतो वा इतरे प्रसिद्धा व्याख्यातनयाश्च। अनेन प्रपञ्चेन लोभादिकमसाक्षित्वनिमित्तमेव व्यक्तीकृतम्। यथाह मनुः। लोभान्मोहाद्भयात्क्रोधान्मैत्र्यात्कामात्तथैव च। अज्ञानाद्बालभावाच्च साक्षी वितथमुच्यत इति॥ ● ॥ असाक्षित्वेनोक्तानां कचित्प्रतिप्रसवमाह नारदः॥ असाक्षिणो ये निर्दिष्टा दासनैष्कृतिकादयः। कार्यगौरवमासाद्य भवेयुस्तेऽपि साक्षिणः। स्त्रियाप्यसम्भवे कार्य्यं बालेन स्थविरेण वा। शिष्येण बन्धुना वापि दासेन भृतकेन वा। मनुरप्येवमेवद्वितीयं वचनम्पठितवान्। इदञ्चासत्यवादित्वनिश्चयाभावे साक्ष्यन्तरस्य तद्गुणविशिष्टस्यासम्भवे बोध्यम्। स्त्रीसंग्रहणादिषु योगीश्वरः। सर्वः साक्षी संग्रहणे चौर्यपारुष्यसाहसे। अत्र च मनुष्यमारणस्त्रैर्यपरदाराभिमर्शनम्। पारुष्यमुभयञ्चेति साहसं स्याच्चतुर्विधमिति वचनात्स्त्रीसंग्रहणादीनां सर्वपि साहसत्वे बलानवष्टम्भेन क्रियमाणानान्तेषामसाहसत्वात्संग्रहार्थं तत्तः पृथगुपादानं। कात्यायना। दासोऽन्धो बधिरः कुष्ठी स्त्रीबालः स्थविरादयः। एतेऽप्यनभिसम्बन्धाः साहसे साक्षिणो मताः। अनभिसम्बन्धा विवादगोचरीभूतार्थसम्बन्धिनः। अपक्षपातिन इति मदनरत्ने। मनुनारदौ। साहसेषु च सर्वेषु स्तेयसंग्रहणेषु च। वाग्दण्ड

योऽस्यापारुष्येनपरीक्ष्येतसाक्षिणः। मनुः। अनुभावीतियःकश्चित्कुर्यात्साक्ष्यंविवादिनाम्। अन्तर्वेश्मन्यरण्येवाशरीरस्यापिवात्यये। अनुभावीतदर्थानुभवशीलः। यत्तु। ऋणादिषुपरीक्ष्येतसाक्षिणःस्थिरकर्मसु। साहसात्ययिकेचापिपरीक्षाकुत्रचिन्स्मृतेति। परीक्षाभिधानन्तस्यस्पष्टासत्यवादित्वदोषविषयमतएवकुत्रचिदित्युक्तं। अस्मिंश्चप्रघट्टकेप्रकटदोषानभिधत्ते क्वचित्कविसम्वादादिदोषपुरस्कारेणसहसादिसाक्षितानकथाकरणीयेत्यत्रतात्पर्यं। अतएवविज्ञानयोगिनोक्तं। दोषाद्साक्षिणोभेदाद्साक्षिणःस्वयमुक्तिश्चात्रापिनसाक्षित्वोभवतिसत्याभावादितिहेतोरनपगमादिति। अपराकीपिसर्वानतुगुणवानेवेत्यर्थः। दोषवांस्त्वनाप्यपरिहरणीयएव। वक्तृदोषाणांवचनप्रामाण्यहेतुत्वादित्याह। तस्यापिसर्वदोषाभावेनतात्पर्यंप्रतिप्रसवानुपपत्तेः। यत्तुकेनचिदुक्तंसाक्षिगुणदोषप्रतिप्रसवायथाश्रुताएवग्राह्याअन्यथातत्रतत्रतत्तद्विशेषणोपादानमनर्थकमुपलक्षणंवाप्रसज्येतेति। तद्बालिश्यम्। न्यायमूलकत्वात्तेषान्तद्विरोधेनैवनेयत्वात्। अतएवन्यूनाधिकविशेषणोपादानमविरुद्धम्। अदृष्टार्थत्वेतद्विरोधेदुष्परिहरःस्यात्॥७॥ एवमन्यतरेणसाक्षिषूपन्यस्तेषुसत्सुतद्दोषेष्वपरस्तामुपन्यस्तेऽसदुद्भावनेदण्डइत्याह। बृहस्पतिः। साक्षिणोर्थीसमुद्दिष्टान्सत्सुदोषेषुदूषयेत्। अदुष्टान्दूषयन्वादीतत्समन्दण्डमर्हति। तत्समंविवादविषयसममितिवहवस्तदर्थोविषयविवादेष्वव्यापकमितितत्समंकूटसाक्षिदण्डसममितिव्याख्येयम्। साक्षिदूषणेऽन्यतरेणोद्भाविते प्रत्यक्षेषुवाक्यादिदूषणेषुतेनैवनिर्णयः। अयोग्येषुलोकप्रसिध्यादिनानसाक्ष्यन्तरेणानवस्थापत्तेः। तथ व्यासः। समासदांप्रसिद्धंयल्लोकसिद्धमथापिवा। साक्षिणांदूषणंयाह्यमसाध्यन्दोषवर्जनात्॥ अन्यैस्तुसाक्षिभिःसाध्येदूषणेपूर्वसाक्षिणाम्। अनवस्थाभवेद्दोषस्तेषामप्यन्यसम्भवादिति। असाध्यंलोकादिसिद्धत्वात्साधनाईयतइतिहेतुगर्भमिति। दोषवर्जनादनवस्थादोषाभावादित्यर्थः। यद्यपिलोकसभ्यप्रसिद्धिरपिसाक्षिप्रसिद्धिरेवपर्यवस्यति। तथापितत्रसाक्षित्वोद्भावनानपेक्षत्वान्नानवस्था। अतएवातिगूढवादिप्रतिवादिमात्रविदितदूषणंसाधनमन्यत

रेणालौकिकप्रमाणेनक्रियमाणंनदुष्यतीत्यभिप्रायः । नचसाक्षिदूषणविभावनंव्यवहारान्तरत्वादयुक्तमितिवाच्यम् । प्रकृ
तोपयोगित्वेनार्थान्तरत्वानापत्तेः । कात्यायनःस्फुटमेतदेवाह । प्रत्यर्थिनार्थिनावापिसाक्षिदूषणसाधने । प्रस्तुतार्थोपयो
गित्वाद्व्यवहारान्तरंनचेति । अविद्यमानदोषोद्भावनेऽर्थिप्रत्यर्थिनोर्विकल्पिकौहानिदण्डौ अन्यतरज्ञानाराज्ञासभ्यैरेववाज्ञा
तास्साक्षिदोषास्तदातैरेवसाक्षित्वेनोपादेयाइति । सएवाह । नानर्थेनप्रमाणान्तुदोषेणैवतुदूषयेत् । मिथ्याभियोगेदण्ड्यः
स्यात्साध्यार्थाच्चापिहीयते । प्रमाणस्यहियेदोषावक्तव्यास्तेविवादिना । गूढास्तुप्रकटाःसभ्यैःकालेशास्त्रप्रदर्शनादिति । येगू
ढाःप्रत्यर्थिनानज्ञातास्तेकालेसाक्षिवादात्पूर्वकालेकार्याइतिशेषः । शास्त्रप्रदर्शनात् । दुष्टानांशास्त्रेसाक्षित्वेनानुपादेयत्वदर्श
नात् । कलंनिरस्येतिचकलंनिरासस्यावश्यकत्वादितितात्पर्य्यार्थः । साक्षिभिरुक्तेशास्त्रेदोषोद्भावनन्तेषांनकार्यमित्याह । बृ
हस्पतिः । लेख्यदोषास्तुयेकेचित्साक्षिणाञ्चैवयेस्मृताः । वादकालेतुवक्तव्याःपश्चाद्युक्तान्नदूषयेत् ॥ नदूषयेद्दोषत्वेननोपाद
द्यात्सभ्योराजेत्यर्थात् । पश्चाद्युक्तौदण्डमप्याह । कात्यायनः । उक्तेर्थेसाक्षिणोयस्तुदूषयेत्प्रागदूषितान् । नचतत्कारणं
ब्रूयात्प्राप्नुयात्पूर्वसाहसम् ॥ तच्चदण्डनिरूपणप्रस्तावेविवेचयिष्यामः । अन्यतरोद्भावितादोषाःसभ्यास्तैरेवयःसाध्युद्भाव
यितानचाहविष्णुः । लेख्यंवासाक्षिणोवापिविवादेयस्यदूषिताः । तस्यकार्यंनसिध्येतयावत्तन्नविशोधयेत् । पत्रेभिर्लिखितान्स
र्वान्दोषान्प्रतीतेसाक्षिणांउत्तरम्परिहारंवाच्याः । वाचनीयाइतिपूर्ववचनार्थः । यस्यसाक्षिणोलेख्यंवायदुद्भावितम्परेणदू
षितंसयावत्तन्नविशोधयेत्तद्दोषरहितन्नकुर्यात्तावत्तत्रप्रमाणाभासत्वसाक्षीवनपातेनप्रमाणेनतस्यतत्कार्य्यंनसिद्ध्येदितिद्वितो
यवचनार्थः । इदञ्चसभाक्षोभादिनासाक्षिणांस्वदोषपरिहाराक्षमतायान्द्रष्टव्यम् । तदितिलेख्यञ्चसाक्षिणश्चेतिद्वन्द्वेनपुंस
कमनपुंसकेनैकवचस्यान्यतरस्यामितिनपुंसकैकशेषैकवद्भावौ । अन्यतरःसाक्षिदोषमुद्भाव्ययदिनम्भावयितुन्नशक्नोतितदा
सदण्ड्यः । साधितेतुदोषेत्याज्या । अर्थ्यपिप्रमाणान्तरमनुपन्यस्यन्पराजीयतइत्येतदाहव्यासः । असाधयन्दमन्दाप्योदूष

णांसाक्षिणांस्फुटम्। भाविते साक्षिणो वर्ज्याः साक्षिधर्मनिराकृताः ॥ जितः सविनयं दाप्यः शास्त्रदृष्टेन कर्मणा। यदि वादी निरा
कांक्षः साक्षिसत्त्वे व्यवस्थित इति। विनयं दण्डं सवादी। मदनरत्ने तु सविनयं विनयः शिक्षा तत्सहितं यथा तथा दाप्यो विवादविष
यीभूतधनमिति शेष इति व्याख्यातं तन्त्वजितइत्यनेनैव साधितधनदानस्यार्थसिद्धत्वेन निरर्थकाध्याहारदोषापत्तेः क्लिष्टत्वाच्चो
पेक्ष्यम्। यस्तु विवादविषयीभूतार्थानभिज्ञान्विपरीताभिज्ञान्वा भयलोभादिप्रदर्शनेन स्वानुकूलं वादयति। तस्य दण्डमाह
। कात्यायनः। येन कार्यस्य लोभेन निर्दिष्टाः कूटसाक्षिणः। गृहीत्वा तस्य सर्वस्वं कुर्य्यान्निर्विषयं ततइति। सर्वस्वमिति गुरु
लघ्वपराधानुसारेण दण्डतारतम्योपलक्षणम्। निर्विषयं विवादविषयीभूतार्थशून्यं। ततः कूटसाक्ष्यकरणात्। साक्षी दो
षानुद्भावनेपि ससभ्येन सभापतिना चैते परीक्ष्योपादेयाः। तथा च कात्यायनः। उपस्थितान्परीक्ष्येत साक्षिणो नृपतिः स्वयम्
। वृहस्पतिरपि। उपस्थिताः परीक्ष्याः स्युः स्वरवर्णेङ्गितादिभिरिति। स्वरवर्णेङ्गितानि मनुयोगोऽस्वरो क्तानि हीननिरूप
णाविवृतानि। नारदोप्याह। यस्त्वात्मदोषदुष्टत्वादस्वस्थ इव लक्ष्यते। स्थानात्स्थानान्तरं गच्छेदेकैकश्चानुधावति।
काशत्यकस्माच्च भृशमभीक्ष्णं निश्वसत्यपि। विलिखत्यवनीम्पद्भ्याम्बाहुं वाससा धूनयेत्। भिद्यते मुखवर्णोस्य ललाटं स्विद्य
ते तथा। शोषमागच्छतश्चौष्ठावूर्द्ध्वं तिर्य्यक् निरीक्ष्यते। त्वरमाण इवाबद्धमपृष्टो बहुभाषते। कूटसाक्षी स विज्ञेयस्तम्पापं वि
नयेद्भृशम्। अबद्धमसम्बद्धम्। विनयेच्छीक्षयेद्यथा कौटसाक्ष्याद्विभेतीत्यर्थः। न तु दण्डयेदित्यर्थः। प्राकृतिवैदिकवि
कारविवेकस्य दुःखशकत्वात्। सम्भावनामात्रेण च दण्डनस्यान्याय्यत्वादित्युक्तम्। मदनरत्ने त्वाविद्धमिति पठित्वा कुलमि
ति व्याख्यातम्। शंखलिखितावपि मन्त्रिभिः शास्त्रसामर्थ्याद् दुष्टलक्षणं याह्यन्तिर्यक्प्रेक्ष्यते समन्तादेवावलोकयति। अकस्मान्मू
त्रपुरीषं विसृजति देशाद्देशं गच्छति पाणिना पाणिम्पीडयति नखान्निकृन्तति मुखमस्य विवर्णतामेति प्रस्विद्यति चास्य ललाट
म्पश्चुर्न चवाचम्प्रतिपूजयत्यकस्माद्दन्तानि प्रधंसति पुनःपुनरन्यमपवदति बहिर्निरीक्षते शस्त्वं परामृशति शिरः प्रकम्पयो

ष्वोनिर्भुज्जतिहस्तक्षणोपरि लेढि प्रतिविस्मितः कर्म्मस्वमहत्स्वपि भुवैासंहरतिस्थूलं ध्यायति पूर्वोनरविरुद्धंव्याहरति एवमादिदुष्टलक्षणं कुद्धस्य चखामिनोन्यत्र प्रकृतिशीलादिति । अकस्मादितिनूष्णीमिति चयथायोगमनेकत्र सम्बंधनीयम् । अन्यत्र प्रकृतिशीलादिति । प्रकृत्यास्वभाववशीलन्तिर्यक्प्रेक्षणादिधर्म्मायस्यस तयोक्तस्ततोन्यत्रैतानिदुष्टकुद्धलक्षणानि एतेष्वाधांतरवैलक्षण्यस्यदुर्ज्ञेयत्वादित्यवधानेनपरीक्ष्यवस्तुतत्त्वानुसरणङ्करणीयमितिसूचितम् । एवगुणवत्तयादोषाभाववत्तयाचपरीक्षितान्साक्षिणोविवादास्पदीभूतमर्थं पृच्छेदित्याह । कात्यायनः । देवब्राह्मणसान्निध्येसाक्ष्यम्पृच्छेदृतेद्विजान् । उदङ्मुखान्प्राङ्मुखान्वापूर्वाह्णेवाशुचिःशुचीन् ॥ सभांतःसाक्षिणःप्राप्तानर्थिप्रत्यर्थिसन्निधैा । प्राड्विवाकोनियुञ्जीत विधिनानेनसान्त्वयन् । यद्द्वयोरयोर्वेत्थकार्य्येस्मिंश्चेष्टितंमिथः । तद्ब्रूतसर्वंसत्येनयुष्माकंह्यत्रसाक्षिता । अर्थिप्रत्यर्थिसन्निधिवद्भवाश्वादिगोचरविषादेषु केषुचित्तत्सान्निध्यमपेक्षितव्यमित्यप्याह । सएव । अर्थिप्रत्यर्थिसान्निध्येसाध्यार्थस्यचसन्निधैा । प्रत्यक्षंवादयेत्साक्ष्यंनपरोक्षेकथञ्चन । अर्थस्योपरिकर्त्तव्यन्तयोरपिविनाक्वचित् । चतुष्पादेषुधर्म्मोयंद्विपादस्थावरेषुच । नैास्यंगणिमंमानार्हमभावेपिहिषादयेत् । क्रियाकारकेषुसर्वेषुसाक्षित्वंनत्वतोन्यथा । तयोर्वादिनोर्द्विनापीतिसम्बन्धमात्रविवक्षयाषष्ठीअपिशब्दात्कैमुतिकन्यायेनतदुभयसन्निधानेननात्ययैं । किन्तुसाध्यार्थसान्निध्यावश्यकतायाम् । यद्वोभयासन्निधिप्रत्यर्थ्यसान्निध्यानुमात्यर्थः । तेनकथञ्चित्प्रत्यर्थिसंनिधानेपिसाक्षिप्रश्नेनदोषः । क्वचिदित्यस्यैवविवरणञ्चतुष्पादेष्वित्यादि । नैास्यन्तोलनार्हंसुवर्णादिः । गणिमंगणनार्हंवराटकादिमेयंमानार्हंगोधूमादि । अभावेपिसाध्यार्थसान्निध्यभावेपिक्रियाकारकव्यवहारास्तेषुवधरूपविवादपदेसाक्षिणःशिवलिङ्गप्रतिमादिसन्निधानेप्रष्टव्याइत्यथाह । सएव । वधेचप्राणिनांसाक्ष्यंवादयेच्छवसन्निधैा । तदभावेतुचिह्नस्यनान्यथैवप्रवादयेत् । चिह्नस्यवधचिह्नस्याभियोज्यसम्बंधिनोऽभावेतत्साक्ष्यंवादयेत् । अन्यथातत्सद्भावेनैववादयेत्साक्ष्यंवधचिह्नेनैवनिर्णयसम्भवादित्युत्तरार्थानुवादः । विधेयस्तुपूर्वा

र्थः । सतुष्ट एवञ्उपस्थापिताः साक्षिणोऽविलंबेन प्रष्टव्या इत्यप्युक्तमनेनैव । नकालहरणं कार्य्यं राज्ञा साक्षिप्रभाषणे ।
महान्दोषो भवेत्कालाद्धर्मव्यावृत्तिलक्षणः ॥ ते च साक्षिणः शपथैः पूर्वकम्प्रष्टव्या इत्याह नारदः । आहूय साक्षिणः पृच्छे
न्नियम्य शपथैर्भृशम् । समस्तान्विदिताचारान्विज्ञातार्थान्पृथक्पृथगिति । न च साक्ष्यं क्वचिद्विषयेमिलितैर्वक्तव्यं किं चापृथ्ये
कमित्याह वसिष्ठः । समवेतैस्तु यद्दृष्टं वक्तव्यन्तु तथैव तत् । विभिन्नैरेव यत्कार्य्यं वक्तव्यन्तत्पृथक्पृथक् ॥ भिन्नकालेतु यत्का
र्य्यं विज्ञातं यत्र साक्षिभिः । एकैकं वादयेत्तत्र विधिरेषः प्रकीर्त्तितः । यत्कार्ये दृष्टमनुषङ्गः । यत्तु गौतमेनोक्तम् । नासमवे
ताः पृष्टाः प्रब्रूयुरिति तदपि वसिष्ठोक्तसमवेतसाक्ष्यविषयम् । हरदत्तस्तु नासमवेताः पृष्टाः प्रब्रूयुरिति पाठं धृत्वा समवेता
अपृष्टा अपि न ब्रूयुरिति व्याचख्यौ पूर्वपाठस्तु मिताक्षरापाठधृतेः सम्यगिति । धर्मापवृद्धितैरधर्मागर्हावचनैस्तेऽन्तमाषणा
न्निवर्त्तयेदित्याह । नारदः । पौराणैर्धर्मवचनैः सत्यमाहात्म्यकीर्त्तनैः । अन्तस्यापवादैश्च भृशमुत्त्रासयेदपि । शपथे
च विशेषोदर्शितो मनुना । सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः । गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैरिति ॥ अन्य
था ब्रुवतस्तेन सत्यं नंक्ष्यतीति ब्राह्मणस्य शपथोदेयः । क्षत्रियेवाहनायुधानि तेविफलतामेष्यन्तीति । वैश्येगोबीजकाञ्चनानि त
वापचयमुपयास्यन्तीति । शूद्रेन्यथावादिमस्तवसर्वाणि पातकानि भविष्यन्तीत्यर्थः । ब्राह्मणविशेषस्यापवादं वसिष्ठ आह ।
गोरक्षकान्वाणिज्यकांस्तथा कारुकुशीलवान् । प्रेष्यान्वार्द्धुषिकांश्चैव विप्रान्शूद्रवदाचरेत् । इति विप्रग्रहणं क्षत्रियवै
श्ययोरपि तद्वृत्तिजीविनामुपाधेस्तुल्यत्वात् । विशेषान्तरमनुक्तं च साक्षिणां श्रावणं विधाय श्रावणीयमाह याज्ञवल्क्यः । साक्षि
णः श्रावयेद्वादीप्रतिवादीसमीपगान् । ये पातककृतां लोका महापातकिनां तथा । अग्निदानाञ्च ये लोका ये च स्त्रीबालघा
तिनाम् ॥ स तान्सर्वानवाप्नोति यः साक्ष्यमनृतं वदेत् । सुकृतं यत्त्वया किञ्चिज्जन्मान्तरशतैः कृतम् । तत्सर्वं तस्य जानी
हि यं पराजयसे मृषा । शूद्रं सर्वैस्तु पातकैरिति मानवसंवादात्पातकश्रावणं शूद्रविषयकमिति मिताक्षराकारपरार्कौ । श

पथदानस्य वशाद्विधिभेदान्मानवे च शपथदानस्य च तन्नियमादस्य सर्वे विषयतान्तुयुक्तामुन्नयामः । मनुरपि । नवप्रश्नि
ह्विवाकोनुयुञ्जीतेत्यादिसार्धश्लोकः कात्यायनीयः पूर्वे लिखित एव । सत्यं साक्ष्ये ब्रुवन्साक्षीलोकानाप्नोतिपुष्कलान् । इह
चानुत्तमांकीर्तिं वागेषाब्रह्मपूजिता ॥ साक्ष्येऽनृतंवदन्साक्षीपाशैर्बध्येतवारुणैः । विवशः शतमाजातीस्तस्मात्साक्ष्ये वदेदृ
तम् । सत्येनपूयतेसाक्षीधर्मः सत्येनवर्धते । तस्मात्सत्यंहिवक्तव्यं सर्ववर्णेषु साक्षिभिः । आत्मैवह्यात्मनः साक्षीगतिरात्मात
थात्मनः । मावमंस्थाः स्वमात्मानंनृणांसाक्षिणमुत्तमम् । मन्यन्तेवैपापकृतोनकश्चित्पश्यतीतिनः । तांस्तुदेवाः प्रपश्य
न्तिस्वश्चैवान्तरपूरुषः । द्यौर्भूमिरापोहृदयश्चन्द्रार्काग्नियमानिलाः । रात्रिः संध्ये च धर्मश्च वृत्तज्ञाः सर्वदेहिनाम् । अजाती
रजननानिजन्मानोतियावत् । बृहस्पतिरपि । आजन्मनश्चामरणात्सुकृतंयदुपार्जितम् । तत्सर्वंनाशमायातिअनृ
तस्यनुशंसनात् । वसिष्ठोपि । अथचेदनृतंब्रूयात्सर्वतोमिथ्यलक्षणाम् ॥ मृतोनरकमायातितिर्य्यग्गच्छत्यसंशयम् । सूक
रोदशवर्षाणिदशवर्षाणिगर्दभः ॥ श्वाचैवदशवर्षाणिभासोवानिजविंशतिम् । कृमिकीटपतङ्गेषुचत्वारिंशत्तथैवच ।
मृगस्तुदशवर्षाणिजायतेमानवस्ततः । मानुष्यन्तुयदाप्नोतिमूकोन्धस्तुभवेद्ध्रुवः । पामरोजायतेपश्चात्सपरित्यक्तबान्ध
वः । पंग्वन्धबधिरोमूकः कुष्ठीनग्नः पिपासितः । बुभुक्षितश्शत्रुगृहेभिक्षतेभार्यया सह । ज्ञात्वैतानन्नृतेदोषानक्षान्त्वासत्ये च
सद्गुणान् । श्रेयस्करमिहान्यत्रसत्यंसाक्ष्येवदेदतः । बौधायनः । त्रीनेवचपितृन्हन्तित्रीनेवप्रपितामहान् । सप्तजा
तानजातांश्चसाक्षीसाक्ष्यमृषाब्रुवन् । मनुनारदौ । यावतोबान्धवान्यस्मिन्हन्तिसाक्ष्येऽनृतंवदन् । तावतः संख्ययातस्मिन्
शृणुसौम्यानुपूर्वशः । पञ्चपश्वनृतेहन्तिदशहन्तिगवानृते । शतमश्वानृतेहन्तिसहस्रंपुरुषानृते । हन्तिजातानजा
तांश्चहिरण्यार्थेऽनृतंवदन् । सर्वंभूम्यनृतेहन्तिमास्मभूम्यनृतंवदेः । अप्सुभूमिवदित्याहुः स्त्रीणांभोगेयमैथुने । अब्जे
षुचैवरत्नेषुसर्वेष्वश्ममयेषुच । पशुवत्क्षौद्रघृतयोर्यानेषुचतथाश्वयात् । गोवद्रजतवस्त्रेषुधान्येब्रह्मणिचैवहि । ए

न्तान्दोषानवेक्ष्य त्वं सर्वाननृतभाषणे । यथाश्रुतं यथादृष्टं सत्यमेवाञ्जसा वदेत् । अब्जेषु रत्नेषु मुक्ताफलादिषु । ब्रह्मवि
वेदे । अत्र हरदत्तेन क्षुद्रपश्वनृते दश हन्ति गोश्वपुरुषभूमिषु दशगुणोत्तरामिति गौतमवचनव्याख्याने मनुवचः । पञ्च
पश्वनृते हन्तीत्याद्युपन्यस्य पञ्चसंख्याहननदोषोत्पन्नक्षुद्रपशुविषय इति गौतमवचोविरोधम्परिहृत्य यद्विषयमनृतसा
क्ष्यं दत्तं तत्प्राणिनां दशादिसंख्यकानां हननेयो दोषस्तमाप्नोति । भूम्यनृते तु यदीया भूमिस्तज्जातीयलक्षहननदोषः । सर्व
प्राणिहननदोषो वेति व्याख्यातं तत्तु यावतो वान्धवान्निति मानवोपक्रमानालोचननिबंधनमित्यपेक्ष्यम् । तस्मात्साक्षिसम्बन्धि
पित्रादिगतसंख्यापरतयैव व्याख्यानं युक्तम् । गौतमीयमपि मानवसम्वादेनैव व्याख्येयमेकमूलकल्पनालाघवाय । त्रीने
व च पितॄन् हन्तीत्यादिबौधायनादिवचनसंवादोप्येवं ॥ ● ॥ भूयस्तु जानन्नपि दौरात्म्यात्साक्षित्वमेवनाङ्गीकुरुते तम्प्रत्याह ।
योगीश्वरः । न ददाति हि यः साक्ष्यं जानन्नपि नराधमः । स कूटसाक्षिणाम्पापैस्तुल्यो दण्डेन चैव हि । पृष्टाः साक्षिणो येन विधि
ना ब्रूयुस्तमाह । बृहस्पतिः । विहायोपानहावुष्णीषं दक्षिणम्पाणिमुद्धरन् । हिरण्यगोशकृद्दर्भान्समादाय ऋतम्वदेत् । सा
क्ष्यभिहितस्य वचनस्य परीक्षाविधानमप्याह । बृहस्पतिः । देशकालवयोजातिसंज्ञाद्रव्यप्रमाणतः । अन्यूनश्चेन्निगदितं सि
द्धं साध्यं विनिर्दिशेत् । तत्र नारदः । निर्दिष्टेष्वर्थजातेषु साक्षी चेत्साक्ष्यमागतः । न ब्रूयादक्षरसमं तन्निगदितम्भवेत् । दे
शकालवयोद्रव्यप्रमाणाकृतिजातिषु । यत्र विप्रतिपत्तिः स्यात्साक्ष्यं तदपि कुत्सितं । ऊनमप्यधिकं वापि प्रब्रूयुर्यत्र साक्षिणः । तद
प्यनुक्तं विज्ञेयमेष साक्ष्यविधिः स्मृत इति । न चाधिकाभिधानमसंभवि वादिनः प्रतिवादिनो वाश्रुतेऽदृष्टे वानुभवमूलकसंस्का
राभावेनास्मृततत्प्रतिपादनासम्भवादिति वाच्यम् । करणापाठवादिनाश्रुतिदृष्ट्योरुभयोरपि सम्भवात् । अत एव भ्रान्तिमू
लत्वेनाप्रामाण्यात् । तदुक्तमप्यनुक्तमित्युक्तं । न च तथाप्यूनाभिधाने कुतोक्तिः । साक्षिवचनात्तावतः सिद्धावेकदेशविभावितन्या
येनान्यांशस्यापि सिद्धेर्ज्ञेयफलकतयान्यूनतोक्तेरदुष्टत्वादिति वाच्यम् । प्रतिज्ञातसकलसाध्यसाधकतयोद्दिष्टेषु न्यूनमभि

हितवच्चून तन्न्यायावसर इति प्रागावेदितत्वात्। साक्ष्यमग्निश्रावणविधिना श्रावितश्चेन्नाभिधत्ते। तदा किङ्कर्तव्यमित्यत आह। प्रोक्षिते याज्ञवल्क्य आह। अब्रुवन् हि नरः साक्ष्यमृणं सदशबन्धकम्। राज्ञा सर्वं प्रदाप्यः स्यात् षट्चत्वारिंशकेऽहनि। सर्वं सवृद्धिकं सदशबन्धकं राजदेयं दशमांससहितं। एतद्दशमांशदानमृणादानप्रस्तावे वक्ष्यते। षट्चत्वारिंशकेऽहनि इत्यभिधानान्नतो वाग्भदाप्यः। तदपि व्याध्याद्युपद्रवरहिते। यदाह मनुः। त्रिपक्षादब्रुवन् साक्ष्यमृणादिषु नरोऽगदः। तदृणं प्राप्नुयात् सर्वं दशबन्धञ्च सर्वत इति राजदैवोपद्रवविरहस्याप्युपलक्षणम्। साक्षिवचनाज्जयपराजयव्यवस्थां स्पष्टमाह। योगीश्वरः। यस्योचुः साक्षिणः सत्यां प्रतिज्ञां स जयी भवेत्। अन्यथावादिनो यस्य ध्रुवं तस्य पराजय इति। उत्तरार्धापवादमुखेन कूटसाक्षिणमाह स एव। उक्तेऽपि साक्षिभिः साक्ष्ये यद्यन्ये गुणवत्तमाः द्विगुणा वान्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिण इति॥ अन्यथा अन्यतरप्रतिज्ञातार्थविपरीतम्। यद्यप्यर्थिप्रत्यर्थिसभ्यसभापतिभिः परीक्षितैः साक्षिगुणलक्षितसाक्षिवचनानन्तरं प्रमाणान्तरान्वेषणमेवानर्हमनवस्थाप्रसङ्गात्। निर्णिक्ते व्यवहारे त्वित्यादि प्रागुक्तनारदवचनविरोधाच्च। तथापि वादिप्रतिवाद्यन्यतरस्य स्वोक्तार्थे तस्मिन् साक्षितयानद्विसंवादिवचनसाक्षिषु यदि दोषाध्यवसायस्तदा प्रमाणान्तरान्वेषणं वारयितुमशक्यमत एव तदा दिव्येनान्यतरेण स्वसाध्ये साधिते साक्षिणः कूटत्वेन दण्ड्या इति वक्ष्यते। अर्थविसंवादादिनिबन्धनदोषस्य स्पष्टदोषादर्शनेऽपि यथा तज्ज्ञानितज्ज्ञानाप्रमाण्यमेव दोषकल्पकं तथात्रापि। यथाहुः। यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः स एवासमीचीनः प्रत्यय इति। अत एव साक्षिपरीक्षातिरेकेण तद्वाक्यपरीक्षोपदेशोऽपि घटते। साक्षिभिर्भाषितं वाक्यं सह सभ्यैः परीक्षयेदिति। कात्यायनोऽप्याह। यदा शुद्धा क्रिया न्यायात् तदा तद्वाक्यशोधनम्। शुद्धाच्च वाक्याद्यः शुद्धः स शुद्धोऽर्थ इति स्थितिरिति क्रिया साक्षिरूपा न्यायार्थिसम्बन्धिनो नाप्ता इत्याद्युक्तं साक्षिदोषराहित्यलक्षणाद्द्वाहिवापुत्रिणा इत्याद्युक्तसाक्षिगुणसाहित्यलक्षणाच्च न्यायाद्यदा शुद्धा परीक्षिता भवति तदा तद्वाक्यस्य साक्षिवाक्यस्य शोधनं कार्यमिति शेषः। वाक्यशुद्धिश्चार्थः

विसम्वादएव। सत्येनशुद्ध्यतेवाक्यमितिस्मरणात्। एवंक्रियावाक्याभ्यामुभाभ्यांशुद्धाभ्यांसकाशाद्युःशुद्धःसाधुरवगतोर्थः
सशुद्धस्तात्त्विकइतिस्थितिर्मध्यादाइतिकात्यायनवचनार्थः। कारणादेश्चबाधकप्रत्ययप्रत्यार्थैतथाभूतएवार्थइतितात्पर्य्य
म्। नारदवचनंतुजयावधारणोत्तरप्रमाणान्तरपरिग्रहइत्येतत्परंनिर्णिक्तपदोपादानात्। ततःप्रागुक्तप्रमाणान्तरा
न्वेषणेनक्षतिरितितन्नाद्विरोधः। एवंचसतिदत्तनिगदेभ्यःसाक्षिभ्योन्येगुणवत्तमाद्विगुणावापूर्वनिर्दिष्टास्तदभावेपूर्वानिर्दि
ष्टाअपिसाक्षिणएववादिनावादनीयातद्दिव्यमप्यवलंबनीयंसंभवेसाक्षिणांप्राज्ञोदैवकींवर्जयेत्क्रियामितिवचनात्यदातु त
दसम्भवस्तदादिव्यमप्यवलम्बनीयंसंभवइतिवचनात्। यदिदिव्येपिवादिनोपरितोषस्तदाप्रमाणान्तरस्यावाचनिकत्वा
त्सभ्यैःसमापनीयोव्यवहारः। यदितुवाद्युद्भावितसाक्षिभिस्तदनुगुणेभिहितेप्रत्यर्थिनएवस्वप्रत्ययविसंवादेनतेषुदोषा
ध्यवसायस्तदाप्रत्यर्थिनःक्रियावसराभावाद्दैविकराजिकयोर्महाव्यसनयोःसप्ताहाभ्यंतरोपनिपातेनतेपरीक्षणीयाः। यथाह
मनुः। यस्यदृश्येतसप्ताहादुक्तवाक्यस्यसाक्षिणः॥ रोगोग्निर्ज्ञातिमरणमृणन्दाप्योदमञ्चसइति। दमंकौटसाक्ष्ययुक्त
न्दण्डम्। असतिसप्ताहाभ्यन्तरव्यसनोपनिपातेप्रत्यर्थिनातावतासन्तोष्टव्यन्दिव्यंवासत्यध्यवसायमवलम्बनीयमित्यर्थसि
द्धम्। यत्तु। केचिदुक्तेपीत्यादिवचनमर्थिनिर्दिष्टसाक्षिभिस्तदनुगुणेभिहितेपिप्रत्यर्थिनिर्दिष्टयद्यन्येनततोगुणोत्तमाद्विगु
णान्वान्यथावाद्युक्तेतदापूर्ववादिनःसाक्षिणःकूटाइतिव्याख्यानन्तदयुक्तम्। किमिदंमिथ्योत्तरविषयंकारणाद्युत्तरविषय
म्वानाद्युः। नत्रप्रत्यर्थिनःक्रियोपन्यासानवसरात्। अभाववादित्वात्। अभावस्यचभावज्ञानसापेक्षत्वाद्भावाभावयोर्भाव
स्यैवसाध्यतौचित्यात्। अतएवमिथ्योक्तौपूर्ववादिक्रियांनिर्दिशेदित्युक्तम्। नचैकस्मिन्विवादेतुक्रियास्याद्वादिनोर्द्वयो
रितिवचनादेकस्मिन्व्यवहारेऽर्थिप्रत्यर्थिनोर्द्वयोःक्रियोपन्यासानुपपत्तिश्च। नद्वितीयःततोर्थीलेखयेदित्यनेनपौनरु
क्त्यात्। अर्थ्यतइत्यर्थःसाध्यंसोस्यास्तीत्यर्थीसाध्यवान्प्रतिज्ञातार्थसाधनंसाध्यतयोपन्यस्तस्यार्थस्यसाद्ध्यप्रमाणांलेखयेदि

तिप्राड्न्यायकारणोत्तरयोस्तयोरेव साध्यत्वात्। प्रत्यर्थियोर्वार्थी सम्पन्न इति स एव क्रियां निर्दिशेदिति । स्पष्टीकृतश्चाय मर्थः स्मृत्यन्तरे। प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम् । मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत्। इति उक्तेपी त्यादि सङ्गतेश्च। प्राङ्न्यायादौ हि तस्यैव साक्षिण इत्यन्यद् इत्यसङ्गतमेव भवेत्। अन्ये तु यत्र द्वावपि भावप्रतिवादिनौ नानावपिहि विधौ केचित्पूर्वोत्तरकालभेदेन प्रतिजानाते एको वदति । इदं क्षेत्रं मया पूर्वं प्रतिग्रहादिना लब्ध्वा कियत्कालम्भुक्त्वा देशान्त रंसकुटुम्बेन गतं। अन्यस्तु वदति सत्यमनेन पूर्वम्प्रतिग्रहादिना लब्धम्परन्तु पश्चादेतस्य राज्ञा क्रीत्वा मह्यन्दत्तमित्यादि। केचित्तु पूर्वोत्तरकालभेदम्भिन्नैव वदन्तः। तत्र प्रथमौ साक्षिषूभयतः सत्सु साक्षिणः पूर्वपक्षेऽधरीभूते भवत्युत्तरवादिन इत्यस्य याज्ञवल्क्यवचनस्य विषयौ। पूर्वकालं ममेदमिति यो वदति स पूर्ववादी तस्य साक्षि णः प्रमाणतया ङ्गीकार्य्याः। तदीयस्वत्वानपगमेऽन्यस्य प्रतिग्रहादिस्वत्वोपायासम्भवादिति तन्नोपपत्तिः। तस्य क्रयादिना स्व त्वापगमेऽन्येनोपन्यस्ते तत्पक्षोऽधरीभूत इत्युत्तरकालं ममेदमिति यो वदति स उत्तरवादी । तस्य साक्षिणोङ्गीकार्य्याः पूर्ववादी स्वत्वस्यापवादत्वादिति मिताक्षराकारेणोक्तं द्यात्। ननु पूर्वं योनिवेदयति स पूर्ववादी प्राङ्न्यायकारणोत्तराभ्यां तत्पक्षे धरीभू ते उत्तरवादिनः प्रतिवादिन इति व्याख्येयम्। तत्ने त्यर्थो लेखयेदित्यनेनैवास्यार्थस्योक्तत्वात् पौनरुक्त्यापत्तेः। न चैकस्मिन्निर्यादि निषेधाद्वादिद्वयस्य क्रियोपन्यासानुपपत्तेश्च। यत्त्वत्र परार्के णोक्तं सम्भवत्येव क्वचित्प्रत्यवस्कन्दनप्राङ्न्यायोत्तरवत्यपि न्यायो वादिद्वयस्य क्रियोपन्यासावसरो यत्र प्रतिवादी सत्यम्त्वदीयम्भूरिन्धारितवानहं किन्तु प्रत्यर्पितवान् किन्तूत्तरयति। तत्र वादी चेत्प्रत्युत्तरयति सत्यन्त्वयार्पितन्तत्तु प्रयोगान्तरे त्वास्मिन्प्रयोग इति तदा तत्साधनाय द्वयोरपि साक्ष्युपन्यासस्य सम्भवः। पर स्परोपमर्दकत्वेन युगपद्व्यवहारासम्भवस्यैकविवादे द्वयोः क्रियानिषेधबीजस्याभावात्। एवम्प्रतिवादिना प्राङ्न्यायोत्तरे द त्ते यदि वादी तदैव वदति न्यायान्तरे त्वयाहम्पराजितो नास्मिन्न्याय इति। तदापि पूर्वोक्तरीत्या द्वयोः साक्षी सम्भवः। तत्रोच

साक्षिसत्त्वे पूर्ववादिनः साक्षिणः प्रथमं स्वीकार्य्याः । प्राग्वादिनो निरुत्तरीभावेन पूर्वपक्षे धरीभूते उत्तरवादिनः प्रत्यवस्क
न्दनप्राङ्न्यायसाधकसाक्षिण इति न विरोध इति तत्त्वापि वक्तव्यम् । तादृश विषयेपि प्रत्यवस्कन्दनप्राङ्न्याययोरसाध्यतया प्रा
ग्वादिन एवार्थित्व इति त्रिजाते तस्य निरुत्तरतायानुप्रत्यर्थिन एवेपि द्वेधापि तत्तोर्थी लेखयेदित्यनेनगतार्थतास्यनापैति ॥ मि
ताक्षराव्याख्यनेनु द्वयोरपि भाववादितयार्थित्वसाम्येततोर्थी लेखयेदित्येतद्वचनाविषयत्वात्कस्यात्रक्रियेत्यपेक्षायामेतद्वचना
रम्भो घटते । तथा च मिताक्षरयामुक्तमेतस्य सर्वव्यवहारविलक्षणत्वाद्भेदेनोपन्यास इति । नारदेन तु स्पष्टमेवायमर्थ उक्तः
। मिथ्याक्रियापूर्ववादे कारणे प्रतिवादिनि । प्राङ्न्यायविधिसिद्धौ तु जयपत्रं क्रिया भवेदिति । इत्युक्ताद्वयोर्विवदतोर्युद्धे द्व
योः सत्सु च साक्षिषु पूर्वपक्षो भवेद्यस्य भवेयुस्तस्य साक्षिण इत्यभिधानात् । द्वितीयोप्यपीत्यस्य वचनस्य विषयो । पूर्वोत्तरवादि
नोः समगुणेषु समसंख्येषु च साक्षिषु सत्सु पूर्ववादिनः साक्षिणोभ्युपेयाः । यदा तूत्तरवादिनो गुणवत्तमा द्विगुणा वा तद्विपरी
तमभिदधति तदा तस्य एव पूर्ववादिनस्तु साक्षिणः कूटा विज्ञेया इति च तदर्थः । एवं वा नाभावस्य साध्यतापत्तिर्द्वयोरपि भा
ववादित्वात् । चतुर्विधोत्तरविलक्षणत्वाच्च नात्र मिथ्याक्रियापूर्ववाद इत्याद्युक्ता क्रियाव्यवस्था यथा वा तत्र एव तथात्रैकस्य क्रिया
द्वयप्रतिषेधोन प्रवर्त्ततेतथा ममापि द्वयोः क्रियाप्रतिषेध इति वदन्मिताक्षराप्यायातमनोहरम् । उक्तोपीत्यादिवचनादेतावतोर्थ
स्य च शब्दतः प्रकरणाद्वार्थाद्वाऽनवगमात् । साक्षिषूभयतः सत्स्वित्यस्य योगीश्वरवचनस्य द्वयोर्विवदतोरित्यादिनारदवचनस्य
श्चं पूर्वापरापादितरीत्या पूर्वापरकालालिङ्गितभावावादिविषयत्वे तदनालिङ्गितविषयस्यास्य तदपवादत्वासंभवाच्च । न चान्यम
ते पराकादिमतवत्तयोरपि वादिविषयत्वमेवास्त्विति वाच्यम् । तस्योक्तदूषणत्वात् । ईदृश्यापि विषये वादिप्रतिवाद्यन्यतरस्यो
क्तौ मिथ्यात्वकारणान्यतरपर्यवसानावश्यंभावे चतुर्विधोत्तरविलक्षणत्वासम्भवाच्च । द्वयोरपि भाववादितयार्थित्वसाम्यमेव केव
लं व्यवहारान्तरवैलक्षण्यमस्य विधाचतुष्कभिन्नविधोत्तरसम्भवाच्च । ननु कात्यायनेनाप्युपन्यस्तसाक्षिभिस्तद्गुणैरभिहि

तेप्रत्यर्थीयदितत्तोगुणवत्तमान्वक्तृधान्यथावादयतितदावादिनःसाक्षिणःकूटाइतिस्फुटमुक्तम्। यथाह। यत्रवैभावितं
कार्य्यंसाक्षिभिर्वादिनाभवेत्। प्रतिवादीयदातत्रवादयेत्कार्य्यमन्यथा। वक्तृभिस्तत्कुलीनैर्वाकूटाःस्युःपूर्वसाक्षिणइति।
तत्कार्यमितिसम्बन्धः। वक्तृभिरितिपूर्वसाक्ष्यपेक्षयावक्तृत्वंकुलीनैरित्यनेनतदपेक्षयागुणवत्तरत्वंविवक्षितम्। अपरार्कम
तनरत्नकराभ्यामेतत्संवादादेवयोगीश्वरवचोप्युक्तेपीत्यादिकमेतदर्थकतयैवव्याख्यातम्। नचकथमेकविवादेद्वयोःक्रिये
तिवाच्यम्। यतस्तुल्यवदुभयोर्मास्तुक्रियाप्राप्तिर्युगपद्व्यवहारासम्भवात्। यदाशास्त्रतःप्राप्तक्रियैवक्रियोपन्यासेकृतेपरे
णातद्दूषणायैवक्रियान्तरमुपन्यस्यतेतदाकोदोषः। अनवस्थाप्रसङ्गेषुसंख्यागुणसाम्येनतुद्वैधम्येतेनजयावधारणात्प्रा
ग्यैकस्यक्रियाद्वयमेवंद्वयोरपिक्रियाद्वयेनविरोधइत्यपरार्केणसमाहितमितिउच्यते। अस्तुवचनात्कात्यायनीयादेवमपि
। योगीश्वरवचस्तुततोर्थीलिखयेदितितद्वचस्येवसर्वस्यार्थस्यसहसम्भवादगतार्थविज्ञानयोगिव्याख्ययैवसङ्गच्छते। साध
नपदेनसाधनक्षममेवोच्यते। प्रतिवादिनातस्मिन्नाभासीकृतेसाधनत्वमेवतस्याप्यनर्मितितेनैवतदर्थलाभात्। अतएवाह।
सएवतत्सिद्धौसिद्धिमाप्नोतिविपरीतमतोन्यथेति। कूटसाक्षिणोदण्डार्हाःप्रायश्चित्तार्हाश्च। तथाचयाज्ञवल्क्यः। पृथक्
पृथक्दण्डनीयाःकूटकृत्साक्षिणस्तथा। विवादाद्द्विगुणंदण्डम्विवास्योब्राह्मणःस्मृतः। नारदः। अवीचीनरकेकल्पंवसेयुः
कूटसाक्षिणः। बृहस्पतिः। कूटसाक्षीकूटसाक्षीब्रह्महाचसमाःस्मृताः। मनुस्तु। उक्त्वाचैवानृतेसाक्ष्येकृत्वाचस्त्रीसुहृद्
धनमित्यादिनाकूटसाक्षिणांब्रह्महत्याप्रायश्चित्तमाह। तत्रैववविवेचयिष्यामः। दण्डस्तत्रविविच्यते। विवादात्तत्परानयनि
मित्तदण्डात्। ननुविवादास्पदीभूता। अवधनव्यवहारेष्वव्याप्तेः। कूटःकृद्योलोभभयादिप्रदर्शनेनसाक्षिणःकूटान्
रोतिनतुस्तुवर्णादिकूटकृदत्रगृह्यते। अप्रकृतत्वात्विवास्याराष्ट्रात्। एतच्चलोभादिकारणाविशेषाज्ञानेऽनभ्यासेववो
ध्यम्। लोभादौज्ञातेऽभ्यासेतुमनूक्तम्। लोभात्सहस्रन्दण्ड्यःस्यात्मोहात्पूर्वंतुसाहसम्। भयाद्वैमध्यमौदण्डौमैत्र्यात्पूर्वंच

तुर्गुणम्। कामाद्दशगुणम्पूर्वं क्रोधात्तु त्रिगुणम्परम्। अज्ञानाद्द्वे शते पूर्णे बालिश्याच्छतमेवत्विति। नच मोहो विपर्ययज्ञानं अज्ञानमस्फुटज्ञानम्। तात्कालिकोऽभ्रम इति कल्पतरुः। बालिश्यं ज्ञानानुत्पाद इति तेषां भेदः। स्फुटमन्यत्। यो बालिश्य तिवन्धेपुरत्नाकरादिषु बालभाववालिश्यपदार्थत्वेनैवतोऽन्नोयप्राप्नोमद इति व्याख्यातम्। तदशुद्धार्थत्वात्सन्दर्भविरोधाच्चो पेक्ष्यम्। सहस्रादिसंख्येयास्वतान्त्रिकाः पणव्यवहारविषये तथैव परिभाषणादिति मिताक्षराकारः। आहापस्तम्बः। नेयं व्यवस्था युक्ता लोभादिनिमित्तकमेव हि कौटसाक्ष्यमुपन्यस्तं मनुना न च सम्भवत्यन्यत्र निमित्तम्। यथाह सः। लोभान्मोहा द्भयान्मैत्र्यात्कामात्क्रोधात्तथैव च। अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते। अज्ञानं किञ्चिज्ज्ञानम्। बालभावोऽपरिज्ञात नम्। तस्माद्योगीश्वरोक्तो दण्डः स्वल्पाऽपराधेऽनभ्यासे च ज्ञेयः। गुर्वपराधेऽभ्यासे च मनूक्त इत्यन्याव्यवस्थेति। तत्रे दमवाच्यम्। लोभादौ सहस्रादिदण्डस्य मानवस्य विवादपराजयहेतुकद्विगुणदण्डाद्याज्ञवल्कीयाद्वाधिकनियमो येन गुर्व पराधविषयताऽभ्यासविषयता वा कल्प्येत क्वचिद्वैपरीत्यस्यापि सम्भवात्। नच कौटसाक्ष्ये लोभाद्यतिरिक्तकारणासम्भवान्म नुनापि तावतामेव परिगणनान्न कारणभेदेकृताव्यवस्था सुस्थेति वाच्यम्। वस्तुतो हेत्वन्तरासम्भवे तु हेतुविशेषपरिज्ञानत दज्ञानयोः सम्भवान्नकृतव्यवस्थायामदोषात्। अत एव मिताक्षरायां लोभादिविशेषज्ञानाज्ञाने एव व्यवस्थापकत्वेनोक्ते। ननु लोभादितद्भिन्नहेतुसत्त्वासत्त्वे यातु मिताक्षराकृताभ्यासानभ्यासकृता व्यवस्थोक्ता सा कथंचित्तथापि सम्भवतीत्याशयेन। ज्ञा नाज्ञानकृतैव तु तात्त्विकी अत एव मदनरत्नकृतापि सैवादृता। तथा मनुरेव। कौटसाक्ष्यं तु कुर्वाणांस्त्रीन्वर्णान्धार्मिको नृ पः। प्रवासयेद्दण्डयित्वा ब्राह्मणन्तु विवासयेत्॥ ब्राह्मणभिन्नांस्त्रीन्क्षत्रियादीन्प्रागुक्तदण्डेन दमयित्वा प्रवासयेन्मारयेत् । प्रपूर्वस्य वसतेरर्थे शास्त्रे मारणे प्रयोगात्। प्रवासनमप्यपराधानुरोधेनोष्ठच्छेदजिह्वाच्छेदप्राणवियोजनरूपमेदितवम् । ब्राह्मणं विवासयेत् विवासनमपि राष्ट्रान्निष्कासनम्। विगतवासा विवासास्तं करोतीति व्युत्पत्त्या नग्नीकरणं। वस्त्राद्यच्छिन्नत्वासेग

हृन्तद्वियुक्तं करोतीति गुल्ययागृहभंगकरणं वा कौटसाक्ष्यविषयानुसारेण गुणागुणद्रव्यानुबन्धानुसारेण चार्थदण्डसहितं यथायथं विज्ञेयम्। दण्डयित्वेत्यंशस्याप्यनुषङ्गात्। एतच्चाभ्यासविषयम्। कुर्वाणानिति वर्तमाननिर्देशात्। न च वर्तमाननिर्देशादतीतादिव्यावृत्तिमात्रं व्यवसीयते न त्वभ्यास इति वाच्यम्। तद्व्यावृत्तेरनुपयोगात्प्रत्युत कौटसाक्ष्यमभ्यासेन कृत्वोपरतस्य पश्चादेतद्दण्डाभावप्रसङ्गात्तस्मात्कौटसाक्ष्यमभ्यजत इत्यर्थकतयाभ्यासावगतिः। न च दण्डयित्वेत्यस्यानुषङ्गे प्रमाणाभावानुग्रहत्वमाचविवासनमेव कूटसाक्षित्वाभ्यासकारिणो ब्राह्मणस्य दण्डो न त्वर्थदण्ड इति वाच्यम्। न जातु ब्राह्मणं हन्यात्सर्वपापेष्वपि स्थितम्। न शारीरो दण्डो ब्राह्मणस्येत्यादिवचनैः। शारीरदण्डनिषेधादर्थदण्डस्याप्यभावे स्वल्पविषयेपि कौटसाक्ष्याभ्यासे निर्वासननग्नीकरणगृहभङ्गादिप्रसङ्गात्। दण्डाभावस्य चाप्रसक्तेः तत्र तत्रार्थदण्डस्य ब्राह्मणविषयस्यापि वक्ष्यमाणत्वाच्च। गुणहस्यप्रधानविषयप्रवासनक्रियामन्वाद्यभिप्रायकत्वेनाप्यविरुद्धः। याज्ञवल्क्यः। यः साक्ष्यं श्रावितोन्येभ्यो निह्नुते तत्तमोवृताः। स दाप्योष्टगुणं दण्डं ब्राह्मणन्तु विवासयेत्। यः साक्ष्यमङ्गीकृत्य अन्यैः साक्षिभिः सह साक्ष्यं श्रावितः सन्निगदसमये तमोगुणेनावृतो रागद्वेषाद्याक्रान्तचित्तस्तत्साक्ष्यमन्येभ्यो निह्नुते नाहमत्र साक्ष्यं स्वीकरोतीति प्रकाशयति। यथातेनतदनुरोधात्तत्स्वीकुर्वते कूटं ता वा कुर्वन्ति स विवादपराजयनिमित्तकदण्डापेक्षयाष्टगुणं दण्डन्दाप्यो पराधमहत्वात्। अन्येभ्य इति श्रीमतः भगवतः पाणिनेः सूत्रेणाकेनद्व्याहश्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमान इत्यनेन सम्प्रदानसंज्ञायाश्चतुर्थी तेन पूर्वोक्तार्थलाभः। ब्राह्मणन्तु तथा कुर्वाणं विवासयेत्। विवासनञ्च व्याख्यातरीत्या देशनिर्वासननग्नीकरणगृहभंगान्यतररूपमनुबन्धाद्यपेक्षया व्यस्तसमस्तविषयाज्ञेयम्। यत्तु मिताक्षराकृताष्टगुणदण्डदानासमर्थमिति व्याख्यातन्तत्प्रधानक्रियानिरूपितमष्टैलक्षण्यप्रतिपादकनुग्रहविरोधादुपेक्ष्यम्। न चैवमल्पविषयेपि विवासनमदण्डता वा प्रसज्येतेति वाच्यम्। वचनोपात्तविषयस्यैव दण्डस्य युक्तत्वात्। अत एवाह नारदः। श्रावयित्वा ततोन्येभ्यः साक्षित्वं यो विनिह्नुते। स विनेयो भृश

तरंकूटसाक्ष्याधिकोहिसइति । तथाचापरार्कोऽपि । ब्राह्मणस्त्वेदेवंविधस्तंविवासयेन्नतुदण्डयेदित्येवंव्याचख्यौ । क्षत्रियादी
नांतुदण्डदानासामर्थ्येस्वजात्युचितकर्म्मकरणनिगडवंधनकारागृहनिरोधनादिनावहुद्रव्यसमीकरणानुरूपंबोध्यम् । सर्वेषा
मपिनिह्नवकारित्वेसमानदोषत्वात्सर्वेऽपिप्रत्येकमष्टगुणान्दण्ड्याः । प्रागन्यथेक्त्वापुनरन्यथोक्तौकात्यायनआह । उक्तान्य
थाब्रुवाणाश्चदण्ड्याःस्युर्वाक्छलान्विताः । अनुबन्धादितारतम्येनात्रदण्डतारतम्यकल्पनम् । अन्यतरेणोपन्यस्ताःसाक्षि
णोन्येनयदिरहसिसंवाद्यन्तेऽन्यद्वारेणभेद्यन्तेवातदाप्रकृतार्थहानिस्तस्येत्याहनारदः । नपरेणसमुद्दिष्टमुपेयात्सा
क्षिणांरहः । भेदयेच्चैवनान्येनहीयेतैवंसमाचरन्निति ॥०॥ साक्षिणामवचनानृतवचनेप्रतिषिद्धेक्वचित्तत्प्रतिप्रसवमाह ।
याज्ञवल्क्यः । वर्णिनान्तुवधोयत्रतत्रसाक्ष्यनृतंवदेदिति । साक्षिणासत्येउक्तेयत्रवर्णवतांब्राह्मणादीनांराजदण्डरूपोवध
आपद्यतेतत्रवधप्रयोजकताख्यमहादोषपरिहारायसाक्ष्यनृतंवदेत् । सत्यन्नवदेदित्यर्थः । तथाचावचनानृतवचनयोर्द्व
योरप्यभ्यनुज्ञालभ्यते । ऋणाभियोगादिस्थलेसाक्षिसत्यवचनेनयद्यभियुक्तस्यवधःप्रसज्यतेऽभियोक्तुश्चराज्ञाभियोगकारि
त्वात्तत्प्रसक्तिस्तत्रानृतवचनाभ्यनुज्ञानत्वाभियोगादौचसत्यासत्यवचनेयत्रान्यतरवधप्रसक्तिरपरिहार्य्यातत्रतूष्णीम्भावो
ऽभ्यनुज्ञायते । यदितुराजाकथञ्चिदप्यकथनंनानुमन्यतेतदासाक्षिणासम्पादनीयेत्यर्थसिद्धम् । तदसम्भवेसत्यमेवाभिधे
यंवर्णिवधप्रयोजकत्वदोषापरिहारेऽनृतवचनदोषस्वीकारस्यानुचितत्वात्प्रायश्चित्तद्वयप्रसक्तेः । वर्णिवधप्रायश्चित्तपरं
यथाशास्त्रमादरणीयमितिविज्ञानयोगिनः । मनुरपि । शूद्रविट्क्षत्रविप्राणांयत्रर्तोक्तौभवेद्वधः । तत्रवक्तव्यमनृतंतद्धिस
त्याद्विशिष्यतइति । इदमपियोगीश्वरवचनवद्विशिष्टाभावपरतयाव्याख्येयमवचनानृतवचनाभ्यनुज्ञालाभायसत्याद्वि
शिष्यतइत्यस्यायमर्थः । ब्राह्मणादिवधप्रयोजकतानिबन्धनाधिकदोषपरिहारायावचनानृतवचनप्रयुक्ताल्पदोषस्वीकार
उचितएवेतिप्रशंसार्थम् । यद्यपिनजातुब्राह्मणंहन्यात्सर्वपापेष्वपिस्थितम् । राष्ट्रादेनंबहिःकुर्यात्समग्रधनमक्षतम् ।

न ब्राह्मणवधाद्भूयानधर्मो विद्यते क्वचित् । तस्मादस्य वधं राजा मनसापि न चिन्तयेत् । इत्यादिमन्वादिवाक्यैर्ब्राह्मणवधद
ण्डनिषेधाद्द्विप्रग्रहणमनर्हं तथापि तस्य वधस्थानीयदण्डप्रसक्तेस्तत्परिहारायैवावचनान्तवचनाभ्यनुज्ञा । तथा च मनुः ।
मौण्ड्यं प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते । इतरेषां तु वर्णानां दण्डः प्राणान्तिको भवेदिति । स्मृत्यन्तरेऽपि । ब्राह्मण
स्य वधो मौण्ड्यं पुरान्निर्वासनं तथा । ललाटे चाङ्ककरणं प्रयाणं गर्दभेन चेति । न च वधशब्देनार्थद्वयपरिग्रहे वैरूप्यम् ।
निमित्तांशप्रापितनित्यसंस्कारविधिवैषम्याप्रसक्तेः । यद्वा गोरक्षकान्वाणिजकांस्तथा कारुकुशीलवान् । प्रेष्यान्वार्धुषि
कांश्चैव विप्रान्शूद्रवदाचरेदिति मानवात्तेषां शूद्रवद्वधाभ्यनुज्ञाप्रतीतेस्तत्परं विप्रग्रहणं । न च वधपदमुभयत्र मुख्यार्थ
कमेव । अयं तु परार्कीयसमाधिरनुपादेयः तस्य मानवस्य प्रकरणाच्छपथपरत्वेन दण्डविषयत्वाभावात् । सर्वपापे
ष्वपि स्थितम् । तस्मादस्य वधं राजा मनसापि न चिन्तयेदित्यादिश्रवणाद्विप्रवधमात्रस्यैव परिहरणीयत्वप्रतीतेश्च । अथवा
यच्चोक्तं धाद्यावेशवधे नातिकम्य निषेधं विप्रस्यापि राज्ञा च्छेदादिना वा वधदण्डः कर्तव्य इति संभावनात्तथैवेदमस्तु यथा क
थञ्चित्प्रसङ्गानुपजीवकत्वादस्य राज्ञोऽस्तु परं दोषः । पापीयस्त्वं तु श्रुत्यादेर्वधप्रसक्तावपि नोभयाभ्यनुज्ञया हि गौतमः । ना
न्तवचने दोषो जीवतस्तेन तदधीनं न तु पापीयसो जीवनमिति । न चैवं मनुवचनान्तवचनयोरभ्यनुज्ञानाभ्युपगमे यत्र व
सर्वथा नास्तीति सत्यमन्त्यम्प्रायश्चित्तस्मरणात् । तथा च याज्ञवल्क्यः । तत्पावनाय निर्वाप्यश्चरुः सारस्वतो द्विजैरिति । मनुर
पि । वाग्देवत्यैश्चरुभिर्यजेरंस्ते सरस्वतीम् । अनृतस्यैनसस्तस्य कुर्वाणा निष्कृतिं पराम् । कूष्माण्डैर्वापि जुहुयाद्घृत
मग्नौ यथाविधि । उदित्यृचा वा वारुण्या तृचेनाब्दैवतेन वेति । ते इति प्रक्रमाज्जुहुयादिति बहुवचनव्यत्ययः । उदुत्तम
मिति पाठे उदुत्तमं वरुण पाशमिति ऋक् । तदित्यृचेति पाठे तत्त्वायामि ब्रह्मणेति वारुणी ज्ञेया । न चाभ्यनुज्ञावचःसार्थकत्वाय प्रत्य
वायाभावकल्पनमावश्यकमिति प्रायश्चित्तविधानं नैमित्तिकं श्राद्धमावस्यादिवत्तु स्वजीवानरक्षादिनिमित्तकद्वारा दशायां चात्रिवृद्धे

ति वाच्यम्। तत्पावनाय एनस्समस्य कुर्वीणानिष्कृतिम्परामित्यस्य वैयर्थ्यापत्तेः। नचैवम्प्रतिप्रसववैयर्थ्यापत्तेः। यतोऽनृतवचनप्रतिषेधो द्विविधः पुरुषमात्रसाधारणः साक्ष्यप्रयुक्तश्च तत्र प्रकरणात्साक्ष्यप्रयुक्तप्रतिषेधनिबन्धनप्रत्यवायस्य प्रतिप्रसवाद्भाषेन तु साधारणनिषेधनिबन्धनप्रत्यवायस्यापीति प्रायश्चित्तविधिबलात्कल्प्यते। यद्यपि भूयसः साक्ष्यनृतप्रभवप्रत्यवायस्यापगमेऽल्पस्यानृतमात्रप्रभवस्य तस्याभावोऽप्यविनाभावादानुषङ्गिकोऽवश्यम्भावी। ब्रह्मवधसुरापानादिप्रभवप्रत्यवायनाशकद्वादशाब्दादिना गोवधादिप्रभवतन्नाशवत् तथाप्यत्राभ्यनुज्ञाया प्रायश्चित्तविरहोऽनुभयोरपि सार्थक्याय भूयोनिवृत्तेरप्यानुषङ्गिकोऽप्यविनाभूतोऽपि स्वल्पोऽपि न निवर्त्तत इति गम्यते। अत्र च चरुरिति योगीश्वरवचन एकवचनाद्वैतैर्व्याचमानवे चरुभिरिति बहुवचनं कर्तृबहुत्वेऽप्याप्तबहुत्वानुवादकम्। द्विजग्रहणान्नशूद्रस्यैतत्प्रायश्चित्तङ्किन्त्वन्यत्। तथाच विष्णुः। तत्पावनाय कूष्माण्डीभिर्द्विजोऽग्निं जुहुयात्। शूद्रश्चैकाह्निकं गोदशकस्य ग्रासं दद्यादिति। एकाह्निकमेकाहभक्षणपर्याप्तम्। वयन्तु तत्पावनाय अन्तरस्यैनसस्त्येन्यादियोगीश्वरमन्वादिवचनेषु तच्छब्दोपादानात्साक्ष्यनृतपातकमेव गृह्यते तन्निरसनायैवेदं प्रायश्चित्तम्। न च तस्याभ्यनुज्ञावचनेनाभावावगमात्कथमेतदिति वाच्यम्। वर्णिवधदोषापेक्षया साक्षिवितथवचनदोषस्याल्पत्वसद्भावेऽपि तत्र विद्यादिति शिष्यत इति वाक्यशेषपर्यालोचनेन तत्तात्पर्यात्। अत एवावचनदोषपरिहारोऽप्यनेन प्रायश्चित्तेन सामान्यतः साक्षिभिन्नस्यावचनदोषाभावात्। न चाब्रुवन्विब्रुवन्वापीति वचनमवचने सामान्यतो दोषप्रतिपादकमिति वाच्यम्। तस्य प्रकरणात्सम्भावनाप्रवेष्टव्येति वाक्यशेषाच्च सभ्यपरत्वात्। अत एव साक्षिणां पृथग्वचने दोषवचनं सफलम्। न च साक्षिणामवचनानृतवचनयोर्दोषाधिक्यादिदमल्पप्रायश्चित्तमनुचितमिति वाच्यम्। अभ्यनुज्ञाविधेरस्मिन्विषयेऽल्पदोषपरत्वस्योक्तत्वात्। एतेन भूयोदोषनिवृत्त्यावल्पदोषनिवृत्तिरविनाभावादन्यत्र न तु विधिद्वयसाफल्यायमनर्थकल्पनया। अत एव वर्णिवधप्रसक्तौ साक्षिणोऽप्यनृतं वचनावचनयोर्वधप्रयोजकतादोषापेक्षयाल्पो

दोषस्तत्र चेदप्रायश्चित्तत्वेन च ततोऽल्पस्य मान्यस्य वचनप्रतिषेधातिक्रमनिबन्धनो दोषः स तु तत्र समुपैतीति तात्पर्यमिति बृहस्पतिसाक्षिनिरूपणम् ॥ ० ॥ अथ लेख्यं निरूप्यते। तत्र बृहस्पतिः। साक्षिणामेव निर्दिष्टः संख्यालक्षणनिर्णयः। लिखितस्याधुना वच्मि विधानमनुपूर्वशः ॥ षाण्मासिकेऽपि समये भ्रान्तिः संजायते नृणाम्। धात्राक्षराणि सृष्टानि पत्रारूढान्यतः पुरा ॥ राजलेख्यं स्थानकृतं स्वहस्तलिखितं तथा। लेख्यं तु त्रिविधं प्रोक्तं भिन्नं तद्बहुधा पुनः ॥ भागदानक्रियाधानसंविद्दासऋणादिभिः सप्तधा लौकिकं लेख्यं त्रिविधं राजशासनम् ॥ मरीचिरपि। स्थावरे विक्रयाधाने विभागे दान एव च ॥ लिखितेनाप्नुयात्सिद्धिमविसंवादमेव च। भागोऽत्राधानमाधीकरणम्। संवित्समयः। आदिशब्देन विशुद्ध्यादिग्रहणम्। भागपत्रादीनां लक्षणमाह बृहस्पतिः। भ्रातरः संविभक्ता ये स्वरुच्या तु परस्परम्। विभागपत्रं कुर्वन्ति भागलेख्यं तदुच्यते ॥ भूमिं दत्वा तु यत्पत्रं कुर्याच्चन्द्रार्ककालिकम्। अनाच्छेद्यमनाहार्यं दानलेख्यं तु तद्विदुः ॥ गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम्। पत्रं कारयते यत्तु क्रयलेख्यं तदुच्यते। जङ्गमं स्थावरं बन्धं दत्वा लेख्यं करोति यः। गोप्यभोग्यक्रियायुक्तमाधिलेख्यं तदुच्यते ॥ ग्रामो देशश्च यत्कुर्यात्सत्यलेख्यं परस्परम्। राजाविरोधिधर्मार्थे संवित्पत्रं वदन्ति तत् ॥ वस्त्रान्नहीनः कान्तारे लिखितं कुरुते तु यः। कर्माणि ते करिष्यामि दासपत्रं तदुच्यते ॥ धनं वृद्ध्या गृहीत्वा तु स्वयं कुर्याच्च कारयेत्। उद्धारपत्रं तत्प्रोक्तमृणलेख्यं मनीषिभिरिति। विशुद्धिपत्रमुक्तं कात्यायनेन। अभिशापे समुत्तीर्णे प्रायश्चित्ते कृते बुधैः। विशुद्धिपत्रकं ज्ञेयं तेभ्यः साक्षिसमन्वितम्। सन्धिपत्रमप्याह। स एव। उत्तमेषु समस्तेषु अभिशापे समागते। वृत्तानुवादलेख्यं यत्तज्ज्ञेयं सन्धिपत्रकम्। अन्याधिपत्रमाह। प्रजापतिः। धनी धनेन तेनैव परमाधिं नयेद्यदि। कृत्वा तदाधिलिखितं पूर्वं वास्य समर्पयेत् ॥ पूर्वमाधिपत्रम्। सीमापत्रमप्याह। कात्यायनः। सीमाविवादे निर्णीते सीमापत्रं विधीयते इति। ऋणशोधने कृते ऋणपत्रनाशादौ सति प्राप्तिपत्रमुत्तमर्णेनाधमर्णाय देयमित्याह याज्ञवल्क्यः। दत्वर्णं पाटयेल्लेख्यं शुद्ध्यै वान्यत्तु कारयेत्। अत्र लौकिकं सप्तविधलेख्यं लक्ष

मान्यकृतभेदेनद्विविधन्नारदेनोक्तम्। लेख्यन्तुद्विविधम्प्रोक्तंस्वहस्तान्यकृतन्तथा। स्वकृतेसाक्ष्यनियमोऽन्यकृतेतन्नियमइष्य
तेऽपरार्धेनसएव। असाक्षिमत्साक्षिमच्चसिद्धिर्देशस्थितेस्तयोरिति। असाक्षिमदपीत्यर्थः। तथाचयाज्ञवल्क्यः। विनापि
साक्षिभिर्लेख्यंस्वहस्तलिखितञ्चयत्। तत्प्रमाणंस्मृतंसर्वम्बलोपधिकृतादृते। इत्यपिशब्दः प्रागुक्तबलोपधिकृतत्वपर्युदासः
सर्वलेख्यविषयोनस्वकृतमात्रविषयः। तथाचमनुः। बलाद्दत्तंबलाद्भुक्तंबलाद्यच्चापिलेखितम्। सर्वान्बलकृतानर्थानकृतान
न्मनुरब्रवीत्॥ नारदोपि। मत्ताभियुक्तस्त्रीबालबलात्कारकृतञ्चयत्। तदप्रमाणंलिखितम्भयोपधिकृतन्तथेति। अन्यक
र्तेविशेषान्तरमाह। योगीश्वरः। यःकश्चिदर्थोनिष्णातःस्वरुच्यातुपरस्परम्। लेख्यन्तुसाक्षिमत्कार्यन्तस्मिन्धनिकपूर्वक
म्। समासमानदर्द्धाहर्नामजातिस्वगोत्रकैः। सब्रह्मचारीकात्मीयपितृनामादिचिह्नितम्। धनिकनामपूर्वकमित्यनेनोत्तम
र्णनामोपरिलेख्यमधमर्णनामतदधइत्यर्थः। एतच्चमर्णपत्रादिविषयमन्यत्रासम्भवात्। समामासादिद्यथासम्भवमन्यत्रा
पिसब्रह्मचारिकम्बह्वृचादिशाखाप्रयुक्तगुणानामबह्वृचःकठइत्यादि। वसिष्ठोपि। कालंनिवेश्यराजानंस्थानंनिवसनन्त
था। दायकंग्राहकञ्चैवपितृनाम्नाचसंयुतम्॥ जातिङ्गोत्रञ्चशाखाञ्चद्रव्यमाधिंससंख्यकम्। वृद्धिंग्राहकहस्तञ्चविदितार्थौ
चसाक्षिणौ॥ स्थानंजनपदः। निवसनंपुरग्रामादिकं। ग्राहकोऽधमर्णः। ग्राहकहस्तन्निवेशनप्रकारमाहयोगीश्वरः। समाप्तेऽर्थे
ऋणीनामस्वहस्तेननिवेशयेत्। मतंमेऽमुकपुत्रस्ययदत्रोपरिलेखितमिति। साक्षिश्चावित्यनेनद्वयोरभ्यनुज्ञानात्। अक्षर
त्वनियमोनात्रेत्युक्तमेकस्तुनभवत्येवेतिचनसाक्षिलेखकस्वहस्तचिह्नद्वारव्यमित्यपाह। सएव। साक्षिणश्चस्वहस्तेनपितृना
मकपूर्वकम्। अत्राहममुकःसाक्षीलिखेयुरितितेसमाः॥ उभयाभ्यर्थितेनैतन्मयाह्यमुकसूनुना। लिखितंह्यमुकेनेतिले
खकोन्ततनोलिखेत्। समाइत्यनेनगुणसाम्यंसंख्यासाम्यञ्चवैषम्यानियमाभावविवक्षितम्। असमाइत्यकारप्रश्लेषस्तुवैयर्थ्यमा
मान्यतरएवसाक्षिषुप्राप्तेनैपादेयः। ऋणिसाक्षिणोःसर्वथाविप्यनभिज्ञत्वेनारदआह। अलिपिज्ञऋणीयःस्याल्लेखमतंसतु

लेखयेत्। साक्षीवासाक्षिणान्येन सर्वे साक्षी समीपत इति। त्रिविधं राजशासनमित्युक्तम्। त्रैविध्यं विविनक्ति बृहस्पतिः। दत्वा भूम्यादिकं राजा ताम्रपट्टे पटेऽथवा। शासनं कारयेद्धर्म्यं स्थानवंश्यादिसंयुतम्। मातापित्रोरात्मनश्च पुण्यायामुकसूनवे। दत्तं मयामुकायाद्य दानं सब्रह्मचारिणे। चन्द्रार्कसमकालीनम्पुत्रपौत्रान्वयानुगम्। अनाच्छेद्यमनाहार्य्यं सर्वभागविवर्जितम्। दातुःपालयितुःस्वर्गं हर्त्तुर्नरकमेव च। षष्टिं वर्षसहस्राणि दानोच्छेदफलं लिखेत्। ज्ञातम्मयेति लिखितं सन्धिविग्रहलेखकैः। समुद्रं वर्षमासादिधनाध्यक्षाक्षरान्वितम्। एवंविधं राजदत्तं शासनं समुदाहृतम्। देशादिकं यस्य राजा लिखितेन प्रयच्छति। सेवाशौर्य्यादिना तुष्टः प्रसादलिखितन्तथा। पूर्वोत्तरक्रियावादनिर्णयान्ते यदा नृपः। प्रदद्याज्जयिने लेख्यञ्जयपत्रं तदुच्यते। सब्रह्मचारिणे। अमुकशाखाध्यायिने। सर्वभागविवर्जितम्। सकलराजपुरुषादिदेयांशरहितम्। योगीश्वरः। शासनमाह। भूमिन्दत्वा निबन्धं वा कृत्वा लेख्यन्तु कारयेत्। आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः। पटे वा ताम्रपट्टे वा स्वमुद्रोपरिचिह्नितम्। अभिलेख्यात्मनो वंश्यानात्मानञ्च महीपतिः। प्रतिग्रहपरीमाणं दानच्छेदोपवर्णनम्। स्वहस्तकालसम्पन्नं शासनं कारयेत् स्थिरमिति। इयं निपर्णकमुकभाराटावियन्ति पर्णकमुकादीन्यस्मै देयानीति राज्ञा नियतदानाज्ञा निबन्धं कारयेत् संधिविग्रहादधिकारिद्वारेत्यर्थात्। तथा च व्यासः। राज्ञा तु स्वयमुद्दिष्टः सन्धिविग्रहलेखकः। ताम्रपट्टे पटे वापि प्रलिखेद्राजशासनमिति। प्रतिगृह्यत इति ग्रहो भूम्यादिस्तत्परीमाणम्प्रतिग्रहपरीमाणं उपसर्गस्य दीर्घो वा ऽकुलकः। दीयत इति दानम्। भूम्यादि तस्य च्छेदः क्षेत्रादेर्मर्य्यादा तदुपवर्णनन्तन्निर्देशम्। आत्मवंश्यादीनभिलिखेत्यन्वयः। इह च साधुशब्दैरेव लेखमीयं न लौकिकवत् नियमः। तथा च संग्रहकारः। राजा स्वहस्तचिह्नेन राजादेशेन संयुतम्। युक्तं राजाभिधानेन मण्डितं राजमुद्रया। सुलिप्यनपशब्दोक्तिसम्पूर्णावयवाक्षरम्। शासनं राजदत्तं स्यात् सन्धिविग्रहलेखकैः। अन्तिमपदोत्तरं लिखितायेति शेषः। तस्मिन्निव लौकिके देशभाषादिप्रतिषेधो नेत्याह नारदः। देशाचाराविरुद्धं यद्व्यक्ताधि

विधिलक्षणम्। तत्प्रमाणंस्मृतंलेख्यमविलुप्तक्रमाक्षरमिति॥ शासनेराज्ञास्वहस्तेनैवस्वसम्मतंलेख्यमित्यप्याहव्यासः। सं
निवेशम्प्रमाणञ्चस्वहस्तेनलिखेत्स्वयम्। मतम्मेऽमुकपुत्रस्यअमुकस्यमहीपतेः॥ सन्निवेशम्प्रमाणञ्चेत्यस्यपूर्ववाक्येप्रलि
खेदित्यत्रान्वयः। तयोराजस्वहस्तलिखनानियमान्। इदञ्चराज्ञाप्रतिगृहीत्रेसमर्पणीयमित्याहविष्णुः। पटेवाताम्रपट्टेवा
लिखितंस्वमुद्राङ्कमागामिन्नृपतिपरिज्ञानार्थंदद्यादिति। अतएवदत्तापहारदोषप्रतिपादनमपिभाविनृपप्रत्यायनार्थन्त
त्रावश्यकमित्यप्याह। व्यासः। षष्टिवर्षसहस्राणिदानाच्छेदफलन्तथा। आगामिनृपसामन्तबोधनायाभिलेखयेदिति
। षष्टिवर्षसहस्राणीत्यादिपुराणवचनप्रसिद्धन्दानाच्छेदयोःदानापहारयोःस्वर्गादिनरकादिफलंलेखयेद्राजेत्यर्थः॥ ● ॥
। जयपत्रेविशेषमाहव्यासः॥ व्यवहारान्स्वयंदृष्ट्वाश्रुत्वावाप्राड्विवाकतः। जयपत्रन्ततोदद्यात्परिज्ञानायपार्थिवः॥ जङ्गमं
स्थावरंयेनप्रमाणेनात्मसात्कृतम्। भागाभिशापसन्दिग्धेयःसभ्यैर्विजयीभवेत्॥ तस्मैराज्ञाप्रदातव्यञ्जयपत्रंसुनिश्चितम्
। पूर्वोत्तरक्रियापादन्तत्प्रमाणंपरीक्षणम्॥ निगदस्मृतिवाक्यञ्चयथासभ्यैर्विनिश्चितम्। एतत्सर्वंसमासेनजयपत्रेऽभिले
खयेदितिप्रमाणस्यपृथक्कथनंक्रियापदेनप्रत्याकलितमवगृह्यते। परिज्ञानायप्राड्न्यायस्यबोधनाय। भागेऽभिशापेवास
न्दिग्धे। विवादपदमात्रोपलक्षणम्। एतेनविवादविषयोयोयत्रविवादेसतत्रलेखनीयः। जयपत्रंराजमुद्राङ्कितङ्कार्यमि
त्याह। वृद्धवसिष्ठः। यथोपन्यस्तसाध्यार्थसंयुक्तंसोत्तरक्रियम्। सावधारणकञ्चैवजयपत्रकमुच्यते॥ प्राड्विवाकादिह
स्ताङ्कंमुद्रितंराजमुद्रया। अत्रचराज्ञःसभ्यानाञ्चस्वहस्तोऽप्यपेक्षितइत्याह। कात्यायनः। सिद्धेनार्थेनसंयोज्योवादीसत्का
रपूर्वकम्। लेख्यंस्वहस्तसंयुक्तंतस्मैदद्याच्चपार्थिवः॥ सभासदश्चयेतत्रस्मृतिशास्त्रविदःस्थिताः। यथालेख्यविधौतत्रस्वह
स्तन्दद्युरेवते॥ कश्चित्पश्चात्कारस्योऽपिजयपत्रभेदमुक्तस्तेनैव। अनेनविधिनालेख्यम्पश्चात्कारंविदुर्बुधाः। निरस्तातुक्रि
यायत्रप्रमाणेनैववादिना॥ पश्चात्कारोभवेत्तत्रनसर्वासुविधीयते। अन्यवाद्यादिहीनेभ्यइतरेषांप्रदीयते॥ वृत्तानुवाद

संविद्भन्नचस्याज्जयपत्रकमिति ॥ वसिष्ठेराजपत्रस्य लक्षणाभिधानापूर्वकमास्य चातुर्विध्यमुक्तं । राज्ञः स्वहस्तसंयुक्तं स्वमु
द्राचिह्नितन्तथा । राजकीयं स्मृतं लेख्यं सर्वेष्वर्थेषु साक्षिमत् । शासनम्प्रथमं ज्ञेयज्जयपत्रं तथापरम् । आज्ञाप्रज्ञापनापत्रं
राजकीयञ्चतुर्विधमिति ॥ ● ॥ आज्ञाप्रज्ञापनापत्रयोः स्वरूपमुक्तं तेनैव । सामन्तेष्वथ भृत्येषु राष्ट्रपालादिकेषु च । कार्य्य
मादिश्यते येन तदाज्ञापत्रमुच्यते । ऋत्विक्पुरोहिताचार्य्यमान्येष्वभ्यर्चितेषु तु । कार्य्यं निवेद्यते येन पत्रं प्रज्ञापनाय तदिति
॥ ● ॥ लेख्यप्रयोजनमाह । मरीचिः । स्थावरे विक्रियाधानविभागे दान एव च । लिखितेनाप्नुयात्सिद्धिमविसंवादमेव
च ॥ सिद्धान्तेवाचिको याधिः स्थावरे षु दशाहिकः ॥ प्रतिग्रहे च कीतेच न लेख्यसिध्यति क्रियेति । पूर्वलेख्ये कयञ्चनष्टा
दक्षमतामुपगते तद्विधमेवापरं लेख्यमथ मर्योतेनमर्था । याज्ञवल्क्य आह । मावनादौ तथाभूते स्वामी दृट्टान्यत्कार यीय
मित्याह योगीश्वरः । देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा । भिन्ने दग्धे तथा छिन्ने लेख्यमन्यत्तु कारयेत् । सर्वैरेतैर्वि
शेषणैर्व्यवहाराक्षमता विवक्षिता दुष्टं लिप्यक्षरपरिलोपेनावाचकतया वा यद्दुर्लेख्यं तत्तु दुर्लेख्यं नष्टं सर्वथा नाशमुपगतं उन्मृ
ष्टमसीदोषादिनामृदितलिप्यक्षरम् । यद्यपि दग्धमपि नष्टमेव तथापि कालमक्षमतानाशीर्णतानष्टपदेनाविवक्षिता । प
त्रान्तरकरणञ्चार्थिप्रत्यर्थिनोः परस्परसम्प्रतिपत्तौ । विमतौ तु देशान्तरस्य पत्रानयनाय कालो देयोध्यापेक्षया व्यवहारो वा प्रव
र्तनीयः दुर्लेख्यादौ तु सम्प्रतिपन्नोपत्रान्तरकरणमन्यथा व्यवहारदृष्टवृत्तिभिर्वैद्यवसेयं साक्षिषु सत्सु तैरेव निर्णयः । तथा च नार
दः । लेख्ये देशान्तरस्थे तु शीर्णे दुर्लिखिते हृते । सतस्तत्कालकरणमसतो दृष्टदर्शनमिति ॥ सतो विद्यमानस्य लेख्यस्यानय
नाय कालकरणम् । असतश्च नाद एव षष्ठी । तद्धिमापीयर्थः । दृष्टारः साक्षिणस्तैर्दर्शनं निर्णयः कार्यः । न च लेख्यं परिदृष्टै
व प्रमाणीकरणीयमित्याह कात्यायनः । राजा क्रियावमाहूय यथान्यायं विचारयेत् । लेख्याचारेण लिखितं साध्याचारेण सा
क्षिणः ॥ दर्पणस्थं यथा बिम्बमसत्सदिव दृश्यते । तथा लेख्यस्य बिम्बानि कुर्वन्ति कुटिला नराः । व्यासः । लेख्यमालेख्यवत्कै

चित्कुर्वन्ति कुशलानराः । तस्मान्न लेख्यसामर्थ्यात्सिद्धिरैकान्तिकी मता । बृहस्पतिः । ज्ञात्वादेशं च कालञ्च कुशलाः कूटका
रकाः । कुर्वन्ति सदृशं लेख्यन्तद्यत्नेन विचारयेत् ॥ स्त्रीबालानां लिपिं ज्ञात्वा ज्ञायन्ते सर्वबान्धवाः । लेख्यं कृत्वा स्वनामांकं ज्ञे
यं युक्त्यागमैस्ततः ॥ कात्यायनः । साक्षिदोषाद्भवेद्दुष्टं पत्रं वै लेखकस्य च । धनिकस्यापि वै दोषाद्धारणिकस्य च ॥ दु
ष्टैर्दुष्टम्भवेल्लेख्यं शुद्धैः शुद्धं विनिर्दिशेत् । तत्पत्रमुपधादुष्टैः साक्षिलेखककारकैः ॥ उपधा दुष्टान्तःकरणता ।
स एव । धनिकेन स्वहस्तेन लिखितं साक्षिवर्जितम् । भवेत्कूटकृतं चेत्तत्तत्संहीनि विभावयेत् । देशाचारविरुद्धं यत्स
न्दिग्धं क्रमवर्जितम् । कृतं स्वामिना यच्च साध्यहीनञ्च दुष्यति । तत्पौदित्यादेरयमर्थः । कर्मालिखनकर्माधनिका
धमर्णासम्प्रतिपत्त्या मयैतल्लिखितमिति यदि न विभावयेत्तदा तत्तत्कूटं भवेदप्रामाण्यशंकास्कन्दितं स्यादिति । व्यासः । अ
दृष्टश्रावितं लेख्यं प्रमीतधनिकर्णिकम् । अबन्धलग्नकं चैव चिरकालं न सिध्यति ॥ एतदपवादमाह बृहस्पतिः । उन्मत्त
जडबालानां राजभीतिप्रवासिनाम् । अप्रगल्भभयार्त्तानां न लेख्यं हानिमाप्नुयात् ॥ उन्मादादौ नालेख्यमदर्शनादिना
पि हानिमाप्नुयादित्यर्थः । बृहस्पतिः । दूषितो गर्हितः साक्षी यत्रैकोपि निवेशितः । कूटलेख्यं तु तत्प्राहुर्लेखको वापि तद्विधः
। कात्यायनः । न लेखकेन लिखितं न दृष्टं साक्षिभिस्तथा । एतच्चाप्रत्ययं लेख्यं कूटलेख्यं प्रकीर्त्तितमिति ॥ कूटमप्रामाण्यशंका
कलंकितमित्यर्थः । तस्माद्दुष्टलेख्यपरीक्षाऽवश्यापेक्षणीयेत्यभिप्रायः ॥ ० ॥ परीक्षाप्रकारमाह । कात्यायनः । लिखितस्या
पि लेख्यस्य भ्रान्तिः सञ्जायते यदा । धनिसाक्षिलेखकानां हस्तो यत्नेन साध्यते तदा ॥ स एव । अथ पञ्चत्वमापन्नो लेख्यकः सह सा
क्षिभिः । तत्स्वहस्तादिभिस्तेषां विशुद्धिः स्यान्न संशयः ॥ उभयोः स्वहस्तसंदेहे जीवतो वा मृतस्य वा । तत्स्वहस्तकृतैरन्यैः पत्रै
स्तल्लेख्यनिर्णयः । याज्ञवल्क्यः । सन्दिग्धे लेख्यशुद्धिः स्यात्स्वहस्तलिखितादिभिः । युक्तिप्राप्तिक्रियाचिह्नसम्बन्धागमहेतुभिः
। एतद्देशकालयोरस्मेदन्द्रव्यं घटतइति युक्त्या प्राप्तिर्युक्तिप्राप्तिः क्रियासाक्ष्यादिभिः । चिह्नमसाधारणं यत्स्वयं श्रीकारादि

। सम्बन्धपूर्वमपि परस्परविश्वासकृतस्तयोर्दानग्रहणादिसम्बन्धः। आगम एतावतादृव्यस्यास्मिन्देशे कालेस्य सम्भावितः प्राप्त्युपायः। एतैर्हेतुभिः हेतुरसाधारणोन्योगो बृषनयेन पृथगेव वा। प्रतिवादिना लेख्यदोष उद्भाविते वादिना तत्पुत्रेण वा तदु द्धारः करणीय इत्याह। वृहस्पतिः। उद्धरेल्लेख्यमाहर्त्ता तत्पुत्रो भुक्तिमेव तु। अभियुक्तः सभीतश्चेत्तत्पुत्रोपि तदुद्धरे त्। यत्तु कात्यायनः। साक्षिलेखककर्त्तारः कूटतां यान्ति ते यथा। तथा दोषाः प्रवक्तव्या दुष्टैर्लेख्यं प्रदुष्यति। आहर्त्ता भुक्तियु क्तोपि लेख्यदोषान्विशोधयेत्। तत्सुतो भुक्तिदोषांस्तु लेख्यदोषानवाप्नुयात्॥ तदनभियुक्तपितृमरणे वेदितव्यम्। दोषानु द्धारे दण्डमाह। कात्यायनः। कूटोक्तौ साक्षिणां वाक्याल्लेखकस्य च पञ्चकम्। नयेच्छुद्धिं नयेत्कूटं सदा प्योद मनुत्तममि ति। उत्तमं साहसमिति शेषः। राजशासने निर्णयप्रकारमाह। प्रजापतिः। कार्यो यत्नेन महता निर्णयो राजशासनात्। रा ज्ञः स्वहस्ततो मुद्रालेखकाक्षरदर्शनात्। मुद्रालेखकाक्षरयोर्दर्शनान्निर्णयाद्राजस्वहस्तस्य निर्णय इत्यर्थः। स्थावररविक्र यबन्धकादौ कूटत्वेन लेख्यं दूषयतो साधयतश्च दोषं शारीरं दण्डमाह। व्यासः॥ स्थावरे विक्रियाधाने लेख्यं कूटं करोति यः। स सम्यग्भावितः कार्यो जिह्वापाण्यंघ्रिवर्जितः। सम्यग्भावितः प्रमाणेन सल्लेख्यत्वमंगीकारितः। अनेन कूटलेख्यकर्त्तुर्न्नायं द ण्डः किन्तु कूटत्वोद्भावनकर्त्तुरिति गम्यते। तथा च लेख्यं परकीयं यः कूटं करोति कूटमेतदिति वदतीत्यर्थः॥ कूटलेख्यकर्त्तुस्तु द ण्डान्तरं वक्ष्यते। ऋणादानादावपि लेख्यदोषोद्भावयितुस्तदसाधयतो विषयानुबन्धानुरोधेन दण्डः कल्प्यः। लेख्यप्राबल्य मथाह। वृहस्पतिः। कुलश्रेणिगणादीनां यथाकालं प्रदर्शयेत्। श्रावयेत्स्मारयेच्चैव यथा स्याद्बलवत्तरम्। नारदः। ये दर्शितं प्रतिकालं यच्छ्रावितं स्मारितं च यत्। लेख्यं सिध्यति सर्वत्र मृतेष्वपि हि साक्षिषु॥ कात्यायनः। दृष्टे पत्रे स्फुटं दो षनोक्तवान्नृणिको यदि। ततो विंशतिवर्षाणि स्थितं पत्रं स्थिरं भवेत्। ऋणिकग्रहणं प्रतिवादिमात्रोपलक्षणम्। स एव। शक्त स्य सन्निधावर्थो यस्य लेख्येन भुज्यते। विंशद्वर्षाण्युपेक्षितं तत्पत्रं दोषवर्जितम्। अथ विंशतिवर्षाणि आधिर्भुक्तः सुनिश्च

नः । तेन लेख्येन तत्सिद्धिर्लेख्यदोषविवर्जिताः ॥ सीमाविवादे निर्णीते सीमापत्रं विधीयते । तस्य दोषाः प्रवक्ष्यामि यावद्दृष्टाश्चि
विंशतिः ॥ प्राप्तं वा तेन तेन किञ्चिद्देयं वा यन्निरूपितम् । विनापि मुद्रया लेख्यं प्रमाणं मृतसाक्षिकम् ॥ अपि शुद्धे मृतसाक्षिकमि
त्यत्राप्यन्वेति । व्यासः । स्वहस्तकाज्जानपदं तस्मात्तु नृपशासनम् । प्रमाणान्तरमिष्टं हि व्यवहारार्थमागतम् ॥ द्विप
लिपिहस्तकृतमन्यल्लिख्येत युक्तितः । कुर्य्याद्धि सदृशं लेख्यं तस्माज्जानपदं शुभम् ॥ अप्रकाशात्साक्षियुतं लेखकाक्षरमु
द्रितम् । लोकप्रसिद्धं स्वकृतात् दूरमन्यकृतं शुभम् ॥ देशाद्यत्रादिलिखितं तज्जानपदं स्मृतम् । स्वमन्वाक्सम्पक्षिर्मवानवश
अहतं शुभम् ॥ सम्वर्तः । लेख्ये लेख्यक्रिया प्रोक्ता वाचिके वाचिकी मता । वाचिकी न च विज्ञेया लेख्यस्योपरि या क्रिया ॥ लेख्य
स्योपरि यत्साक्ष्यं कूटं तदभिधीयते ॥ अधर्मस्य हि तद्द्वारं मनो राजा विवर्जयेत् । वाचिकी यदि सामर्थ्यमक्षराणां विहन्यते
। क्रियाणां सर्वनाशः स्यादनवस्था च जायते । अस्यार्थः । लेख्ये सति लेख्यक्रिया प्रोक्ता सैव बलीयसीत्यर्थः । वाचिके साक्षिरू
पे प्रमाणे सति वाचिकी क्रिया साक्षिरूपा क्रिया सैव मता बलीयसी । लेख्यस्योपरि या वाचिकी साक्षिरूपा क्रिया लेख्यानारूढेति
यावत् । न च सा विधेया । लेख्यस्योपरि यत्साक्ष्यं लेख्यसाधकतयोपन्यस्तमित्यर्थः । अधर्मस्य च तद्द्वारमित्यत्र हेतुर्वाचिकी
ति । तत्रापि हेतुः क्रियाणामिति । तत्राप्युपपत्तिरनवस्थेति । प्रमादपरिहारमतियत्नेन कृत्वा हि प्रायशो लेख्यं भवति तेन
तत्राप्यप्रामाण्यशङ्कापि साक्षिभिर्भिन्ना । साक्ष्यादावपि तत्सम्भवादिति तात्पर्य्यम् । ननु सर्वथा तत्र साक्ष्यादिनिवर्त्तनमभि
प्रेतं लेख्यपरीक्षोपदेशविरोधात् । इति लेख्यनिरूपणम् ॥ ● ॥ अनयोश्च साक्षिलेख्ययोः शब्दाभिव्यञ्जकत्वाच्छब्दप्रमाणे
न्तर्भावः । तथा हि । यथोक्तगुणवतां दोषरहितानां च साक्षिणामाप्तवाक्यावश्यम्भावात् । आप्तवाक्यस्य च प्रामाण्यात् । ननु
भयविशेषवतन्निर्धारणायैव साक्षिपरीक्षोपदेशः । आप्तवाक्यस्य च वक्तृज्ञानानुमापकत्वेन स्वातन्त्र्येण वा प्रामाण्यमित्यन्य
देतत् लेख्यन्तु स्वस्य हितकारित्वेन स्वस्मिन्नासत्त्वात् तद्वचनाभिव्यञ्जकमित्याप्तवाक्यमेव तत्रापि प्रामाण्यम् । अत एव तत्त्वानाम

कच्छलहननवशंकानिरासाय स्तन्मात्रादेः स्वहितानभिज्ञानतयास्वस्मिन्नप्यनाप्तत्वाच्छङ्कानिरासाय च लेख्यपरीक्षोपदेशोऽप्यर्थवान् ॥ ० ॥ अथ भुक्तिः । इयञ्च याज्ञवल्क्यादिभिरेकैव त्रिविधमानुषप्रमाणान्तर्गततयोक्ताः । प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम् । एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥ इत्यादिवचनैः बृहस्पत्यादयः मानुषप्रमाणभेदत्तयोपन्यस्तमुक्ते द्वैविध्यं भुक्तियुक्तिचोदनाऽप्रतिकाराख्यानवन्तः । साक्षी द्वादशभेदस्तु लिखितन्दशधा स्मृतम् । अनुमानं त्रिधा भिन्नं नवधा दैविकी क्रिया ॥ इत्युक्ता भुक्तियुक्तिचोदनाऽप्रतिकलान्बृहस्पतिर्विवृतवान् । तत्र युक्तिचोदनाऽप्रतिकारयोः प्रमाणान्तरसहकारितयैव प्रमाणत्वं भुक्तेष्ववक्ष्यमाणविशेषणवत्याः स्वत्वहेत्वविनाभावात्स्वत्वानुमापकत्वं स्वत एवेत्यभिसन्धाय योगीश्वरादिभिर्भुक्तिरेव प्रमाणतयोक्ताऽन्यैस्तु यथाकथञ्चिदनुमापकतामभिसन्धाय युक्तिचोदनाऽप्रतिकारसंग्रहायानुमानत्वेनैव सोक्तेति सौकर्याय त्रयमपि निरूपयामः । तत्र कश्चिदागमाभावाभुक्तेप्रामाण्यमनभिसन्दधानः । सप्तस्थावरागमोपायाम्प्रदर्शयंस्तत्र भुक्तेः प्रामाण्यमाह बृहस्पतिः । एतद्विधानमाख्यातं साक्षिणां लिखितस्य च । साम्प्रतं स्थावरे प्राप्ते भुक्तेश्च विधिरुच्यते ॥ विद्यया क्रयबन्धेन शौर्यभार्यान्वयागतम् । सपिण्डस्याप्रजस्यांशं स्थावरं सप्तधा स्मृतम् ॥ पित्र्ये लब्धक्रयाधानेरिक्थशौर्यप्रवेदनात् । प्राप्ते सप्तविधे भोगः सागमः सिद्धिमाप्नुयात् । स्थावरग्रहणमत्र भुक्तेरवश्यकत्वसूचनाय न तु तत्रैव भोगस्य प्रामाण्यनियमाय जङ्गमेऽपि तत्सम्भवात् तदेतदुत्तरत्र विवेचयिष्यामः । विद्यया प्रतिग्रहादिकप्रयोजकतया स्वत्वोपायत्वेन क्रयप्रसिद्धः । बन्धो बन्धकं सोपाधिकं स्वत्वहेतुर्न ह्याधिविधौ चात्यन्तिकस्वत्वहेतुस्तद्युत्तरत्र विवेचनीयम् । क्रयबन्धेनेति समाहारद्वन्द्व एकत्वं । शौर्यागतं युद्धार्जितम् ॥ भार्यागतं विवाहकाले प्राप्तम् । अन्वयागतं पित्रादिक्रमोपात्तम् । अप्रजस्य सपिण्डस्यांशं रिक्थहरान्तराभावे पिण्डदानाद्यधिकारितया प्राप्तं । पित्र्य इत्यादिना प्रागुक्तानेव सप्तस्थावरागमोपायाननूद्य तत्र भोगस्य प्रामाण्यं विधीयते । तत्र प्रवेदनं विवाहः स एव । क्रमागतः शासनिकः क्रयाधानागमान्वितः । एवंविधस्तु यो भोगः स तु सिद्धिमवा

मुयात्। संविभागक्रयप्राप्तम्पितृलब्धस्तथा जतः। स्थावरं सिद्धिमाप्नोति भुक्त्या हानिमुपेक्षया। प्राप्तमात्रं येन भुक्तं स्वीकृत्यापरिपन्थिनः। तस्य तत्सिद्धिमाप्नोति हानिस्त्वोपेक्षया तथा॥ अध्यासनसमारम्भ भुक्तिर्यस्याविघातिनी। त्रिंशद्वर्षाण्यविच्छिन्ना तस्य तां न विचालयेत्॥ अपरिपन्थिनं। विरोध्यप्रतिबद्धम्। अध्यासनात्परिग्रहात्। नारदः। आगमेन विशुद्धेन भोगो याति प्रमाणताम्। अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छति॥ आगमस्याविशुद्धत्वं विरोध्यास्कन्दनं भवेत्। व्यासः। सागमो दीर्घकालश्चाविच्छेदोपरवोज्झितः। प्रत्यर्थिसन्निधानश्च परिभोगोपि पञ्चधा॥ विच्छेदान्तरायः उपरवः आक्रोशः ताभ्यामुज्झितो रहितः। यद्वा छेदो व्यवधानन्तद्विगमवान्विच्छेदो निरन्तर इति यावत्। अपरवो वर्जनविषयो रवः। मदीयं क्षेत्रादि त्वया किमिति भुज्यत इति प्रतिषेधः। अपशब्दस्य वर्जनार्थत्वात्। तेनोज्झितः। नारदः। संभोगं केवलं यस्तु कीर्तयेन्नागमं क्वचित्। भोगच्छलापदेशेन विज्ञेयः स तु तस्करः। इदं सागमत्वविशेषणं तदनुपन्यासे दूषणञ्च स्मरणस्मरणयोग्यतायत्रागमस्य तत्र काले बोद्धव्यम्। स च कालः शतवर्षावधिकः शतायुर्वै पुरुष इति श्रुतेरिति विज्ञानयोगिनः। पुत्रादिक्रमेणापि स्मरणासम्भवाद्यावति काले स्मरणं तावानेव विवक्षितो स्मार्त्त इति तु वयम्। अनेनाभिप्रायेणाह स एव। स्मार्त्ते काले क्रिया भुक्तेः सागमा भुक्तिरिष्यते। अस्मार्त्तेऽनुगमाभावात्क्रमात्त्रिपुरुषागतेति। भुक्तिः प्रमाणमिति शेषः। अनुगम आगमाभावनिश्चयः। कल्पतरुकारस्त्वनुगम आगमानुसंधानमिति व्याचख्यौ। तत्रागमाभावनिश्चयस्य वाधत्वेनानुमितिप्रतिवंधकस्याभाववचनस्यावश्यकत्वादागमानुसन्धानस्य च भोगेनैव क्रियमाणत्वेन तदभावासम्भवाच्च हेयम्। याज्ञवल्क्यः। आगमोभ्यधिको भोगविना पूर्वक्रमागतात्। पूर्वेषां त्रयाणां क्रमेणागतो स्मार्त्तकाल इति यावत्। तस्माद्भोगाद्विना स्मार्त्तकालाद्भोगादागमो दानक्रयादिरूपः स्वत्वहेतुरभ्यधिकस्तदुपजीव्यत्वात्। आगमं विना भोगमात्रात्स्वत्वानुत्पत्तेः। स्मरणयोग्ये च काले स्मर्त्तव्यास्मरणरूपयायोग्यानुपलब्ध्या तदभावनिश्चये भोगेनानुमित्यसम्भवात्। अस्मार्त्ते तु तदभावनिश्चयाभावे निःप्रतिपक्षेणानेरन्त

र्थ्यादिविशेषणवताभोगेनस्वत्वहेत्वाक्षेपद्वारा स्वत्वाक्षेप इति तात्पर्य्यम् । अनेनैवाभिसन्धिनाह । नारदः । अन्यायेनापि य
द्भुक्तं पित्रा पूर्वतरैस्त्रिभिः । न तच्छक्यमपाहर्त्तुं क्रमात्त्रिपुरुषागतम् । पूर्वतरैस्त्रिभिः सह पित्रा भुक्तमन्यायेनापि यदि किमु
तन्न्यायानिश्चयेन तदपाहर्त्तुमशक्यमर्थिना स्वाभ्यर्थनिरर्थको भुक्तनिरन्तरोपभोगे सति तस्य निरन्तरत्वात् । अत्र च सर्ववचने
षु त्रिपुरुषागतत्वं भोगस्य स्मार्त्तकालीनत्वोपलक्षणं न तु यथाश्रुतं स्मरणयोग्येपि द्वितीयादिवर्षस्वरूपे काले पुरुषत्रयाव्ययस
म्भवात् । तत्र च बाधेनानुमित्ययोग्यार्थानुदयात् । इदमेवाभिप्रेत्याह । व्यासः । पिता पितामहो यस्य जीवेच्च प्रपिताम
हः । त्रयाणां जीवतां भोगो विज्ञेयस्त्वेकपूरुषः ॥ पितामहेन यद्भुक्तं तत्पुत्रेण विना च तम् । तौ विना यस्य पित्रा च तस्य भो
गस्त्रिपूरुषः । कात्यायनोपि । मुख्या पैतामही भुक्तिः पैतृकी चापि संमता । त्रयोपेतैरवच्छिन्ना स्थिरा षष्ट्याब्दिका मता । व्या
स एव । वर्षाणि विंशतिर्भुक्ता स्वामिनाव्याहता सती । भुक्तिः सा पौरुषी भूमेर्द्विगुणा च द्विपौरुषी । त्रिपौरुषी च त्रिगुणा न
तत्रान्वेष्य आगमः ॥ भुक्ता भुक्तिरपाकम्पचलीति वा प्रत्ययानुयथायधातुरनुवादः । तत्रागमस्याद्दृष्टभोगेनैवाक्षिप्यते । आगमा
भावनिश्चये तु सर्वेण भोगो निष्फल एव । अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि । चौरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः । न
त्रयो भुङ्क्ते इत्येकवचनश्रवणादेकपुरुषोपभोगगतचौरदण्डविधानमनेकपुरुषोपभोगे तु भोगस्य प्राबल्यमिति वाच्यम् । द्वितीयापृ
थिवीपतिः न त्रयो भुक्त इत्यादावप्यागमाभावनिश्चये भोगस्याप्रयोजकत्वात् । इदमेवाभिप्रेत्याह नारदः । आदौ तु कारणं दाना
तं मध्ये भुक्तिस्तु सागमा । कारणं भुक्तिरेवैका सन्तता या चिरन्तनी । यदपि वचनं यद्विनागममत्यन्तं भुक्तं पूर्वैस्त्रिभिर्भवेत् । न
तच्छक्यमपाहर्त्तुं क्रमात्त्रिपुरुषागतमिति । तदप्युत्पन्नमुपलभ्यमानं आगमं विना आगमाभावनिश्चयाभाव इति व्याख्येयम् । न
नु स्मार्त्तकाले आगमत्वम्भुक्तिविशेषणमसंबद्धम् । सिद्धं प्रमाणान्तरादागमे तेनैव स्वत्वसिद्धौ भोगस्य विशेष्यांशस्यानुमाना
र्थापत्त्योरनुपयोगात् । असिद्धे विशेषणासिद्धिरिति चेन्न । प्रमाणान्तरसिद्धागमसहित एव विशेषणान्तरविशिष्टो भोगः ।

कालान्तरे स्वत्वमवगमयति भोगरहितोऽवगतोप्यागमः साक्ष्यादिभिन्नकालान्तरे स्वत्वमवगमयितुमाचष्टे मध्ये दानक्रयादि
नास्वत्वापगमसम्भवादिति विशेषणविशेष्ययोर्द्वयोरपि नानर्थक्यमसिद्धिर्वा इदमिदानीम्ममस्वमिति साध्ये स्वत्वभागे आगमे
आगमस्तत्र तस्येदानीम्पर्यन्तमननुवृत्तौ भोगइति निगर्वः । याज्ञवल्क्यादिभिः सर्वप्रकारकानुपभोगेपूर्णस्वत्वोत्पादकता
दानाद्यागमस्यनास्तीत्युक्तम् । आगमेपिवलन्नैव भुक्तिः स्तोकापियत्र नो । वलम्पूर्णता । नारदः । विद्यमानेपिलिखिते जीव
त्स्वपिहि साक्षिषु । विशेषतः स्थावराणां यत्र भुक्तन्नतन्स्थिरम् । दानविक्रयादेरुपभोगनिरपेक्षस्यैव स्वत्वोत्पादकत्वात्किमि
ति भोगस्तवोप्यवश्यन्तत्रापेक्ष्यतइत्याशङ्कायामुपपत्तिरुक्ता विज्ञानेश्वराचार्यैः । दानादेः परस्वत्वापादनम्परकर्तृकस्वीका
रापेक्षावश्यम्भावनीयः स्वीकारश्चत्रिविधो मानसो वाचिकः कायिकः । ममेदमित्यध्यवसायो मानसः । ममेदमित्याद्यभिला
पोवाचिकः । उपादानाभिमर्शनादिरूपेणानेकप्रकारकः कायिकः । तत्र मानसं विना स्वत्वासम्भवात्स तावश्यक एव । दा
नविशेषपुरस्कारेण शब्दप्रयोगविशेषनियमपाददर्शनादिचेष्टाविशेषनियमाच्चवाचिककायिकावप्यावश्यकाविध्यव
सीयते तत्र हिरण्यवस्त्रादौ दातृकर्तृकत्यागादनन्तरमेव प्रतिग्रहीतुरुपादानादि सम्भवात्त्रिविधोपि व्यापारः सम्पद्य
ते । क्षेत्रादौ तु फलोपभोगं विना कायिकस्वीकारासम्भवादल्पेनाप्युपभोगेनावश्यम्भवितव्यमन्यथा दानक्रयादेः सम्पूर्णतान
भवत्युत्तरकालीकाराभावात् । तेन तत्रच्छिन्नदागमान्तराद्धिक स आगमो दुर्वलो भवति । एतच्च द्वयोरागमयोः पूर्वापरभावान
वगमेन दवगमेनुस्वल्पभोगविकस्योपिप्रक्तन एवागमो वलवान् । पूर्वेणादानादिना स्वत्वागमे दानाद्युन्तरसम्भवात् । नचैव
न्तस्यक्षेत्रादेर्मध्यकत्वापत्तिः । पूर्वस्याप्यागमादुत्तरस्याम्यानुत्तरस्येति वाच्यम् । प्रतिश्रुतन्यायेनावेक्षणीयस्वत्वस्य तस्याग्रे
पूर्वस्याभ्यसत्वेपि राजेव प्रतिगृहीतादेः कायिकस्वीकारस्यानिः प्रतिपक्षस्य सम्पादनीयत्वात् । अथवा साक्षादेवानेन योगीश्व
रवचनेन साक्ष्यादीनामुक्तानां मानुषप्रमाणानां वलावलमुच्यते । पूर्वव्याख्याने वार्थिकम् । द्वितीयव्याख्यानेचेत्यम् । आद्ये

पुरुषे साक्षिलेख्याभ्यां विगतस्यागमे भोगादभ्यधिकोबलवान्। तेनभुक्तितःसाक्षिलेख्ययोस्तत्रबलवत्त्वमुक्तम्भवति। पूर्वकमाग तस्तुभोगोविनापिभावितादागमात्चतुर्थेवर्षेपुरुषेधिकोमध्यमेतुपुरुषेभोगरहितादागमात्स्तोकभोगसहितोप्यागमोबल वानितिस्पष्टश्चेदमादौतुकारणन्दानमित्युदाहृतेनारदवाक्ये। प्रथमपुरुषेपिस्वाम्यनुपभोगेनसमक्षनिराक्षेपपरोपभो गेनक्षेत्रादिभूमेर्हिरण्यादेस्वविक्रयताचिरकालेनस्वाम्यहानिःपूर्वस्वामिनइत्याह। याज्ञवल्क्यः। पश्यतोब्रुवतोभूमेर्हानिर्वि शतिवार्षिकी। परेणभुज्यमानस्यधनस्यदशवार्षिकी। मनुनारदौ॥ यत्किञ्चिद्दशवर्षाणिसन्निधौप्रेक्षतेधनी। भुज्य मानम्परैस्तूष्णीन्नसतंलब्धुमर्हति। व्यासः॥ उपेक्षितायथाधेनुर्विनापालेननश्यति। पश्यतोन्यैस्तथाभुक्ताभूमिःकालेनहीयते। वर्षाणिविंशतिर्यस्यभूर्भुक्तातुपरैरिह। सतिराज्ञिसमर्थस्यतस्यसेहनसिध्यति। नारदः। भुज्यमानान्परैरर्थान्य स्तान्मोहादुपेक्षते। समक्षञ्जीवतोयस्यतान्भुक्तिःकुरुतेवशम्। पश्यतोब्रुवतइत्यादियस्यनादरे। बृहस्पतिः। स्वविभ वापरैर्द्रव्यंसमक्षंयस्यदीयते। अन्यस्यभुञ्जतःपश्चान्नसतल्लब्धुमर्हति। पश्यतोन्यस्यददतःक्षितिंयोननिवारयेत्। सतापि लेख्येनभुवंपुनस्तांसमाप्नुयात्। एतेषुवचनेषुविंशतिवर्षावधिकस्वामिसमक्षनिराक्षेपभोगनिबन्धनाभूमेर्हानिर्दशव र्षावधिकतादृशपरोपभोगनिबन्धनाचहिरण्यादिधनस्यहानिरित्यर्थःप्रतीयतेसाननावत्स्वत्वहानिःदर्शनकाचीनप्रतिषे धदानादिवत्स्वत्वनिवर्तकत्वस्यलोकाप्रसिद्धत्वात्उपभोगस्यचतादृशस्यस्वत्वप्रतिप्रमाणत्वेनप्रमाणस्यप्रमेयप्रतिज्ञापकत्वेन स्वत्वरूपाजनकतयास्वत्वोत्पादकत्वाभावात्स्वत्वस्यतदुत्पत्तिनिवृत्तिहेतूनाञ्च। लौकिकत्वस्यदायभागप्रस्तावेविस्तरेणो पपादयिष्यमाणत्वात्। गौतमादिभिस्तदुभयकथनस्यलोकप्रसिद्ध्यनुवादात्। अनागमभोगस्यनारदवचनेनपूर्वोदाहृ तेनानागमन्त्वियादिनास्वत्वहेतुतायानिरस्तत्वाच। अत्राहापरार्कः। व्यवहारस्थितिमाश्रित्येदमुच्यतेनधर्मगतिमितिप रस्वापरस्वापहाप्रत्यवायभीरुणापरेणपूर्वस्वामिनेतदर्पणीयंसभापतिसभ्यादीनांव्यवहाररीत्याततश्चाच्छिद्यतददानेपि

नश्यतिः । अत एवमनुः । अजडश्चेदपोगण्डो विषये चास्य भुज्यते । भग्नं तद्व्यवहारेण भोक्ता तद्द्रव्यमर्हति । व्यवहारेण
भोक्तार्हतीति व्यवहारस्थितिमेवोक्तवान् । बृहस्पतिरपि स्वतापि लेख्येनेत्याह । अनागममित्यादिना परद्रव्यमस्तुत्वेऽपि तस्य ध
नभूमिविषयमेकपुरुषनियमाभावनिस्त्वयंवा । अत एव योगीश्वर आगमस्तु कृतो येनेत्युक्तवान् । तस्मान्निह्नुते लिखितं मित्या
दिवचने यथा यथापेक्षितं तर्कसहकृतैकदेशसाधनेनैकदेशापादानेऽनिर्वेदितैकदेशापादानेऽनिवेदितैकदेशस्य प्रागनि
वेदितस्यादापनेऽपि व्यवहारदर्शनाद्दोषस्तथापीति तदयुक्तम् । कुलानि श्रेण्यादिना व्यवहारदर्शनानपेक्षितादृष्टविषये सो
पयावर्जनीयत्वात् । निह्नुते ह्यादिवचनस्य तर्काभावाच्च अस्मादुपपादनरीत्या तथापि तथानभ्युपगमाच्च तत्प्रायश्चित्तं विषये व
परीभावाप्रभाप्रस्तावे । एवंविधा हि भुक्तिस्तूष्णीभूतस्य पश्यतः स्वामित्वे सति न घटते किन्तु भोक्तुरेव स्वामित्वे सति युज्यत इति
भवति न च भुक्तिः प्रमाणमिति पूर्वे स्वयमेव स्वामित्वहानिपरत्वेनोत्पत्तिपरत्वव्याख्यानेनास्य विरोधाच्च । न च तदप्येतदनुग्राह
कतर्कप्रदर्शनेन व्यवहारस्थितिपरमेव न वस्तुगतिपरं व्यवहारहानिश्च । भोक्ता यद्येवमुपन्यस्यति अजडोऽयमपोगण्डोऽयमे
तत्समक्षं मया भुज्यमानं क्षेत्रादि यद्येतद्दायमनेन कृतो विंशतिवर्षावधिनप्रतिषिद्धं । अस्मिंश्चार्थे गुणोपेतास्त्रयः साक्षिणः स
न्तीति तथोपन्यस्तेचायं निरुत्तरोऽवश्यं भवतीत्येवमिति वाच्यम् । अस्य घन्तर्कत्वाभावात् आगमप्रमाणानुपन्यासेन मूलशैथि
ल्यात् । उपेक्षाहेत्वभाववक्तव्यवहारहानावपि वस्त्वनुसरणस्यावश्यकत्वात् । तथा च नारदः उपेक्षाविज्ञाभाववक्तामेव व्यव
हारहानिमाह न वस्त्वभाववक्तताम् । उपेक्षां कुर्वतस्तस्य तूष्णीम्भूतस्य तिष्ठतः । काले विपन्ने पूर्वोक्ते व्यवहारो न सिध्यतीति । न च
निरुत्तरताप्रयुक्तव्यवहारहानिशङ्कानिरासाय प्रत्यक्षं स्वीयं वस्तु नि परेण भुज्यमानेन तूष्णीं न स्थेयमित्युपदेशार्थमिदं वचनं हीना
दिलक्षणवदिति वाच्यम् । विंशत्यादि ग्रहणस्यैवमानर्थक्यप्रसङ्गात् । ततोऽर्वागपि व्यवहारनिःशङ्कायास्तुल्यत्वात् । लेख्यदो
षोद्भावनमुत्तरकालेन कायन्ततोर्वक्तुकार्यमित्येतद्दर्शनार्थं द्रष्टव्यमिति चेन्न । आध्यादिष्वपि विंशत्याद्युत्तरकाले तदनुद्भाव

नस्यतुल्यतयैतदपवादत्वेनोत्तरवाक्यासंगतेस्तत्त्वलेख्यप्रस्तावेभिहितम्। अत्रमिताक्षराकाराः। नवस्तुहानिर्नैव्यवहारहानि रनेनवचनेनप्रतिपाद्यते। किन्तुपरकृतसमक्षभोगेऽप्रतिषेधलक्षणस्वापराधप्रयुक्तात्क्षेत्राद्युत्पन्ननष्टफलानिविद्यमानफ लेपितदीयस्वत्वानपगमात्परस्वत्वानुत्पादाच्चन्यायतस्तद्वस्तुविद्यमानफलसहितमेवलभतेयद्यपिस्वामीतथापिनष्टेफले धर्म्मिनाशादेवस्वत्वापगमान्निष्क्रयद्वारेणचौरादिवभोक्तुःसकाशात्तद्ग्रहणप्राप्तमुपेक्षारूपापराधान्नभवतिपरस्वोपभोगलक्ष णापराधनिबन्धनोराजदण्डस्तुनवादात्क्षेत्रकुर्भवत्येव। अनागमन्त्वभ्यादिनारदवचनात्। परोक्षभोगेसापेक्षासमक्षभोगेचन ष्टमपिफलन्निष्क्रयरूपेणस्वामिलभतएव। पश्यतोब्रुवतइतिवचनात्। विंशतिवर्षेभ्योभूमेर्दशवर्षेभ्यश्चप्राग्धनस्यनष्ट मपिफलन्तन्निष्क्रयरूपेणप्राप्नोति। विंशतिदशशब्दोपादानादितिश्चेदेवंवक्तव्यम्। नष्टफलालाभेप्रतिषेधरूपापराधएव बीजंवचनस्वारस्याद्यः। विंशत्यादिवर्षोपभोगवत्ततःप्रागपिसमक्षभोगेऽप्रतिषेधापराधस्यतुल्यत्वात्तत्कृतनष्टफलालाभप्रसक्ते र्विंशत्यादिग्रहणाविवक्षाप्रसङ्गदोषसाम्यात्। तत्परिहारायप्राचनिकत्वंयदिनष्टफलालाभस्यतर्हियथाश्रुतभूम्यादिस्वत्वहा निरेववचनाद्दस्तु। किन्नष्टफलपरतयालाक्षणिकव्याख्यातएवकल्पतरुरत्नाकरस्मृतितत्त्वस्मृतिचन्द्रिकाकरादिभिर्वचनस्व रसायातएवार्थोभ्युपगतः। अत्रब्रूमः। यावताविनावचनमनुपपन्नंतावदेववचनमस्तकेकल्प्यमतएवयथाश्रुतार्थग्रहणेसम क्षभोगापेक्षायांस्वत्वनाशकत्वमुपभोगस्यपरकृतस्यमकालीनस्यस्वत्वोत्पादकत्वमलौकिकंवचनान्तरविरुद्धञ्चकल्प्यमस्मु ष्मनेतुनष्टफलेधर्म्मिनाशात्स्वत्वनाशःक्लृप्तप्रत्ययपरस्वत्वोपभोगेचौरादिवन्निष्क्रयरूपेणतत्प्रत्यर्पणमपिलोकप्रसिद्धत्वात्प्र सक्तंविंशतिवर्षात्तूत्तरमपराधविशेषात्स्वामिनस्तदलाभमुखेनप्रतिषिध्यतेसएवचास्यदण्डः। इतरत्सर्वंवचनान्तरसिद्ध मेवेति। भवदेवस्तु। किमयम्विंशतिवर्षाद्वर्वाक्छिन्नोप्रतिरुद्धभोगोवचनात्स्वत्वेभोक्तुःस्वत्वंजनयतिप्रमापयतिवा। नाद्यःआग नादिवदस्यस्वत्वजनकत्वस्यलोकशास्त्रयोरप्रतीतत्वात्। नापिद्वितीयः। विंशतयावाप्रमापर्यकित्वमनुपपन्नतयावा। तद्वयस्य

पिइ्ँ दृष्टभोगस्य स्वत्वेन सह कुत्रापि व्याप्तेरगृहीतत्वात् । अत एव तत्र स्वत्वेन विनानुपपत्तिरपि । तस्याश्चापि व्याप्त्युपजीवित्वात् । किञ्चानेन प्राचीनस्वत्वस्य सत्त्व एव प्रमाणमागमानुमानद्वारा तन्निरपेक्षं तथा वा । न तावत्प्रथमः स्मार्त्तकालीनस्यागमाभावनिश्चयेन तदनुमापकत्वस्य बाधेनासम्भवात् । प्रमाणान्तरेणागमनिश्चयेऽस्य सिद्धसाधनेनानुमापकत्वाक्षेपकत्वयोरसंभवात् । न द्वितीयः । व्यभिचाराच्च । अन्यायेनापि यद्भुक्तमिति वचनविरोधाच्च स्वस्यान्यायेन भोगासम्भवात् । किञ्चेयमनुपपन्ना स्त्रीराजादिधनगोचरापि सम्भवतीति तत्र न कदाचिदपि भोगः प्रमाणमिति कुतः तस्मादेवं वाच्यम् । यद्यं यथोक्तो भोगः पूर्वस्वामिनो भोक्तुरुद्देशेन त्यागात्तत्स्वत्वध्वंसं समर्थापयति अनुमापयति वा न हि सम्भवति तमज्ञो जहाति । परभोगश्चेद्दृष्टं तस्मिन्वस्तुनि क्षम्यत इति । तथा च तदुद्देशेन त्यक्ते तत्परिग्रहणादेव परस्य तत्र स्वत्वमप्युत्पद्यते । यथा सर्वभूतोद्देशेन त्यक्ते तोयादौ इति नियमादपि भोक्ता स्वी भवति । स्त्रीराजधनादौ तु नैवं । स्त्रीणामज्ञत्वादप्रागल्भ्याद्राजधनस्य च कुलतया जडादेरप्रागल्भ्याच्चोक्तनियमस्य भङ्गकालीनाध्यापनादिव्यग्रतया उपनिधौ सीमादीनामाधिक्यादिना एव स्वत्वध्वंसजनकपूर्वस्वामित्यागाकल्पकत्वात् । अतो भूम्यादौ विंशतिवार्षिको गवादौ दशवार्षिको भोगः पूर्वस्वामिनः स्वत्वध्वंसे च प्रमाणं यच्च कालवैषम्यं तद्भूम्यादेर्महाफलत्वेन तत्र चिरकालेनैव स्वत्वहानिकल्पनस्योचितत्वाद्गवाश्वादीनां तु न तथात्वादल्पकालेनापि स्वत्वहानिकल्पनायाश्चोचितत्वादौचित्यासिद्धम् । यच्च भूम्यादावेव कालवैषम्येण भोक्तुः स्वत्वजननं तदपि वचनादेव युक्तं यथा तदेव जन्म पुत्रस्य पितृधने स्वत्वजनकमिति पुत्र्यादिति च प्रदीपकृतः । यत्र हि मत्कृत्ये दानीं नाम फलसम्भावना तदधुना तावत्पर एव भुङ्क्तां पश्चादेतत्सकाशात्तत्फलोपभोगं भोक्ष्य इच्छामीत्याद्यभिसन्धाय भूम्यादिस्वामी तत्र परोपभोगं क्षमते तत्रापि विंशत्याद्यधिको भोगोऽस्ति स्वामिनस्तदुद्देशेन त्यागश्च नास्तीति व्यभिचारान्न दृष्टभोगस्य पूर्वस्वामिस्वत्वत्यागे प्रामाण्यम् । तथा च सर्वस्वामिनां स्वीयत्वाभावप्रतिज्ञा यदि यद्ध्यायेन्त तत्र च तद्भुक्ते त्यागनिर्णये परिग्रहात्परस्य स्वत्वं निर्बाधमिति वाच्यम् । यत्तु तथापि पूर्वभोगसिद्धस्य पूर्वस्वामिपरिग्रहस्य त्यागानवधारणात्का

धीनत्वेन भोक्तुः स्वत्वाजनकतया तद्वैयर्थ्यात्। किञ्च भूस्वामी सचेतनः किमिति वृथैव तत्र स्वत्वं जह्यात्। न ह्यत्र दृष्टमुद्देश्यमस्त्यदृष्टं धर्मशास्त्रोक्तेतिकर्तव्यताविरहात्। महेच्छत्वसुशीलत्वदयालुत्वादिनापि नत्यागसम्भवः। सत्यजन्नपि तैरेव हेतुभिः क्षमतइत्यस्यापि सम्भवात्। नापि यदुद्देशेन यत्त्यज्यते तत्तस्य स्वमिति नियमः। उद्देश्येनागृहीते व्यभिचारात्। अपि च। त्यागाद्भोक्तुः स्वत्वं स्वरूपसतो ज्ञानाद्वा नाद्यः। अदृष्टचरत्वात्। द्वितीये च तज्ज्ञानम्भोक्तुः स्वामिवचनात्स्यात्तथा च त्वदुद्देशेन मयेदन्त्यक्तमिति स्वामिनस्तदभिसन्धिपूर्वकम्वचनं ज्ञापकं दानमेवेति तत एव स्वामिनः स्वत्वध्वंसे कृतमुपेक्षानुसरणेन न च यथोक्तक्षमयैव त्यागानुमानं अन्यकृतेपि सौशील्यादीनां क्षमासम्भवात्। न चैवं यथोक्तक्षमया भोक्तुः स्वत्वानुमानमपि न स्यात्। पूर्वस्वामिनः स्वत्वसत्त्वेपि सौशील्यादिना तस्य अन्यथासिद्धत्वादिति वाच्यम्। तावत्कालं सौशील्यादिना क्षमायाः असम्भवसहकृतो भोगो भोक्तुः स्वत्वप्रमापक इति स्मृतिवचनबलादवगतम्। न च स्वत्वं पूर्वागमाद्व्युत्पद्यते स्वामिनो भोक्तुरुद्देशेन तद्वस्तुत्यागाद्वेत्यत्र ततो यह इति। अत्र वदामः। प्रदीपकृद्भिर्यन्निर्द्धान्तितं क्षमायास्तावत्कालीनायाः सौशील्यादिहेतुकत्वासम्भवेन सहकृतो भोगो भोक्तुः स्वत्वं प्रमापयति तच्च भोक्तुः पूर्वागमाद्व्युत्पन्नं भोक्तुरुद्देश्यकस्वामिकृतत्यागाद्वेत्यत्र ततो यह इति तत्र प्रष्टव्यम्भोक्तुः स्वत्वोत्पादकौ पूर्वागमस्वामिकृतभोक्तुरुद्देश्यकत्यागौ प्रमाप्यतावत्कालीनो भोगो भोक्तुः स्वत्वमनुपाय यत्प्रमाप्यवानाद्यः। भोक्तुः पूर्वागमसिद्धौ सम्प्रति तत्स्वस्वामिनः। स्वाम्यासम्भवेन तदीयाप्रतिरववि शत्यादिवर्षकालीनभोगोपन्यासवैयर्थ्यात्। तेनैव तदनुमानान्नतद्वैयर्थ्यमिति चेत् न तत्र व्यभिचारेणानुमानासम्भवात्। भोक्तुरुद्देश्यकत्यागप्रमापकोपि तद्दूषणानपगमात्। न द्वितीयः पूर्वस्वत्वध्वंसानवगमे भोगसहस्रेणापि स्मार्तकालीनेन भोक्तुः स्वत्वानुमानं वानुमानवाधात्। स्मर्तव्यास्मरणरूपयोग्यानुपलब्धेर्भोगरूकत्वात्। यश्चात्र ततो यह इत्यनास्वादः सोप्ययुक्तः पूर्वागमभोक्तुरुद्देश्यकस्वत्वत्यागयोः फलभेदेन तत्त्वनिर्णयफलकोनिर्धारेन्यतरनिर्द्धारणस्यावश्यकत्वात्। पूर्वागमो हि यदि भोक्तुरेव सम्प्रति स्वामिनमन्यस्याभोक्तुर्मिथ्याभियोगनिवन्धनोद

गडेऽपि स्यान्न केवलम्भूधनहानिः। तस्य स्वत्वस्यागमसिद्धौ तदपलापदण्डमात्रं न मिथ्याभियोगित्वनिमित्तो द्विगुणो दण्डः स्वत्व
हानिरुभयपक्षे तुल्या विंशत्यादिग्रहणाविवक्षाप्रसक्तिश्चोभयपक्षेऽपि कक्षाकरणीया। भोक्तृपूर्वागमपूर्वस्वामिकर्तृकभोक्तु
द्देश्यकत्यागस्य द्वित्रादिवर्षोपभोगस्थलेऽपि सिद्धौ भोक्तृस्वत्वस्यावारणीयत्वात्। भवदेवमतानुभवन्मतस्य नातीव भेदः यथोक्त
भोगो भोक्तृद्देश्यकपूर्वस्वामिकर्तृकत्यागङ्कल्पयंस्ततस्तत्स्वत्वध्वंसे सति परिग्रहाद्भोक्तुः स्वत्वोत्पत्तिं निर्बाधामादधातीति मम चेमि
दं वचनं बोधयतीति तन्मतन्तत्र मयाप्यभ्युपगतं तन्तावत्कालीनभोगस्य सौशील्यादिहेतुकत्वात्सम्भवेन पूर्वस्वामिन इदानीन्त
नभोगकर्तृद्देश्यत्यागं विना तदीयपूर्वागमं विना सम्भवाद्भोक्तुः स्वत्वनिमित्तत्वेन तदुभयान्यतरानास्थावादमभ्युपगच्छतात
थाचयत्तन्मतेनैकान्तिकत्वन्त्वयाद्रूषणमापादितन्तद्भवन्मतेऽपि तुल्यं। यच्च सौशील्यादिहेतुकत्वन्तावत्कालीनक्षमायां न स
म्भवतीत्युक्तन्तन्मतेऽपि समाधानक्षममेवेति। वस्तुतस्तु तावत्कालीनक्षमायाः सौशील्यादिहेतुकत्वासम्भवेऽपि न नियतः।
अतिसुशीलतादिस्वभावानामाजन्माप्युपेक्षायाः सम्भवात्। वचनमस्त्वकेति गौरवञ्चोभयमते तुल्यम्। विज्ञानेश्वरमते त्वति
लाघवमुपपादितमेव। किञ्च स्मार्तकालेऽस्मर्तव्यास्मरणरूपया योग्यानुपलब्ध्या भोक्तुरागमाभावनिश्चये पूर्वस्वामिनस्त्यागाभा
निश्चये तदीयपरिग्रहकृतस्वत्वोत्पत्तिपूर्वस्वामित्वध्वंसावुभावपि कल्पयितुमशक्याविति मतद्वयमपीदमत्ययुक्तम्। यच्च परम
त्र प्रदीपकृद्भिरुक्तम्। आधेरनुपभोगेन यत्रासिद्धिस्तद्विषयम्पश्यतो ब्रुवत इत्यादिवचनं। तेन यत्राधिग्रहीत्राधेयभूम्या
दिर्न भुज्यते। किन्त्वाध्यत्र चिरम्भुक्तान्यत्राधीयते तत्रोत्तरस्याधिगृहीतस्तत्र भूम्यादौ प्रभुत्वं न तु प्रथमस्येत्याधौ प्रतिग्रहे क्री
ते पूर्वा तु बलवत्तरेत्येतदपवादार्थमिदमीदृशे विषये वचनन्तेनात्र द्वितीयस्यैवाधिः सिध्यति। यद्वा हानिपदमुपेक्षितकोटौ वि
चारकाणामुपेक्षानिमित्तान्यूनता प्रतिभातीति संशयतादवस्थ्यपरन्न तु हानिर्भङ्ग एव। तथा सति हीनस्य गृह्यते नादृश इत्यादि
वचनं सिद्धन्दण्डमन्तरेणैव पुनर्व्यवहारदर्शनन्न घटत इति पुनर्विचारेणैवात्रापीति निर्णयः। अत एवोपेक्षिता यथा धेनुः व

योगिविंशतिवर्षेत्यादिव्यासवचनयोः पश्यन्तमनादृत्य यदीयं भूमिधनं परैरुपभुज्यते तदीयमेतेन हीयते तेन निश्चीयते इति व्याख्यानं रत्नाकरकृतापि हृतम्। किञ्च यदि विंशतिवार्षिकी भुक्तिः स्वत्वे प्रमाणं तर्हि तत एव स्वत्वसिद्धेः आगमसन्निधावर्थ इत्यादिकात्यायनवचनेन यद्भोगस्य लेख्यादोषनिराकरणार्थमुक्तं तदपार्थकं स्यादिति तदपि चिन्त्यम्। तस्यैतादृगाधिविषयत्वं न प्रकरणादर्थतः शब्दतो वावगम्यते। अस्य चाधिविशेषविषयतायामाधिसीमेत्यस्यैव तदपवादस्यैतादृगाधिभिन्नाधिविषयतापत्त्या शास्त्रीकल्प्याद्याधौ प्रतिग्रह इत्यादेरयमपवाद इत्ययुक्तम् नियमवहितस्य तस्यात्रानुपस्थितेः। विंशत्यादिवर्षात्प्रागपि चैतादृगाधिभोगे परक्रियायाः प्राबल्यस्याप्रतिहतेर्विंशत्यादिग्रहणाविवक्षाप्रसक्तिः॥ वचनन्तावत्कालीनैतादृगाधिभोग एव नश्येति यदि तर्हि श्रुतभूमिधनसामान्यातिक्रमेणैतादृगाधिमात्रविषयत्वस्याग्राह्यस्य कल्पनमनुचितमेव। उपेक्षानिमित्तकविचारकसंशयतादवस्थ्यात्पुनर्विचारः कर्तव्य इत्येतन्मात्रपरमिदं वचनमनु सर्वथाभङ्गरूपहानिपरमिति यदस्य वचनस्य तात्पर्यान्तरवर्णनं तत्रापि विंशत्यादितः प्रागपि तादृगुपेक्षाहेतुकसंशयतादवस्थ्यापरिहारात्पुनर्व्यवहारप्रवृत्त्यावश्यकत्वे विंशत्यादिपदार्थाविवक्षाप्रसक्तिर्दुर्वारा। प्रत्युत विंशत्यादिवर्षानन्तरं तादृगुपेक्षायाः पुनर्विचारः पुरःसरं निर्णयः कर्तव्यः प्राक्तनेष्वनौचित्यापत्तिस्थानप्राप्तोपेक्षकसंनिधिम्नूनताप्रतिभासाद्विस्तरतरोपेक्षायास्तावदेकः सङ्गतिश्चकम्। सत्यां सामग्र्यां प्रागपि तस्य वारयितुमशक्यत्वात् तस्यानन्तरमपि तत्सम्भवात्। कालविशेषनियमानुपपत्तेः। हानिपदस्य निश्चयपरता च वक्तुमुवचनेष्वयुक्ताऽस्मिन्पक्षे प्रसज्यते। यच्चोक्तं तावत्कालीनभोगस्य भोक्तृस्वत्वोत्पत्तिहेतुत्वस्य यथाश्रुतस्याश्रयणे शक्त्यस्य सन्निधावर्थ इत्यादिवचनोक्तं लेख्यादिप्रमाणान्तरस्वत्वसाधकस्य दोषनिराकरणमपार्थकं तावद्भोगादेव स्वत्वसिद्धेरिति तादृग्वचनतात्पर्यबीजं तदप्यमूलकं विज्ञानयोगिव्याख्याने तदनभ्युपगमात्। वाचस्पतिस्तु हानिबोधकस्मृतीनां प्रमाणपरिपालनकर्तव्यताविधिशेषत्वम्। यस्मादुपेक्षायां हानिशङ्का भवति तस्मात्स्वपरिमाणं सर्वथा परिपालनीयं न तु तत्रोदसितव्यमित्यत्र तात्पर्यम्।

अत एव कल्पतरौ हानिवचनानि लिखित्वा प्रमाणपरिपालनमुपसंहृतमित्याह तदपि यद्वा मद्वा । विंशत्यादिग्रहणाविवक्षा
प्रसक्तिताद्वस्थ्यात् । ततः प्रागपि प्रमाणपरिपालनस्यावश्यकत्वात् । हानिशंकाप्रसक्तितौल्यात् । प्रदेशान्तरस्थविधिशेषत्वा
नुपपत्तेरत्र च तद्विध्यश्रवणात् । अन्यत्र स्पष्टत्वाद्विधिसत्त्वेन न तद्वचनस्याप्यनुपयोगात् । हानिपदेनातत्फलकप्रमाणपा
रिपालनलक्षणया तत्प्रतियोगिभूतप्रमाणपरिपालनकर्तव्यतापरत्वेऽयं तत्क्लिष्टत्वापत्तेश्च । तस्मात्समस्तदोषशून्या विज्ञान
योगिव्याख्यैवास्य वचसो न्याय्या । ननु अध्यासनात्समारभ्य भुक्तिर्यस्याविघातिनी । त्रिंशद्वर्षाण्यविच्छिन्ना तस्य तां न विचालये
दिति बृहस्पतिवचने त्रिंशद्वर्षभुक्तेर्हान्यापादकत्वोक्तौ विंशतिवर्षभुक्तेस्तन्न्यूनवर्षभुक्तेर्वा हान्यनापादकत्वमर्थसिद्धमिति
योगीश्वरव्यासादिवचनैरस्य विरोधः । नैवम् । योगीश्वरादिवचनेषु ब्रुवतइत्येतावन्मात्राभिधानात्तत्र विदुषां वाज्ञात्वमपि भू
मिस्वामिनो नास्ति तत्र विंशतिवर्षभोग एव हानिकारणम् । बृहस्पतिवचने तु अध्यासनाद्भूमिपरिग्रहादारभ्य यस्य भुक्तिरवि
घातिनी यदप्रयोगाद्विघातस्य च कलहताडनादिरूपत्वेन लोके प्रसिद्धेर्बाह्यात्र विप्रतिपत्तौ सत्यामपि यत्र भोक्तुः सहपूर्वस्वामि
नातद्भोगप्रतिरोधकं कलहताडनादिनाचरितं तत्र त्रिंशद्वर्षभोगस्यादृष्टहान्यापादकप्रतिवचनस्वरसेनैव विरोधपरिहा
रात् मममनुप्रतिभाति । विंशतिवार्षिकोक्त्यादिहानिविशेषणाद्भूम्याद्युत्पन्ननष्टफलस्य विंशतिवार्षिकादेर्हानिस्तावत्कालीनत
त्फलमुपेक्षालक्षणात्पराधात्प्राप्नोति । विंशतिदशवर्षेभ्यः प्रागुक्तभोगकालगणनया तदुत्पन्नं नष्टमपि फलं निःक्रय
रूपेण लभत एव विंशत्यादिशब्दोपादानात् । अन्यथा यावत्कालीनपरकृतभोगोपेक्षा तावत्कालीननष्टफलहानिमेव सा
मान्येन वदेत् । एतावता विंशत्यादियद्ग्रहणार्थकत्वे विंशत्याद्यधिकवर्षीयफलहानिर्दृष्टद्वारूपिकया सिध्यति भुक्तिविशेषणता
यामिव विंशत्यादिसंख्यायास्तस्यैवं वचनान्तरसंवादाय तद्युक्तिविशेषणत्वव्याख्यानेऽस्य व्याख्यानस्य न फलतो विशेष इति वाच्यम् ।
यतो विंशत्यादिग्रहणस्य भुक्तिविशेषणत्वे कियत्कालीननष्टफलहानिरिति साकांक्षमेति । अत एवापराधाभावादाध्यादौ न

तद्धानिरपीत्याह योगीश्वरः ॥ ● ॥ आधिसीमोपनिक्षेपजडबालधनैर्विना । तथोपनिधिराजस्त्रीश्रोत्रियाणान्धनैरपि ॥ श्रो
त्याधेर्भोगार्थमेवाधीकरणादुपेक्षायामपि नस्वामिनोपराधः गोप्याधौ स्वाम्यनुमिति मन्तरेणा भोक्तुमपराधातिशयमापादयतुमे वो
पेक्षोपपत्तिः । जडबालयोस्त्वज्ञत्वादेवोपेक्षा । उपनिध्योपनिक्षेपोरपिभुक्तेः प्रतिषिद्धत्वात्तदतिक्रमे चोपनिक्षेपे पुरुषस्य निधातु
रसोदयतल्लाभादुपेक्षा । राज्ञोनेकराजकार्यव्यग्रत्वात्स्त्रीणामप्रागल्भ्यानभिज्ञत्वाभ्यां श्रोत्रियस्याध्ययनाध्यापनतदर्थवि
चारश्रौतस्मार्त्तवत्कर्मानुष्ठानव्यस्ततयेति सर्वत्र यथायथमपराधविशेषसमाधानमहकृतादस्मादूचनादत्र कदाचित्त
त्स्तोपचयहानिरपि भवतीत्यर्थः ॥ अतएवाध्यादिभोगे दण्डमधिकमाह स एव । आध्यादीनां विहर्त्तारं धनिने दापयेद्धनम्
। दण्डश्च तत्समं राज्ञे शक्त्यपेक्ष्यमथापि वा ॥ एतत्प्रस्तावे विवेचयिष्यामः । क्वचिदन्यत्रापि नष्टफलहान्यपवादो मनुना
क्तः । सप्रीत्या भुज्यमानानि न नश्यन्ति कदाचन । धेनुरुष्ट्रो वहन्नश्वो यश्च दम्यः प्रयुज्यते । दम्यो दमनार्थं यः प्रयुज्यते ।
मनुनारदौ । आधिः सीमा बालधनं निक्षेपोपनिधिस्त्रियः । राजस्वं श्रोत्रियस्वञ्च न भोगेन प्रणश्यति ॥ नारदः अन्वाहितं
हृतं न्यस्तं बलावष्टभ्य याचितं । अप्रत्यक्षञ्च यद्भुक्तं निक्षेपोपनिधी स्त्रियः । अन्वाहितमेकत्राहितमन्यत्र पुनराहितम् ।
बलावष्टम्भ राजादिबलावष्टम्भेन स्थापितम् । इतरत्प्रसिद्धम् । वृहस्पतिः । भुक्तिस्त्रैपूरुषी सिद्धेदपरेषां न संशयः ।
अनिवृत्ते सपिण्डत्वे सकुल्यानां न सिद्ध्यति । अस्वामिना तु यद्भुक्तं गृहक्षेत्रापणादिकम् । सुहृद्बन्धुसकुल्यस्य न तद्भोगेन ही
यते । विवाह्यश्रोत्रियैर्भुक्तं राजामात्यैस्तथैव च । सुदीर्घेणापि कालेन तेषां सिद्धेन्न तद्धनम् । चिन्तापनयनेषु च । बालश्रोत्रि
यवित्ते च प्राप्ते च पितृतः क्रमात् । नोपभोगे बलं कार्यमाहर्त्रा तत्सुतेन वा । पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः । भो
गन्न कल्पयेत्प्रमाणत्वेन नाद्रियेतेत्यर्थः । गौतमः । अजडापोगण्डधनं दशवर्षभुक्तम्परैः सन्निधौ भोक्तुर्न श्रोत्रियप्रव्रजित
राजपुरुषैः । पशुपुरुषस्त्रीणामनतिभोगः अतिभोगेन हानिरेवेत्यर्थः । कात्यायन ॥ स्वजातिभिर्बान्धवैश्च भुक्तं यत्स्वजनैश्च

था। भोगात्तत्रनसिद्धिःस्याद्भोगमन्येषुकल्पयेत्। अन्येष्वसंबद्धेषु॥ सर्वत्रोपभोगेसकल्यत्वास्यानुरोधेनशीलादेरपेक्षाद्धे
तोःसम्भवान्नभोगस्यान्यथोपपन्नस्यस्वत्वहेतुकल्पनाद्वास्वत्वसाधकत्वंनाप्युपचयहानिहेतुत्वमितितात्पर्यम्। क्वचिदेकदेशो
पभोगेनसमस्तसिद्धिमाह वृहस्पतिः। यद्येकशासनेयामेक्षेत्रारामाश्चलेखिताः। एकदेशोपभोगेपिसर्वेभुक्ताभवन्तिते। आ
गमेपिबलन्नैवभुक्तिस्तोकापियत्रनो। इत्यस्यायमपवादः। एकशासनपत्रारूढेषुकिञ्चिदुपभोगेपिशासनारूढभोगस्या
नपेतत्वान्नप्रत्येकभोगापेक्षेत्याशयः॥●॥ विच्छिन्नभोगनिर्णयोपायमाह। वृहस्पतिः। छिन्नभोगेगृहक्षेत्रेसंदिग्धंयत्रजा
यते। लेख्येनभोगविद्भिर्वासाक्षिभिःशुद्धिमाहरेत्। नामघाटागमंसंख्यांकालन्दिग्भागमेवच। भोगच्छेदनिमित्तञ्चयेवि
दुस्तत्रसाक्षिणः। तदुत्पन्नाश्चवामन्तायेऽन्यदेशेव्यवस्थिताः। मौलास्तेतुसमुद्दिष्टाःप्रष्टव्याकार्यनिर्णये। अदृष्टास्तेतुय
त्कूयुःसन्दिग्धेसमदृष्टयः। नत्प्रमाणंप्रकर्तव्यमेवन्धर्म्मोनहीयते। स्थावरेषुतदाख्यातंलाभभोगप्रसाधनम्। प्रमाणहीन
वादेतुनिर्दिष्टश्यादैविकीक्रियेति। सीमाविवादनिर्णयएतत्प्रपञ्चम्विवेक्ष्यामः। एवम्भुक्तिर्निरूपिता॥●॥ युक्तिस्वरूपमा
ह। कात्यायनः। लिंगोद्देशस्तुयुक्तिःस्यादिति। लिङ्गस्याग्निदत्वाद्यव्यभिचारिणउल्काहस्तत्वादेरुद्देशोनिश्चयःतेनचा
ग्निदत्वाद्यनुमानम्। यद्यपिभुक्तिरपिनिरन्तरत्वनिराक्रोशत्वादिप्रागुक्तविशेषणोपहितानुमानविधयार्थापत्तिविधयावा
साधिकातनत्रापिलक्षणमिदमतिप्रसक्तमेववक्ष्यमाणचोदनाप्रतिकालेपितथास्मप्रसिद्धिबलाद्गोवृषवनद्भिन्नलिंगोद्देश
एवयुक्तिरूपत्वेनलक्ष्यः। अतएवतत्प्रवृत्तिस्थलन्तादृशमेवाहनारदः। असाक्षिप्रत्ययास्त्वन्येषड्विवादाःप्रकीर्तिताः। ल
क्षणान्येवसाक्षित्वेतेषामाहुर्मनीषिणः। उल्काहस्तोऽग्निदोज्ञेयःशस्त्रपाणिश्चघातकः। केशाकेशिगृहीतश्चयुगपत्पारदा
रिकः। कुद्दालपाणिर्विज्ञेयःसेतुभेत्तासमीपगः। तथाकुठारहस्तश्चवनच्छेत्ताप्रकीर्तितः। समीपगइत्यत्रापिसम्बध्यते। न
त्वविनाभावापादकविशेषणान्तरोपलक्षणम्। प्रत्यक्षचिह्नैर्विज्ञेयोदण्डपारुष्यकृन्नरः। असाक्षीप्रत्ययाह्येतेपारुष्येतु

परीक्षणम्। साक्षित्वे साक्षिकार्य्ये प्रत्यक्षचिह्नैः शोणिताक्तखड्गादिभिः। पारुष्ये वाक्पारुष्ये परीक्षणं साक्षिगवेषणम्। यद्यपि तत्रापि गालिदानादिश्रवणं प्रत्यक्षचिह्नं सम्भवति। तथापि प्रथमप्रवृत्त्यादिनिश्चयाय साक्ष्याद्यपेक्षेति ध्येयम्। शङ्खलिखितौ। केशाकेशिग्रहणात्पारदारिकः। उल्काहस्तोऽग्निदः। शस्त्रपाणिर्घातको लोप्त्रहस्तश्चौरः। केशाकेशिग्रहणादिति स्त्रीसंग्रहणे वक्ष्यमाणानामन्येषामपि चिह्नानामुपलक्षणम्। लोप्त्रञ्चौर्यप्राप्तं वस्तु। बृहस्पतिः। असाक्षिके चिरकृते पृच्छेदुत्तरसाक्षिणः। शपथैर्वानुयुञ्जीत उपधां वा प्रयोजयेत्। उपधा युक्तिरिति कल्पतरौ। शपथाभ्यनुज्ञानमन्यथासिद्ध्युपायाभावे ज्ञेयमत एव नारदः। युक्तिष्वप्यसमर्थासु शपथैरेवमर्दयेत्। अर्दयेत्पीडयेत्। पराजयेतियावदितियुक्तिः॥ ●

॥ चोदनाप्रतिकालस्वरूपन्तु चोदनाया धनदानादिविषयकप्रेरणाया अप्रतिकालो प्रतिषेधः। सोपि यद्यप्यस्य ऋणादिसम्बन्धीनस्यात्‌द्याढ्यमान एवं निराकुर्यादनिराकरणात्स्यस्यानेन सम्बन्धइत्यर्थापत्तिविधयाऽनुमानविधया वा ऋणादिसम्बन्धं साधयन्भवति प्रमाणम्। इदमेवाभिप्रेत्याह कात्यायनः। अर्थिनाभ्यर्थितो यस्तु विघातन्न प्रयोजयेत्। त्रिचतुःपञ्चकृत्वो वा परतस्तदृणी भवेत्। नारदोपि। अभीक्ष्णञ्चोद्यमानोपि प्रतिहन्यान्न तद्वचः। त्रिचतुःपञ्चकृत्वो वा परतोर्थं स दाप्यते। परतस्तदूर्ध्वम्। चोदनाप्रतिकालस्य शीलादिप्रयुक्तस्यापि सम्भवाद्युक्त्यादिसहकार्य्यपक्षमाह। नारदः। चोदनाप्रतिकालस्त्वयुक्तिलेश समन्वयात्। देशकालार्थसम्बन्धपरिमाणक्रियादिभिः। अत एव तस्य विषयमप्याह। स एव। प्रमादाद्धनिनो यत्र नस्याल्लेख्यं न साक्षिणः। अर्थञ्चापह्नुते वादी न चोक्तस्त्रिविधो विधिः। चोदनाप्रतिकालस्त्वयुक्तिलेश स्तथैव च। तृतीयः शपथः प्रोक्तस्तैरेवं साधयेत्क्रमात्। कात्यायनः। दानं प्रज्ञापनाभेदः सम्प्रलोभक्रियाच्च या। चित्तापनयनञ्चैव हेतवो हि विभावकाः। एषामन्यतमोयत्र वादिना भावितो भवेत्। मूलक्रियातु तन्नस्याद्भावितो वादिनिह्नवे। दानमुक्तो च दानं। प्रज्ञापनाभेदः प्रज्ञापकस्य हस्तचिह्नाद्यन्यथाकरणम्। सम्प्रलोभक्रियाः साक्षिसभ्यादिभ्यो लोभप्रदर्शनं चित्तापनयनं चित्तगोप

नम्। एषामन्यतमोहेतुर्यत्रवादिनाप्रतिवादिनाधमर्णादेरुपरि भावितःप्रमाणेनसाधितोभवेत्सद्यामूलक्रियाचतस्रापहरत्या
दिरूपात्तदुपरि सिद्धेव। एषामन्यदविनाभावादितिभावः। एवंसाक्षिलेख्यभुक्तिरूपंत्रिविधंमानुषंप्रमाणंनिरूपितं॥ ●॥
अथदिव्यान्युच्यन्ते। तत्रदिव्यानाममानुषप्रमाणाभावएवनिर्णायकत्वमुच्यते। यत्तुस्मृतिरत्ने। एवकारस्येवापिशब्दस्य
त्वामानुषप्रमाणसत्त्वेपियत्रदिव्यांगीकारस्तत्रापितद्भवतीतिप्रयोजनमुक्तन्तदयुक्तम्। एषामन्यतमाभावेदिव्यान्यतममिति
वदतायाज्ञवल्क्येनप्रमाणहीनेवादेतुनिर्देशाद्दैविकीक्रियेतिवदताबृहस्पतिनाचयुक्तिष्वप्यसमर्थासुशपथैरेनमर्दयेदिति
नारदेनापिमानुषप्रमाणासत्त्वएवदिव्यस्यविधानात्। तत्रबृहस्पतिःदिव्यभेदानाह। घटोग्निरुदकञ्चैवविषंकोशस्तुपञ्चमः
। षष्ठन्तुतण्डुलाःप्रोक्ताःसप्तमन्तप्तमाषकं। अष्टमम्फालमित्युक्तंनवमन्धर्मजन्तथा। दिव्यान्येतानिसर्वाणिनिर्दिष्टानिस्व
यम्भुवेति। नारदः। युक्तिष्वप्यसमर्थासुशपथैरेनमर्दयेत्। अर्थकालबलापेक्षमग्न्यम्बुसुकृतादिभिः। घटोग्निरुदकं
चैवविषंकोशस्तुपञ्चमः। उक्तान्येतानिदिव्यानिविशुद्ध्यर्थंमहात्मभिः॥ सन्दिग्धेऽर्थेभियुक्तानाम्परीक्षार्थंमहात्मनाम्। प्रो
क्तानिनारदेनेहसत्यानृतविमुक्तयेइति। अर्दयेत्पीडयेत्। अर्थापेक्षत्वंविसंवादविषयीभूतार्थस्याल्पत्वमहत्त्वानुरूपमित्यर्थः
। नन्वेषामपिशपथानांमानुषप्रमाणाभावएवनिर्णायकत्वेनदिव्यत्वात्कथंदिव्यानितेष्वभिधानं। तथाचशंखः। तत्रदिव्यम
मनुत्वाधारणांविषाशनमप्सुप्रवेशोलोहधारणमिष्टापूर्तप्रदानमन्यांश्चशपथान्कारयेदिति। तांश्चशपथानाहबृहस्प
तिः। सत्यवाहनशस्त्राणिगोबीजकनकानिच। देवब्राह्मणपादांश्चपुत्रदारशिरांसिच॥ एतेचशपथाःप्रोक्ताःस्वल्पार्थेसु
कराःघटेति। नारदोपि। सत्यवाहनशस्त्राणिगोबीजकनकानिच। देवतापितृपादांश्चदत्तानिसुकृतानिच॥ स्पृशेच्छि
रांसिपुत्राणान्दाराणांसुहृदान्तथा। अभियोगेषुसर्वेषुकोशपानमथापिवा। इत्येतेशपथाःप्रोक्तामनुनास्वल्पकारणाद्
ति। रुयम्। अत्रसमनन्तरभाविनिर्णयनिमित्तत्वाद्दिव्यत्वेनविवक्षितत्वात्। तद्दृष्टान्तस्तुघटादीनामेवनतुशपथानामन्यो

यंकालान्तरभाविनिर्णयनिमित्तत्वात्। नन्वेवंकोशस्यकथन्तेषुग्रहणमितिचेत्सत्यम्। तस्यतेषुपाठोमहाभियोगविषय-
त्वसाम्यात्सावष्टंभाभियोगविषयत्वसाम्याच्च। वस्तुतस्तुशपथानामपिनारदादिवचनानुसरणाद्बलीवर्दन्यायेनदिव्यत्वाभ्यु-
पगमेननवशब्दस्योपलक्षणत्वात्। तथाचनारदः। युक्तिष्वप्यसमर्थासुशपथैरेनमर्दयेत्। अर्थकालबलापेक्षमग्न्यम्बु-
सुकृतादिभिः॥ घटोग्निरुदकञ्चैवविषंकोशश्चपञ्चमः। उक्तान्येतानिदिव्यानिविशुद्ध्यर्थंमहात्मभिः। दिव्यंनामतुलारोह-
णम्। विषाशनमप्सुप्रवेशोलोहधारणमिष्टापूर्त्तप्रदानमन्यांश्चशपथान्कारयेत्। मनुः। असाक्षिकेषुत्वर्थेषुमिथोविवद-
मानयोः। अविदंस्तत्त्वतस्सत्यंशपथेनापिलम्भयेत्॥ अग्निंवाहारयेदेनमप्सुचैनंनिमज्जयेत्। पुत्रदारस्यवाप्येनंशिरांसि
स्पर्शयेत्पृथक्॥ यस्माद्देवैःप्रयुक्तानिपुष्करार्थेमहात्मभिः। परस्परविशुद्ध्यर्थन्तस्माद्दिव्यानिनामतः॥ असाक्षिकेष्वितिमा-
नुषप्रमाणरहितेष्वित्यर्थः। उद्दिष्टानांदिव्यानांमध्येतुलादीनिमहाभियोगेप्रयोक्तव्यानि। तथाचयाज्ञवल्क्यः। तुलाग्न्या-
पोविषंकोशोदिव्यानीहविशुद्धये। महाभियोगेष्वेतानिशीर्षकस्थेभियोक्तरि॥ रुच्यावान्यतरःकुर्यादितरोवर्त्तयेच्छिरः
। अत्राग्निशब्देनतत्प्रायःपिण्डादयोगृह्यन्ते। शीर्षकंलक्षणयाजयपराजयनिमित्तोदण्डःतत्प्रयुक्तदण्डभागीत्यवरुच्या
इच्छया। इतरःअभियुक्ताभियोक्त्रोरन्यतरः। इतरःशिरोवर्त्तयेत्। दण्डंस्वीकुर्यादित्यर्थः। ननुकोशमल्पेपिदापयेत्।
इतिस्वल्पाभियोगेपिकोशस्यविधानात्कथंमहाभियोगेष्वेतानीतिचेन्न। तस्यतुलादिषुपाठःसावष्टम्भाभियोगेपिप्राप्त्यर्थः।
ननुमहाभियोगेष्वेवेतिनियमार्थः। अन्यथाकोशस्यशंकाभियोगएवप्राप्तिःस्यात्। अवष्टंभाभियुक्तानान्घटादीनिविनिर्दि-
शेत्। तण्डुलाश्चैवकोशश्चशंकास्वेतौनियम्यचेतिपितामहस्मरणात्। अवष्टम्भःशीर्षकस्थः। अवष्टम्भोत्रनिश्चयइति
स्मृतितत्त्वे। यदाशीर्षकस्थोभियोक्तानस्यात्तदाएतानिदिव्यानिनस्यादिति। तथाचनारदः। शिरोवर्त्तीयदानस्यात्तदादिव्यं
नदीयतइति। इतिदिव्यदानेनियममाह। पितामहः। अभियोक्ताशिरस्थानेदिव्येषुपरिकीर्त्यते। अभियुक्तायदातव्यन्दि-

व्यंश्रुतिनिदर्शनात्। इतिकात्यायनोपि। नकश्चिदभियोक्तारन्दिव्येषुविनियोजयेदिति। अभियुक्ताय दातव्यमित्यस्यापवा
दंस्यचवान्यतरइत्यनेनाहयाज्ञवल्क्यः। नारदोपि। परियोक्ताशिरःस्थानेसर्वत्रैकःप्रकल्पितः। इच्छयान्वितरःकुर्यादि
तरोवर्त्तयेच्छिरइति। क्वचिद्विषयविशेषेविरोधिनापिदिव्यन्देयमित्याह। याज्ञवल्क्यः। विनापिशीर्षकात्कुर्यान्नृपद्रोहेथ
पातकइति। शीर्षकाद्विनापिपराजयप्रयुक्तदण्डभागिनोभियोक्तुरभावेपि। पातकेब्रह्महत्यादो। कात्यायनोपि। पार्थिवैःशं
कितानाञ्चनिर्दिष्टानाञ्चदस्युभिः। आत्मशुद्धिपराणाञ्चदिव्यन्देयंशिरोविनेति॥ कालिकापुराणोपि। परदाराभिशापेचचैा
र्य्यागम्यागमेषुच। महापातकशस्तेचस्याद्दिव्यंन्दपसाहसे। विप्रतिपत्तैाविवादेऽवर्णास्थापनेकृते॥ तत्रैवस्थापयेद्दिव्यं
शिरःपूर्वम्महीपतिः। परदाराभिमर्षैचवहुवोयचवादिनः॥ शिरोहीनम्भवेद्दिव्यमात्मनःशुद्धिकारणादिति॥ विप्रतिपत्तैा
परधारगमनाद्यभियोगरूपायांविवादेऋणादानादिविषयेअवर्णाेऽपवादः। परदाराभिमर्षैचेतिचैाव्यादीनामप्युपलक्ष
णं। विष्णुः। राजद्रोहेसाहसेचविनाशीर्षप्रवर्त्तनादिति। विषयविशेषेषुदिव्यविशेषानाहसंहृत्यहारःधटादीनिविषान्ता
निगुरुष्वर्थेषुदापयेत्। पितामहोपि। अवष्टंभाभियुक्तानांघटादीनिविनिर्दिशेत्। तण्डुलाश्चैवकोशश्चशंकास्वेतानियोज
येत्इति। कात्यायनः। शङ्काविश्वाससन्धानेविभागेरिक्थिनांसदा। क्रियासमूहकर्तृत्वेसम्भूयैकक्रियाकारित्वे। पितामह
होपि। विश्रंभेसर्वशंकासुसन्धिकार्येतथैवच। एषुकोशःप्रदातव्योनित्यंचित्तविशुद्धये॥ शिरस्थापिविहीनानिदिव्यादीनि
विवर्द्धयेत्। घटादीनिविषान्तानिकोशएकोशिरःस्मृतइति। तण्डुलानांविषयंसएवाह। चैार्येतुतण्डुलादेयानान्यत्रेतिविनि
श्चयइति। अन्यत्रस्त्रीसंग्रहादैानतुदत्तापन्हवे। तदर्धाद्धस्यतण्डुलाइतिवक्ष्यमाणकात्यायवचनेनतण्डुलादिव्यविधानात्
। एतदल्पचैार्य्यशङ्कायांवेदितव्यम्। चैार्यैभिशंकायुक्तानान्तप्तमाषोविधीयत्। इतिमहाचैार्य्यशंकायांतप्तमाषस्यतेनैवविे
धानात्। द्रव्यसंख्ययादिव्यविशेषानाहविष्णुः। अथशपथक्रियाराजद्रोहादिषुयथाकामंनिक्षेपर्णास्तेयेष्वर्थप्रमाणादिति।

शपथोदितम्। राजद्रोहादिषु यथाकामं राजेच्छानुरोधाद्दिव्यं निक्षेपादिषु धनतारतम्यादित्यर्थः। वस्त्रादिविषयविचारे तु तन्मू-
ल्यद्रव्यपरिमाणं ग्राह्यम्। बृहस्पतिरपि। विषं सहस्रेऽपहृते पादोने च हुताशनः। त्रिभागोने च सलिलमर्द्धे देयो घटः सदा। ध-
नुः शताभियोगे तु दातव्यस्तप्तमाषकः। त्रिशते तण्डुला देयाः कोशश्चैव तदर्द्धके। शतार्द्धेऽपहृते च दातव्यं धर्मशोधनम्। गोच-
रस्य प्रदातव्यं सद्यः कालावलेहनम्। एषा संख्या निकृष्टानां मध्यानां द्विगुणा स्मृता। चतुर्गुणोत्तमानां च कल्पनीया परीक्षकै-
रिति धर्मशोधनम्॥ धर्मजन्दिव्येन शोधनम्। निकृष्टत्वञ्जातिगुणधर्मैः मध्यमत्वमुत्तमत्वं च तैरेव। यत्तु। नाष्टसहस्रादृ-
ते फालन्न विषं न तुलां तथेति याज्ञवल्क्यवचनं तन्मध्यमोत्तमपुरुषविषयम्। यत्तु सहस्रे तु घटं दद्यात् सहस्रार्द्धे तथायसम्।
अर्द्धस्यार्द्धे तु सलिलं तस्यार्द्धे तु विषं स्मृतमिति। यत्पितामहवचनं तद्बाल्पद्रव्यापहारे पातित्यं भवति तद्विषयम्॥ ● ॥ ए-
तत्स्तेयसाहसविषयं द्रव्यापह्नवे तु। कात्यायनः। द्रव्यापह्नवे यत्र प्रमाणं तत्र कल्पयेत्। स्तेयसाहसयोर्दिव्यं स्वल्पेऽप्यर्थे प्रदा-
पयेत्। सर्वद्रव्यप्रमाणं तु ज्ञात्वा हेम प्रकल्पयेत्। हेमप्रमाणयुक्तं तु तदा दिव्यं प्रयोजयेत्। ज्ञात्वा संख्यां सुवर्णानां शतनाशे
विषं स्मृतं। अशीतेस्तु विनाशे वै दद्याच्चैव तुलाशनम्। षष्ट्या नाशे जलं देयं चत्वारिंशति वै घटं। विंशद्दशविनाशे तु कोशपानं
विधीयते। पञ्चाधिकस्य वा नाशे ततोऽर्द्धार्द्धस्य तण्डुलाः। ततोऽर्द्धार्द्धविनाशे हि स्पृशेत्पुत्रादिमस्तकान। ततोऽर्द्धार्द्धविनाशे तु
लौकिकस्य क्रिया स्मृता। एवं विचारयन्राजा धर्मार्थाभ्यां न हीयत इति। सुवर्णशब्दः षोडशमाषात्मकः। नाशोऽपह्नवः।
विंशद्दशविनाशे विंशतेर्वा दशानां वेत्यर्थः। विंशद्दशविनाशे विंशद्भिर्नाशनमिति स्मृतिचन्द्रिकायाम्। पञ्चाधिकस्य पञ्चभ्योऽधिक-
स्य षट्प्रभृतेरिति यावत्। तदर्द्धार्द्धस्य तु सुवर्णप्रभृतेः। ततोऽर्द्धार्द्धस्य अष्टमाषोनसुवर्णार्द्धप्रभृतेः। ततोऽर्द्धार्द्धस्य विनाशे सा-
र्द्धसप्तमाषोनसुवर्णार्द्धप्रभृतेर्विनाशे। लौकिका च क्रियाः। अपह्नवे तद्दशगुणो द्रव्यनाशो भविष्यतीत्यादिकाः। पशब्दः स्मा-
र्त्तपथशपथार्थः। अत एवाह विष्णुः। सर्वेष्वेवार्थजातेषु मूल्यं कनकं कल्पयेत्। तत्र च कृष्णलोने शूद्रं दूर्वाकरं शापयेत्। द्वि

हस्तलोनेतिलकरम्। त्रिहस्तलोनेजलकरश्चतुःहस्तलोनेसुवर्णकरम्। पञ्चहस्तलोनेसीरोद्धृतमहीकरम्। नवसुव
र्णाद्धीनेकोशोदेयःशूद्रस्यतमःपरंयथार्हन्धटाम्बुदकविषाणामन्यतमंद्विगुणार्थेयथाभिहितासमयक्रिया। वैश्यस्यत्रिगुणे
र्थेराजन्यस्यकोशवर्जंचतुर्गुणेर्थेब्राह्मणस्यकोशवर्जनात्। अन्यत्रागामिकालसमयनिबन्धनक्रियातःकोशस्थानेब्राह्मणंसीरोद्धृ
तमहीकरमेवशापयेत्। प्राग्दृष्टदोषंस्वल्पेप्यर्थेदिव्यानामन्यतममेवकारयेत्। सत्त्वप्रथितंसच्चरितंतनमहत्यर्थेपीति। सी
रोद्धृतमहीकरंलाङ्गलोद्धृतलोष्टहस्तमित्यर्थः। अनग्रहणमधिकेशापनिवृत्त्यर्थंशापेतुविशेषमाहमनुः। सत्येनशापयेद्वि
प्रंक्षत्रियंवाहनायुधैः। गोबीजकाञ्चनैर्वैश्यंशूद्रंसर्वैस्तुपातकैरिति। यद्यल्पमर्थापह्नवोस्यात्तदासत्याभिधानधर्मोममनि
ष्फलःस्यादितिशपथकारिणंब्राह्मणंवाचयेत्। एवंक्षत्रियादीनांवाहनादीनिनिष्फलानिस्युरित्यादीन्यर्थः। पादस्वर्णादी
नांविशेषःस्मृत्यन्तरेदर्शितः। निष्केतुसत्यवचनंद्विनिष्केपादलम्भनम्। ऊर्ध्वंत्रिकेतुपुष्पंस्यात्कोशपानमतःपरमिति।
अत्रनिष्कशब्देनकर्षचतुर्थांशोमुद्रामुद्रितःप्रतिपाद्यते। क्वचिद्देशेतत्रापिनिष्कव्यवहारात्। ननुमनूक्तोनिष्कः। तस्यश
तपलात्मकत्वेनमूलकाञ्चनकर्षादधिकत्वात्। नचसत्यवचनविधौचतुर्गुणोऽर्थेब्राह्मणस्येतिविरोधःस्यात्। दिव्येदण्डेचम
नूक्तंग्राह्यंपरिमाणम्। ग्राह्यमितिबृहस्पतिराह। संख्यारश्मिरजोमूलामनुनासमुदाहृता। कार्षापणान्तासादिव्येनियो
ज्याविनयेतथेति। संख्यापरिमाणंरश्मिरजोमूलात्रसरेण्वादिका। विनये। दण्डे। तच्चपरिमाणम्प्रतिज्ञापूर्वकंमनुराह। लो
कसंव्यवहारार्थेयाःसंज्ञाःप्रथिताभुवि। ताम्ररूप्यसुवर्णानांताःप्रवक्ष्याम्यशेषतः॥ जालान्तरगतेभानौयत्सूक्ष्मंदृश्यतेर
जः। प्रथमन्तत्प्रमाणानांत्रसरेणुम्प्रचक्षते॥ त्रसरेणवोऽष्टौविज्ञेयालिक्षैकापरिमाणतः। ताराजसर्षपस्तिस्रस्तेत्रयोगौ
रसर्षपः॥ सर्षपाःषड्यवोमध्यस्त्रियवन्त्वेककृष्णलं। पञ्चकृष्णलकोमाषस्तेसुवर्णस्तुषोडश॥ पलंसुवर्णाश्चत्वारःपलानिध
रणन्दश। द्वेकृष्णलेसमधृतेविज्ञेयोरौप्यमाषकः॥ तेषोडशःस्याद्धरणम्पुराणश्चैवराजतः॥ धरणानिदशज्ञेयःशतमान

स्तु राजतः ॥ कार्षापणस्तु विज्ञेयः कार्षिकस्ताम्रिकः पणः । चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणत इति ॥ अत्र ताम्ररूप्यसु
वर्णानामिति ताम्ररूप्ययोरल्पत्वात्प्राक्प्रयोगेनानुक्रमप्रदर्शनार्थः । पलानि धरणान्दशेत्यन्तं सुवर्णपरिमाणाभिधानम् ।
चतुःसौवर्णिको निष्क इत्युक्तं रूप्यपरिमाणाभिधानम् । अवशिष्टेन ताम्रपरिमाणाभिधानम् । जालान्तरप्रविष्टे सूर्यर
श्मौ यत्सूक्ष्मं रजो दृश्यते तत्त्रसरेणुसंज्ञकं अष्टौ त्रसरेणवो लीक्षा राजसर्षपः । त्रयो राजसर्षपा गौरसर्षपः । षड्गौर
सर्षपा मध्यमो यवो न सूक्ष्मत्वं न स्थूलत्वमिति । मध्यमयवस्य परिमाणमुक्तमिताक्षरायाम् । मध्यशब्दः पादपूरणार्थः । तथा च
संपूर्णयवपरिमाणमुक्तमिति मनुभाष्ये । त्रयो यवाः कृष्णलं । माषः पञ्चकृष्णलानि । सुवर्णः षोडशमाषाः । पलं सुवर्णाश्चत्वारः
॥ धरणं दशपलानि । रूप्यमाषो द्वे कृष्णले । रजतस्य धरणं षोडशरूप्यमाषाः । अस्य च पुराण इति संज्ञान्तरं । शतमान
ः राजतदशधरणानि राजतपलसंज्ञाप्यस्य भवति । शतमानं तु दशभिर्धरणैः पलमेवं त्विति याज्ञवल्क्यस्मरणात् । पूर्वोक्तसुवर्ण
चतुष्टयपरिमित एको राजतनिष्कः । कार्षिकः कर्षसंमितः ताम्रिकस्ताम्रविकारः कार्षापणो विज्ञेयः । पण इति च संज्ञा अस्यै
व विज्ञेयेत्यर्थः । चशब्दोऽध्याहार्यः । अत एव बृहस्पतिः । निष्कं सुवर्णाश्चत्वारः कार्षिकस्ताम्रिकः पणः । ताम्रकर्षकृता मु
द्रा विज्ञेयः कार्षिकः पणः ॥ स एव चान्द्रिकाप्रोक्ता तास्त्वतस्रस्तु धानकाः ॥ ताद्वादशसुवर्णस्तु दीनाराख्यः स एव तु इति । कर्षः
पलचतुर्थांशः । तेषोडशाक्षः कर्षोऽस्त्री पलं कर्षचतुष्टयमित्यमरसिंहेनाभिधानात् । ते माषाः षोडशाक्षः कर्ष इति च संज्ञे
त्यर्थः । तेनाक्षकर्षशब्दयोः सुवर्णपरिमाणवचनत्वमित्यवगम्यते । याज्ञवल्क्यः । पले विकल्पमाह । पलं सुवर्णाश्चत्वारः प
ञ्च वापि प्रकीर्त्तितमिति । तस्य चतुर्थांशो विंशतिमाषाः तत्परिमितः कार्षापणः । अत एव कात्यायनः । माषो विंशतिभागस्तु
ज्ञेयः कार्षापणस्य तु । काकिणी तु चतुर्भागा माषकस्य पणस्य चेति । राजतोपि कार्षापणोऽस्तीत्याह नारदः । कार्षापणो दक्षिण
स्यां दिशि रौप्यः प्रवर्त्तत इति । व्यासस्तु । निष्कस्य प्रमाणमाह । पलान्यष्टौ सुवर्णास्तु ते सुवर्णाश्चतुर्दश । एतं निष्कप्रमाण

न्तुव्यासेनपरिकीर्त्तितमिति ॥ ● ॥ वर्णभेदेनदिव्यव्यवस्थामाहनारदः । ब्राह्मणस्यधटोदेयःक्षत्रियस्यहुताशनः । वैश्य
स्यसलिलन्देयंशूद्रस्यविषमेवतु । साधारणःसमस्तानांकोशःप्रोक्तोमनीषिभिः । विषंविनाब्राह्मणस्यसर्वेषांवातुलास्मृता
इति । अनित्यात्वेयंव्यवस्था । राजन्येग्निधटंविप्रेवैश्येतोयंनियोजयेत् ॥ सर्वेषुसर्वदिव्यंवाविषवर्जंद्विजोत्तमे ॥ इतिका
त्यायनस्मरणात् । व्यवस्थापक्षेवयोविशेषादिनाव्यवस्थापनीयम् । तदाहनारदः । क्लीवान्तुरान्सत्वहीनान्परितश्चार्दि
तान्नरान । बालवृद्धातुरांस्त्रींश्चपरीक्षेतधटंसदा । स्त्रीणान्तुनविषंप्रोक्तंनवापिसलिलंस्मृतम् । धटकोशादिभिस्तासाम
न्तस्तत्वंविचारयेत् । नार्मीनान्तोयशुद्धिःस्यात्नविषम्पित्तरोगिणाम् । चित्र्यन्धकुनखादीनांनाग्निकर्मविधीयते । नमज्ज
नीयाःस्त्रीवालाधर्मशास्त्रविचक्षणैः । रोगिणोयेचवृद्धाःस्युःपुमांसोयेचदुर्बलाः । निरुत्साहान्व्याधिक्लिष्टान्नानैस्तोयेनिम
ज्जयेत् ॥ सद्योमृयन्तेमज्जन्तःस्वल्पप्राणाहितेस्मृताः । साहसेप्यागतानेतान्नैवतोयेनिमज्जयेत् । नचापिहारयेदग्निन्नवि
षेणविशोधयेत् ॥ याज्ञवल्क्यः । तुलास्त्रीबालवृद्धान्धपंगुब्राह्मणरोगिणाम् । अग्निर्जलम्वाशूद्रस्ययवाःसप्तविषस्यचेति ॥
। स्त्रीमात्रजातिवयोवस्थाविशेषानादरेण । बालश्चाषोडशाद्वर्षाज्जातिविशेषानादरेण । वृद्धोऽशीतिकावरः । अन्धोने
त्रविकलः । पंगुःपादविकलः । ब्राह्मणोजातिमात्रम् । रोगीव्याधितः । एतेषांशोधनार्थेसर्वदिव्यसाधारणेषुमार्गशीर्षचै
त्रवैशाखेषुस्त्र्यादीनांसर्वदिव्यप्रसक्तौतुलैवेतिनियम्यतेनतुसर्वकालंस्त्रीणांतुलानियमःकोशादिविधानात् । अग्निःफालस्सप्त
माषश्चक्षत्रियस्य । जलमेववैश्यस्य । यवाएवार्थेशूद्रस्यविषस्यसप्तैवयवाश्चकप्रमाणलक्षणाभवन्तीत्यर्थः । ब्राह्मणस्यतुला
विधानात् । शूद्रस्यविषविधानात् । अग्निर्जलंवेतिक्षत्रियवैश्यविषयमित्यवगम्यते । अतएवपितामहः । ब्राह्मणस्यघटोदेयः
क्षत्रियस्यहुताशनः । वैश्यस्यसलिलम्प्रोक्तंविषंशूद्रस्यदापयेदिति ॥ कात्यायनेऽपि । नलोहशिल्पिनामग्निःसलिलंनाम्बुसे
विनाम् । मन्त्रयोगविदाञ्चैवविषन्दद्यात्तुनकचित् ॥ तण्डुलैर्ननियुञ्जीतव्रतिनंमुखरोगिणामिति । व्रतिनम्पयोव्रतादिनियम

स्थं। हारीतोपि॥ कुष्ठिनांवर्जयेदग्निंसलिलंश्वासकासिनां। पित्तश्लेष्मवतांनित्यंविषंचपरिवर्जयेदिति। विष्णुरपि। नश्लेष्मकारिणांव्याधितानाम्भीरूणांश्वासकासिकानामम्बुसेविनामुदकंहेमन्तशिशिरयोश्चेति। पितामहोपि। कुष्ठिनांवर्जयेदग्निंसलिलंश्वासकासिनाम्। पित्तश्लेष्मवतांनित्यंविषन्तुपरिवर्जयेत्॥ मद्यपस्त्रीव्यसनिनांकितवानान्तथैवच। कोशःप्राज्ञैर्नदातव्योयेचनास्तिकवृत्तयइति। यत्तुपितामहेनोक्तम्। सत्रतानांभृशार्तानांव्याधितानान्तपस्विनाम्। स्त्रीणाञ्चनभवेद्दिव्यंयदिधर्मस्त्ववेक्ष्यतइति। तुलेतरविषयन्तदितिकेचित्तदयुक्तम्। घटकोशादिभिस्तासामन्तस्तत्वंविचारयेदितिपूर्वोदाहृतनारदवचनेनस्त्रीणांकोशादिविधात्। तदन्यमनुविषयमित्युक्तंविज्ञानेश्वरश्रीपादैः। विज्ञानेश्वराचार्यस्तु। पुंस्त्रियोर्विवादेत्वन्यतरःकुर्यादित्यनेनपक्षेस्त्रीणामपिदीव्यप्रसक्तौपुरुषस्यैवदिव्यन्नस्त्रीणामित्येतत्परमिदं। अन्यथासर्वथातासांदिव्यनिषेधेघटकोशादिभिस्तासामन्तस्तत्वंविचारयेदित्यनेनविरोधःस्यादितिप्राहुः। कात्यायनः। गोरक्षकान्वाणिजकांस्तथाकारुकुशीलवान्। प्रेष्यान्वार्द्धुषिकांश्चैवग्राहयेच्छूद्रवद्द्विजान्। कालिकापुराणेपि। वर्णान्त्यस्यसदादेयंमायकंतप्तहेमजमिति। वर्णानामंत्यःप्रत्यंतःतस्येत्यर्थः। नारदोपि। महापराधेनिर्द्धर्मेकृतघ्नेक्लीवकुत्सिते। नास्तिकेदृष्टदोषेचशपनंनैवविवर्जयेदिति। कात्यायनोपि। मातापितृद्विजगुरुवृद्धस्त्रीबालघातिनाम्। महापातकयुक्तानांनास्तिकानांविशेषतः॥ लिंगिनाम्प्रमदानाञ्चमन्त्रयोगक्रियाविदाम्। वर्णसङ्करजातानाम्पापाभ्यासप्रवर्त्तिनाम्। एतेष्वेवाभियोगेषुनिंद्येष्वेवंप्रवर्त्तितः। दिव्यम्प्रकल्पयेन्नैवराजाधर्मपरायणः। एतैरेवनियुक्तानांसाधूनान्दिव्यमर्हति। नसन्तिसाधवोयत्रतत्रशोध्याःस्वकैर्नरैरिति। साधूनान्दिव्यमर्हति। राजाकल्पयितुमितिशेषः। प्रतिनिधिद्वाराएतैर्दिव्यङ्कारणीयमितिद्रढयितुमाहसएव। महापातकयुक्तेषुनास्तिकेषुविशेषतः। नदेयन्तेषुदिव्यन्तुपापाभ्यासरतेभृगुः। येषुपापेषुदिव्यानिकर्त्तव्यानिप्रयत्नतः। तारयेत्सज्जनैस्तानिनाभिशस्तंत्यजेन्नरइति। तारयेत्शोधयेत्। अभिशोधनप्रतिनिधिद्वाराशोधनमकारयित्वान

यजेदित्यर्थः। यनुक्तेनैवोक्तं। अस्पृश्याधमदासानां म्लेच्छानाम्पापकारिणां। प्रातिलोम्यप्रसूतानां निश्चयो न तु राजनि। न तु प्रसिद्धानि दिव्यानि संशयेतेषु निर्दिशेदिति। तन्नैनियुक्तानां साधूनामभावे विज्ञेयम्। न तु प्रसिद्धानि सर्पधटादीनि इति स्मृतिन च सेसाधूनामप्यसामर्थ्ये प्रतिनिधिमभ्युपजानातिस एव। कालदेशाविरोधेन तु यथायुक्तम्प्रकल्पयेत्। अन्येन हारयेद्दिव्यं विधिरेष विपर्ययः॥ सामर्थ्याभावे सर्ववर्णविषये विशेषमाह हारीतः। राजन्येऽग्न्यघटं विप्रे वैश्ये तोयन्नियोजयेत्। न विषं ब्राह्मणे दद्याद्विषमन्यवर्णान्तरे स्मृतम्॥ कोशस्तण्डुलधर्म्मास्तु धर्मसम्भवमेव च। पुत्रदारादिशपथान्सर्ववर्णे प्रयोजयेदिति॥ ❁ ॥ अथ दिव्यकालः। तत्र पितामहः। यो यस्य विहितो कालो विधिर्यस्य च यो यथा। तम्प्रवक्ष्यामि तत्त्वेन वाडिन स्वबलाबलं॥ चैत्रो मार्गशिरश्चैव वैशाखश्च तथैव च। एते साधारणा मासा दिव्यानामविरोधिनः॥ धटः सर्वर्त्तुकः प्रोक्तो वाते वाति विवर्जयेत्। अग्निः शिशिरहेमन्तवर्षासु परिकीर्त्तितः॥ शरद्ग्रीष्मे च सलिलं हेमन्ते शिशिरे विषमिति॥ विष्णुरपि। स्त्रीब्राह्मणविकलाऽसमर्थरोगिणां न तुलादेयानवाति वायौ न कुष्ठ्यसमर्थलोहकाराणामग्निर्देयः शरद्ग्रीष्मयोश्च न कुष्ठिपैत्तिकब्राह्मणानां विषन्देयम्प्रावृषि च। न श्लैष्मिकाणां व्याध्यर्द्दितानाम्भीरूणां श्वासकासिनामम्बुजीविनामुदकं हेमन्तशिशिरयोश्चेति। हेमन्तनिषेधोऽत्र पौषमासविषय एव न तु मार्गशीर्षविषयोपि। मार्गशीर्षस्य चैत्रो मार्गशिर इति पूर्वोदाहृतपितामहवचनेन सकलदिव्यसाधारणाभिधानात्। नारदोपि। विचार्य धर्मनिपुणैर्धर्मशास्त्रविशारदैः। धर्म्मं सर्वर्त्तुकम्प्रोक्तम्पण्डितैर्धटधारणम्॥ वर्षासु समये वह्निं हेमन्तशिशिरे तथा। ग्रीष्मे सलिलमित्युक्तम्विषं काले तु शीतले॥ न शीते तोयशुद्धिः स्यान्नोष्णकालेऽग्निशोधनम्। न प्रावृषि विषन्दद्यात्प्रवाते न तुलान्तथा॥ नापराह्णे न सन्ध्यायां न मध्याह्ने कदाचनेति। मध्याह्ने दिव्यनिषेधो जलव्यतिरिक्तविषयः। अत एव पितामहः। पूर्वाह्णेऽग्निपरीक्षा स्यात्पूर्वाह्णे च धटो भवेत्। मध्याह्ने तु जलं देयन्धर्मतत्त्वमभीप्सता॥ दिवसस्य तु पूर्वाह्णे कोशशुद्धिर्विधीयते। रात्रौ तु पश्चिमे भागे विषन्देयं सुशीतलमिति॥ अत्र विशेषतो वर्षासु निषेधात्। सिंहरवावेव परीक्षा

मात्रनिषेधाच्च दिव्यान्तरं सिंहेतरवर्षाखपि कुर्वन्ति । अतो याम्यायने हरौ सुप्ते सर्वकर्माणि वर्जयेत् दिव्यस्य न विषयः । तथा ज्योतिषे । सिंहस्थे मकरस्थे च जीवे चास्तमिते भृगौ । मलमासेन कर्त्तव्या परीक्षा जयकांक्षिणा । तथा । रविशुद्धौ गुरौ चैवम् अशुक्रे लग्नेपुनः । सिंहस्थे च रवौ नैव परीक्षा शस्यते बुधैः ॥ नाष्टम्यां न चतुर्दश्यां प्रायश्चित्तं निरीक्षणे । न परीक्षाधिनाशश्च शनिभौमदिने भवेत् इति ॥ रविशुद्धौ गुरौ चेदिव्यत्र शस्यत इति शेषः । तथा च दीपिकायाम् । न शुक्रास्ते सुष्टमेकैं गुरुसहितरवौ जन्ममासेष्टमेऽष्टे विष्टौ मासे मलाख्ये कुजशनिदिवसे जन्मतारा शुभा च । नाडीनक्षत्रहीने गुरुरविरजनीनाथताराविशुद्धौ । प्रातःकार्या परीक्षा ह्यहिनतनु चरयत्नांशोदये शस्तलग्न इति । यद्यपि दिव्ये वारविशेषविधानाभावस्तथापि शिष्टाचारात् दिव्यवारे दिव्यानि दातव्यानीति मिताक्षरायां ॥ अथ दिव्यदेशाः । तत्र पितामहः । प्राङ्मुखो निश्चलः कार्यः शुचौ देशे धटः सदा । इन्द्रस्थाने सभायां वा राजद्वारे चतुष्पथे इति । धटग्रहणं दिव्यान्तरस्याप्युपलक्षणम् । इन्द्रस्थानग्रहणञ्च प्रसिद्धदेवतायतनान्तरस्याप्युपलक्षणम् । अत एव दिव्यमात्रमुपक्रम्य नारदः । सभाराजकुलद्वारे देवायतनचत्वरे इति । विषयविशेषे इन्द्रस्थानादीनां व्यवस्थामाह । कात्यायनः । इन्द्रस्थानेऽभिशस्तानां महापातकिनां न्टणाम् । नृपद्रोहप्रवृत्तानां राजद्वारे प्रयोजयेत् ॥ प्रातिलोम्यप्रसूतानां दिव्यं देयं चतुष्पथे । अतोऽन्येषु तु कार्य्येषु सभामध्ये विदुर्बुधा इति । इन्द्रस्थाने इन्द्रध्वजपूजास्थाने । दिव्यदेशादनादरे दिव्यं विसंवदतीत्याह । नारदः । अदेशकालदत्तानि वहिर्वासकृतानि च । व्यभिचारं सदर्थेषु कुर्वन्तीह न संशयः ॥ वासो जननिवासस्तस्माद्वहिः कृतानि निर्जनप्रदेशकृतानीति यावत् । अत एव पितामह । प्रत्यक्षं न्टपतेर्यद्वा सभ्यानां वाधिकृतेऽपि वा । ब्राह्मणानां श्रुतवतां प्रकृतीनां तथैव चेति ॥ ब्राह्मणानां प्रकृतयोऽमात्यास्तेषाञ्चेत्यन्वयः ॥०॥ अथ दिव्यसाधारणविधिस्तत्र वृहस्पतिः । स्नेहात् क्रोधात् लोभतो वा भेदमायान्ति साक्षिणः । विधिदत्तस्य दिव्यस्य न भेदो जायते क्वचिदिति । विधिश्च पितामहेन दर्शितः । दिव्येषु सर्वकार्य्याणि प्राड्विवाकः समाचरेत् । अध्वरेषु यथाध्वर्युः सोपवासो न्टपाज्ञया । ततस्त्वावाह्य

यद्देवान्विधिनानेनधर्मवित् । वादित्रनृत्यघोषैश्चगन्धमाल्यानुलेपनैः ॥ प्राङ्मुखःप्राञ्जलिर्भूत्वाप्राड्विवाकस्ततोवदेत् । एह्ये
हिभगवन्धर्मअस्मिन्दिव्येसमाविश । सहितोलोकपालैश्चवस्वादित्यमरुद्गणैः । आवाह्यतुघटेधर्मपश्चादङ्गानिविन्यसेत् । य
वेकार्य्याणिसाधारणानिअसाधारणानिचतत्तत्तदुपयोगिसामग्रीसंपादनानन्तरमित्यर्थः । घटयन्त्रागमवदित्यमात्योपवस्तं
। अस्मिन्दिव्यइतिमन्त्रलिङ्गाद्देवतान्धर्मागाद्दित्यमात्रसाम्यस्य । इमंमन्त्रविधिंज्ञात्वासर्वदिव्येषुयोजयेत् । आवाहनञ्चदेवाना
न्तथैवपरिकल्पयेत्इत्युपसंहरतावेवोक्तत्वाच्च । अङ्गानिकानीत्याकांक्षायांसएवाह । इन्द्रंपूर्वेनुविन्यस्यप्रेतेशन्दक्षिणेतथा
। वरुणम्पश्चिमेभागेकुवेरञ्चोत्तरेतथा । अग्न्यादिलोकपालांश्चकोणभागेषुविन्यसेत् । इन्द्रःपीतोयमःश्यामोवरुणःस्फटि
कःप्रभः । कुवेरस्तुसुवर्णाभअग्निश्चैवसुवर्णाभः । तथैवनिर्ऋतिःश्यामोवायुर्धूम्रःप्रशस्यते । ईशानस्तुभवेद्रक्तएवंध्यायेत्क्र
मादिमान् । इन्द्रस्यदक्षिणेपार्श्वेवसून्संस्थापयेद्बुधः । धरोध्रुवस्तथासोमआपश्चैवानलोऽनिलः । प्रत्यूषश्चप्रभासश्चवसवोऽष्टौ
प्रकीर्त्तिताः । देवेशेशानयोर्मध्येआदित्यानान्तथाष्टकं । धातार्यमाचमित्रश्चवरुणोंऽशोभगस्तथा । इन्द्रोविवस्वान्पूषाचपर्ज
न्योदशमःस्मृतः । ततस्त्वष्टाततोविष्णुरजघन्योजघन्यजः । इत्येतेद्वादशादित्यानामभिःपरिकीर्त्तिताः । अग्नेःपश्चिमभागेतु
रुद्राएकादशाःस्मृताः । वीरभद्रश्चशम्भुश्चगिरिशश्चमहायशाः । अजैकपादहिर्बुध्न्यःपिनाकीचापराजितः । भुवनाधीश्वर
श्चैवकपालीचविशाम्पतिः । स्थाणुर्भवश्चभगवान्रुद्रास्त्वेकादशाःस्मृताः । प्रेतेशरक्षोमध्येचमातृस्थानप्रकल्पयेत् । ब्राह्मी
माहेश्वरीचैवकौमारीवैष्णवीतथा । वाराहीचैवमाहेन्द्रीचामुण्डागणसंयुता । निर्ऋतेरुत्तरेभागेगणेशायतनंविदुः । वरुण
स्योत्तरेभागेमरुतांस्थानमुच्यते । गगनःस्पर्शनोवायुरनिलोमरुतस्तथा । प्राणःप्राणेशजीवौचमरुतोऽष्टौप्रकीर्त्तिताः । घ
टस्योत्तरभागेतुदुर्गामावाहयेद्बुधः । एतासांदेवतानांतुस्वनाम्नापूजनंविदुः । भूषावसानंधर्मायदत्वाचार्घादिकंक्रमात् । अ
र्घादिपश्चादङ्गानाम्भूषान्तमुपकल्पयेत् । गन्धादिकांनिवेद्यान्तांपरिचर्य्यांप्रकल्पयेत् । चतुर्दिक्षुतथाहोमःकर्त्तव्योवेदपा

रणैः। आज्येन हविषा चैव समिद्भिर्होमसाधनैः। सावित्र्या प्रणवेनाथ स्वाहान्तेनैव होमयेत्। अंगानामिन्द्रादिदुर्गान्तानाम्। अर्घाद्युपकल्पनस्य न काण्डानुसमयेन। तथात्वे प्रयोगवचनावगताङ्गसहभावबाधापत्तेः। किंतु पदार्थानुसमयेन तत्र तथा च दुर्गायै भूषणान्तधर्मस्येन्द्रादिदुर्गान्तानाम् गंधादिपरिचर्यं विप्रकल्पयेदिति गायत्र्याः प्रणवादिकामुच्चार्य पुनः प्रणवं स्वाहाकारान्तमुच्चार्य समिदाज्यचरुभिः प्रत्येकमष्टोत्तरशतं जुहुयात्। अनुक्तसंख्या यत्र स्यात् शतमष्टोत्तरं स्मृतमिति स्मरणादित्यर्थः। होमानन्तरकर्तव्यमस्यैवाह। यमर्थमभियुक्तः स्यात्तं लिखित्वा तु पत्रके। मन्त्रेणानेन सहितं तत्कार्यं च शिरोगतम्। मन्त्रश्च आदित्यचन्द्रावनिलानलौ च द्यौर्भूमिरापो हृदयं यमश्च। अहश्च रात्रिश्च उभे च संध्ये धर्मश्च जानाति नरस्य वृत्तमिति॥ एतत्सर्वं पूर्वाह्णे कर्तव्यम्। तस्य प्रधानकालत्वाच्च। तथा च नारदः। अहोरात्रोपोषितस्नाते आर्द्रवाससि मानवे। पूर्वाह्णे सर्वदिव्यानां प्रदानमनुकीर्तितमिति॥ एतत्प्राड्विवाकेनोपवासादिनियमपूर्वकं कर्तव्यम्। तथा च नारदः। प्राड्विवाकस्ततो विप्रो वेदवेदाङ्गपारगः। श्रुतवृत्तोपसम्पन्नः शान्तचित्तो विमत्सरः॥ सत्यसन्धः शुचिर्दक्षः सर्वप्राणिहिते रतः। उपोषितस्त्वार्द्रवासाः कृतदन्तानुधावनः॥ सर्वेषां देवतानां च पूजां कृत्वा यथाविधिः। इति कर्तुरुपवासादिकमाह। त्रिरात्रोपोषिताय स्युरेकरात्रोपोषिताय वा। नित्यं देयानि दिव्यानि शुचये सार्द्रवाससे इति। याज्ञवल्क्योऽपि। सचैलं स्नातमाहूय सूर्योदय उपोषितं। कारयेत्सर्वदिव्यानि नृपब्राह्मणसन्निधाविति॥ अत्र सूर्योदयपदेन पूर्वाह्ण एव ग्राह्यः। पूर्वाह्णे सर्वदिव्यानां प्रदानमनुकीर्तितमिति नारदवचनानुरोधात्। त्रिरात्रैकरात्रपक्षयोः शक्ताशक्तविषयत्वेन व्यवस्था ज्ञेया दिव्यप्रयोगानन्तरं दक्षिणादानं उक्तेन विधिना दिव्यप्रयोगं कारयितुः राज्ञः फलं चाह पितामहः॥ सद्भिः परिवृतो राजा शुद्धिमेतां प्रपूजयेत्। ऋत्विक्पुरोहिताचार्यान् दक्षिणाभिस्तु तोषयेत्॥ एवं कारयिता राजा भुक्त्वा भोगान्मनोरमान्। महतीं कीर्तिमाप्नोति ब्रह्मभूयाय कल्पत इति अयं च विधिः। सर्वदिव्यसाधारण इत्याह स एव। इमं मंत्रविधिं कृत्स्नं सर्वदिव्येषु योजयेत्। आवाहनं च देवानां तथै

बपरिकीर्त्तितमिति । सर्वदेवावाहनादिसंशोध्यशिरःखिपत्रारोपणान्तं सर्वं दिव्यसाधारणमित्यर्थः । इति दिव्यमातृका ॥ ● ॥

अथ घटविधिः । तत्र पितामहः । विशालमुच्छ्रितां शुभ्रां घटशालां तु कारयेत् । यत्रस्थो नोपहन्येत श्वभिश्चाण्डालवायसैः ॥ कपाटवीजसंयुक्तां परिचारकरक्षिताम् ॥ पानीयादिसमायुक्तां मध्ये भूत्वाङ्कारयेन्नृप इति । वीजानि यवव्रीह्यादीनि । घटार्थानि काष्ठानि नारद आह ॥ खादिरं कारयेत्तत्र निर्व्रणां शुष्कवर्जितम् । शांशपं तदभावे वा शालं वा कोटरैर्विना ॥ अर्जुनं तिन्दुकीसारं तिलिसारं च चन्दनम् । एवंविधानि काष्ठानि घटार्थं परिकल्पयेत् । अर्जुनस्तिलकोशोकस्तिलिशारकश्चन्दनमिति माधवीये पाठः ॥ शांशपमिति पठित्वा व्याख्यातं शांशपं शिंशपावृक्षसम्बन्धि । देविकाशिंशपेति पाणिनिस्मरणादिकारस्याकारः । एवंविधानीत्यन्यस्यापि उदुम्बरादेर्यज्ञियस्य काष्ठस्य ससारस्य ग्रहणम् । अत एव पितामहः । छित्वा तु यज्ञियं काष्ठं यूपवन्मन्त्रपूर्वकम् । प्रणम्य लोकपालेभ्यस्तुला कार्य्या मनीषिभिः ॥ मन्त्रः सौम्यो वानस्पत्यः छेदने ज्ञ एव चेति । यूपवन्मन्त्रपूर्वकमित्यनेन ॐ ओषधे त्रायस्वैनमित्यादिच्छेदनमन्त्रप्रयोगादिकमुक्तम् । वानस्पत्यः वनस्पते शतवल्शो विरोहेति मन्त्रः । छेदने ज्ञ इति शेषः । वानस्पत्यच्छेदनानन्तरं प्रयोगे यूपवदित्यतिदेशात्सिद्धेऽपि पुनर्विधानं औपदेशिकस्य सौम्यदैवत्येनातिदेशिकस्य तस्य बाधनिवृत्त्यर्थम् । अत्र जप एव चेति चशब्दः सौम्यवानस्पत्ययोरनेनान्वयात् तस्य च समुच्चयद्योतकत्वात् समुच्चय इति केचित् । सौम्यवानस्पत्ययोरेकार्थत्वात् । तुल्यार्थस्तु विकल्पे रश्मियनेन मा येन व्रीहियवादिकल्पइत्यपरे । पितामहः । प्राङ्मुखो निश्चलः कार्य्यः शुचौ देशे घटः सदा । इन्द्रस्थाने सभायां वा धर्मस्थाने चतुष्पथ इति । घटनिर्माणप्रकारं तत्प्रमाणञ्चाह पितामहः । चतुर्हस्ता तुला कार्य्या पादौ कार्य्यौ तथाविधौ । अन्तरं तु तयोर्हस्तौ भवेदध्यर्द्धमेव चेति ॥ पादौ तुलाधारकाक्षनामककाष्ठधारणार्थौ स्तम्भौ तथाविधौ चतुर्हस्तौ । अन्तरं मध्यम् । अध्यर्द्धं सार्धहस्तद्वयम् । अक्षकाष्ठस्य प्रमाणं पादस्तम्भमध्यप्रमाणाभिधानेनैव सूचितमिति न पृथगुपन्यस्तम् । अन्तरालप्रमाणपर्य्यालोचनया ततः

किञ्चिदधिकमष्टकाष्ठकर्णव्यम्। पादस्तम्भयोर्मस्तकप्रदेशाद्यावद्बहिर्निःसरति तथा मध्यकाष्ठकार्यमिति स्मृतिचन्द्रिका
याम्। अत्र निखातभागपरित्यागेन पादस्तम्भयोश्चतुर्हस्तत्वाभिधानं ज्ञेयम्। अत एव पितामहः। हस्तद्वयं निखेयन्तु पाद
योरुभयोरपीति। व्यासोपि। हस्तद्वयं निखेयन्तु प्रोक्तं मुण्डकयोर्द्वयोः। षड्ढस्तन्तु तयोः प्रोक्तम्प्रमाणम्परिमाणतः॥ इ
ति मुण्डकौ पादस्तम्भौ। हस्तप्रमाणन्दर्शितं कालिकापुराणे। यवास्त्वष्टतण्डुलैरेकमङ्गुलञ्चाष्टभिर्भवेत्। अष्टौ यवैर्मितैर्ह
स्तश्चतुर्विंशतिरङ्गुलैः॥ इति स्मृत्यन्तरेपि। तिर्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः। प्रमाणमङ्गुलीकं हि वितस्तिर्द्वादशा
ङ्गुलः॥ शारदातिलके। चतुर्विंशत्यङ्गुलात्मं हस्तं तत्त्वविदो विदुः। यवानामष्टभिः क्लृप्तं मानमङ्गुलमीरितमिति॥ ह
स्तो वितस्तिद्वितयमिति। हस्तो वितस्तिद्वितयो चतुर्विंशत्यङ्गुलो हस्त इत्यर्थः॥ यवानां यवमध्यानामित्यर्थः। यवानामधु
षैरिति स्मरणात्। तुलाया विशेषान्तरमाह पितामहः। चतुरस्रा तु सा कार्या दृढा रज्ज्वी तथैव च। कटकानि च देयानि त्रि
षु स्थानेषु यत्नतः इति। कटकानि लोहमयानि बन्धनानि। त्रिषु स्थानेषु मध्ययोर्मध्ये। कटकग्रहणं लोहकीलादीनामुपयु
क्तानामुपलक्षणम्। नारदोपि। रज्ज्वी घटस्तुला कार्या खादिरी तैन्दुकी तथा। चतुरस्रा त्रिभिस्थानैर्घटकर्कटकादिभि
रिति॥ घटोमध्यम्। कर्कटकौ अन्त्यौ पादस्तम्भादीनां स्वरूपानुविशेषानभिधानात्॥ यावती स्यात्तथोदरादूर्ध्वमिता मध्ये
वकार्या। शिष्टाचारादिविशेषोत्येयः। पादस्तम्भावुदग्दक्षिणसंस्थानौ तत्र तुलाप्राग्भावा कार्या। पश्चिमे तोरणं कुर्यात्तन्त्र
न्यस्मिन्नू नियतामिति पितामहस्मरणात्॥ पूर्वपश्चिमसंस्थानौ तत्त्वोदग्भावा वा कार्याः। धारयेदुत्तरे पार्श्वे पुरस्तात्दक्षि
णिलामिति नारदस्मरणात्। घटाङ्गत्वेन तोरणादिकं कार्यमित्याह पितामहः। तोरणौ तु तथा कार्यौ पार्श्वयोरुभयोरपि।
घटादुच्चतरे स्यातां नित्यं दशभिरङ्गुलैः॥ अवलम्बौ तु कर्तव्यौ तोरणाभ्यामधोमुखौ। मृन्मयौ सूत्रसम्बद्धौ घटमस्तकचुम्बि
नाविति॥●॥ घटारोहणमाह नारदः। शिक्यद्वयं समासज्य घटकर्कटयोर्दृढम्। एकस्मिंस्तुलयेत्पुरुषमन्यत्र तुलयेच्छिलां। धा

रयेदुत्तरे पार्श्वे पुरुषन्दक्षिणे शिलाम् । पिटकम्पूरयेत्तस्मिन्निष्टकापांशुलोष्टकैरिति । इष्टकाभिर्ग्रावभिः पांसुभिर्लोष्टैर्वा-
र्थः । माषशिलाभिरपि पिटकम्पूरयेत् । माषसप्तमथापि वेति स्मृत्यन्तरवचनात् । पितामहोऽपि । शिक्यद्वयं समासज्य पार्श्व-
योरुभयोरपि । प्राग्यानकल्पयेद्भीरस्तत्र विप्रसमाहितः । पश्चिमे तोलयेत्कर्तॄनन्यस्मिन्मृत्तिकां शुभाम् ॥ इष्टकाभस्मपा-
षाणकपालास्थिविवर्जितामिति ॥ अत्रेष्टकापाषाणयोर्वैकल्प्येनोक्तिः । समुच्चयनिराकरणार्था न तु विकल्पनिराकरणार्था
॥ पूर्वोदाहृतनारदवचने तयोरपि विधानात् । एतेन मृत्तिकापाषाणादीनां सम्भूय तोलनकर्तृत्वमिति मतमपास्तम् । मृत्तिका-
शिलेष्टकादीनामेकार्थत्वात्तुल्यार्थास्तु विकल्पेरन्निति न्यायेन विकल्प इति मिताक्षरायाम् । विष्णुरपि । अथैकस्मिन्शिक्ये पुरुषमा-
रोपयेत् । द्वितीये प्रतिमानं शिलादीति । समतां निरीक्ष्य यावद्येरास्थानं तद्विन्दौ नियोक्तव्यः । तथा च पितामहः । परीक्षकानि-
योक्तव्यास्तुलामानविशारदाः ॥ वणिजो हेमकाराश्च कांस्यकारास्तथैव चेति । नियुक्तांश्च नियोक्तेरन्नित्याह नारदः । सुवर्ण-
कारवणिजाः कुशलाः कांस्यकारकाः । तान्तुलामन्ववेक्षेरन्नतुलाधारणादिद इति । निरीक्षणीयमप्याह पितामहः । का-
र्य्यः परीक्षकैर्नित्यमवलम्बसमो घटः । उदकञ्च प्रदातव्यं घटस्योपरि पण्डितैः ॥ यस्मिन्नप्लवते तोयं स विज्ञेयः समो घट इ-
ति । अवलम्बसमः तोरणयोर्बध्यमानौ यौ मृण्मयावलम्बौ तयोः समः । नारदोऽपि । प्रथमारोहणे योऽस्य प्रमाणमभिपूर्वकः । तु-
लाशिरोभ्यान्तुल्यं तु तोरणाभ्यन्तरकक्षयामिति । तोलनानन्तरं कर्तव्यम्पितामह आह । तोलयित्वा नरम्पूर्वं पश्चात्तमवतार्य तु ।
घटं तु कारयेन्नित्यम्पताकाध्वजशोभितम् ॥ ततस्त्वावाहयेद्देवान्विधिनानेन मन्त्रवित् । वादित्रतूर्य्यनिर्घोषैर्गन्धमाल्यानुलेप-
नैः । प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततो वदेदिति । विवादानुरूपं प्रश्नं पृच्छतीति प्राट् तद्विवेचयतीति विवाकः प्राट्
चासौ विवाकश्च प्राड्विवाकः । ततोऽभियुक्तं तोलयित्वाऽवतार्य धर्मावाहनादारभ्याभियुक्तशिरःपत्रबन्धनान्तं तुलाधारणवि-
धिं कुर्यात् । घटपूजायाङ्गन्धादिविशेषन्नारद आह । रक्तैर्गन्धैश्च माल्यैश्च दध्यपूपाक्षतादिभिः । अर्चयेत्तु घटं पूर्वं तत-

शिष्टांस्तुपूजयेदिति । शिष्टानवशिष्टानिन्द्रादीन् । एवंबन्धनानन्तरंमंत्रयेतप्राड्विवाकइत्याहपितामहः । धटमामंत्र
येच्चैवविधिनानेनशास्त्रवित् । विधिनामन्त्रेणशास्त्रवित्प्राड्विवाकःमंत्रश्चानेनैवदर्शितः । त्वंधटब्रह्मणासृष्टःपरीक्षार्थंदुरा
त्मनाम् । धकाराद्धर्ममूर्तिस्त्वंटकारात्कुटिलंनरम् । धृतोधारयसेयस्माद्धटस्तेनाभिधीयसे ॥ त्वंवेत्सिसर्वभूतानांपापानि
सुकृतानिच । त्वमेवदेवजानीषेनविदुर्यानिमानवाः । व्यवहाराभिशस्तोयंमानुषःशुद्धिमिच्छतीति । शोध्यस्याभिमन्त्रण
मप्याह । याज्ञवल्क्यः । तुलाधारणविद्वद्भिरभियुक्तस्तुलाश्रितः । प्रतिमानसमीभूतोरेखांकृत्वावधारितः ॥ त्वन्तुलेसत्यधा
मासिपुरादेवैर्विनिर्मिता । तत्सत्यंवदकल्याणिसंशयान्मांविमोचय । यद्यस्मिपापकृन्मातस्ततोमान्त्वमधोनय । शुद्धश्चेद्गम
योर्ध्वंमांतुलामित्यभिमन्त्रयेदिति । तुलाश्रितःतुलामारूढः । प्रतिमानसमीभूतः । प्रतिमानेनमृदादिनासमीकृतः । रेखांकृ
त्वावतारणेसाम्यचिह्नंकृत्वाभिमंत्रणमेवावतारणानन्तरंकार्यमवतारितइतिव्यक्तदर्शनात्ततःप्राड्विवाकःतुलाधारकंश
पथैर्नियम्यशिरोगतपत्रकम्पुनर्धटमारोपयेत् । अतएवनारदः । समयैःपरिगृह्याथपुनरारोपयेन्नरम् । निर्वातेवृष्टि
रहितेशिरस्यारोप्यपत्रकमिति ॥ समयैःशपथैःपरिगृह्यनियम्य । तेचविष्णुनादर्शिताः । ब्रह्मघ्नायेस्मृतालोकायेलो
काःकूटसाक्षिणः । तुलाधारस्यतेलोकास्तुलांधारयतोमृषेति । पुनरारोहणकालेऽभिमंत्रणमाहनारदः । त्वंवेत्सिसर्वभू
तानाम्पापानिसुकृतानिच । त्वमेवदेवजानीषेनविदुर्यानिमानवाः । व्यवहाराभिशस्तोयंमानवस्तोल्यतेत्वयि । तदेनंसंश
यारूढन्धर्मतस्त्रातुमर्हसि ॥ देवासुरमनुष्याणांसत्येत्वमभिषिच्यसे । सत्यसन्धोसिभगवन्शुभाशुभविभावने । आदित्यच
न्द्रावनिलोनलश्चद्यौर्भूमिरापोहृदयंयमश्च । अहश्चरात्रिश्चउभेचसंध्येधर्मश्चजानातिनरस्यवृत्तमितिमन्त्रोच्चारणानन्त
रङ्कर्तव्यम्पितामहआह । ज्योतिर्विद्ब्राह्मणश्रेष्ठःकुर्यात्कालपरीक्षणम् । विनाड्यःपञ्चविज्ञेयाःपरीक्षाकालकोविदैः । सा
क्षिणोब्राह्मणाःश्रेष्ठाःयथादृष्टार्थवादिनः । ज्ञानिनःशुचयोलुब्धानियोक्तव्यान्नृपेणतु । यंसंतिसाक्षिणःश्रेष्ठाःशुद्ध्यशुद्ध्यन्नृपे

नहेति। दशगुर्वक्षरोच्चारणकालः प्राणःतेषट्विनाडिकाः। तथाचस्मृत्यंतरम्। दशगुर्वक्षरःप्राणःषट्प्राणाःस्याद्विनाडि
केति। विष्णुधर्मोत्तरेपि। लघ्वक्षरसमामात्रानिमेषःपरिकीर्तितः। अतःसूक्ष्मतरःकालोनोपलभ्योभृगूत्तमः॥ द्वौनिमेषौ
त्रुटिर्ज्ञेयाःप्राणोदशत्रुटिःसमः। विनाडिकास्तुषट्प्राणास्तत्षष्ट्यानाडिकाःस्मृताः॥ अहोरात्रंतुतत्षष्ट्यानित्यमेवप्रकीर्तित
मिति॥ कातिपुनर्जयपराजयचिह्नानीत्यपेक्षायामाहनारदः। तुलितोयदिवर्द्धेतविशुद्धःस्यान्नसंशयः। समोवाहीयमा
नोवानविशुद्धोभवेन्नरइति॥ वर्द्धेतऊपरिगच्छेत्। हीयमानःअधोगच्छेत्। यत्पुनरुक्तंपितामहेन। तुलितोयदिवर्द्धेत
शुद्धोभवतिधर्मतः। हीयमानोनशुद्धिःस्यादेकेषान्तुसमोशुचिः॥ अल्पपापःसमोज्ञेयोवहुपापस्तुहीयतइति। अल्पत्वं
व्यभिचारेसमालिङ्गनादिनाचौर्येनद्देशगमनादिनातत्रएकेषामितिपूजार्थेनतुसमतेसमस्याशुचित्वद्योतनार्थं अल्पपा
पिनोप्यशुचित्वात्। तेनहीयमानसमयोर्नकश्चिद्विशेषः। दण्डंप्रायश्चित्तेपरविशेषस्तयोर्दोषानुसारित्वात्। यत्तुकेचि
देकेषांतुसमोशुचिरितिवचनम्। अल्पपापःसमोज्ञेयइतिवचनंसाम्येसंशयपरमेवेत्युक्तन्तक्लिष्टकल्पनयावाक्यानार्जवा
त्तैरुपेक्षणीयम्। यत्तूक्तंवृहस्पतिना। घटेभियुक्तस्तुलितोहीनस्त्वेद्धानिमाप्नुयात्। तत्समस्तुपुनस्तोल्योवर्द्धितोवि
जयीभवेदिति। अयमर्थः। पुनर्दैवतावाहनाद्युंगसहितंसर्वेकर्मविधानात्तोलनीयइतिसमस्याशुचित्वनिश्चयेनप्रथ
मतोलनपर्यायेकार्यः। किंतुपुनस्तोल्यमानस्यसमत्वेवयदिभवतितदाअशुद्धिरवधारणीयेत्यर्थइतिस्मृतिचन्द्रिकायाम्
। यत्तुकैश्चित्तस्मिन्नेवप्रयोगेतोलनमुक्तंप्रधानावृत्तावङ्गावृत्तिरितिन्यायेनतोलनस्यफलसम्बन्धेनप्रधानत्वात्तदावृत्तौदेवतावा
हनाद्यङ्गानामप्यावृत्तेरेवोचितत्वात्। शिक्यादिच्छेदेपिपुनःसमीकृत्यतोलनीयइत्याह। कात्यायनः। शिक्यच्छेदेतुलाभङ्गेत
थाचापिगुणस्यवा॥ शुद्धेस्तुसंशयेचैनम्परीक्षेतपुनर्नरमिति॥ शुद्धिसंशयकारिण्याहनारदः। तुलाशिरोभ्यामुद्भ्रान्तविच
लन्यस्तलक्षणं। यदावायुप्रणुन्नस्यात्तदानैकतरम्वदेदिति। अयमर्थः। यदातुलांतौतिर्यक्चलितौयदाचसमताज्ञानार्थं

न्यस्तं चिह्नमयेति यदा च वायुना प्रेरितानुलाऊर्ध्वमधश्च कम्पते तदा जयमपराजयश्च नवदेदिति । व्यासोपि । कक्षच्छेदे तुलाभ
ङ्गे घटकर्कटयोस्तथा । रज्जुच्छेदे क्षभंगे वा दद्याच्छुद्धिं पुनर्न्नपइति । कक्षं शिक्यतलं कर्कटौ तुलोपान्तस्थौ शिक्याधारवीवद्ध
नौ कर्कटशृंगसन्निभौ लोहकीलकौ । अक्षः पादस्तंभयोरुपरिनिहितस्तुलाधारपट्टइति मिताक्षरा । दार्ढ्यं प्रयोजकः कोवष
इति तुलायुधः । यत्तु बृहस्पतिवचनं । कक्षच्छेदे तुलाभङ्गे घटकर्कटयोस्तथा । रज्जुच्छेदे क्षभंगे च तथैवाशुद्धिमाप्नुयादिति ।
तदाकस्मिककक्षच्छेदादिविषयं । कात्यायनवचनं तु दृश्यमानकारणकशिक्यच्छेदादिविषयमिति विज्ञानेश्वराचार्यादयः ॥ इति
घटविधिः ॥७॥ अथाग्निविधिः । तत्र पितामहः । अग्नेर्विधिं प्रवक्ष्यामि यथावच्छास्त्रचोदितं । कारयेन्मण्डलान्यष्टौ पुरस्तान्न
वमन्तथा ॥ आग्नेयं मण्डलं त्वाद्यं द्वितीयं वारुणन्तथा । तृतीयं वायुदैवत्यं चतुर्थं यमदैवतम् ॥ पञ्चमं त्विन्द्रदैवत्यं षष्ठं कौबेर
मुच्यते । सप्तमं सोमदैवत्यमष्टमं सर्वदैवतं ॥ पुरस्तान्नवमं यत्तु तन्महत्पार्थिवं विदुः । गोमयेन कृतानि स्युरद्भिः पर्युक्षितानि चेति
। सावित्रं त्वष्टमं तथा । नवमं सर्वदैवत्यमिति दिव्यविदो विदुरिति मिताक्षरायां पाठः । प्रख्यातदेवतायतनादिपूर्वोक्तदिव्यप्रदेश
भूशुद्धिं सम्पाद्य तत्त्वं प्राड्विवाकः सोपवासो न्दपाह्वया प्रवृत्तो नव मण्डलानि कुर्यात् । तानि च प्राक्संस्थानि कर्त्तव्यानि । पुरस्ता
न्नवममित्यष्टानां मण्डलानां पूर्वभागेन नवममण्डलस्य कर्त्तव्यताभिधानात् । पश्चिमे मण्डले स्थितं चेति वक्ष्यमाणवचनविज्ञाना
॥ तानि चाष्टौ क्रमेणाग्न्यादिदैवत्यानि । नवमं महत् मण्डलान्तरापेक्षयाऽधिकपरिमाणमपरिमितांगुलं पार्थिवं पृथिवी
दैवत्यमनु मण्डलानामग्न्यादिदैवत्यत्वं न सम्भवति । तत्प्रकाशकाभावात् । तदुद्देशेन क्रियमाणत्वाभावाच्चेति चेन्न प्रेतुचेन्तु
क्रमशः प्रह्मणइति न्यायेन आग्नेयेत्यादि देवतानाद्धितन्ताल्लक्षणं समसंख्यावलेनाग्न्यादिदेवतापूजनस्थानत्वेनाग्न्यादिदैवत्य
स्य सम्भवात् । अतस्तेष्वग्न्यादिदेवतापूजनं कार्यं । मण्डलपरिमाणं स एवाह । द्वात्रिंशदङ्गुलं प्राहुर्मण्डलं मण्डलान्तरम्
अष्टभिर्मण्डलैरेवमंगुलानां शतद्वयं ॥ षट्पञ्चाशत्समधिकं भूमेस्तु परिकल्पनेति ॥ मण्डलान्तरं अन्यमण्डलं सामाराम्नमेकैक

मण्डलं द्वात्रिंशदंगुलं । एवञ्चान्तरालसहितैरष्टभिर्मण्डलैरंगुलानां षट्पञ्चाशदधिकं शतद्वयं भवति नवममण्डलस्यापरिमि
तांगुलकत्वाद्गणनानर्हं मण्डलं सान्तरालं द्वात्रिंशदङ्गुलं । नवममण्डलं षोडशाङ्गुलान्तदन्तरालन्तथा च याज्ञवल्क्यः । षोडशाङ्गुलकं
ज्ञेयं मण्डलं तावदन्तरमिति ॥ तावत्षोडशांगुलं चान्तरं मध्यम् । यत्तु नारदवचनं । अतःपरं प्रवक्ष्यामि विधिमग्नेर्यथोदितम् ।
द्वात्रिंशदंगुलं प्राक्च मण्डलं मण्डलान्तरं ॥ अष्टाभिर्मण्डलैरेवमंगुलानां शतद्वयम् । चत्वारिंशत्समधिकम्भूमेरंगुलमानतइति
॥ तत्र नवमाष्टमयोरङ्गुलयोर्यदन्तरालं षोडशाङ्गुलन्तस्यागन्तव्यत्वादनन्तराभावेनांगुलानाम्परिगणनमिति न कश्चिद्विरोधः ।
यत्तु कल्पतरुकारेणैतदेव वाक्यं चतुर्विंशतिरङ्ख्याताभूमेस्तु परिकल्पनेति पठितन्तत् षोडशांगुलस्य प्रथमावस्थानं मण्डलत्वसां
गत्वेन तदप्यनन्तर्भावगम्यभूमेरंगुलानाम्परिगणनविषयमिति न कश्चिद्विरोधः ॥ यदा तु दिव्यकर्त्तुःपदं षोडशांगुलादधि
कन्तदा तत्पदसंमितं मण्डलं अवशिष्टांगुलमन्तरालमित्येवं द्वात्रिंशदंगुलता सम्पादनीया । तथा च नारदः । मण्डलस्य प्रमा
णं तु कुर्यात्तत्पदसंमितमिति । पितामहोऽपि । कर्त्तुःपदसमङ्कार्यं मण्डलन्तु प्रमाणतइति । अंगुलप्रमाणं तु तिर्यग्यवोदरान्यष्टावि
त्यादिना षड्विधिप्रकरणे दर्शितं । यत्तु विष्णुवचनं । षोडशांगुलन्तावदन्तरं मण्डलसप्तकं कुर्यादिति । तद्गन्तव्यमण्डल
विषयम् । सप्त मण्डलानि शनैर्व्रजेदिति याज्ञवल्क्यवचनेन समानार्थकं ज्ञेयम् । यत्तु रत्नाकरे एतच्च मण्डलसप्तकं
मण्डलाष्टकलङ्घनासामर्थ्ये इत्युक्तं तदयुक्तं । पश्चिमे मण्डले स्थित्वा प्राङ्मुखः प्राञ्जलिः शुचिरिति वचनेन अष्टमं मण्डलं गात्रानव
मे निःक्षिपेदुध इति वचनेन च मण्डलसप्तकलङ्घनस्यैवोक्तत्वेन मण्डलाष्टकलङ्घनस्यानुक्तत्वात् । प्रोक्षितेष्वेतेषु प्रागग्राः कुशाः
प्रस्तरणीयाः । तथा च पितामहः । मण्डले मण्डले देयाः कुशाः शास्त्रप्रचोदिताः । विन्यसेच्च पदङ्कुर्वन्तेषु नियमितिः स्थितिरि
ति । ततः प्राड्विवाकः प्रथममण्डलाद्दक्षिणतो लौकिकमग्निं प्रतिष्ठाप्य शांतिहोमङ्कुर्यात् शांत्यर्थं जुहुयादग्नौ घृतमष्टोत्तरं शतमि
ति स्मरणात् । होमश्चाग्नये स्वाहा पावकाय स्वाहेत्यनेन मन्त्रेण कुर्यादित्युक्तं व्याख्यातृभिः । ततस्तस्मिन्नयोलोहकारात्पिंडनाप

येत्। तथा च नारदः। आयसं लोहकारेण कुशलेनाग्निकर्मणि। दृष्टप्रयोगश्चान्यत्र तेनायोऽग्नौ प्रतापयेत्। अग्निवर्णमयःपिण्डं सस्फुलिङ्गं सुरक्षितमिति॥ सुरक्षितं झाटडाबादिस्पर्शाद्यथा न सम्पद्यते तथा रक्षितमयःपिण्डस्य परिमाणादि कल्पितामहस्त्वाह। अखहीनसमं कृत्वा अष्टाङ्गुलमयोमयं। पिण्डं तु तापयेदग्नौ पञ्चाशत्पलिकं समामिति। सममखहीनं। समन्ततः कोणरहितं समवृत्तमिति यावत्। अष्टाङ्गुलं अष्टाङ्गुलविस्तारम्पञ्चाशत्पलिकम्पञ्चाशत्पलपरिमितं समन्तापयेदित्यन्वयः। सर्वतस्तापयेदित्यर्थः॥ यत्तु। शताद्धपलिकं वृत्तं द्वादशाङ्गुलमायतं। लोहमग्निमयं ध्वान्तं देयं राज्ञाभिशापिन इति कालिकापुराणे लोहपिण्डस्य द्वादशाङ्गुलायामत्वमुक्तन्तदष्टाङ्गुलेन सह विकल्पितं ज्ञेयं। यत्तु शंखलिखिताभ्यां। अथवा सप्ताश्वत्थपत्रान्तरितं षोडशपलमपि अग्निवर्णं लोहपिण्डम्मञ्जलिमादाय सप्तमपदमर्यादं क्षिपेदिति पिण्डस्य षोडशपलत्वमुक्तन्तदपि वैकल्पिकम्। सप्तमपदमपीदं सप्तममण्डलं यावत्। अभिविधिपरश्चैवमर्यादाशब्दः। केचित्तु षोडशपलसंख्या असामर्थ्ये इत्याहुः। इदञ्च पिण्डप्रतापनं त्रिः कर्तव्यम्। अग्निवर्णमयःपिण्डं सस्फुलिङ्गं सुरक्षितं। पञ्चाशत्पलकम्भूयः कारयित्वा शुचिर्द्विजः॥ तृतीयतापे तप्यन्तं ब्रूयात्सत्यपुरस्कृतमिति नारदवचनेन तृतीयतापेन तप्यन्तमिति लिङ्गात्। सुतप्तमयःपिण्डमुदके निःक्षिप्य पुनः सन्ताप्योदके निःक्षिप्य पुनः प्रतापनम्। तस्मिन्काले प्राड्विवाको धर्मावाहनादि शोध्यशिरःपत्रारोपणान्तं साधारणविधिं कुर्यात्। वह्निपूजायाञ्चन्दनादिविशेषः कल्पितामहस्त्वाह। तत्र पूजां कृताशस्य कारयेन्मनुजाधिपः। रक्तचन्दनमाल्यैश्च रक्तपुष्पैस्तथैव चेति। तत्राचार्यः पिण्डाग्नौ कृताशस्य आवाहितस्य धर्मरूपस्याग्नेः ततः शोध्यकर्तव्यमाह हारीतः प्राङ्मुखस्तु ततस्तिष्ठेत्प्रसारितकराङ्गुलिः। आर्द्रवासाः शुचिस्त्वेवं शिरस्यारोप्यपत्रकमिति। अवस्थितिश्च प्रथमे मण्डले कर्तव्येत्याह पितामहः। प्रथमे मण्डले तिष्ठेत्प्राङ्मुखः प्राञ्जलिः शुचिरिति। तत्रस्थितस्य करशोधनीयावित्याह स एव। लक्षयेयुः क्षतादीनि दुस्तपोस्तस्य कारिणामिति॥ कारिणः नियुक्ताः पुरुषाः। नारदोपि। लक्षयेत्सर्वचिह्नानि हस्तयोरुभयोरपि। प्राक्तनानीव गूढानि सत्र

शान्यग्रणानि चेति। शोधनप्रकारं विष्णुराह। करौ विमृदितव्रीहीनस्मादावेव लक्षयेदिति। विमृदितव्रीहयो याभ्यां तौ व्रीहि मर्दनकर्त्तारौ यथावस्थितरूपज्ञानार्थं एवं शोधितयोर्गणादि चिह्नेषु तत्तत्प्राक्स्थितत्वज्ञानार्थं मलक्षादिरसेन तेषाञ्चिह्नकर्म ण्यमिति नारद आह। हस्तक्षतेषु सर्वेषु कुर्यादङ्कं सपदानि तु। तान्येव पुनरालक्ष्येद्धस्तौ विन्दुविचित्राविति। तानि प्राक्कृत चिह्नानि पिण्डधारणानन्तरम्। ततः प्राड्विवाककार्यं याज्ञवल्क्य आह। करौ विमृदितव्रीहेर्लक्षयित्वा ततो न्यसेत्। सप्ताश्वत्थ स्यपत्राणि अवत्सूत्रेणावेष्टयेदिति॥ तावत्तावत्कृत्वः सप्तकृत्वः सूत्रेणावेष्टयेदिति तावदित्यस्य क्रियाविशेषणत्वमङ्गीकार्य्योक्तो र्थोमितान्नमयाम्नावतां सूत्राणां समाहारस्तावत्सूत्रं तेन सप्तभिस्सूत्रैर्वेष्टयेदित्यर्थः। सप्तभिः सूत्रतन्तुभिरिति वक्ष्यमाण नारदादिवचनसम्वादोपि प्रतिभाति तावत्कृत्वः संख्याग्रहस्तेन समाहारे द्विगुः स्त्रीलिङ्गत्वाभावाच्चनङीप् त्रिभुवनमितिवत्। स प्तकृत्वो वेष्टनन्तु वचनाभावेपि शिष्टाचारतः कर्त्तव्यमिति मदनरत्ने वेष्टनद्रव्यमश्वत्थपत्रहस्तयोः सूत्रद्रव्यमुक्तमित्याह। ना रदः। वेष्टयीत सितैर्हस्तौ सप्तभिः सूत्रतन्तुभिरिति। अश्वत्थपत्राणि सप्तापि समानानि तथा च स्मृतिः। पत्रैरञ्जलिमापूर्य चाश्वत्थैः सप्तभिः समैरिति। शमीपत्रादीन्यप्यश्वत्थपत्राणामुपरि स्थापयेत्। तथा च स्मृतिः। सप्तपिप्पलपत्राणि शमीपत्रा ण्यथाक्षतान्। दूर्वायाः सप्तपत्राणि दद्यात्तांश्चाक्षतान्न्यसेदिति। पुष्पाणि च तत्र स्थापनीयानि। तथा च पितामहः। सप्त पिप्पलपत्राणि अक्षतान्सुमनो दधि। हस्तयोर्न्निःक्षिपेत्तत्र सूत्रेणावेष्टनं तथेति। सूत्रेणावेष्टनं तथेति सुमनसः कुसुमानि। सूत्रेणेति जातावेकवचनं यत्तु स्मृत्यन्तरं। अथ सप्तं तु पाणिभ्यामर्कपत्रैस्तु सप्तभिः। अक्षताहितं हरन्नद्भुक्लदग्धः सप्तमे पद इति। तदश्वत्थपत्राभावेऽर्कपत्रविधायकं ज्ञेयं। अश्वत्थपत्राणां पितामहप्रशंसावचनेन मुख्यत्वावगमात्। पिप्पलाज्जायते व ह्निः पिप्पलो वृक्षराट् स्मृतः। अतस्तस्य तु पत्राणि हस्तयोर्न्निःक्षिपेद्बुध इति। ततस्तप्तलोहपिण्डे प्राड्विवाकस्त्वग्निमावाह्याग्नि मभिमन्त्रयेत्। त्वमग्ने वेदा इत्यनेन मन्त्रेणेत्याह पितामहः। तापिते तु ततः पश्चादग्निमावाहयेच्छुचिः। आवाहनन्तु देवानां

त्वापूर्वविधानवित् ॥ त्वमग्नेवेदाश्चत्वारस्त्वंचयज्ञेषुहूयसे । त्वंमुखंसर्वदेवानांत्वंमुखंब्रह्मवादिनाम् ॥ जठरस्थोहिभूतानां
ततोवेत्सिशुभाशुभं । पापात्पुनासिवैयस्मात्तस्मात्पावकउच्यते । पापेषुदर्शयात्मानमर्चिष्मान्भवपावक । अथवाशुद्धभावेन
शान्तोभवहुताशन ॥ त्वमग्नेसर्वभूतानामन्तश्चरसिसाक्षिवत् । त्वमेवदेवजानीषेनविदुर्यानिमानवाः ॥ व्यवहाराभिशस्तोऽयं
मानुषःशुद्धिमिच्छति । तदेनंसंशयादस्माद्धर्मतस्त्रातुमर्हसि इति । विष्णुस्तु । त्वमग्नेसर्वभूतानामित्यादिधर्मतस्त्रातुमर्हसि
इत्यन्तम्पितामहवचनवदेवाभिमन्त्रमाह । तदस्यमन्त्रस्यसमर्चनाभिमन्त्रणसाधनत्वंनतुविकल्पनेनप्रार्थनीयार्थस्यशोध्य
व्यक्तिविशेषनिष्ठतयाप्रकाशनेनभिन्नकार्यत्वात् । पितामहेनएकवाक्यतयापठनाच्च । यत्तु । तृतीयतापेतप्यन्तंब्रूयात्सत्यपुर
स्कृतम् । ऋषिभिस्मानवंधर्मैर्लोकपालैरधिष्ठितं । त्वमग्नेसर्वदेवानाम्पवित्रंपरमंमुखं । त्वमग्नेसर्वभूतानांहृदिस्थंवेत्सिचेष्टि
तं । सत्यान्हतेचजिह्वायास्त्वत्तःसमुपलभ्यते । वेदादिभिरिदम्प्रोक्तंनान्यथाकर्तुमर्हसि । अनेनादाविदम्प्रोक्तंमिथ्याचेदमसौ
वदेत् । सर्वथाचयथामिथ्यातथाग्निंधारयाम्यहम् । सत्यएषत्वांधारयतिसत्येनानेनमानवः । सत्यवाक्यस्यचास्यत्वंशीतोभवहुता
शन । मृषावाक्यस्यचास्यत्वंदहहस्तौचपापिनइतिनारदोक्ताभिमन्त्रणंविष्णुपितामहाभ्यामुक्तेनाभिमन्त्रणेनैकार्थत्वाद्वि
कल्प्यते । तुल्यार्थास्तुविकल्पेरन्नितिन्यायात् । यदानारदोक्ताभिमन्त्रणंक्रियतेतदातदनन्तरङ्कर्तव्यमाह । सएव । अमुम
र्थञ्चपत्रस्थमभियुक्तंयथार्थतः । संश्राव्यमूर्द्धिनतस्यैवअयदेयोयथाक्रियमिति । पूर्वोक्ताभिमन्त्रणमन्त्रार्थंशिरसिनिहितप
त्रस्थमन्त्रार्थञ्चसंश्राव्यतत्पत्रंयथास्थानन्निधाययथायलोहपिण्डोदेयइत्यर्थः । यदातुविष्णुपितामहोक्ताग्न्यभिमन्त्रणंक्रिय
तेतदातस्मिन्क्षणेकिंकर्तव्यमाह । पितामहः । ततस्तंसमुपादायराजाधर्मपरायणः । सन्देशेननियुक्तोवाहस्तयोस्तस्यनिः
क्षिपेदिति । नियुक्तःप्राड्विवाकःसन्देशेनतंलोहपिण्डंसमुपादायगृहीत्वातस्यशोध्यस्यहस्तयोर्निःक्षिपेदित्यर्थः । निक्षेपणा
त्प्राक्तनपक्षद्वयेपिशोध्यः । अभिमन्त्रयेत्अभिमन्त्रितवन्तमग्निंतस्यहस्तयोरुपरिलोहपिण्डंस्थापयेत् । तथाचयाज्ञवल्क्यः ।

त्वमग्ने सर्वभूतानामन्तश्चरसि पावक। साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं करे मम ॥ तस्येत्युक्तवतो लोहम्पञ्चाशत्पलिकं समम्। अ
ग्निवर्णं न्यसेत्पिण्डं हस्तयोरुभयोरपि। त्यब्लोपे पञ्चमी। पुण्यपापानि पर्यालोच्येत्यर्थः ब्रूहि दर्शय इत्युक्तवन्तः। पूर्वोक्तमन्त्रे
णाग्न्यभिमन्त्रणं कृतवतस्तस्य हस्तयोरश्वत्थपत्रादिसहितयोः सूत्रैर्वेष्टितयोरित्यर्थः। गृहीतलोहपिण्डस्य शोध्यस्य कर्त्तव्यमा
ह स एव। स तमादाय सप्तैव मण्डलानि शनैर्व्रजेदिति। अस्यार्थ विवरणपुरस्सरम्विष्णुरपि। ततस्तत्राग्निवर्णं लोहपिण्डं
पञ्चाशत्पलिकं समन्दद्यात् तं समादाय नातिद्रुतन्न च विलम्बितं मण्डलेषु पदन्यासं कुर्वन्व्रजेत्। ततः सप्तममण्डलमतीत्य भू
मौ लोहपिण्डं पातयेदिति मण्डलेषु द्वितीयादिमण्डलेषु सप्तमं मण्डलमतीत्य सप्तमं मण्डलमतिक्रम्याष्टमं मण्डलं गत्वेति या
वत्। भूमौ शुष्काभिनवतृणपुञ्जान्वितायां नवममण्डलरूपायामित्यर्थः। वक्ष्यमाणकालिकापुराणवचनानुरोधात्। नारदो
पि। हस्ताभ्यां तं समादाय प्राड्विवाकसमीरितः। स्थित्वैकस्मिंस्ततोन्यानि व्रजेत्सप्त तु जिह्मगः ॥ असंभ्रान्तः शनैर्गच्छेद कुब्जः
सोनलं प्रति। न पातयेन्नाम प्राप्य या भूमिः परिकल्पिता। न मण्डलमतिक्रामेन्न चार्वाक् स्थापयेत्पदं। मण्डलं चाष्टमं गत्वा ततो
ग्निं विसृजेन्नर इति। एकस्मिन्प्रथमे मण्डले। विसृजेन्नवममण्डल इति शेषः। अत एव पितामहः। त्वरमाणो न गच्छेत्तु सुस्थो
गच्छेच्छनैः शनैः। न मण्डलमतिक्रामेन्नान्तरा स्थापयेत्पदम् ॥ अष्टमं मण्डलं गत्वा नवमे निःक्षिपेद् बुध इति। नवमे मण्ड
ले नूतनतृणसमन्विते अग्निविसर्गः कर्त्तव्यः। तथा च कालिकापुराणे। मण्डलानि तथा सप्त षोडशांगुलमानतः। तावदन्त
रतो गच्छेद्गत्वा नवतृणे क्षिपेदिति। निःक्षेपानन्तरम्परीक्षकस्य कर्त्तव्यमाह नारदः। तस्यैवमुक्तपिण्डस्य कुर्यात्कर निरी
क्षणमिति शुद्ध्यशुद्धपरिज्ञानार्थमिति शेषः। तत्राशुद्धिप्रख्यायकानि लक्षणानि स एवाह। पूर्वदृष्टेषु चिह्नेषु ततोन्य
त्रापि लक्षयेत्। मण्डलं रक्तसंकाशं यच्चान्यद्दाग्निसम्भवम्। सो विशुद्धस्तु विज्ञेयो सत्यधर्मव्यवस्थित इति। यस्य करतलयो
र्मध्ये यत्र क्वचिदग्निकारितं स्फोटाद्युपलभ्यते तमशुद्धं विजानीयादित्यर्थः। यस्य पुनर्नोपलभ्यते स शुद्धो ज्ञेयः। अत एव वि

स्युः । योहस्तयोःकश्चिद्दग्धस्तमशुद्धं विनिर्दिशेत् । नदग्धः सर्वथा यस्तु स विशुद्धो भवेन्नर इति दग्धादग्धसन्देहे नारद आह । यदा तु न विभाव्येत दग्धा वितिकरौ तदा । व्रीहीनतिप्रयत्नेन सप्तवारांस्तु मर्दयेत् । मर्दिते यदि नो दग्धः सम्यैरेवं विनिश्चितः । शोध्यः शुद्धः स संस्कृत्य दग्धो दण्ड्यो यथाक्रममिति । नविभाव्येते न निश्चीयेते । व्रीहियवयोर्मर्दने विकल्पमाह पितामहः । ततस्तद्धस्तयोः प्रास्येद्व्रीहीन्वा यदि वा यवान् । निर्विशंकेन तेषां तु हस्ताभ्यां मर्दने कृते । निर्विकारे दिनस्यान्ते शुद्धिं तस्य विनिर्दिशेदिति । प्रास्येत्प्रक्षिपेत् । निर्विकारे दिनस्यान्ते शुद्धिं तस्य विनिर्दिशेत् । निर्विकारे करतलद्वये स्थिते सायंकाले शोध्यस्य शुद्धिं निर्दिशेदित्यर्थः । केचिन्निर्विकारो यदा हस्त इति पठन्ति तन्मते मर्दनानन्तरमेव शुद्धिरवधारणीया । सायंकाललक्षणकालबोधकवचनाभावात् । ननु दिनस्यान्त इति पाठे मुक्त्वाग्निं मृदितव्रीहिरित्यादियाज्ञवल्क्यवचनेन विरोधः । तत्रानन्तर्यवाचिक्त्वाप्रत्ययस्य मुक्त्वेति प्रयोगेन हस्तव्रीहिमर्दनयोः करयोर्विकारस्यादर्शने तप्तलोहपिण्डन्यासानन्तरमेव शुद्धेरवधारणीयत्वोक्तेरिति चेन्न । समानकर्तृकयोः पूर्वकाल इति पाणिनीयवचनेन क्त्वाप्रत्ययस्य पूर्वकालवाचित्वावधारणात् । हरियोजनयागस्य संस्रावस्तु ग्विमोकाभ्यां व्यवधानेन परिधिप्रहरणानंतर्याभावे पि वेदे प्रहृत्य परिधीन् जुहोतीति नित्यत्क्त्वाप्रत्ययदर्शनात् । लोके पिक्तुपवेशनक्रियांतरव्यवधानेन गमनस्य भोजनानन्तर्याभावे पि भुक्त्वा व्रजतीति क्त्वादर्शनाच्चानीनान्तर्यवाचकत्वं क्त्वाप्रत्ययस्य । किञ्च क्त्वाप्रत्ययस्यानन्तर्यवचनत्वे बृहस्पतिसवे बाधिकरणविरोधः स्यात् । तत्रापि क्त्वाप्रत्ययस्य पूर्वकालवचनत्वाभिधानात् । तथाहि । वाजपेयेनेष्ट्वा बृहस्पतिः सवेन यजेतेति श्रूयते । तत्र संशयः । स किं वाजपेये शरदि वाजपेयेन यजेतेत्यनेन विहितो यः शरत्कालस्तस्मिन्कर्त्तव्यः । आहोस्विदन्यकाले वसन्ते कर्त्तव्यः । तत्र बृहस्पतिवचनस्यागमत्वं तावत्पूर्वमुक्तं । तथांगांगिकालेऽङ्गिनासहप्रयोगत्वं इतरेषामङ्गानामङ्गिकालेऽनुष्ठीयमानत्वादिति पूर्वः पक्षः । राद्धान्तस्तु पूर्वकालवाचिक्त्वाप्रत्ययेन सांगे वाजपेये निर्वृत्ते सति पश्चात्कर्मान्तरत्वेन बृहस्पतिसवस्य विहितत्वात् । यद्यंगिना सहैकप्रयोगः स्यात् । तदा

क्त्वाप्रत्ययप्रापितः पूर्वोत्तरकालविभागो बाध्येत नह्यङ्गिना सह प्रयोक्तव्यानामङ्गानां वाजपेये निवृत्ते पश्चात् विधानं श्रुतं । ततः प्रयोगे वश्यंभाविनि सति स्वचोदकप्रापितकाले तदनुष्ठानं युक्तं । बृहस्पतिसवस्य ज्योतिष्टोमविकारत्वाद्वसन्तकालश्चोदकप्राप्तः वाजपेयेन सह प्रयोगैक्ये शरदि वाजपेयस्य विहितत्वाद्बृहस्पतिसवोऽपि शरदि प्रसज्येत । तथा च वाजपेये वृत्ते कर्तव्यो बृहस्पतिसवस्तदनन्तरं क्त्वा तिक्रमकारणस्यातिदेशहतस्य वसन्तकाललक्षणाङ्गोपसंहारस्य सत्त्वात्तदुत्तरवसन्तकाले कर्तव्यः । क्त्वापूर्वकालतायां स्मर्यते तेनानन्तर्ये ननु सर्वत्रामी पूर्वे प्रधानाः पूर्वमनुष्ठातव्यं रहतु पूर्वकालीनेन साङ्गप्रधानानुष्ठानेन फलापूर्वस्य निष्पन्नत्वादुत्तरकालीनमङ्गं निरर्थकमेव स्यादिति चेन्न । तस्यैवापूर्वस्यामेनातिनप्रावल्यदशायाः कल्पनीयत्वात् । तस्मान्नाङ्गिनः काले नुष्ठानं किंतु स्वकाल एवेति स्थितं । तदनेन विरोधवारणाय पूर्वकालत्वमेवार्थः । तथा च न कोऽपि विरोध इति सर्वं च सुस्थं । केषुचिन्निमित्तेषु पुनरग्निधारणं कर्तव्यं । तथा च याज्ञवल्क्यः । अन्तरा पतिते पिण्डे सन्देहे वा पुनर्हरेदिति । यदागच्छतोऽन्तराष्टममण्डलादर्वाक् पिण्डः पतति दग्धादग्धत्वे वा सन्देहस्तदा पुनर्हरेदित्यर्थः । इदं नु यदि हस्तयोर्न दाहस्तदा वेदितव्यं । दाहे त्वशुद्धिरेव तथा च नारदः । यस्त्वन्तरा वा पतति दग्धश्चैतद्विभाव्यते । पुनः संहारयेदग्निं स्थितिरेषा हृष्टौ तेनेति । हस्तयोरन्यत्र दग्धविभावने पि पुनर्धारणं कार्यमित्याह । कात्यायनः । प्रस्खलन्नभियुक्तश्चेत् स्थानादन्यत्र दह्यते । न तं दग्धं विदुर्देवास्तस्य भूयोऽपि दापयेदिति । भूयोऽपि पुनरपीत्यर्थः । इत्यग्निविधिः ॥ ● ॥ अथ जलविधिस्तत्र पितामहः । तोयस्यातः प्रवक्ष्यामि विधिं धर्म्यं सनातनं । मण्डलं धूपदीपाभ्यां कारयेत्तु विचक्षणः ॥ शरान्संपूजयेद्भक्त्या वैणवं च धनुस्तथा । मङ्गलैः पुष्पधूपैश्च ततः कर्म समाचरेत् इति । धूपदीपाभ्यां शरान्संपूजयेदित्यन्वयः । जलसमीपे संस्कृतायां भुवि मण्डलं कृत्वा तत्र शरादिकं संपूज्य प्रयोगारम्भः कार्य इत्यर्थः । धनुषः प्रमाणमाह नारदः । क्रूरं धनुः सप्तशतं मध्यमं षट्शतं स्मृतं । मन्दं पञ्चशतं ज्ञेयमेष ज्ञेयो धनुर्विधिरिति ॥ सप्तशतं सप्ताधिकशताङ्गुलं । एवं षट्शतं पञ्चशतञ्च । लक्ष्यस्थानञ्चास एवाह । मध्यमेन तु चापे

नप्रक्षिपेच्छरत्रयं। हस्तानान्तु शतेसार्द्धे लक्ष्यंकृत्वाविचक्षणः ॥ न्यूनाधिकेतुदोषःस्यात्क्षिपतःसायकांस्त्रयेति। शरस्थानाय सायावैणवास्तुकर्त्तव्याइत्याहकात्यायनः। शरांस्थानायसाग्र्यांस्तुप्रकुर्वीतविशुद्धये। वेणुकाण्डमयांश्चैवक्षेप्तानुसुदृढंक्षिपे दिति॥ क्षेप्ताचक्षत्रियस्तद्वन्निर्व्ब्राह्मणोवाकार्यइत्याह। पितामहः। क्षेप्ताचक्षत्रियःकार्यस्तद्वन्निर्व्ब्राह्मणोथवा। अक्रूरहृद यःशान्तःसोपवासस्तथाशुचिरिति। शोध्यकर्णप्रमाणोच्छ्रिततोरणमण्डलंसमीपेकार्यमित्याहनारदः। गत्वातुतज्जलस्था नन्तटेतोरणमुच्छ्रितं॥ कुर्वीतकर्णमात्रंतुभूमिभागेसमेशुचाविति॥ उपादेयानुपादेयजलेविविनक्तिपितामहः। स्थिरेतोयेनि मज्जेत्तुनग्राहिणिनचाल्पके। तृणशैवालरहितेजलौकामत्स्यवर्जिते॥ देवखातेषुयत्तोयंतस्मिन्कुर्याद्विशोधनं॥ आहा र्यंवर्जयेन्नित्यंशीघ्रगासुनदीषुच॥ आविशेदमलेनित्यमूर्मिपङ्कविवर्जिते। ग्राहिणियाहाख्यजलजन्तुयुक्ते। आहार्यंनद्या दितआहृत्यमहतिकटाहादौआहृत्यस्थापितं। नारदः॥ नदीषुनातिवेगासुतडागेषुसरःसुच। ह्रदेषुस्थिरतोयेषुकुर्या त्पुंसांनिमज्जनमिति॥ नातिवेगासुअनिगासुअवस्थित्ययोग्यासु। विष्णुःपङ्कशैवालदुष्टग्राहमत्स्यजलौकादिविवर्जिताम्भ सिइति। तत्रउदकेप्राड्विवाकोवरुणंपूजयेदित्याह। सएव। गन्धमाल्यैःसुरभिभिर्मधुक्षीरघृतादिभिः। वरुणायप्रकु र्वीतपूजामादौसमाहितइति॥ ततोदृढकायःकश्चित्पुरुषोनाभिमात्रजलेस्थापनीयइत्यपिसएवाह। ब्राह्मणःक्षत्रियोवै श्योरागद्वेषविवर्जितः। नाभिमात्रेजलेस्थाप्यःपुरुषःस्यानुवद्धधी। तस्योरूप्रतिसंगृह्यनिमज्जेदभिशापवानिति। पितामहो पि। स्थापयेत्प्रथमंतोयेस्तम्भवत्पुरुषंनृपः। आगतंप्राङ्मुखंकृत्वातोयमध्येतुकारिणमिति॥ स्तंभवत्पुरुषंस्तम्भसमन्वितंपुरु षंकारिणंदिव्यकारिणंशोध्यमितियावत्। अनेनपुरुषेणयज्ञियवृक्षजातांधर्मस्थूणामवष्टभ्यस्थातव्यंतथाचस्मृतिः। उद केप्राङ्मुखस्तिष्ठेद्धर्मस्थूणांप्रगृह्यचेति। ततःप्राड्विवाकोधर्मावाहनादिहोमान्तंकृत्वाशोध्यशिरसिचपत्रारोपणंविधायजला भिमन्त्रणंकुर्यात्। तथाचपितामहः। ततस्त्वावाहयेद्देवान्सर्वांश्चानुमन्त्रयेदिति। देवतावाहनपूर्वकस्यसमस्तदिव्यसा

धारणस्यप्रतिज्ञापत्रबन्धनान्तस्यकर्मजातस्योपलक्षणं । सलिलग्रहणंसलिलदेवताभूतस्यवरुणस्याप्युपलक्षणम् । जलाभिम
न्त्रणमन्त्रंविष्णुराह । त्वमम्भःसर्वभूतानामन्तश्चरसिसाक्षिवत् । त्वमेवाम्भोविजानीषेनविदुर्यानिमानवाः ॥ व्यवहाराभिशस्तो
ऽयंमानुषस्त्वयिमज्जति । तदेनंसंशयादस्माद्धर्मतस्त्रातुमर्हसिइति । पितामहोऽपि । तोयत्वम्प्राणिनाम्प्राणाःसृष्टेराद्यन्तुनि
र्मितम् । शुद्धेस्त्वंकारणम्प्रोक्तंद्रव्याणांदेहिनान्तथा । अतस्त्वंदर्शयात्मानंशुभाशुभपरीक्षणेइति । अनयोर्मन्त्रयोर्विकल्प
स्तुल्यार्थत्वात् । वरुणाभिमन्त्रणमन्त्रःशङ्खलिखिताभ्यांदर्शितः । सदसत्त्वमेववरुणउभयोःप्रतिष्ठितस्त्वयिसत्यंविदन्देवव
रुणत्वमेवतद्ब्रूहिवरेण्यतदादिशस्त्वेति । नारदोऽपि । सत्यानृतविभागस्यतोयाग्नीस्पष्टकारिणौ । अद्भ्यश्चाग्निरभूद्यस्मात्तस्मा
त्तोयेविशेषतः । क्रियतेधर्मतत्त्वज्ञैर्दूषितानांविशोधनं । तस्मात्त्वमनेनभगवन्जलेशत्रातुमर्हसिइति । अनयोरपिविकल्पः ।
ततःप्राड्विवाकेऽभिमन्त्रितेजलेशोध्यम्प्रवेशयेदित्याहकालिकापुराणेव्यासः । आह्वेनम्वरुणत्वंचब्रह्मादेवाभिशापनः ॥ मु
ह्वस्वेदन्तिकारुण्यादभिमंह्यजलेक्षिपेदिति । आह्वेनमित्यादिनाऽन्तिकारुण्यादित्यन्तेनमन्त्रेणाभिमन्त्र्यजलेपुरुषंप्रवेश
येदित्यर्थः । अयञ्चमन्त्रःपूर्वोक्तेनजलाभिमन्त्रणेनवैकल्पिकः ॥ शोध्योऽपिकृताभिमन्त्रणोजलम्प्रविशेत् । तथाचयाज्ञवल्क्यः
। सत्येनमामभिरक्षत्वंवरुणेत्यभिशाप्यकम् । नाभिदघ्नोदकस्थस्यगृहीत्वोरूजलंविशेत्इति ॥ हे वरुण मां त्वं सत्येनाभिरक्षे
त्यनेनमन्त्रेणकमुदकंअभिशाप्यअभिमन्त्र्यनाभिदघ्नोदकस्थस्यनाभिप्रमाणोदकस्थितस्यपुरुषस्योरूगृहीत्वाशोध्योजलं
विशेत् । जलेनिमज्जेदित्यर्थः । ततःपूर्वोक्तेलक्ष्यस्थानेशरत्रयंप्रक्षिपेदित्याह । बृहस्पतिः ॥ अप्सुप्रवेश्यपुरुषंप्रेषयेत्साय
कंत्रयमितिकालविशेषेदेशविशेषेचशरप्रक्षेपनिषेधमाहसएव ॥ इषून्निःक्षिपेद्विद्वान्मारुतेवातिवैभृशं । विषमेभूप्रदे
शेचवृक्षस्थाणुसमाकुले । तृणगुल्मलतावल्लीपङ्कपाषाणसंयुतइति । तदनन्तरकर्तव्यमाहयाज्ञवल्क्यः ॥ समकालमिषुम्मु
क्तमानीयान्योजवीनरः ॥ गतेतस्मिन्निमग्नाङ्गम्पश्येच्चेच्छुद्धिमाप्नुयात् । इतिश्लोकार्थः । त्रिषुशरेषुमुक्तेषुएकोवेगवान्

मध्यमशरपातस्थानङ्गत्वातमादायतत्रैवतिष्ठतित्रन्यस्तुपुरुषोवेगवान्शरमोक्षस्थानेतोरणमूलेतिष्ठति। एवंस्थितायां
न्तृतीयस्यांकरतालिकायांशोध्यःनाभिप्रमाणोदकस्थितस्यपुरुषस्योरुगृहीत्वानिमज्जति। तत्समकालमेवतोरणमूलस्थितोपि
द्रुततरंमध्यमशरपातस्थानङ्गच्छतिशरग्राहीचतस्मिन्प्राप्तेद्रुततरन्तोरणमूलम्प्राप्यान्तर्जलगतंशोध्यंयदिनपश्यति
तदाशुद्धोभवतीतितथाचकात्यायनः। क्षिप्तेषुमज्जनञ्चार्थेङ्गमनंसमकालिकमिति। एतदेवस्पष्टीकृतम्पितामहेन। श
रान्तुत्रापिकर्तुस्त्रसमङ्गमनमज्जनम्॥ गच्छेत्तोरणमूलान्तुलक्ष्यस्थानञ्जवीनरः॥ तस्मिन्गतेद्वितीयेतुवेगमादायसा
यकम्॥ गच्छेत्तोरणमूलन्तुयतःसपुरुषोगतः। आगतस्तुशरग्राहीनपश्यतियदाजलम्। अन्तर्जलगतंसम्यक्तदाशु
द्धिंविनिर्दिशेत्इति॥ नारदोपि॥ शरप्रक्षेपणास्थानाद्युवाजवसमन्वितः। गच्छेत्परमयाशक्त्यायत्रासौमध्यमःशरः
। मध्यमंशरमादायपुरुषोन्यस्तथाविधः॥ प्रत्यागच्छेत्तुवेगेनयतःसपुरुषोगतः। अयेपितामहवदेवकचित्पितामहवा
क्यमपिशरप्रक्षेपणादिनारदवदेववदन्ति। त्रिषुमुक्तेषुमध्यमःशरोग्राह्यः। तथाचस्मृतिः। तेषाञ्चप्रेषितानाञ्चशराणांशा
स्त्रचोदनात्। मध्यमस्तुशरोग्राह्यःपुरुषेणबलीयसेति। तत्रापिपतनस्थानादानेतव्योनसर्पणस्थानात्। तथाचपितामहः
॥ शरस्यपतनंग्राह्यंसर्पणन्तुविवर्जयेत्। सर्पन्सर्पन्शरोयायाद्दूराद्दूरतरंयतइति। स्थानान्तरगमनेचाशुद्धिःतथाचनार
दपितामहौ। अन्यथानविशुद्धःस्यादेकाङ्गस्यादर्शनात्। स्थानाद्वान्यत्रगमनायस्मिन्पूर्वंनिवेशितइति। एकाङ्गस्यापिद
र्शनादितिकर्णाद्यभिप्रायेण। तथाचकात्यायनः। शिरोमात्रन्तुदृश्येतनकर्णौनापिनासिका। अप्सुप्रवेशनेयस्यशुद्धन्तमपि
निर्दिशेत्इति॥ इत्युदकविधिः॥●॥ अथविषविधिः॥ तत्रनारदः। अतःपरम्प्रवक्ष्यामिविषस्यविधिमुत्तमम्। यस्मिन्का
लेयथादेयंयादृशम्परिकीर्तितम्। यावन्मात्रंसमुद्दिष्टन्धर्मतत्त्वानुवेदिभिः। तोलयित्वेप्सितञ्चालेदेयमेतद्विमागमे॥ ना
पराह्णेनमध्याह्नेसंध्यायाञ्चविवर्जयेत्। शार्ङ्गंहैमवतंशस्तंगन्धवर्णरसान्वितम्। अकृत्रिममसंमूढममन्त्रोपहतञ्चयत्।

वर्षैंचतुर्थंवामात्राग्रीष्मेपञ्चयवास्मृता॥ हेमन्तेसासप्तयवाशरद्यल्पाततोपिहीति। हिमागमेहेमन्तशिशिरयोःशाङ्गंश्रृङ्गोद्भ
वं। हैमवतंहिमालयोद्भवम्। हेमन्तइतिहेमन्तशिशिरयोर्ग्रहणम्। हेमन्तशिशिरयोःसमासेनेतिश्रुतेः। वसन्तस्यसर्व
साधारणत्वात्। तत्रापिसप्तयवाशरदितितोप्यल्पाषट्यवेत्यर्थः॥ वत्सनाभेपित्राह्यइत्याहपितामहः॥ यवाःसप्तप्रदा
तव्याःश्रुचिहेतोर्नसंशयः। श्रृङ्गिणोवत्सनाभस्यहिमजस्यविषस्यचेति॥ यवाःसप्तेतिशीतलकालविषयंशत्रैतुपश्चिमेभागे
विषन्देयंसुशीतलमितिपूर्वोदाहृतवचनात्। वर्ज्यविषमाहपितामहः॥ चारितानिचजीर्णानिकृत्रिमाणितथैवच॥ भूमि
जानिचसर्वाणिविषाणिपरिवर्जयेत्इति। नारदोपि। भृष्टञ्चचारितञ्चैवधूपितंमिश्रितन्तथा। कालकूटमलाबुञ्चविषंयत्ने
नवर्जयेत्इति। वत्सनाभस्वरूपमाहकात्यायनः॥ वत्सनाभनिभम्पीतंवर्णज्ञानेननिश्चितम्। शुक्तिशृङ्गाकृतिभङ्गेविद्यात्वत्स
नाभकम्॥ मकक्षीरसमायुक्तंस्वच्छंकुर्वीततत्क्षणात्। वाह्यमेवंसमाख्यातंलक्षणन्धर्मसाधकैरिति॥ शार्ङ्गस्वरूपमाहसए
व। अजाशृङ्गनिभंश्यामंसुपीतंशृङ्गसम्भवम्॥ भृङ्गेचशृङ्गवेराभंख्याततच्छार्ङ्गिणंविषम्॥ रक्तस्यमसितंकुर्यात्कठिनञ्चैव
तत्क्षणात्। अनेनविधिनाज्ञेयंविषन्दिव्यविशारदैरिति। शृङ्गवेराभंआर्द्रकतुल्यम्। भङ्गेआर्द्रकतुल्यंसुपीतमित्यन्वयः। शा
र्ङ्गिणंशृङ्गिणांसम्बन्धि। इणान्यनपत्यइतिप्रकृतिवद्भावान्नटिलोपः। यद्रक्तस्यतल्लक्षणाद्रक्तमसितंकुर्यादितिसम्बन्धः।
विषञ्चघृतप्लुतन्देयमित्याहनारदः। विषस्यपलषड्भागाद्भागोविंशतिमस्तुयः। तमष्टभागहीनन्तुशोध्येदद्यात्घृतप्लुत
मिति॥ पलञ्चात्रचतुःसुवर्णिकन्तस्यषष्ठोभागोदशमाषादशयवाश्चभवन्ति। त्रियवन्त्वेककृष्णलम्। पञ्चकृष्णलको
माषइत्येकोमाषः। पञ्चदशयवाभवन्ति। पञ्चदशानांमाषाणांयवाःसार्द्धशतम्भवन्ति। पूर्वैचदशयवाइतिषष्ठ्याधिक
शतंयवाःपलस्यषष्ठोभागस्तस्माद्विंशतितमोभागोष्टौयवाःतस्याष्टममागहीनःएकयवहीनःतंविंशतितमम्भागंसप्तयवंघृ
तप्लुतन्दद्यादित्यर्थः। घृतञ्चविषात्त्रिंशद्गुणंयाह्यमित्यप्याहनारदः। पूर्वाह्णेशीतलेदेशेविषन्देयन्तुदेहिनाम्। घृतेनयो

जितं स्लक्ष्णां पिष्टं त्रिंशद्गुणान्वितम् ॥ कात्यायनोपि । पूर्वाह्णे शीतले देशे विषं देयन्तु देहिनाम् ॥ विषेणायोजितं श्लक्ष्णम्पिष्टं त्रिंशद्गुणान्वितमिति । एतच्च विषं सोपवासेन प्राड्विवाकेन पूर्वोक्तदिव्यदेशकाले देवद्विजसन्निधौ शिवपूजां कृत्वा तत्पुरतो विषं स्थापयित्वा धर्मावाहनादि शोध्यशिरसि प्रतिज्ञापत्रं निधाय विषमभिमंत्र्य दक्षिणाभिमुखायोदङ्मुखेन प्राङ्मुखेन वा देयमित्याह नारदः । दद्याद्विषं सोपवासो देवब्राह्मणसन्निधौ । धूपोपहारमन्त्रैश्च पूजयित्वा महेश्वरम् ॥ द्विजानां सन्निधावेवं दक्षिणाभिमुखे स्थिते ॥ उदङ्मुखः प्राङ्मुखो वा दद्याद्विप्रः समाहित इति । अभिमन्त्रणमन्त्रमाह विष्णुः । विषत्वाद्विषमत्वाच्च क्रूरत्वात्सर्वदेहिनाम् । त्वमेव विष जानीषे न विदुर्यानि मानवाः । व्यवहाराभिशस्तोयं मानुषः शुद्धिमिच्छति ॥ तदेनं संशयात्तस्माद्धर्मतस्त्रातुमर्हसीति । नारदोपि । विषत्वं ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः । शोधयैनं नरम्पापात्सत्येनास्यामृतम्भवेति । अनयोरेकार्थाद्विकल्पः । शोध्यस्याभिमन्त्रणमन्त्रमाह याज्ञवल्क्यः । विषत्वं ब्रह्मणः पुत्रः सत्यधर्मे व्यवस्थितः । त्रायस्वास्मादभीशापात्सत्येन भव मेऽमृतम् । इति पितामहोपि । दीयमाने करे कृत्वा विषन्तु परिभाषयेत् । विषत्वं ब्रह्मणा सृष्टम्परीक्षार्थं दुरात्मनाम् । पापेषु दर्शयात्मानं शुद्धानाममृतम्भव ॥ अनयोरपि विकल्पः । अभिमन्त्रणानन्तरकर्त्तव्यमाह याज्ञवल्क्यः । एवमुक्त्वा विषं शार्ङ्गं भक्षयेद्धिमशैलजमिति ॥ शुद्धिप्रकारमाह बृहस्पतिः । विधिदत्तं विषं येन जीर्णमन्त्रौषधैर्विना । स शुद्धः स्यादन्यथा तु दण्ड्यो दाप्यश्च तद्धनमिति ॥ याज्ञवल्क्योपि ॥ यस्य वेगैर्विना जीर्येच्छुद्धिं तस्य विनिर्दिशेत् इति ॥ वेगो नाम धातोः धात्वंतरप्राप्तिः । धातोर्द्धात्वंतरप्राप्तिर्विषवेग इति स्मृत इति वचनात् । धातवश्च त्वगादयः सप्त त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातव इति वचनात् । विषवेगाश्च सप्त तेषां लक्षणानि विषतन्त्रे दर्शितानि । वेगो रोमाञ्चमाद्यो रचयति विषजः स्वेदवक्त्रोपशोषौ तस्योर्द्ध्वं स्तत्परौ द्वौ वपुषि जनयतो वर्णभेदप्रवेपौ । यो वेगः पञ्चमोसौ नयति विवशतां कण्ठभंगञ्च हिक्कां । षष्ठो निश्वासमोहौ वितरति च मृतिं सप्तमो भक्षकस्येति । शोध्यश्च कुहकादिभ्यो रक्षणीयः । अत एव पितामहः । त्रिरात्रं पञ्चरात्रम्वापू

न्यैःस्वैरधिष्ठितं। कुहकादिभयाद्राजाधारयेत्कुहकारिणं॥ औषधीमन्त्रयोगांश्च मणीनथ विषापहान्। कर्तुः शरीरसंस्थां

श्च गूढोत्पन्नान्परीक्षयेदिति। दिनान्तपर्यन्तं विषवेगराहित्येशुद्धिरवधारणीयेत्याह विष्णुः। विषवेगक्रमातीतं सुखेन यदि

जीर्यते। विशुद्धमिति तं ज्ञात्वा दिवसान्ते विसर्जयेत्॥ पितामहोपि। भक्षिते यदि सः सुस्थो मूर्च्छाछर्दिविवर्जितः॥ निर्विका

रो दिनस्यान्ते शुद्धं तमपि निर्दिशेत् इति। नारदोपि॥ छायानिवेशिनोरक्ष्यो दिनशेषमभोजनं। विषवेगक्रमातीतः शुद्धो सौ

मनुरब्रवीत् इति। मिताक्षरायां तु पञ्चनाल्प्रशतं कालं निर्विकारो यदा भवेत्। तदा भवति सः शुद्धस्ततः कुर्याच्चिकित्सितमिति नार

द वाक्यं पठित्वा विषे पीते यावत् करतालिका शतपञ्चकं क्रियते तावत्कालं निर्विकारश्चेच्छुद्धः अनन्तरं तु चिकित्सनीयः। यानि तु

दिनान्तावधिबोधकानि पितामहादिवचनानि तान्यल्पमात्रविषयाणीत्युक्तम्। इति विषविधिः॥०॥ अथ कोशविधिः। तत्र नार

दः। अतः परं प्रवक्ष्यामि कोशस्य विधिमुत्तमम्। शास्त्रविद्भिर्यथा प्रोक्तं सर्वकालाविरोधिनम्॥ पूर्वाह्णे सोपवासस्य स्नातस्यार्द्रप

टस्य च॥ सशूकस्याव्यसनिनः कोशपानं विधीयते। इस्यतः श्रद्दधानस्य देवब्राह्मणसन्निधाविति। सशूकस्य आस्तिकेन दिव्यका

रणेऽनिष्टशङ्कायुक्तस्य कोशपानम्। उग्रदेवतास्नानोदकपानं देवतास्नानोदकञ्च प्रसृतित्रयं ग्राह्यमित्याह विष्णुः॥ उग्रान्दे

वान्समभ्यर्च्य तत्स्नानोदकात्प्रसृतित्रयं पिबेदिदं मया न कृतमिति व्याहरन्देवताभिमुख इति। याज्ञवल्क्योपि। देवानुग्रान्सम

भ्यर्च्य तत्स्नानोदकमाहरेत्। संश्राव्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयमिति। उग्रान्देवान्दुर्गादित्यादीन्। तेषामन्यतमं देवमा

र्द्रवाकः सोपवासो गन्धपुष्पादिभिः सम्पूज्य स्नापयित्वा तत्स्नानोदकं दिव्यदेशं नयेदित्यर्थः। नीत्वा च तत्र निधाय धर्मावाहनादि

शोध्यशिरसि पत्रारोपणान्तं सर्वं दिव्यसाधारणविधिं विधाय देवतायतनसमीपे मण्डलं च विधाय तत्र शोध्यं प्राङ्मुखं स्थापयित्वा त

मसत्यैनैतद्दिव्यकरणेऽनिष्टं संश्राव्य जलविधावुक्तेन तोयत्वं प्राणिनां प्राण इत्यादिना मन्त्रेणाभिमन्त्र्य पूर्वनिहितोदकात्प्रसृति

त्रयं पाययेत्। शोध्यश्च जलविधावेवोक्तेन सत्यान्ततविभागस्वेत्यादिना मन्त्रेणाभिमन्त्र्य पिबेत्। तथा च नारदः। तमाहूयाभि

शस्तंतु मण्डलाभ्यंतरे स्थितम्। आदित्याभिमुखं कृत्वा पाययेत्प्रसृतित्रयमिति। पितामहोपि। प्राङ्मुखं कारिणं कृत्वा पाययेत्प्रसृतित्रयं। पूर्वोक्तेन विधानेन स्नानमात्रं चिरं शुचिमिति॥ कारिणं दिव्यकारिणं शोध्यमिति यावत्। पूर्वोक्तेन सकल दिव्यसाधारणतया प्रागुक्तेनेत्यर्थः। नारदेपि। अर्चयित्वा तु तं देवम्प्रक्षाल्य सलिलेन तु। एनं श्रावयित्वा तु पाययेत्प्रसृतित्रयमिति। एनः पायम्। तच्च तत्प्रलापाभिधानमुखेनतेनैव दर्शितः। स्वेच्छया यः पिबेत्कोशं नन्न कचिद्दूषितो नरः। न संवदेन्नरो लोभाच्छ्रत्री भवति दुर्मतिः। जानानः कामकारेण कोशम्पीत्वा विसंवदेत्। दरिद्रो व्याधितो मूर्खः सप्तजन्मनि जायत इति। स शिरस्कोऽभियोगेऽभियोक्तुः आव्यमनिष्टमप्याह स एव। बलात्कोशं हि यो दत्वा हितमिच्छेत चात्मनः। स विनाशी भवेत्तस्य तच्च कार्यं न सिद्ध्यतीति। एवं यस्य कस्यचिदुग्रदेवस्य स्नानोदकमाहृत्य कोशानुष्ठाने प्राप्ते नियमार्थमाह पितामहः। भक्तो यो यस्य देवस्य पाययेत्तस्य तज्जलमिति। समभावे तु देवानामादित्यस्य तु पाययेत्। दुर्गायाः पाययेच्चौरान्ये च शस्त्रोपजीविनः। भास्करस्य तु यत्तोयं ब्राह्मणं तन्न पाययेदिति। उग्रदेवतायुधानि स्नापयित्वा तदुदकं स्वल्पेपराधे पाययेत्। तथा च कात्यायनः। स्वल्पेपराधे देवानाम्पाययित्वायुधोदकं। पाय्यो विकारे चाभुक्तो नियम्यः शुचिरन्यथेति। पाय्यः पाययितव्यः। नियम्योदराद्यः। आयुधग्रहणं ताम्रादिनिर्मितादित्यमण्डलस्याप्युपलक्षणम्। अत एव बृहस्पतिः। यद्भक्तः सोभियुक्तः स्यात्तद्देवायुधमण्डलम्। प्रक्षाल्य पाययेत्तस्माज्जलात्तु प्रसृतित्रयमिति। अत्र विशेषमाह पितामहः॥ दुर्गायाः पाययेच्छूलमादित्यस्य तु मण्डलम्। अन्येषामपि देवानां स्नापयेदायुधानि त्विति। कृतकोशपानस्य किंतत्कालमेव शुद्धिर्नेत्याह कात्यायनः। अथ दैवविसंवादात्त्रिसप्ताहं तु दापयेत्। अभियुक्तं प्रयत्नेन तमर्थं दण्डमेव चेति। दैवविसंवादः दैविकव्याध्युद्भवः। दैविकं व्याध्यादयोपि स एव दर्शयति। ज्वरातिसारविस्फोटाः शूलास्थिपरिपीडनम्॥ नेत्ररुग्भालरोगश्च तथोन्मादः प्रजायते। शिरोरुग्भुजभङ्गश्च दैविका व्याधयो नृणामिति शुद्धिकालावधिं विष्णुरथाह। यस्य पश्येद्द्विसप्ताहात्त्रिसप्ताहादथापि वा। रोगोग्निर्ज्ञातिमरणं राजदण्डमथापि वा॥ तमशु

द्धं विजानीयात्तथाशुद्धं विपर्य्ययेत् । दिव्येषु शुद्धं पुरुषं सत्कुर्य्याद्धार्मिको नृप इति । पितामहोऽपि । त्रिसप्तात्सप्तरात्राद्वा द्विस
प्ताहादथापि वा । वैकृतं यस्य दृश्येत पापकृत्स तु मानवः ॥ तस्यैकस्य न सर्वस्य जनस्य यदि तद्भवेत् । रोगोऽग्निर्ज्ञातिमरणं सैव तस्य वि
भावनेति ॥ तद्रोगादि वैकृतं कृतकोशपानस्यैकस्य यदि भवेत्तदैव स पापकृदिति न किन्तु तदीयसर्वस्य जनस्य मध्येऽपि यदि क
स्यचिद्भवेत्तदापीत्यर्थः । अत एव बृहस्पतिः । सप्ताहाद्वा द्विसप्ताहाद्यस्यार्त्तिर्न प्रजायते । पुत्रदारधनानाञ्च स शुद्धः स्यान्न
संशय इति । याज्ञवल्क्योऽपि । अर्वाक्चतुर्दशादह्नो यस्य नो राजदैविकम् । व्यसनं जायते घोरं स शुद्धः स्यान्न संशय इति । एतेषा
ञ्च त्रिरात्रादीनां पक्षाणां अभियोगाल्पत्वमहत्त्वाभ्यां व्यवस्था ज्ञातव्या अवधेरूर्द्ध्वं तु रोगाद्युद्भवेऽपि न पराजयः । तथा च नारदः ।
ऊर्द्ध्वं यस्य द्विसप्ताहाद्वैकृतन्तु महद्भवेत् । नाभियोज्यः स विदुषा कृतकालव्यतिक्रमादिति । अत्र द्विसप्ताह इत्यवधिकालमा
त्रोपलक्षणम् । कृतकालव्यतिक्रमहेतोरभिधानात् । तेनैकविंशतिरात्रस्यावधिकालत्वाश्रयणे चतुर्दशरात्रादूर्द्ध्वमपि वैकृतोत्प
त्तौ पराजयः एवं त्रिरात्रसप्तरात्रात्प्रागपि वैकृतोत्पत्तौ न पराजय इति सिद्धम् । इति कोशविधिः ॥०॥ अथ तण्डुलविधिः । तत्र पि
तामहः । तण्डुलानां प्रवक्ष्यामि विधिम्भक्षणचोदितं । चौर्य्ये तु तण्डुला देया नान्यत्रेति विनिश्चय इति । चौर्य्यग्रहणमर्थविवादप्र
दर्शनार्थं । तदर्द्धार्द्धस्य तण्डुला इति धनविवादे कात्यायनेनोक्तत्वात् । पूर्वेद्युर्यत्कर्त्तव्यं तत्स एवाह । तण्डुलान्कारयेच्छुक्लान्
शालेर्नान्यस्य कस्यचित् । मृन्मये भाजने कृत्वा आदित्यस्याग्रतः शुचिः ॥ स्नानोदकेन सम्मिश्रान्रात्रौ तत्रैव वासयेत् । आवाहनादि
पूर्वं तु कृत्वा रात्रौ विधानत इति ॥ शुचिः प्राड्विवाकः सूर्य्यस्थाने धर्मावाहनादिहोमान्तं सर्वदिव्यसाधारणविधिं कृत्वा आदित्यस्ना
नोदकेन शुक्लान्शालितण्डुलानाप्लाव्य सर्वानेकत्र तथैव प्रातःकालपर्य्यन्तं स्थापयेदित्यर्थः । स्नानोदकन्देवताया इत्याह । का
त्यायनः ॥ देवतास्नानपानीयं दिग्धं तण्डुलभक्षणे इति । प्रातः कर्त्तव्यमपि स एवाह । प्रभाते कारिणे देया आदित्याभिमुखाय वि
ति । कारिणे शोध्याय । देया तण्डुला इत्यनुषङ्गः । भक्षणं च सोपवासेन सूर्योदयमध्य एव कर्त्तव्यमित्याह बृहस्पतिः । सोप

वासःस्थ्र्येयद्देतगडुलान्भक्षयेच्छुचिरिति। शोध्यानुष्ठेयमनुवादव्याजेनदर्शयतिपितामहः। प्राङ्मुखोपोषितंस्नातंशिरोरोपितपत्रकम्। तगडुलान्भक्षयित्वातुपत्रेनिष्ठीवयेत्ततइति॥ भक्षयित्वाभक्षणंकारयित्वा। हेतुमतणिजन्तस्यभक्षेरयम्प्रयोगः॥ पत्रेविशेषंसएवाह। भुर्जस्यैवतुनान्यस्यअभावेपिप्पलस्यत्विति। शुद्धाशुद्धावधारणोपायंसएवाह। शोणितंदृश्यतेयस्यहनुस्तालुचशीर्यते। गात्रञ्चकम्पतेयस्यतमशुद्धंविनिर्दिशेतइति॥ वृहस्पतिरपि। शुद्धःस्याच्छुक्लनिष्ठीवीरक्तमिश्रेतुदोषभागिति। कात्यायनोपि॥ शुक्लनिष्ठीवनाच्छुद्धो।नियम्योशुचिरन्यथेति। इतितगडुलविधिः॥०॥ अथतप्तमाषविधिः॥ तत्रपितामहः। तप्तमाषस्यवक्ष्यामिविधिमुद्धरणेशुभम्। कारयेदायसम्पात्रन्ताम्रंवाषोडशांगुलम्॥ चतुरंगुलखातन्तुमृन्मयंवापिमगडलम्। कर्षषोडशांशप्रमितंमगडलंस्थ्र्यमगडलाकारंवर्त्तुलमितियावत्। एतादृशंपात्रंघृततैलाभ्यांपूरयेदित्याहसएव। पूरयेद्घृततैलाभ्यांपलैर्विंशतिभिस्तुतत्। सुवर्णमाषकन्तस्मिन्सुतप्तेनिःक्षिपेत्ततः। अंगुष्ठांगुलिमूलेनतप्तमाषकमुद्धरेतइति। सुवर्णमाषकङ्कर्षषोडशांशप्रमाणम्। सुवर्णग्रहणंरूप्यमाषनिवृत्त्यर्थम्। तन्माषपरिमितंहिरण्यन्ताम्रंवापिण्डीकृत्यनिःक्षिपेत्। अंगुष्ठांगुलिमूलेनअंगुष्ठतर्ज्जनीमध्यमाभिरित्यर्थः। इदञ्चतप्तमाषोद्धरणम्। प्राड्विवाकेनघृततैलयोस्तापेसमारब्धेधर्मावाहनादिशोध्यशिरःपत्रारोपणान्तंसर्वंसाधारणंकर्मविधायत्वमग्नेवेदाश्चत्वारइत्यादिनाअग्निदिव्यप्रकरणोक्तेनमन्त्रेणाभिमंत्र्यकारयितव्यंशोध्यस्तुयाज्ञवल्क्योक्तेनत्वमग्नेसर्वभूतानामित्यादिमन्त्रेणाभिमन्त्र्यतप्तमाषमुद्धरेत्। अतएववृहस्पतिः। समुद्धरेत्तैलघृतात्तुतप्तात्तप्तमाषकमिति। कल्पान्तरमाहसएव। सौवर्णेराजतेताम्रेआयसेमृन्मयेपिवा। गव्यंघृतमुपादायतदग्नौतापयेच्छुचिः। सौवर्णींराजतींताम्रीमायसींवासुशोभनां। सलिलेनसकृद्धौतांप्रक्षिपेत्तत्रमुद्रिकाम्। भ्रमद्वीचितरङ्गाढ्येह्यनखस्पर्शगोचरे। परीक्षेदार्द्रपर्णेनचटत्कारंसघोषकमिति। ततःप्राड्विवाकोधर्मावाहनादिपत्रारोपणान्तंसाधारणंकर्मकृत्वाघृतमभिमन्त्रयेत्। मन्त्रस्तुतेनैवदर्शितः। ततश्चानेनमन्त्रेणसकृत्तदभिमन्त्रयेत्। परं

पवित्रममृतंघृतत्त्वंयज्ञकर्मसु। दहपावकपापंत्वंहिमशीतोशुचेर्भवेति। ततःप्राड्विवाकःशोध्येनत्वमग्नेसर्वभूतानामित्यादिम
न्त्रेणाभिमन्त्रणांकारयित्वामुद्रिकांग्राहयेदित्याहसएव। उपोषितन्ततःस्नातमार्द्रवाससमागतम्। ग्राहयेन्मुद्रिकांतान्तुघृतम
ध्यगतन्तथा॥ प्रदेशिनींचतस्यायपरिक्षेयुःपरीक्षकाइति। अत्रतर्जन्यैवमुद्रिकोद्धरणंकार्यंतस्याःपरीक्षाभिधानात्पक्षद्वये
पिशुद्ध्यवधारणोपायंवृहस्पतिराह। करग्रंयोनुधुनुयात्विस्फोटोवानजायते। शुद्धोभवतिधर्मेणपितामहवचोयथेति। का
लिकापुराणेपि। नधुनेयुःकराग्रंतुयस्यरक्तंनजायते। विस्फोटाद्यैश्चथादोषैःसशुद्धोयस्यचोप्तिमिति। रक्तंरक्तवर्णं। यस्य
कराग्रंविस्फोटाद्यैरुद्गीर्णमित्यन्वयः॥ पितामहोपि। यस्यविस्फोटकानस्युःशुद्धोसावन्यथाशुचिरिति। इतितप्तमाषविधिः॥
●॥ अथायसविधिःआयसंद्वादशपलङ्घटितम्फालमुच्यते। अष्टांगुलंभवेद्दीर्घंश्चतुरंगुलविस्तृतमिति। एवंविधंफालम्प्रति
ष्ठितेऽग्नौप्रक्षिप्यप्राड्विवाकोधर्मावाहनादिशोध्यशिरःपत्रारोपणान्तंसाधारणंकर्मकृत्वात्वमग्नेइत्यादिनाप्रागुक्तमन्त्रेणाभिम
न्त्र्यशोध्येनत्वमग्नेसर्वभूतानामित्यादिनाप्रागुक्तमन्त्रेणाभिमन्त्रणांकारयित्वालेहयेत्। तथाचसएव। अग्निवर्णंततश्चोरञ्जिह्वया
लेहयेत्सकृत्। नदग्धश्चेच्छुद्धिमियादन्यथातुसहीयतइति। इतिफालविधिः॥●॥ अथधर्मजविधिः। तत्रपितामहः। अधुना
सम्प्रवक्ष्यामिधर्माधर्मपरीक्षणं। हन्तृणांयाचमानानाम्प्रायश्चित्तार्थिनांन्नृणामिति॥ साहसाभियोगेषुयाचमानानामित्यर्थो
भियोगेषुप्रायश्चित्तार्थिनांन्नृणामितिपातकाभियोगेषुएतद्दिव्यंभवतीतिसूचितम्। धर्माधर्मप्रकारमाहसएव। राजतन्कार
येद्धर्ममधर्मंसीसकायसम्। लिखेद्भूर्जेपटेवापिधर्माधर्मौसितासितौ॥ अभ्युक्ष्यपञ्चगव्येनगन्धमाल्यैःसमर्चयेत्॥ सितपुष्प
स्तुधर्मःस्यादधर्मोसितपुष्पधृक्। एवंविधायोपलिप्यपिण्डयोस्तौनिधापयेत्। गोमयेनमृदावापिपिण्डौकार्य्यौसमन्ततः।
मृद्भाण्डकेऽनुपहृतेस्थाप्यौचानुपलक्षितौ। उपलिप्तेशुचौदेशेदेवब्राह्मणसन्निधौ। आवाहयेत्ततोदेवान्लोकपालांश्चपूर्ववत्
। धर्मावाहनपूर्वन्तुप्रतिज्ञापत्रकंलिखेत्। यदिपापविमुक्तोहन्धर्मस्त्वायातुमेकरे। इतिमन्त्रंशोध्यब्रूयात्। अहमितिमन्त्र

लिंगात् । वृहस्पतिरपि । पत्रद्वयेलेखनीयौधर्माधर्मौसितासितौ । जीवदानादिकैर्मन्त्रैर्गायत्र्याद्यैश्चसामभिः ॥ आमंत्र्यपूजयेद्गन्धैःकुसुमैश्चसितासितैः । अभ्युक्ष्यपञ्चगव्येनमृत्पिण्डांतरितौततः ॥ समौकृत्वानवेकुम्भेस्थाप्यौचानुपलक्षितौ । ततःकुम्भात्पिण्डमेकम्प्रगृह्णीतानुयाचितः । धर्मेगृहीतेशुद्धःस्यात्संपूज्यश्चपरीक्षकैरिति । जीवदानादिकैर्मन्त्रैर्माप्रगामयथोवयमित्यादिसूक्तपठितऋक्त्र्यमन्त्रैः अन्यैर्वाआगमोक्तैःप्राणप्रतिष्ठामन्त्रैरित्यर्थः ॥ तेचशारदातिलकेउक्ताः ॥ पाशांकुशपटःशक्तिर्वाणीविन्दुविभूषितः । पाद्याःसप्तसकारान्ताःव्योमसर्व्येन्दुसंयुतम् ॥ तदन्तेहंसमन्त्रःस्यात्ततोमुख्यपदम्भवेत् । प्राणाइतिवदेत्पश्चादिहप्राणास्ततःपरम् । अमुष्यजीवइहनुस्थितोमुख्यपदम्भवेत् । सर्वेन्द्रियाण्यमुष्यांतेवाङ्मनश्चक्षुरन्ततः । श्रोत्रघ्राणपदेप्राणाइहागत्यसुखंचिरम् । तिष्ठन्त्वग्निवधूरन्तेप्राणमन्त्रोयमीरितः । प्रत्यमुख्यपदात्पूर्वंपाशाद्यानिप्रयोजयेत् । प्रयोगेषुसमाख्यातःप्राणमन्त्रोमनीषिभिरिति ॥ इतिधर्मजविधिः ॥०॥ अथशपथविधिः । तत्रमनुः । महर्षिभिश्चदेवैश्चकार्य्यार्थंशपथाःकृताः । वसिष्ठश्चापिशपथंशपथेर्जवनेन्द्रपइति ॥ नारदोपि । शपथाअपिदेवानामृषीणांचमहात्मनां । वसिष्ठःशपथंलेभेयातुधानेतुशङ्कितः ॥ महर्षयस्त्वथेन्द्रस्यपुष्करार्थेनिवेदिताः । शेपुःशपथमव्यग्राःपरस्परविशुद्धयेइति ॥ शपथेविशेषमाह । मनुः । सत्येनशापयेद्विप्रंक्षत्रियंवाहनायुधैः । गोबीजकाञ्चनैर्वैश्यंशूद्रंसर्वैस्तुपातकैरिति । व्याख्यातमेतत्पूर्वमेव । वृहस्पतिरपि । सत्यवाहनशस्त्राणिगोबीजकनकानिच । देवब्राह्मणपादांश्चपुत्रदारशिरांसिच ॥ एतेचशपथाःप्रोक्ताःमुनिभिःस्वल्पकारणइति । पुत्रदारादीनांशिरःस्पर्शःकार्यः । तथाचमनुः । पुत्रदारस्यचाप्येनंशिरांसिस्पर्शयेत्पृथक्इति । स्पर्शनञ्चदक्षिणकरेणकुर्यात् । तथाचकात्यायनः ॥ यत्रोपदिश्यतेकर्मकर्तुरंगंनतूच्यते । दक्षिणस्तत्रविज्ञेयःकर्मणांपारगःकरइति । शपथेकृतेकियताकालेनशुद्धिरवधारणीयेत्याकांक्षायांशुद्धिप्रकारमाहसएव । आचतुर्दशकादह्नोयस्यनोराजदैविकम् । व्यसनञ्जायतेघोरंसज्ञेयःशपथेशुचिरिति । व्यसनमापन्घोरंअतिपीडाकरम् । अस्य

स्वशरीरधर्मत्वात् । तच्च प्रागुक्तरोगादि अत्राह्नो दिवसस्य यो यश्चतुर्दशभागस्तस्माद्वी व्यसनं न जायते स शपथे शुचिरित्यर्थः । कर्त्तव्यस्य शपथस्य स्वल्पविषयत्वेन बहुवधेरनुचितत्वात् । यमिद्धो न दहत्यग्निरापो नोन्मज्जयन्ति च । न चार्त्तिमृच्छति क्षिप्रं स ज्ञेयः शपथे शुचिरिति ॥ मनुना शीघ्रमेव शुचेरभिधानाच्च मिथ्याशपथकरणे दोषमाह यमः । कृत्वा मृषा तु शपथं कीटस्य वधसंयुतम् । अन्तेन च युज्येत वधेन च तथा नरः ॥ तस्मान्न शपथं कुर्यान्नरो मिथ्या वधेप्सितमिति । कीटस्येति यज्जंतुवधेऽल्पदोषस्तस्योपलक्षणम् ॥ तेनात्यन्तानुपयुक्तकीटादीनामपि वधसंयुक्तः शपथोऽनर्थहेतुः तद्वधपापेन मृषा शपथकर्त्ता युज्यत इत्यर्थः । यत्तु स्मृतितत्वे प्राणिमात्रोपलक्षणमित्युक्तम् । तदयुक्तं ब्राह्मणादीनाम्प्राणित्वेन संग्रहान्मिथ्याशपथकरणे तद्वधदोषजनितप्रसङ्गात् । मनुरपि । न वृथा शपथं कुर्य्यात्स्वल्पेप्यर्थे नरो बुधः । वृथा हि शपथं कुर्वन्प्रेत्य चेह च नश्यतीति । अत्र शपथानामपि दिव्यत्वात्तुपवासादिसाधारणदिव्यविधिरत्रातिदेष्टव्यः । यत्तु स्मृतितत्वव्यवहारचिन्तामणिकाराभ्यां शपथानान्दिव्यभेदेनोपन्यासाद्धटादिमध्ये परिगणनाभावाच्च न दिव्येति कर्त्तव्यतयात्रातिदेश इत्युक्तम् । तदप्यसत् । पूर्वेनारदादिवचनैः शपथानामपि दिव्यत्वस्योक्तत्वात् । धटादिपरिगणनवाक्यस्योपलक्षणत्वेन व्याख्यातत्वाच्च । किञ्च न तुक्तदिव्यलक्षणस्यापि सत्वाच्च त्वयापि तेषान्दिव्यत्वमङ्गीकर्त्तव्यम् ॥ अन्यथा तल्लक्षणमव्याप्तं स्यात्तस्मात् शपथानामपि दिव्यत्वात्तस्येव दिव्यधर्मातिदेश इत्यलम् ॥ इति शपथविधिः समाप्ता ॥ इति श्रीमत्सकलसामन्तचक्रचूडामणिमञ्जरीधिमञ्जरीनीराजितचरणकमलश्रीमन्महाराजाधिराजप्रतापरुद्रतनूजश्रीमन्महाराजमधुकरसाहसूनुश्रीमन्महाराजाधिराजचतुरुदधिवलयवसुंधराहृदयपुण्डरीकविकासदिनकरश्रीवीरसिंहदेवोद्योजितश्रीहंसपण्डितात्मजश्रीपरशुराममिश्रसूनुसकलविद्यापारावारपारीणधुरीणजगद्दारिद्र्यमहागजपारीन्द्रविद्वज्जनजीवातुश्रीमन्मित्रमिश्रकृते वीरमित्रोदयाभिधनिबन्धे व्यवहारप्रकाशे प्रमाणनिरूपणाख्यं द्वितीयम्प्रकरणम् ॥ * ॥ * ॥ * ॥ * ॥ * ॥ * ॥ * ॥ * ॥ * ॥

एवं लौकिकालौकिकेषु प्रमाणेषु निरूपितेषु प्रमेयाख्यव्यवहारपदानि निरूप्यन्ते। तृतीयेप्रकरणे तेषामुद्देशो व्यवहार
भेदप्रदर्शनप्रस्तावे ऋणादानं ह्युपनिधिरित्यादिना नारदवचनेन दर्शितः। मनुरपि। तेषामाद्यमृणादानं निक्षेपोऽस्वामिवि
क्रयः। सम्भूय च समुत्थानं दत्तस्यानपकर्म च॥ वेतनस्यैव चादानं संविदश्च व्यतिक्रमः। क्रयविक्रयानुशयो विवादः स्वामि
पालयोः॥ सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके। स्तेयं च साहसं चैव स्त्रीसंग्रहणमेव च॥ स्त्रीपुंधर्मो विभागश्च द्यूतमाह्व
य एव च। पदान्यष्टादशैतानि व्यवहारस्थिताविह इति। यद्यपि नारदवचने द्यूतं प्रकीर्णकञ्चैवेत्यष्टादशपदान्युक्तानि।
तथापि प्रकीर्णकपदेनोपयुक्तशेषाभिधानान्नृपाज्ञैव स्वाज्ञातिक्रमादौ परेणाकृते प्रतिवादित्वमास्थाय निर्णेतव्यं। यच्चमन्वादिषु
पूर्वोक्तव्यवहारपदेषु नोक्तं तत्सर्वं प्रकीर्णकमिति नारदेनैव मल्लक्षणकरणाद्बहूनां सम्बन्धनियमाभावान्मनुना प्रकीर्णक
स्य व्यवहारपदत्वानुक्तिरिति ध्येयम्। द्यूतसमाह्वययोस्तु अप्राणिपणाद्धिकृतत्वप्राणिमल्लमेषादिकृतत्वमात्रभेदादेकपद
त्वविवक्षयाऽष्टादशसंख्योपपादनीया। अन्ययोर्नविंशतिसंख्यत्वापत्तेः। यथा सपणाक्रीडत्वेन तयोरभेदविवक्षैवमनु
क्तयापारुष्यरूपेण वाग्दण्डपारुष्ययोरपि एकविवक्षासम्भवति तथापि तत्र विवक्षितं स्वतन्त्रेच्छस्य पर्यनुयोगानर्हत्वात् मनु
नाद्विवचनप्रयोगान्नारदादिनिबन्धने तु पृथगुद्देशाच्च न तु पारुष्यद्वयस्य वक्ष्यमाणसाहसविशेषत्वात्पदान्तरत्वोक्तिर्युक्ताय
त्यम्। बलावष्टम्भेन क्रियमाणस्य तस्य साहसत्वं च लक्षणस्य तु साहसलक्षणाभावात्पदान्तरत्वम्। तथा चाह नारदः। मस्यैव
भेदः स्तेयं स्याद्विशेषस्तत्र तूच्यते। आधिः साहसमाक्रम्य स्तेयमाधिच्छलेन तु। तस्येति पूर्वोक्तसाहसम्पृष्टमाधिरर्थाह
रणाद्वाराक्रियमाणाः परस्य मानसंक्षेपः। पुंस्याधिर्मानसी व्यथेति कोषात्। तत्राक्रम्य बलावष्टम्भेन विधीयमानः साहस
मित्युच्यते। छलेन तु विधीयमान आधिः। स्तेयमित्युच्यत इत्यर्थः। नन्वनेन स्तेयस्य साहसाङ्गे दे पृथगुद्दिष्टस्य पारुष्यद्वयस्य
तु तदन्ततः सत्त्वेनैतत्त्वयुक्त इत्यभिप्रायेण नारदस्य तदुक्तसंग्रहकारेणापि। मनुष्यमारणादीनिकृतानि प्रसभं यदि। साह

सानीति कथ्यन्ते यथाख्याम्यन्यथापुनः । अन्यथापुनर्यैश्च प्रसभं हृतानि तदा यथास्थानि स्वस्वाख्यानि स्तेयस्त्रीसंग्रह वाक्पा
रुष्यदण्डपारुष्यसंज्ञकानि भवन्तीत्यर्थः । अत एव मनुना स्तेयस्त्रीसंग्रहयोरपि व्यवहारपदत्वेन साहसात्पृथगुद्दिष्टे । ना
रदेन तु तयोः प्रायेण लोके च्छलेनैव क्रियमाणत्वात्पदान्तरत्वं स्फुटमित्यनुक्त्वा साहसत्वमस्फुटयितितदेवोक्तम् । वाक्पारुष्यदण्ड
पारुष्ययोस्तु विपरीतम् । प्रायेण ते प्रसभमेव क्रियमाणे लोके दृश्येते । छलेन तु तयोः करणं साहसभेदापादकमस्फुटमिति
तदङ्गीकरणापत्तेरेव साहसात्पृथगुपदिष्टे । अत एव तेनाप्राणिप्राणिकृतत्वविशेषापुरस्कारेण समाह्वयोपि द्यूतत्वेनैवोद्दिष्ट
इति ध्येयम् । यद्यप्युपनिधिनिक्षेपयोरपि तत्प्रकरणवक्ष्यमाणरीत्यावान्तरभेदोस्ति तथापि तमविवक्षित्वान्मनुनारदाभ्यां
पर्य्यायत्वेनैव द्वयं विवक्षितं । एतयैव दिशा स्मृत्यन्तरयोरप्यविरोधो ज्ञेयः । एवं व्यवहारपदानां प्रातिस्विकानि लक्षणानि तद
वान्तरभेदाश्च तत्तत्स्थाने व्यक्तीकरिष्यामः । बृहस्पतिः । पदान्यष्टादशैतानि धर्मशास्त्रोदितानि तु । मूलं सर्वविवादानां ये
विदुस्ते परीक्षका इति । यत्तु नारदेन तेषामेव प्रभेदोन्यः शतमष्टोत्तरं स्मृतम् । क्रियाभेदान्मनुष्याणां शतशाखो निगद्यत इत्यु
क्तम् । यच्च कात्यायनेनाष्टादश क्रियाभेदाद्भिन्नान्यष्टसहस्रश इति । तत्र क्रियाभेदात्साध्यभेदादित्यर्थः । तद्द्वयमप्यवान्त
रभेदभूयस्त्वाभिप्रायेण प्रकीर्णप्रकारप्राचुर्याभिप्रायेण चेत्यष्टादशत्वाविघातः । अत एवाष्टोत्तरशतसंख्यत्वाष्टोत्तरसहस्रसं
ख्यत्वयोरपि नारदकात्यायनोक्तयोः प्रकारभूयस्त्वमात्रपरत्वादविरोध इति व्यवहारपदानामुद्देशः ॥ ● ॥ एषां सामान्यल
क्षणं तु स्मृत्याचारव्यपेतेनेत्यादियोगीश्वरवचनेन व्यवहारसामान्यलक्षणप्रस्तावप्रदर्शितेन प्रकटितम् । व्यवहारस्य चतुष्पा
द्व्यवहारस्य पदं विषय इति योगव्युत्पत्त्यापि तदेव पर्यवस्यति । यत्तु बृहस्पतिना । पदाङ्गसहितस्त्वेव व्यवहारः प्रकीर्तितः । वि
वादकारणान्यस्य पदानि शृणुताऽधुनेति । विवादकारणत्वं लक्षणमुत्तरमपि विषयस्यापि कारणत्वाद्विरुद्धमिति अथ क्रमशः ऋ
णादानादीन्यष्टादश व्यवहारपदानि निरूपयिष्यता प्रथमं तावत्क्रमप्राप्तमृणादानं पदं निरूप्यते । तत्र बृहस्पतिः । पदाङ्गस

हितस्त्वेषव्यवहारःप्रकीर्त्तितः। विवादकारणान्याहपदानिशृणुतानितु। ऋणादानेद्धहादीनिद्यूताह्वानान्तिकानिच। क्रमशःसम्प्रवक्ष्यामिक्रियाभेदांश्चतत्वतइति॥ तस्यसप्तविधत्वंदर्शयन्स्वरूपमाह। नारदः। ऋणन्देयमदेयञ्चयेनयत्रयथाचयत्। दानग्रहणधर्माश्चऋणादानमितिस्मृतिमिति। तत्राधमर्णोपञ्चविधम्। ईदृशमृणंदेयंईदृशमदेयं। अनेनाधिकारिणादेयम्। अस्मिन्समयेदेयम्। अनेनप्रकारेणदेयमिति। उत्तमर्णेद्विविधन्दानविधिरादानविधिश्चेति। एवंसमुदितंसप्तप्रकारंयस्मिन्विवादविषयेतदृणादानाख्यव्यवहारपदमित्यर्थः। नत्रेतरेषान्दानविधिपूर्वकत्वादैादानविधिरुच्यते। तत्रबृहस्पतिः॥ परिपूर्णंगृहीत्वाधिंबन्धंवासाधुलग्नकम्। लेख्यारूढंसाक्षिमद्वाऋणन्दद्याद्धनीसदेति। परिपूर्णंसवृद्धिकमूलद्रव्यपर्याप्तम्। आधिर्वन्धकम्। तद्विषयेविशेषोग्रेवक्ष्यते। नन्वाधिवन्धयोरेकार्थत्वेनलोकप्रसिद्धत्वात्कथंबन्धंवेत्युक्तिरित्याशंक्याहतत्रविवक्षितम्बन्धशब्दस्यार्थमाह। नारदः। निक्षेपोमित्रहस्तस्थोबंधोविश्वासकःस्मृतइति। उत्तमर्णस्यविश्वासहेतुस्तन्मित्रहस्तस्थोनिक्षेपएवबन्धशब्देनोच्यतइत्यर्थः। तत्रापिविशेषोग्रेवक्ष्यते। लग्नकःप्रतिभूः। तथाचायमर्थः॥ उत्तमर्णःपरिपूर्णमाधिंबन्धंवासमीचीनलग्नकंवाधमर्णहस्तलिखितंसाक्षियुक्तंवापत्रंगृहीत्वाऋणन्दद्यादिति। ऋणशब्दसमानार्थकस्यकुसीदशब्दार्थप्रदर्शनव्याजेनतत्प्रयोजनमाहनारदः। स्थानलाभनिमित्तंयद्दानग्रहणमिष्यते। तत्कुसीदमितिज्ञेयन्तेनवृत्तिःकुसीदिनामिति। स्थानंमूलधनस्यावस्थितिःलाभोवृद्धिः। तन्निमित्तन्तत्प्रयोजनमित्यर्थः। कुसीदशब्दस्यावयवार्थन्दर्शयति। बृहस्पतिः॥ कुत्सितात्सीदतश्चैवनिर्विशंकैःप्रगृह्यते। चतुर्गुणंवाष्टगुणंकुसीदाख्यमृणान्ततः। कुत्सितात्सीदतइत्येतेधमर्णविशेषणे। वृद्धिप्रकारान्सएवाह। वृद्धिश्चतुर्विधाप्रोक्तापञ्चधान्यैःप्रकीर्त्तिताः। षड्विधान्यैस्समाख्यातातत्वतस्तांविबोधतइति। षड्विधामेइतिक्वचित्पाठःतत्रमेमते। तान्प्रकारान्सएवाह। कायिकाकालिकाचैवचक्रवृद्धिरतोपरा। कारितासशिखावृद्धिर्भोगलाभस्तथैवचेति। एतेषांस्वरूपमाह। कायिकाकर्मसंयुक्तामासग्राह्या

नुकालिका। वृद्धेर्वृद्धिश्चक्रवृद्धिःकारिताचर्णिनाकृता॥ प्रत्यहंगृह्यतेयातुशिखावृद्धिस्तुसास्मृता। गृहाभोगःफलंक्षेत्रा
द्भोगलाभःप्रकीर्तितइति॥ कायिकाकर्मसंयुक्तायचबन्धकीकृतस्यगवाश्वादेर्दोहनवाहनादिकर्ममवृद्धित्वेनपरिकल्पित
मेवसाकायिकेत्यर्थः। तथाचव्यासः। दोह्यवाह्यकर्मयुताकायिकासमुदाहृतेति। मदनरत्नेतुभोग्याधितयास्थापितस्यगवादे
र्दोहनवाहनादिकर्मरूपैर्भोगस्तत्सहितायावृद्धिःसाकायिकेत्युक्तम्। मासग्राह्यातुकालिका। प्रतिमासंलभ्यायावृद्धिःसा
कालिकेत्यर्थः। प्रतिमासंस्रवन्तीयावृद्धिःसाकालिकामतेतिनारदवचनात्। वृद्धेर्वृद्धिश्चक्रवृद्धिः। वृद्धेरपिप्रतिमासंमू
लभावेनपुनर्वृद्धिश्चक्रवृद्धिरित्यर्थः। वृद्धेरपिपुनर्वृद्धिश्चक्रवृद्धिरुदाहृतेतिनारदवचनात्। कारिताचर्णिनाकृता। चर्ण
िनाऽधमर्णेनस्वेच्छयाकृतावृद्धिःकारितेत्यर्थः। वृद्धिःसाकारितानामयर्णिकेनस्वयंकृतेतिनारदवचनात्। अधमर्णका
रितावैववृद्धिर्देयानोत्तमर्णकारिता। तथाचबृहस्पतिः। चर्णिकेनतुयावृद्धिरधिकासम्प्रकल्पिता। आपत्कालकृतानित्यंदा
तव्यासानुकारिता। अन्यथाकारितावृद्धिर्नदातव्याकथञ्चनेति। उत्तमर्णप्रलोभनार्थेआपत्कालेग्रासेनादधिकास्वयङ्कल्पि
ताकारितायासावृद्धिर्दातव्यानपुनरेवंविधाधनिकेनकारितादातव्येत्यर्थः। प्रत्यहंगृह्यतेयातुशिखावृद्धिस्तुसास्मृता। प्रति
दिनलभ्यात्मशिखासादृश्याच्छिखावृद्धिरितिव्यपदिश्यतइत्यर्थः। किंपुनःशिखासादृश्यंवृद्धेरित्याकांक्षायांबृहस्पतिरेवाह
। शिखेववर्द्धतेनित्यंशिरश्छेदान्निवर्त्तते। मूलेदत्तेतथैवैषाशिखावृद्धिस्तुसास्मृतेति। प्रत्यहंगृह्यतइतिअधमर्णप्रतिश्रुतदि
नसंख्यावृद्धिग्रहणस्याकालोपलक्षणम्। तथाचकात्यायनः। प्रतिकालन्दाप्येचशिखावृद्धिस्तुसास्मृतेति। गृहाभोगःफलं
क्षेत्राद्भोगलाभःप्रकीर्तितः। बन्धकीकृताद्गृहान्निवासादिजनितःसन्तोषः। क्षेत्रात्सस्यादिफलञ्चभोगलाभाख्योवृद्धिप्रका
रइत्यर्थः। गृहक्षेत्रग्रहणंस्थावरात्मकभोग्याधेरुपलक्षणार्थम्। अतएवकात्यायनः। आधिभोगस्त्वशेषोयोवृद्धिस्तुपरि
कल्पितः। प्रयोगेयत्रचैवंस्यादाधिभोगःसउच्यतइति। यस्मिन्मूलादानप्रयोगेस्थावराधित्वेनपरिकल्पितायावृद्धिस्तत्रसा

वृद्धिरधिभोगइत्युच्यतइत्यस्यार्थः । अपणर्कादेगृहात्सोमःशदःशेवादितिपाठः । सोमोभागएकइतिकल्पतरौ ॥ शदःशस्यादिफलम् । वृद्धेःपरिमाणान्दर्शयतिमनुः । वसिष्ठविहितांवृद्धिंसृजेद्वित्तविवर्द्धिनीम् । अशीतिभागंगृह्णीयान्मासाद्वार्धुषिकःशतेइति । निष्कशतेप्रयुक्तेमासस्यसपादनिष्कपरिमितांवृद्धिंवार्धुषिकोवृद्ध्यर्थंगृह्णीयादित्यर्थः एतत्सबन्धकविषयम् । अतएवयाज्ञवल्क्यः । अशीतिभागोवृद्धिःस्यान्मासिमासिसबन्धके । वर्णक्रमाच्छतंद्वित्रिचतुःपञ्चकमन्यथेति ॥ सबन्धकेप्रयुक्तस्यद्रव्यस्याशीतितमोभागोवृद्धिःपणशतेप्रयुक्तेसपादःप्रतिमासम्भवेदित्यर्थः । अन्यथाबन्धकरहितेवर्णक्रमान्ब्राह्मणादिवर्णक्रमेणद्वित्रिचतुःपञ्चकंशतंधर्म्यंभवति । द्वौवात्रयोवाचत्वारोवाइतिद्वित्रिचतुःपञ्चाअस्मिन्शतेवृद्धिर्दीयतेइतिद्वित्रिचतुःपञ्चकंशतं । तदस्मिन्वृद्ध्यायतलाभशुल्कोपदादीयतइतिकन् । तथाचायमर्थः । बन्धकरहितेपणशतम्प्रतिमासंब्राह्मणात्पणद्वयंक्षत्रियात्पणत्रयंवैश्यात्पणचतुष्टयंशूद्रात्पणपञ्चकंग्राह्यम् । यत्तुमनुनोक्तम् । द्विकंशतंवागृह्णीयात्सतान्धर्ममनुस्मरन्निति तद्व्यवस्थितविकल्पविषयम् । अतएवव्यासः । सम्बन्धेभागआशीतःषष्ठोभागःसलग्नके । निराधानेद्विकशतंमासलाभउदाहृतइति । सम्बन्धेआधिसहिते । आशीतःअशीततमः । षष्ठःषष्ठितमः । सलग्नकःप्रतिभूः । निराधानेबन्धकरहिते । आधानग्रहणाम्प्रतिभुवोरप्युपलक्षणम् । कल्पतरौसाष्टभागइतिपठित्वासलग्नकेअशीततमोभागः । स्वकीयाष्टमभागसहितोमासवृद्धिरित्युक्तम् । द्विकत्रिकचतुष्कपञ्चकशतंसमम् । मासस्यवृद्धिंगृह्णीयाद्वर्णानामनुपूर्वशइति ॥ द्विकंद्वेवृद्धिर्दीयतेयस्मिन्मूलधनेतत्तथा । एवंत्रिकाद्यपिसममाचम्प्राप्यनाधिकम् । विष्णुरपि । अथोत्तमर्णोधमर्णाद्द्व्याद्यत्तमर्थंगृह्णीयात् । द्विकत्रिकचतुष्कंपञ्चकंशतंवर्णानुक्रमेणप्रतिमासमिति । अधमर्णविशेषेप्याहयाज्ञवल्क्यः । कान्तारगास्तुदशकंसामुद्राविंशकंशतमिति । चरणंगृहीत्वाकान्तारंमहावनन्तद्गच्छन्तीतिकान्तारगाः दुर्गस्थलगन्तारोवस्त्रादिक्रयकारिणः । पणशतस्यदशकम्प्रतिमासन्दशपणान्दद्युरित्युत्तर

षाण्मस्यस्यानुषङ्गः । समुद्रंतरन्तीतिसामुद्राःसमुद्रगन्तारःप्रतिमासंविंशकंशतन्तद्दद्युरित्यर्थः । कारितायान्तुननियमइत्या
ह । सएव । दद्युर्वास्वकृतांवृद्धिंसर्वैसर्वासुजातिष्विति । सर्वैर्ब्राह्मणादयोधमर्णाःसबन्धकेऽबन्धकेवासर्वासुजातिषूत्तमर्ण
भूतासुस्वयमङ्गीकृतांवृद्धिन्दद्युरित्यर्थः ॥●॥ द्रव्यविशेषेवृद्धिविशेषमाहसएव । सन्ततिस्तुपशुस्त्रीणांरसस्याष्टगुणापरा ।
वस्त्रधान्यहिरण्यानाञ्चतुस्त्रीद्विगुणापरेति । पशुस्त्रीणांमहिषीस्त्रीणांप्रभृतीनांवृद्ध्यर्थम्प्रयुक्तानान्तदीयासन्ततिरेववृद्धिः ।
रसस्यघृतादेरष्टगुणा । वस्त्राणाञ्चतुर्गुणाधान्यानान्त्रिगुणा । हिरण्यानांद्विगुणापरेतिप्रत्येकंसंबध्यते । परापरमा । अतःप
रमधिकावृद्धिर्नास्तीत्यर्थः । नचगवादीनांवृद्ध्यभावेनदामन्नसम्भवतीतिवाच्यम् । तत्पोषणाद्यशक्तस्यतत्पुष्टिसन्तत्याद्यर्थिनो
दानसंभवात् । गृहणन्तुक्षीरवाहनसेवाद्यर्थिनः । वृहस्पतिरपि । हिरण्येद्विगुणावृद्धिस्त्रिगुणावस्त्रकुप्यके । धान्येचतुर्गुणा
प्रोक्ताशदवाह्यलवेषुच । उक्तापञ्चगुणाशाकेवीजेक्षौवड्गुणास्मृता । लवणस्नेहमद्येषुवृद्धिरष्टगुणामता । गुडेमधुनिचै
वोक्ताप्रयुक्तेचिरकालिकेइति ॥ कुप्यंत्रपुसीसकादिकं । शदःक्षेत्रफलम् । तच्चगोवलीवर्दन्यायाद्धान्यव्यतिरिक्तम्पुष्पमूल
फलादिकम् । वाह्योऽश्वादिः । लवोमेषोर्णाचमरीकेशादिः । अत्रचिरकालशब्देनप्रतिश्रुतायाःअशीतिभागायाःवृद्धे
र्यस्मिन्समयेद्वैगुण्यादिप्रापकत्वम्भवति । ततोऽधिकस्ततोऽधिकःकालोगृह्यते । यत्तुधान्येशदेलवेवाह्येनेत्यादिमनुनो
क्तन्तत्प्रत्यर्पणसमयेसमृद्धाधमर्णविषयम् । षाड्गुण्यनिषेधपरमितिमदनरत्ने । यत्तुवसिष्ठवचनम् । द्विगुणंहिर
ण्यन्त्रिगुणन्धान्यन्धान्येनैवरसाव्याख्याताः । पुष्पमूलफलानिचतुलाधृतमष्टगुणमितितत्त्रिगुणमेवधान्यादिकन्दातव्यमि
तियत्रदेशेस्थितिस्तद्विषयम् । दरिद्राधमर्णविषयंवा । एवमन्यत्रापिन्यूनाधिकपरमवृद्धिप्रतिपादकानिवचनानिदेशवि
शेषविषयतयादरिद्रादिविषयतयावाव्यवस्थापनीयानि । व्यासोपि । वदन्त्यष्टगुणान्कालेमद्यस्नेहरसासवानितिस्ने । ह
स्तैलादिः । रसःक्षीरादिः । कात्यायनोपि । तैलानाञ्चैवसर्वेषांमद्यानामथसर्पिषाम् । वृद्धिरष्टगुणाज्ञेयागुडस्यलवण

स्य चेति । विष्णुरपि । हिरण्यस्य द्विगुणा वृद्धिस्त्रिगुणा वस्त्रस्य धान्यस्य चतुर्गुणा रसस्याष्टगुणा सन्ततिस्त्रीपशूनामिति यासो
पि ॥ शाकपाषाणबीजेक्षौषड्गुणा परिकीर्त्तितेति । वशिष्ठोपि । वज्रमुक्तिप्रवालानां हेम्नश्च रजतस्य च । द्विगुणा चिष्ठते वृ
द्धिः कृतकालानुसारिणीति । मुक्तिशब्देनात्र मुक्ताफलं लक्ष्यते । वज्रसाहचर्यात् । अतएव कात्यायनः । मणिमुक्ताप्रवाला
नां सुवर्णरजतस्य च । तिष्ठति द्विगुणा वृद्धिः फलकेटाविकस्य चेति । कैटः कीटोद्भवम् । पट्टसूत्रादि । आविकमूर्णवलादि
कम् । वसिष्ठोपि । ताम्रायःकांस्यरीतीनां त्रपुणः सीसकस्य च । त्रिगुणा तिष्ठते वृद्धिः कालाचिरकृतस्य चेति । रीतिरारकू
टम् । देशभेदेन परां वृद्धिं दर्शयति नारदः ॥ ऋणानां सार्वभौमोयं विधिर्वृद्धिकरः स्मृतः । देशाचारस्थितिस्त्वन्या यत्रर्णमव
तिष्ठते । द्विगुणा त्रिगुणा चैव तथान्यस्मिंश्चतुर्गुणा । तथाष्टगुणमन्यस्मिन्देशेऽवतिष्ठतइति । यत्र वृद्धिविशेषो न श्रूयते त
त्र द्विगुणैव ग्राह्येत्याह विष्णुः । अनुक्तानां द्विगुणेति अयञ्च द्वैगुण्यादिरूपो वृद्ध्युपरमः । सकृत्प्रयोगे सकृदाहरणे वेदितव्यः त
था च मनुः । कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहितेति । उपचयार्थं प्रयुक्तं द्रव्यं कुसीदं तस्य वृद्धिः कुसीदवृद्धिर्द्वैगुण्यं नात्ये
ति नातिक्रामति । यदि सकृदाहिता सकृत्प्रयुक्ता पुरुषान्तरसंक्रमणादिना प्रयोगान्तरकरणेन तस्मिन्नेव वा पुरुषे रेकस्वेकाभ्यां
प्रयोगान्तरकरणे द्वैगुण्यमतिक्रम्य पूर्ववद्वर्द्धतएवेत्यर्थः । द्वैगुण्यग्रहणं त्रैगुण्यादीनामुपलक्षणम् । सकृदाहृतेति पाठे
यदि प्रतिमासं प्रतिवत्सरं वा न गृह्यते किन्तु सकृद्गृह्यते तदा द्वैगुण्यं नातिक्रामतीत्यर्थः । गौतमोपि । चिरस्थाने द्वैगुण्यं प्रयो
गस्येति । प्रयोगस्येत्येकवचननिर्द्देशात्प्रयोगान्तरकरणे द्वैगुण्यातिक्रमः चिरस्थानइति निर्द्देशात् शनैः शनैर्वृद्धिग्रहणे द्वैगु
ण्यातिक्रमो भवतीति सूचितम् । उक्तस्य वृद्ध्युपरमस्य क्वचिद्द्रव्यविशेषेऽपवादमाह बृहस्पतिः । तृणकाष्ठेष्टकासूत्रकिण्व
चर्मास्थिवर्म्मणाम् । हेतिपुष्पफलानाञ्च वृद्धिस्तु न निवर्त्ततइति । किण्वं सुराद्रव्योपादानकारणभूतो मलविशेषः । च
र्मेषु शरादिनिवारकः फलकः सुराद्रव्योपादानकारणञ्च र्मेहरकमित्यपरार्कँवर्मकवचम् । हेतिरायुधम् । पुष्पफलयोर्वृ

द्धिरनिवृत्तिः । प्रतिदानमेवाचाम न्यूनसमर्थोऽधमर्णो विप्रवादे प्रविशेषविषयावावेदितव्या । अन्यथा त्रिगुणवृद्धिप्रतिपा-
दकव्यासवचनविरोधः स्यात् । विष्णुरपि । किण्वकार्पासस्त्रवर्मशस्त्रायुधेष्टकाङ्गाराणामक्षयेति । कार्पासेतुषडुणवृ-
द्धिविधायकव्यासवचनविरोधःपूर्ववत्परिहरणीयः । वसिष्ठोऽपि । दन्तचर्मास्थिशृङ्गाणांमृन्मयानान्तथैवच । अक्षयावृद्धि-
रेतेषाम्पुष्पमूलफलस्यचेति ॥ अक्षयामूलप्रतिपादनाभावेऽनन्तगुणापिवर्द्धतएवेत्यर्थः । शिखावृद्ध्यादीनामनुपरममाह । बृ-
हस्पतिः । शिखावृद्धिर्द्वायिकाङ्गभोगलाभन्तथैवच । धनीतावत्समादद्याद्यावन्मूलंनसंशोधितमिति ॥ नसंशोधितमप्रतिदत्तमृ-
णिकेनेत्यर्थः । क्वचिदनङ्गीकृतापिवृद्धिर्भवतीत्याह विष्णुः । योगृहीत्वाऋणंपूर्वं दास्यामीतिसामकम् । नदद्यात्लोभतः
पश्चात्तदहात्वृद्धिमाप्नुयादिति । अद्दनिप्रतिश्रुतस्यप्रतिदानकालावधेरुपलक्षणम् । सममेवसामकंअवृद्धिकमितियाव-
त् । योऽमुकस्मिन्दिनेसममेवाहन्तुभ्यंदास्यामीतिप्रतिज्ञाय ऋणंगृहीत्वापश्चाल्लोभाद्विसंवदेत्तस्यावधिदिनमारभ्य
वृद्धिःस्यादित्यर्थः । कात्यायनोऽप्यनङ्गीकारेयागृहीतस्यधनस्यवत्सरमासार्धादूर्ध्वंवृद्धिर्भवतीत्याहनारदः । नवृद्धिःप्रीतिदत्तानां
स्यादनाकारिताक्वचित् । अनाकारितमप्यूर्ध्वंवत्सरार्द्धाद्विवर्द्धतइति । अनाकारितमानङ्गीकृताप्रीतिदत्तानाम्प्रतियाचन
प्रतिदानदिननिर्देशशून्यानामितिशेषः । अनाकारितेत्यादेरयमर्थः । वृद्धिमकृत्वागृहीतमपिवत्सरमासार्द्धादूर्ध्वं प्रीतिदत्तंवृ-
द्धिंप्राप्नोतीति । प्रतियाचितस्यप्रतिदत्तस्यादानेवृद्धिविशेषमाह । कात्यायनः । प्रीतिदत्तन्नवर्द्धेतयावन्नप्रतियाचितम् । या-
च्यमानमदत्तञ्चेद्वर्द्धतेपञ्चकंशतमिति । पञ्चकम्पञ्चाधिकम् । प्रतियाचदिनमारभ्यप्रत्यर्पणस्यपरापञ्चकम्प्रतिमासंवर्द्धत
इत्यर्थः । याचितकंगृहीत्वाप्रतिदायैवदेशान्तरगमनेविशेषमाह कात्यायनः । योयाचितकमादायतमदत्वादिशंव्रजेत् ।
ऊर्द्ध्वं संवत्सरात्तस्यतद्धनंवृद्धिमाप्नुयादिति । एतत्त्वप्रतियाचितविषयम् । प्रतियाचितेयाचितकमदत्वायदिदेशान्तरंगच्छ-
तितदाविशेषमाहसएव । कृत्वोद्धारमदत्वायोयाचितस्तुदिशंव्रजेत् । ऊर्द्ध्वंमासत्रयात्तस्यतद्धनंवृद्धिमाप्नुयादिति । क-

V 2

त्वोद्धारं याचितकं गृहीत्वा याचितो यद्देयं तदन्वयः। देशान्तरगमनाभावे तु याचितकालादारभ्य याचितकस्य वृद्धिविशेषमाह स एव। स्वदेशेऽपि स्थितो यस्तु न दद्याद्याचितः क्वचित्। तन्ततोऽकारितां वृद्धिमनिच्छन्तं प्रदापयेदिति। ततः प्रतियाचनकाला दारभ्येत्यर्थः। एतत्कञ्चिदवधिमपरिकल्प्य याच्ञाप्राप्तेञ्ज्ञेयम्। अवधिस्त्वीकरणे तदतिक्रमे तु तिक्रमदिनमारभ्य तदङ्गनस्य वृद्धिर्ज्ञेया। तदक्षादृद्धिमाप्नुयादितिन्यायसाम्यात्। गृहीतपण्यो मूल्यमनर्थं देशान्तरगमने वृद्धिविशेषमाह। पण्यं गृहीत्वा यो मूल्यमदत्त्वैव दिशं व्रजेत्। ऋतुत्रयस्योपरिष्टात्तद्धनं वृद्धिमाप्नुयादिति॥ एतच्चाप्रतियाचितविषयम्। प्रतियाचनेन त्वेतस्य निक्षिप्तवृद्धिशेषयोश्चतद्दिनमारभ्य प्रतिमासं शतेपञ्चकं वर्द्धते इत्यप्याह स एव। निःक्षिप्तं वृद्धिशेषञ्च क्रयविक्रय एव च। याच्यमानमदत्तञ्चेद्वर्द्धते पञ्चकं शतमिति॥ नन्वकृतायां वृद्धौ परिमाणविशेषस्यानुक्तेः किम्परिमाणं ग्राह्यमिति चेत्। अशीतिभागो वृद्धिः स्यादित्यादियाज्ञवल्क्याद्युक्तपरिमाणं ग्राह्यमिति ब्रूमः। अत एव विष्णुः। वृद्धिं दद्युर्वर्णक्रमेण यथाभिहितामिति। वत्सरातिक्रमे इति यत्र यदतिक्रमे वृद्धिरकृता तत्रोपलक्षणम्। यथाभिहितां धर्मशास्त्र इति शेषः। धर्मशास्त्रे यथोक्तां तथाविधामित्यर्थः। ननु यथाभिहितामित्यस्यार्थः प्रत्यर्थिनोरन्यतरेण मध्यस्थेन वाभिहितां दद्यादित्यर्थः। कस्मान्न भवति अतिप्रसङ्गापत्तेः। कृतानुसाराद्धिकाव्यतिरिक्तानसिद्ध्यति। कुसीदपथमाहुस्तम्पञ्चकं शतमर्हतीति मनूक्तेश्च। अस्यार्थः। शास्त्रविधिनियमितशास्त्रकृतवृद्ध्यनुसारेण यो वृद्धिग्रहणो लौकिकानां समाचारः स कृतानुसारः तस्मादधिका वृद्धिर्ऋणमूल्यादेरकृतवृद्धौ न सिद्ध्यति यतः सा व्यतिरिक्ता धर्मशास्त्रबाह्या। अत एव कुसीदपथमाहुस्तं न धर्मपथमिति। पञ्चकं शतमर्हतीति प्रतियाचितविषयमिति स्मृतिचन्द्रिकायाम्। पूर्वोक्तात्कृतानुसाराद्धिकाऽधमर्णेनाकृता वृद्धिर्न सिध्यति। यतः कुसीदपथमाहुस्तम्। यदा तु व्यवहारावष्टम्भादुत्तमर्णोऽधिकमधमर्णेनाकारितं लाभमिच्छति तदा व्राह्मणो पञ्चकं शतं गृह्णीतुमर्हतीति ततोऽधिकमधमर्णाकारितमित्यर्थमाह रत्नाकरः। अकृतवृद्धेरपवादमाह नारदः। पण्यमूल्यं भृतिन्यासो दण्डो यश्च

प्रकल्पितः । वृथादानाक्षिकपणादेर्वर्द्धन्ते नापि वर्धितानीति । पण्यस्य वस्त्रादेर्मूल्यम् । भृतिर्वेतनम् । न्यासो निक्षेपः । वृथा दानं वेश्यादिभिः प्रतिश्रुतम् । आक्षिकपणो द्यूतद्रव्यम् । अविवक्षितः । अत्र पण्यमूल्यस्य वृद्धेरभावोक्तिः प्रवासप्रतिया चनयोरभावे वेदितव्याः । अन्यथा पूर्वोक्तकात्यायनवचनेन विरोधः स्यात् । न्यासस्य च वृद्ध्यभाववचनम्प्रतियाचनाभावे । न वृद्धिः स्त्रीधनलाभे निःक्षिप्ते च यथास्थिते । सन्दिग्धे प्रातिभाव्ये च यदि न स्यात्स्वयंकृतेति ॥ संवर्तवाक्ये यथास्थितमिति विशेष णोपादानाद्युक्त्यन्यथाकरणाभावे च ज्ञातव्यम् । तथा च निक्षिप्तं वृद्धिशेषञ्चेत्यादि पूर्वोक्तकात्यायनवचनविरोधो नेति ॥ का त्यायनोऽपि । वर्मग्रस्यासवद्यूतेपण्यमूले च सर्वदा । स्त्रीशुल्केषु न वृद्धिः स्यात्प्रातिभाव्यागतेषु चेति । सर्वदेत्यनेन प्रतियाचनादेः परस्तादपि वृद्धिरकृतानामस्त्रीत्युक्तम् । यद्यपि सर्वदेति सर्वशेषत्वात्पण्यमूल्येऽपि प्रतियाचनादेः परस्तादकृतवृद्ध्युपरमः प्रति भाति । तथापि पूर्वोक्तकात्यायनवचनविरोधायतच्छेषता सर्वदेत्यस्य । एवं च पूर्वोक्तस्य परिहारः । एवं वर्मणोऽपि वृद्ध्यभा वोक्तिः । प्रतियाचनाभावे तथाचनतत्शेषतापि । एवञ्च न पूर्वोक्तक्षयवृद्धिप्रतिपादकवसिष्ठादिवचनविरोधः । अन्यथा पि वृद्ध्यभावं व्यास आह । प्रातिभाव्यम्भुक्तबन्धमगृहीतञ्च दित्सतम् । न वर्धते प्रयत्नस्य दमः शुल्कं प्रतिश्रुतमिति । भुक्तबन्धमि त्यनेन स्थापितस्य गृहक्षेत्रादेर्भामलङ्कारादेरुपभोगे वृद्धिर्नभवतीत्युक्तम् । अत एव गौतमः । भुक्ताधिर्न वर्धते वस्त्रालङ्कारादेरि ति । अगृहीतञ्च दित्सन्तमिति दित्सतः प्रतिदातुमिच्छोरधमर्णात् उत्तमो वृद्धिलोभादिवशात्तन्नगृह्णाति तदा तस्य कृतापि वृद्धिस्त द्दिनादारभ्य न देयेत्यर्थः । तथा च याज्ञवल्क्यः । दीयमानं न गृह्णाति प्रयुक्तं यत्स्वकं धनम् । मध्यस्थस्थापितं तत्स्याद्वर्द्धते न ततः परमिति । मध्यस्थस्थापितमिति विशेषणेनाधमर्णो यदि स्वनिकटे स्थापयति तदा भवत्येव वृद्धिरिति तद्देवमुपसङ्गागमासवि शेषा वृद्धिर्निरूपिता ॥●॥ इदानीमाधिर्निरूप्यते । तत्राधिर्नाम अधमर्णेनोत्तमर्णो विश्वासार्थं गृहीतद्रव्यनिमित्तं यस्मिन्निकटे स्थाप्यते भूषणादि स उच्यते । अधिक्रियत इत्याधिरिति व्युत्पाद्यते । तत्स्वरूपं तद्भेदञ्चाह बृहस्पतिः । आधिर्बन्धः समाख्यातः

लाभेनभोक्तव्यः। इयन्तंसमयेनायमस्मिन्धनेभोक्तव्यमितिपरिभाषितस्तु अवधेःपूर्वंभोक्तव्यः। अन्यथायोभुङ्क्ते तस्यस्वलाभःपुनर्न
भवेदित्यर्थः। असावाधिर्न्यासवत्परिपालनीयोनहापनीयोननाशनीयः। हापितेतुवृद्धिर्नश्यतीत्यर्थः। केचित्तुतथापूर्वाव
धाविच्छयाकारप्रसङ्गेवक्तव्या अवधावपूर्णेनभोक्तव्यइत्याहुः। याज्ञवल्क्योपि। गोप्याधिभोगेनवृद्धिःसोपकारेऽथहापितेइ
ति। गोप्याधेरल्पेपिभोगेमहत्यपिभोगेमहत्यपिवृद्धिर्नदेया। सोपकारेभोग्याधौहापितेव्यवहारायोग्यतायांप्रापितेवृद्धि
र्नदेयेत्यर्थः। मनुरपि। नत्वेवाधौसोपकारेकौसीदींवृद्धिमाप्नुयादिति॥ हापितइतिशेषः। एतच्चबलात्कारविषयम्। त
थाचमनुः। नभोक्तव्योबलादाधिर्भुञ्जानोवृद्धिमुत्सृजेत्। मूल्येनतोषयेच्चैनमाधिस्तेनोन्यथाभवेदिति। अधमर्णेनभोगेन
कर्तव्यइतिनिषिध्यमानस्यत्वद्वचनमुल्लंघ्यभोगकर्तुरल्पभोगेपिसर्ववृद्धिनाशइत्यर्थः। बलात्कारभावेतुसएवाह। यःस्वा
मिनाऽननुज्ञातमाधिंभुङ्क्तेविचक्षणः। तेनार्द्धवृद्धिर्मोक्तव्यातस्यभोगस्यनिष्कृतिरिति॥ अर्द्धग्रहणमननुज्ञाताधिभोगा
नुसारेणकल्पनस्यवृद्धिभोगयोःपक्षत्वार्थम्। अन्यथामहाभोगस्याऽर्द्धविसर्जनेननिष्कृतेरसम्भवादल्पभोगस्यनिष्कृति
रितिवाक्यशेषविरोधःस्यात्। अयंविरोधपरिहारार्थमल्पभोगविषयमेवेदंकुतोनभवतितथासत्यननुज्ञातामहाभोगविषये
लाभहानिरनेनानुक्तास्यात्। तच्चानेनानुक्तेपिगोप्याधिभोगेनवृद्धिरितियाज्ञवल्क्यवचनमेवाल्पलाभहानिविधायकम्भविष्य
ति। नभविष्यतितस्यबलात्कृताल्पभोगविषयत्वात्तस्मादर्द्धग्रहणोपलक्षणत्वमेवयुक्तम्। यत्तुहारीतवचनेमूलनाशाभि
धानात्तद्बलात्कृतबहुभोगविषयमितिस्मृतिचन्द्रिकायाम्॥ ● ॥ आधिविनाशविषयमितिकश्चित्गोप्याधिनेनस्थापित
दास्यादेःकर्मणांकारणेविशेषान्तरमुक्तंकात्यायनेन। अकाममननुज्ञातमाधिंयःकर्मकारयेत्। भोक्ताकर्मफलन्दाप्योवृ
द्धिन्वानलभेतसइति। अकाममनिच्छारहितम्। कर्मफलंवेतनम्। दाप्यःअधमर्णायसहेतिशेषः। एवंगोप्याधितया
स्थापितेऽस्मादेस्ताडनादिकन्दाप्यः। वृद्धिर्वापजनीयेत्यर्थः। आहितदास्यादिपीडनेसएवाह। यस्त्वाधिंकर्मकुर्वाणांबाधा

दण्डेनमर्मभिः। पीडयेद्वर्त्तयेच्चैवम्प्राप्नुयात्पूर्वसाहसमिति। आधावन्यथाकरणेयातदपहारः। नष्टोदेयोविनष्टश्चैव
राजहतादृतइति। नष्टःविकृतिङ्गतःपूर्ववत्कृत्वादेयः। विनष्टःआत्यन्तिकनाशम्प्राप्तःसोपिदेयःमूल्यादिद्वारेण। दै
वमग्न्युदकदेशोपप्लवादि तत्कृताद्विनाशाद्विना। तथाचापराधरहिताद्राजहतादपिविनाशाद्विनेत्यर्थः दैवराजकृतेतुवि
नाशेसवृद्धिकम्मूल्यन्दाप्यंअधमर्णेनाध्यन्तरंवा। तथाचस्मृतिः। स्रोतसापहृतेक्षेत्रेराज्ञाचैवापहारिते। आधिरन्यो
थकर्त्तव्योदेयंवाधनिनेधनमिति। तत्रस्रोतसापहृतइतिदैवहतोपलक्षणम्। बृहस्पतिरपि। दैवराजोपघातेनयत्राधि
नाशमाप्नुयात्। तत्रान्यन्दापयेद्वन्धंशोधयेद्वाधनंचणीति। राजोपघातोत्रउत्कृष्टकुलेनग्रहणेनतस्कराद्भवः। ननुधनिना
पराधनिमित्तकः। अतएवव्यासः। दैवराजोपघातेतुनदोषोधनिनःक्वचिदिति। कात्यायनोपि। नचेद्धनिकदोषेणविप्र
णश्येद्वाम्रियेतवा। आधिमन्यंसदाप्यःस्याद्दृणान्मुच्येतनर्णिकइति॥ विप्रणश्येत्। म्रियेतेतिपश्वाद्यभिप्रायेण। अदा
नेनस्माद्दृणात्नमुच्यतेत्यर्थः। आधेर्विनाशेतन्मूल्यन्देयम्। तथाचव्यासः। गृहीतृदोषान्नष्टश्चेद्वन्धोहेमादिकोभवेत्।
च्युतांसलाभंसंशोध्यतन्मूल्यन्दापयेद्धनीति। सलाभमृणांसंशोध्यसम्यक्विचार्यविनष्टाधेर्मूल्यन्दत्वासवृद्धिकन्धनंगृह्णी
यात्। अन्यथामूलनाशइत्यर्थः। अतएवनारदः। विनष्टेमूलनाशःस्याद्दैवराजकृतादृतइति। हारीतोपि। आधौ
नष्टेधनंनष्टंधनिकस्याधिरेवचेति। भोगेनविकृतिङ्गतस्याधेस्तथैवापिवामूलनाशमाहबृहस्पतिः। भुक्तकाचारताम्प्राप्ते
मूलहानिःप्रजायतइति। बहुमूल्याधिनाशेतुसलाभकरणाद्दुपरिआधिमूल्यमाधाताप्रदेयम्। तथाचसएव। बहुमूल्यो
यत्रनष्टाल्पधनिकस्तत्रतोषयेतइति। नचतोषयेदितिवचनाद्यावताधनेनाधातातुष्यतितावद्धनन्देयमितिशङ्कनीयम्। यत
आहमनुः। मूल्येनतोषयेच्चैनमाधिस्तेनोन्यथाभवेदिति। सलाभकरणापगतावशिष्टांशेनेत्यर्थः। यत्तुउत्तमर्णःसलाभकर
णावशिष्टंमूल्यमधमर्णायदत्वाततोषयतितदाधिप्रत्यर्पणप्रतिभूर्मूल्येनाधमर्णन्तोषयेत्। तथाचहारीतः। खादकेति

न्न हीनस्तेस्य धनिकोविनिमयाल्पादि । मूल्यन्नाशमवेदेयंनवृद्धिं दातुमर्हतीति । आधिकृतस्य धनस्य प्रीतिदत्तधनस्य वाकारितवृद्ध्यु
सम्भवादित्याशयः ॥ खादकोबन्धखादकः । आधिनाशकः उत्तमर्णइतियावत् । लग्नकः प्रतिभूः । मूल्यंनाशिताधेर्मूल्यम् ।
यत्त्वाधमर्णाद्वृद्धिं गृह्णातितदागृहीतवृद्ध्यंशकेमहार्घ्यानुसारेणदद्यात् । तथाचस्मृतिः । द्विगुणान्त्रिगुणांवापि
यःसाधयतिलग्नकम् । राजगामितुतद्द्रव्यंसाधकोदण्डमर्हतीति । यःसाधयतिलग्नकंलग्नकाद्यःसाधयतीत्यर्थः । लग्नक
ग्रहणमुत्तमर्णस्याप्युपलक्षणार्थं । अविद्यमानवृद्धिसाधनस्योत्तमर्णस्यापिसमानत्वात् । यत्तु उत्तमर्णश्चाधिनाशेपि [illegible]
भेनाधमर्णाद्वृद्धिंगृह्णातिसोपिदण्डभागित्याहकात्यायनः । आधिहृत्येनलेख्येनभुक्तोयद्वृद्धिकाङ्क्षी । [illegible]
आधिलेख्यमनुनाशयेदिति ॥ [illegible] ॥ कालिकव्यभोगद्रव्यनिष्कृत्यर्थं वृद्धिहानिरप्युक्तेयेनिस्मृतिचन्द्रिकायाम् । सम्य
गवेक्ष्यमाणस्याप्याधावसारतांकृतेयतिकर्तव्यकेनधनमाध्यन्तरंवाउत्तमर्णोयदेयमित्याहनारदः । रक्ष्यमाणोपियश्चाधिः
कालेनेयादसारतां । समृद्धिकमूल्यद्रव्यापर्याप्तत्वात्किंचिदेकसंवत्सरभववृद्धिसहितमूलद्रव्यापर्याप्ततामसारतामाहुरिति
व्यम् । एतादृशविशेषविकल्पमेकारणाभावात् । याज्ञवल्क्योपि । आधेःस्वीकरणात्सिद्धीरक्ष्यमाणोप्यसारतां । यातश्चेद
न्यआधेयोधनभाग्वाधतीभवेदिति । आधेःस्वीकरणादुपभोगात्सिद्धिर्नलेख्यमात्रेणेत्यर्थः । एतदेवाभिप्रेत्याहनारदः ॥ आ
धिस्तुद्विविधःप्रोक्तोजङ्गमस्थावरस्तथा । सिद्धिरस्योभयस्यापिभोगोयद्यस्तिनान्यथेति । गोप्याधेर्भोगाभावोकारःभोग्याधेः
फलभोगः । एतच्चाधेर्भोगात्सिद्धिप्रतिपादनम् । आधेःप्रतिग्रहक्रीतेपूर्वानुवर्तनन्तरंत्येवमादिवाक्योक्तनिर्णयार्थम् ॥ अनये
वद्दयोर्धनिकयोर्दुष्टाधमर्णकेनएकस्यवस्तुनआधीकरणेभोगान्निर्णयइत्याहविष्णुः । ययोर्निक्षिप्तआधिस्तौविवदेतांय
दानतौ । यस्यभुक्तिर्जयस्तस्यबलात्कारंविनाकृतेति । द्वयोरपिभोगसत्त्वेनिर्णयप्रकारमाहबृहस्पतिः । तुल्यकालेनिसृष्टानां
लेख्यानामाधिकर्मणि । येनभुक्तस्तुभवेत्पूर्वंतस्याधिर्बलवत्तरइति । निसृष्टानांकृतानांलेख्यानांबहूनांविप्रतिपत्तिःवेः । अयम

र्थः । तुल्यकालोत्पन्नानां लेख्यानां सद्भाव साम्येऽपि भोग्यादि सिद्धेर्भोगाद्योत्कृष्टत्वाद्वा बलवत्त्वमवधर्म्यं निर्णेतव्यमनायुक्तेति ॥ बृहस्पतिः । क्षेत्रमेकं द्वयोर्वेन्धेद्दत्तं यत्समकालिकम् । येन भुक्तमभुक्तं पूर्वं तत्स्यात्सिद्धिमाप्नुयादिति । क्षेत्रग्रहणमभोग्याधिमात्रोपलक्षणम् ॥*॥ यथाधिविशेषेद्वयोरपि भोगाभावे भोगार्थं द्वयुमपत्प्राप्तस्तत्र निर्णयप्रकारमाह वसिष्ठः । यद्येकदिवसे तौ तु भोक्तुकामावुपागतौ । विभक्त्याधिः समन्तेन भोक्तव्य इति निश्चय इति । तेन ताभ्यामित्यर्थः ॥ द्वयोरेकमाधिं कुर्वतोऽधमर्णस्य दण्डमाह कात्यायनः । आधिमेकं द्वयोर्यस्तु कुर्यात्का प्रतिपद्भवेत् । तयोः पूर्वकृतं ग्राह्यं तत्कर्त्ता चौरदण्डभागिति ॥ तत्रायं ग्रहणोपक्रमत्वादाधिक्रियाप्रतिपदित्युच्यते । पूर्वकृतम्पूर्वाद्युपादानादिनाविद्धं आधिविशेषे दण्डविशेषमाह विष्णुः । गोचर्ममात्राधिकामभुवमन्यस्याधीकृतामन्यस्य यः प्रयच्छेत्स वध्यः ऊनाश्चेत् षोडशसुवर्णान् दण्ड्य इति । उपादानादियोगपद्येऽप्याह बृहस्पतिः । तुल्यकालोपस्थितयोर्द्वयोरपि सम्भवेदिति उपस्थितयोरुपादानादि कर्त्तृत्वमिति शेषः ॥ ७ ॥ साक्षिवेख्यसिद्धयोर्लेख्यसिद्धं बलवदित्याह । कात्यायनः । आधानं विक्रयोदानं लेख्यसाक्षिकृतं यदा । एकक्रियाविरुद्धं तु लेख्यमसापहारकमिति । लेख्य साक्षिकृते । लेख्य साक्षिविरुद्धम् । अपहारकं बलवत् । लेख्यसिद्धस्याविशेषेऽपि बलाबलमाह स एव । अनिर्दिष्टं निर्दिष्टमेकमन्यच्च विलेखितम् । विशेषविखितं ज्यायइति कात्यायनोऽब्रवीदिति । एकत्र धात्रीकरणादौ । विशेषलिखितं निर्दिष्टं विलिखितं अनिर्दिष्ट विलिखिताज्ज्यायो बलवदित्यर्थः । लेख्ये निवेशितं विलिखितम् । अनिर्दिष्ट निर्दिष्टपदयोरर्थमाह स एव । योऽविद्यमानं प्रधनमनिर्दिष्टस्वरूपकम् । आकाशभूतमादद्यादादिष्टं नैव तद्भवेत् । यद्याप्तदास्यविद्ये न तदादिष्टं विनिर्दिशेत् इति । प्रथमद्वः पाद पूरणार्थः । अनिर्दिष्टस्वरूपकमनिरूपितस्वरूपकम् । आकाशभूतमविद्यमानस्वभावम् । अयमर्थः । आधातुरधीकरणकाले यद्धनं विद्यमाने निरूपितस्वरूपञ्च तद्धनमाधित्वेनादिष्टं सन्निर्दिष्टमित्युच्यते । तद्विपरीतं तु धनमाधित्वेन कथ्यमानमनिर्दिष्टमिति । आधीकरणकाले विद्यमानत्वसाम्येऽप्याह । स ए

व। यत्तु सर्वस्वमुद्दिश्य प्राक्पश्चान्नामचिह्नितम्। आदध्यात्तत्र यत्तस्याश्चिह्नितं बलवत्तरमिति। यः पूर्वमविशेषेण सर्व
स्वमाधित्वेनोद्दिश्य कस्यचित्स्वादृशं गृहीत्वा पश्चाल्लेखनसमये विशेषेण क्षेत्रादिकमेव लेखयति तत्रोत्तरकालं विवादे सति
यावत्पश्चाल्लेखितं तावदेव प्रमाणं नोद्दिष्टमित्यर्थः। चिह्नितमिति विरोध्युत्तरक्रियोपलक्षणार्थम्। तेन यदि प्रथममाधिमादा
य धनी धनं दत्त्वा पश्चाद्बन्धकत्वं विज्ञाय आधिमन्तरेणैव तत्कर्त्तुं त्वयि चेद्दत्तमास्तामिति प्रकारान्तरेण पुनः क्रियाङ्करोति तदा निरा
धिक्रिया बलवतीत्यवगन्तव्यम्। अत एवाह याज्ञवल्क्यः। सर्वेष्वर्थविवादेषु बलवत्युत्तरा क्रियेति। उत्तरा क्रिया पूर्वस्याः क्रियायाः
बाधिका भवतीत्यर्थः। निर्दिष्टत्वाविशेषेऽप्युत्तरक्रियाबलवत्वस्यापवादमाह स एव। आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरेति।
एकमेव क्षेत्रमेकस्याधिं कृत्वा किमपि गृहीत्वा पुनरन्यस्याधिं कृत्वा किमपि गृह्णाति तत्र पूर्वस्यैव तत्क्षेत्रं भवति नोत्तरस्येत्यर्थः। ए
वं प्रतिग्रहे क्रये च योजनीयम्। स्वामित्वप्रतिबन्धावगमाभ्यां प्रागेव पूर्वस्याः क्रियायाः कृतत्वादिति भावः। एतदेवाभिप्रेत्य वसि
ष्ठोऽप्याह। यः पूर्वतरमाधाय विक्रीणीते तु तत्पुनः। किमेतयोर्बलीयः स्यात्प्राक्तनं बलवत्तरमिति। आध्यादीनां यौगपद्येऽप्याह
स एव। कृतं यत्रैकदिवसे दानमाधानविक्रयं। त्रयाणामिति सम्बन्धे कथं तत्र विधिं नयेत्। त्रयोऽपि तद्धनं स्वं स्वं विभजेयुर्यथां
शतः। उभौ क्रियानुसारेण त्रिभागेन प्रतिग्रहीति ॥*॥ आधिकृतस्य धनस्य स्वत्वनिवृत्तिकालमाह याज्ञवल्क्यः। आधिः प्रणश्ये
द्द्विगुणे धने यदि न मोक्ष्यते। काले कालकृतो नश्येत्फलभोग्यो न नश्यतीति ॥ प्रयुक्ते धने स्वकृतया वृद्ध्या कालक्रमेण द्विगुणे जाते
ऽधमर्णेन तावद्धनं दत्त्वा यदि न मोक्ष्यते तदासौ नश्येदधमर्णस्य स्वत्वं न भवेत्किन्तूत्तमर्णस्यैव भवेत्। यस्तु कालकृतः कृतकालः।
आहिताग्न्यादिषु पाठात्कालशब्दस्य पूर्वनिपातः। यद्वा जातिकालसुखादिभ्यः परा निष्ठा वाच्येत्यनेन वार्त्तिकेन निष्ठान्तस्य परनि
पातः। स यदि सम्प्रतिपन्ने कालेन मोक्ष्यतेऽधमर्णेन तदासोऽपि पूर्ववन्नश्येत्। फलभोग्यः क्षेत्रादिः कदापि न नश्येत्किन्तूत्तम
र्णेन यावत्स्वधनं न प्राप्यते तावदुत्पन्नफलमेव भोक्तव्यमित्यर्थः। अत्र काले कालकृतो नश्येदित्यनेन कृतकालस्योभयविधस्याधेस्त

कालातिक्रमेणाभ्युक्तः । फलभोग्यो न नश्यतीत्यनेनाहृतकालस्य भोग्याधेर्नाशाभावश्चोक्तः । पारिभाष्याद्वाधिः प्रणश्येद्द्विगुणे
द्रव्ये कृतकालगोप्याधिविषयमवतिष्ठते । द्वैगुण्यातिक्रमे च विनाशे चतुर्दशदिवसप्रतीक्षणमप्याहतुर्व्यासबृहस्पती
। हिरण्ये द्विगुणीभूते पूर्णे कालेऽकृतेऽवधौ । बन्धकस्य धनी स्वामी द्विसप्ताहं प्रतीक्ष्य तु । तदन्तरा धनं दत्त्वा ऋणी बन्धमवा-
प्नुयादिति । तत्रस्थात्कारणात् अन्तरा चतुर्दशदिवसमध्य इत्यर्थः । अत्र द्वैगुण्यग्रहणं त्रैगुण्यादीनामुपलक्षणार्थम् । वक्ष्य-
माणबृहस्पतिवचने प्राप्ते काले इति सामान्येनैवाभिधानात् । नन्वाधेर्दानादिस्वत्वनिवृत्तिकारणस्य प्रतिग्रहादिस्वत्वापत्ति-
कारणस्य चाभावात्कथमाधिः प्रणश्येद्द्विगुणे इत्युक्तमिति चेन्नैवम् । न केवलं दानादिरेव स्वत्वनिवृत्तिकारणं प्रतिग्रहादिरेव वा
स्वत्वापत्तिकारणं किन्तु द्वैगुण्ये निरूपितकालप्राप्तौ चाप्याधानमपि । तथा याज्ञवल्क्यवचनेनैवाधमर्णोत्तमर्णयोः स्वत्वनिवृत्तिस्व-
त्वनिवृत्तिस्वत्वापत्तिकारणं किन्तु पश्चात्कारस्य त्वावगमात् लोकाच्च । न चानवाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रय इति मनुवच-
नेन तस्यायमर्थः । कालेन संरोधः कालसंरोधः चिरकालावस्थानं तस्मात्कालसंरोधात् आधेर्न निसर्गोऽस्ति नान्यत्राधिकरणम-
स्ति न च विक्रय इति तेन विरोध इति वाच्यम् । तस्य वाधौ सोपकारे इत्याद्युपक्रम्य कथनेन तत्र भोग्याधिविषयत्वात् । यत्तु
बृहस्पतिः पूर्णावधौ शान्तलाभे बन्धे स्वामी धनी भवेत् । अनिर्गते दशाहे तु ऋणी मोचितुमर्हति । इति दशदिवसप्रतीक्षणमुक्तं तद्
वस्त्वादिविषयम् । हिरण्ये द्विगुणीभूत इति व्यासबृहस्पतिभ्यां विशेषोपादानात् हिरण्यविषयम् । शान्तलाभे द्वैगुण्यादिप-
र्यवृद्ध्या निवृत्तलाभे । यत्तु पुनस्तेनैव भोग्याधिर्द्विगुणादूर्ध्वं कृतकालस्य चावधेः । आवेदयित्वा धनिकुले भोक्तव्यस्तदनन्तरमि-
ति । तत्र स्वत्वापत्तेर्वा गाधेर्भोगमात्रविधिपरं न पुनः स्वत्वापत्तिपरम् । तथा च न बार्हस्पत्यवचनयोः परस्परं विरोधः नापि व्या-
सबृहस्पतिवचनयोः । यदा तु शान्तलाभे धनेऽबन्धकस्य नष्टे वावस्थितस्य मोचनात्प्रागधमर्णस्य मरणादि भवेत्तदा किं कर्तव्यमि-
ति परीक्षायामाह बृहस्पतिः । हिरण्ये द्विगुणीभूते मृते नष्टेऽधमर्णिके । द्रव्यं तदीयं संगृह्य विक्रीणीत ससाक्षिकम् ॥ रक्षेद्वाक

नमूल्यन्तुदद्याद्धनसंसदि ॥ यथानुरूपमस्तोगृह्णीतमनुवर्जयेदिति। हिरण्येद्विगुणीभूतेपश्चादाधिमोक्षणाद्वीगि
तिशेषः। हिरण्यग्रहणम्वस्त्रादीनामुपलक्षणम्। द्विगुणीभूतइतित्रैगुण्यादीनामुपलक्षणम्। नष्टेकुतश्चिद्धेतोर्विनाशमधि
ज्ञानेद्रव्यबन्धकीकृतन्द्रव्यम्। यथानुरूपंद्विगुणीभूतद्रव्यपर्याप्तम्। परमःदद्यादाद्वृद्धं। अन्यमुवर्जयेत्। अवशिष्टंवा
सिवाऽथवेतदभावेसर्वंसमर्पयेदित्यर्थः। अतएवकात्यायनः। आधानायचवैनस्याद्धनीबन्धमिवेदयेत्। राज्ञस्तत्त्वविज्ञा
नोविक्रेयइतिधारणा। सवृद्धिकंगृहीत्वानुशेषंराजन्यथार्पयेदिति। राजन्यथार्पयेदितिन्यायान्प्राप्तभावविषयम्। स
त्यद्भावेतत्रैवार्पणस्यन्याय्यत्वात्। यत्रतेनार्पणंक्रियेतेनैवयदिसवृद्धिकमधनद्रव्यावन्धोगृह्यतेतदानविक्रयःप्रयोजन
स्यासिद्धत्वात्। अस्मिन्विषयेऽन्यत्राधिकरणंनविरुद्धम्दण्डापूपन्यायात्किंत्वन्यत्राधिंधनामूल्यमात्रंगृहीतव्यम्। ननुस
सवृद्धिकम्। यदाहप्रजापतिः। धनीधनेनतेनैवपरमाधिंनयेत्ततःदिति। तत्वानदाधिविशिष्टंपूर्वंवास्यसमर्पयेदिति। य
द्वंधनस्वामिभिर्धनमप्रयुक्तमनुस्येनैवधनेनपरन्धनिकान्तरमाधिनयेत्ननुसवृद्धिकेनेत्यर्थः। अथयस्माद्धिर्धनस्यद्वैगुण्येऽ
तिप्रतिपत्तौनुद्वैगुण्यादर्वागपिद्रष्टव्यः। कश्चिद्गोप्याधेर्द्वैगुण्यातिक्रमेपिकस्यविकस्यस्वत्वनाशोनभवतीत्याहयाज्ञवल्क्यः।
चरित्रबन्धककृतंसवृद्धयादापयेद्धनं। सत्यङ्कारकृतन्द्रव्यंद्विगुणम्प्रतिदापयेदिति ॥ चरित्रंशोभनचरितन्तेनयद्बन्धकन्तत्परि
चबन्धकन्तेनयद्द्रव्यंसाधीनंकृतन्त्स्वाधीनंवाकृतन्तच्चरित्रबन्धकंकृतम्। अयमर्थः। अधमर्णेनधनिनःस्वहस्तेनवहु
मूल्यमपिबन्धकीकृत्यात्यल्पमेवधनंस्वाधीनंकृतं। यद्विवाऽधमर्णेनाधमर्णस्यनिर्दोषत्वनाममवगत्याल्पमेवबन्धकंगृहीत्वाबहुधनम
धमर्णाधीनंकृतन्तस्माद्दानकृतंसवृद्धयावृद्धिसहितन्दापयेत्त्वाधिनाशइति। अथवाचरित्रंशोभनाचरितंगङ्गास्नानादिअग्निहोत्रा
दिजनितापूर्वंतदबन्धकीकृत्यगृहीतचरित्रबन्धकीकृतमिति। एतादृशंबन्धकंद्विगुणीभूतेपिद्रव्येणनश्यतिकिन्तुद्विगुणीभूतन्द्र
व्यमेवदातव्यमित्यभिप्रायः। तथासत्यङ्कारकृतं। करणङ्कारः। भावेघञ्। सत्यस्यकारःसत्यङ्कारः। कारेसत्याऽगदस्येतिमुम्

। तेनकृतंसत्यङ्कारकृतम्। तदपिद्विगुणमेवदेयन्नाधिनाशः। बन्धकार्पणसमयएवद्विगुणीभूतेपिद्रव्येमयाद्रव्यमेवद्विगुणमदातव्यंनाधिनाशइतिसमयेकृतेद्विगुणीभूतन्द्रव्यमेवदातव्यंनाधिनाशइत्यभिप्रायः। क्रयविक्रयादिनिर्वाहाययदङ्गुलीयकादिपरहस्तेसमर्पितन्तत्सत्यङ्कारकृतन्तच्चाङ्गुलीयकादिगृहीतार्थवस्थामतिक्रामन्तदेवाङ्गुलीयकादिद्विगुणम्प्रतिपादयेत्। इतरस्त्वदङ्गुलीयकादिकमेवजह्यात्। चरित्रबन्धादिस्थलेद्वैगुण्यादूर्ध्वमाधिनाशोनभवत्यतीतिबुद्ध्याऽधमर्णेनमोचनेविलम्बोनकार्यः। तथाचव्यासः। गोप्याधिंद्विगुणादूर्ध्वम्मोचयेदधमर्णिकइति। अस्मिन्नेवविषयेऽधमर्णासम्भवेसंनिधानेउत्तमर्णेनाधिर्विक्रेतव्यः। तथाचयाज्ञवल्क्यः। विनाधारणिकाद्वापिविक्रीनससाक्षिकमिति। धारणिकात्अधमर्णात्। अयमर्थः। असन्निहितेऽधमर्णेउत्तमर्णःसाक्षिभिस्तदाप्तैश्चसहतमाधिंविक्रीयधनंगृह्णीयादिति। वाशब्दोव्यवस्थितविकल्पार्थः। यदर्णदानकालेद्विगुणीभूतेपिद्रव्येद्रव्यमेवदेयम्। नाधिनाशइतिपरिभाषितन्तदाअयम्पक्षः। इतरथाआधिःप्रणश्येद्विगुणद्रव्येनेनोक्तआधिनाशपक्षइति। यदिद्वैगुण्यावधिकालयोरर्वागेवाधिमोचनार्थेअधमर्णःसमायातितदाउत्तमर्णेनमोक्तव्योनवृद्धिलोभेनस्थापनीयइत्याहबृहस्पतिः। धनंमूलीकृतन्दत्वायदाधिम्प्रार्थयेद्दणी। तदैवतस्यमोक्तव्यस्त्वन्यथादण्डभाग्धनीति। मूलीकृतंअधमर्णेनदेयन्धनम्। तच्चभोग्याधौमूलमात्रम्। गोप्याधौतुसवृद्धिकन्दत्वाऋणीयद्याधिम्प्रार्थयतेतदाधनिनासमोक्तव्यः। अन्यथादोषभाक्स्तेयदोषभागित्यर्थः। यदाहयाज्ञवल्क्यः। उपस्थितस्यमोक्तव्यआधिस्तेनोन्यथाभवेदिति। स्तेनःस्तेनवद्दण्ड्यइत्यर्थः। उत्तमर्णस्यासन्निधानेतदाप्तहस्तेधनन्दत्वाआधिमधमर्णोगृह्णीयात्। तथाचसएव। प्रयोजकेऽसतिधनंकुलेन्यस्याधिमाप्नुयादिति। प्रयोजकेउत्तमर्णेऽसतिसन्निहितेसतितत्कुलेतदाप्तहस्तेसवृद्धिकन्धनंनिधायाधमर्णःस्वीयमन्धंगृह्णीयादित्यर्थः। क्वचित्प्रयोजकोऽसतिकुलइतिपाठः॥ तत्रप्रयोजकोधनप्रयोक्ताअसतिधनिकइतिशेषः। आप्नुयात्तदानीमेवेतिशेषः। तथाचउत्तमर्णेऽसन्निहितेतदाप्तहस्तेसवृद्धिकन्धनंनिधायप्रयोजकोधनप्र

थोक्ताऽधमर्णस्तदानीमेवस्वाधिमाप्नुयादित्यर्थः । यदि तु तदा प्रोषितः सन्निहितः स्वधमर्णस्य चाधिविक्रयेणार्थिमवृद्धिव्यव च्छेदाय धनदानेच्छा भवति तदा किं विधेयमितीच्छायामाधिमूल्यम्परिकल्प्य तद्गृह एवाधिं स्थापयेत्तथा च स्थापनदिनमार भ्य तद्धनन्न वर्द्धत इत्याह स एव । तत्कालकृतमूल्यो वा तत्र निष्ठेद्वृद्धिक इति । निष्ठेदाधिरिति शेषः । तत्रेत्तमर्णान्तकुले वा । एतच्चाधिमोचनं यदि भोग्याधिर्गोप्याधिस्तु तावता काले मोचनीय इत्यवधिं कृत्वा स्थापितस्तदाधमर्णेनावधेर्वाग्लोभेनन कर्त्तव्यं । इदमेवाभिप्रेत्य फलभोग्याधिविषये व्यासस्त्वाह । फलम्भोग्यम्पूर्णकालन्दत्वा द्रव्यन्तु सामकमिति । चत्तमर्णो बन्धमवाप्नुयादित्य नुषङ्गः । मूलमात्रन्दत्वा परिभावितकालमापन्नम्फलभोग्याधिमाप्नुयादित्यर्थः । फलभोग्यग्रहणमाद्यन्तरोपलक्षणम् । सा मकग्रहणं सवृद्धिकस्याप्युपलक्षणं ॥ ● ॥ भोग्याधिविषये कञ्चिद्विशेषमाह वृहस्पतिः । क्षेत्रादिकं यदा भुक्तमुत्पन्नमधिकन्त तः । मूलोदयम्प्रविष्टञ्चेत्तदाधिम्प्राप्नुयादृणी ॥ परिभाष्य यदा क्षेत्रम्प्रदद्याद्धनिके दृणी । क्षयैतच्छान्तलाभेऽर्थे भोक्तव्यमि ति निश्चयः । प्रविष्टे सोदये द्रव्ये प्रदातव्यं पुनर्ममेति ॥ अधिकं मूलापेक्षयाऽधिकं क्षेत्राद्यर्थव्ययद्रव्यम् । ततः तस्मात्क्षेत्रादेः उ दयो वृद्धिः । शान्तलाभेऽर्थे परमवृद्धिसहिते मूलद्रव्ये । इयं निमित्तसप्तमी । परमवृद्धिसहितं क्षेत्राद्यर्थव्ययसहितमेत न्मूलद्रव्यमस्मिन्क्षेत्रे उपभोक्तव्यम् । उपभोगेन च सवृद्धिकधने प्रविष्टे त्वयैतत्क्षेत्रम्भोक्तव्यमिति परिभाष्य यदा क्षेत्रादि कं वन्धकीकुर्यात्तदा क्षेत्रादिफलभोगेन क्षेत्राद्यर्थव्ययसहिते सवृद्धिके धने प्रविष्टे उत्तमर्णोकिमप्यदत्वा तमाधिम्प्राप्नुयादित्य र्थः । एवंविधस्याधेः पूर्वं गृहीते उत्तमर्णो कालक्रमेण परां वृद्धिम्प्राप्ते सति तदनन्तरं यस्सवृद्धिकमूलद्रव्योपभोगार्थे क्षेत्रादिरा धिः क्रियते स क्षेत्राद्यर्थव्ययद्रव्यसहितसवृद्धिकमूलोपभोगानन्तरम्धनिकेनाधमर्णाय प्रत्यर्पणीयः । तथा च याज्ञवल्क्यः । यदा तु द्विगुणीभूतमृणमाधौ तदा खलु । मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धन इति । आधौ तदा दत्त इति शेषः । अय मेव क्षयाधिरित्युच्यते । इत्याधिविधिः ॥ ● ॥ अथ प्रतिभूः । तत्र प्रातिभाव्यं नाम विश्वासार्थं पुरुषान्तरेण सह समयः । त

इदानीं बृहस्पतिः । दर्शने प्रत्यये दाने ऋणद्रव्यार्पणे तथा । चतुःप्रकारः प्रतिभूः शास्त्रे दृष्टो मनीषिभिरिति ॥ प्रत्य
यो विश्वासः । दानं ऋणापाकरणार्थमर्थार्पणम् । ऋणिद्रव्यार्पणं ऋणिनो यद्द्रव्यं गृहोपकरणादि तदर्पणम् । चतुःप्र
काराणां प्रतिभुवां प्रातिभाव्याङ्गीकारप्रकारं दर्शयति स एव । अहमेनं दर्शयामीति साधुरित्यपरोऽब्रवीत् । दाता हमेतद्द्रविण
मर्पयाम्यपरोऽब्रवीत्तु इति ॥ एको दर्शनप्रतिभूरहमेनं पलायनप्रवृत्तं दर्शयिष्यामीत्याह । अपरः प्रत्ययप्रतिभूरेष साधुर्वि
श्वासं मा कार यिष्यति यतोऽयं श्रोत्रियपुत्रोऽस्य सर्वं स्वसम्पन्नो ग्रामोऽस्ति मत्प्रत्ययेनास्य द्रव्यं देहीति ब्रवीति । दानप्रतिभूर्यद्य
धनं ददाति तदाऽसवृद्धिकमृणमहं दास्यामीति । अपरः ऋणिद्रव्यार्पणप्रतिभूर्यद्ययं न ददाति तदाऽहमेतदीयं गृहोपकरणा
दिकमर्पयिष्यामीति कथयतीत्यर्थः । दर्शनप्रतिभुवा यदा धनिकस्याधमर्णिकदर्शनापेक्षा तदैव स दर्शनीय इत्याह कात्याय
नः । दर्शनप्रतिभूर्यस्तु देशे काले च दर्शयेत् । यस्मिन्देशे काले च धनिकस्तद्दर्शनमपेक्षते तत्रैव दर्शयेत् अधमर्णमिति शेषः
। दर्शिते च तस्मिन्धनिकेन प्रातिभाव्यात्समोक्तव्य इत्युत्तरार्द्धेनाह स एव । यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत् । एवम्प्र
त्ययादिप्रतिभुवोऽपि तदविसंवादे मोक्तव्याः । अन्यथाऽधमर्णिकं देयं धनं दाप्या इत्याह तु कात्यायनबृहस्पती । यो यस्य प्रति
भूस्तिष्ठेद्दर्शनायेह मानवः । अदर्शयन्स तत्तस्मै प्रयच्छेत स्वधनादृणम् ॥ अद्यौ तु वितथे दाप्यौ तत्कालावेदितं धनम् । उत्त
रौ तु विसंवादे तौ विना तत्सुतौ तथा । यत्तु योगीश्वरेण प्रतिभुवां त्रैविध्यमेवोक्तम् । दर्शने प्रत्यये दाने प्रातिभाव्यं विधीयते । तद्द्र
नार्पणयोरनतिभेदाभिप्रायेण । दाने आद्यौ तु वितथे दाप्यौ वितरस्य सुता अपि । वितथे । दर्शनप्रत्यये । दाने विसंवादे इतरं
स्य सुता अपीति वचनात्पूर्वयोः सुता न दाप्याः । सुता इत्यभिधानान्न पौत्रा इत्युक्तम्भवति दानं स्वधनार्पणं धनिकाय । अर्पणन्तु
धारणिकधनमानीय तस्य अर्पणं धनिकस्य स्वधनलाभे उभयतो न विशेषः । अत एव सूक्ष्मभेदविवक्षया पञ्चप्रकारा अपि प्रति
भुवो हारीतेनोक्ताः । अभये प्रत्यये दाने उपस्थाने प्रदर्शने ॥ पञ्चस्वेषु प्रकारेषु याह्याेहि प्रतिभूर्बुधैः ॥ अभयमुपद्रववारणं

। उपस्थानमत्र धारणिकधनस्य धनिकायानीयार्पणं दर्शनन्तस्य पृथक्निर्देशात् । पञ्चस्वित्यनन्वयाच्च । व्यासस्तु । सप्तभि
र्विषयैः सप्तप्रकारकम्प्रतिभुवमाह । लेख्येकृते च दिव्ये वा दानप्रत्ययदर्शने । गृहीतबन्धोपस्थाने ऋणिद्रव्यार्पणे तथा ॥ प्रतिभू
र्ग्राह्य इत्यत्र प्रकृतं । कात्यायनेोपि । दानोपस्थानवादेषु विश्वासशपथाय च । लग्नकं कारयेदेवं यथायोग्यं विपर्यये ॥ वादेोवि
वादस्तत्र प्रतिभूग्रहणम् । उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णय इति योगीश्वरेण प्रोक्तन्तच्च प्रागेव व्याख्यातं । दर्शनप्रत्य
यदानेषु यथायथं सर्वेषामन्तर्भावसम्भव इति परमार्थः । दर्शनप्रतिभुवे नष्टधारणिकान्वेषणाय कालावधिर्देय इत्याह बृहस्प
तिः । नष्टस्यान्वेषणे काल्यन्दद्यात्प्रतिभुवे धनी । देशानुरूपतः पक्षं मासं सार्धमथापि वा ॥ सार्धमासमिति परमावधिः । तथात्र
कात्यायनः । नष्टस्यान्वेषणार्थन्तु देयम्पक्षत्रयम्परम् । यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत् ॥ काले प्रतीते प्रतिभूर्यदि तन्न
दर्शयेत् । स तमर्थम्प्रदाप्यः स्यात्प्रेते चैष विधिः स्मृतः । परम्परमावधिभूतम् । प्रतीते अन्वेषणाय परिकल्पिते प्रेते चैष विधिरिति
धारणिके मृते प्रतिभूस्तमर्थं प्रदाप्य इति विधिः । कालावधिविधेस्तत्रान्वयवाधात् । एतदपि दैवराजकृतप्रतिबन्धाभावे बोध्यम्
। अत एव कात्यायनः । दर्शनप्रतिभूर्यत्र देशे कालेन दर्शयेत् । निबन्धमावहेत्तत्र दैवराजकृताहृते ॥ निबन्धमृणम् । दैवकृते।
दीर्घरोगमरणादिरूपः कृतादानप्रतिबन्धः । राजकृतो बन्धनासेधदण्डादिरूपः । प्रतिभूभेदेन स्पष्टमाह नारदः । ऋणि
ष्वप्रतिकुर्वत्सु प्रत्ययेवाथ हापिते । प्रतिभूस्तद्दत्तं दद्यादनुपस्थापयंस्तथेति । ऋणिष्वधमर्णेष्वप्रतिकुर्वत्सु असाध्येषु निर्धनत्व
दिनाऋणामप्रत्यर्पयत्स्विति दानप्रतिभूविषयम् । प्रत्यये विश्वासे हापिते विसंवादिते इति प्रत्ययप्रतिभूविषयम् । अनुपस्थाप
यन्नृणिनमदर्शयन्नृणिनः सकाशादाधिमृणम्पर्याप्नन्तद्धनं बोत्तमर्णायानर्पयन्निति दर्शनद्रव्यार्पणप्रतिभूविषयमिति विवे
कः । हारीतः । विश्वासार्थं कृतस्त्वाधिर्न प्राप्तो धनिना यदा । प्रापणीयस्तदा तेन देयं वा धनिने धनम् ॥ तेन बन्धकार्पणप्र
तिभुवा । तथा च पितामहः । आधिपालकृतस्त्वाधिर्भिन्नकार्योपलक्षणम् । न चेत्तु धनिने दत्तस्तस्याधेस्तैः समर्पणम् ॥ मे

राधिपालैराधिसमर्पणप्रतिभूर्मिः। बहुत्वमत्राविवक्षितम्। एवमभयाधिप्रतिभूष्वपि तुल्यन्यायतया योज्यम्। अभयप्रतिभूरधमर्णादुत्तमर्णस्य भयोपस्थितौ तत्प्रतीकारमाचरेत्। तद्व्ययेन द्रव्यक्षतौ तदीयं तद्द्रव्यं दद्यात्। प्रमाणप्रतिभूः प्रमाणप्रदर्शनं कारयेत्। अशक्तौ विवादास्पदीभूतं धनं दद्यात्। वादप्रतिभूर्वादपराजितस्याधमर्णस्य देयमुत्तमर्णाय दद्यात् राजपदाश्च राज्ञ इति। प्रतिभुवि मृते तत्पुत्रादीन् प्रत्याह योगीश्वरः। दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा। न तत्पुत्रा धनं दद्युर्दद्युर्दानाय ये स्थिताः॥ दर्शनप्रत्यये इत्यर्थस्य पूर्वश्लोकोक्तस्यैव स्पष्टीकरणमत्रेति न पुनरुक्तिरिति मिताक्षरायां मनरत्नेचोक्तं। वस्तुतस्तु तज्जीवति सति प्रतिभुवि प्रेते त्विदमिति न पौनरुक्त्याशङ्का। वितथ इति तत्रात्र च मृत इत्युपादानात् स्मृतिचन्द्रिकाकारस्यापीदमेवाभिसंहितम्। प्रतिभूपुत्रादीनां विधिरिति प्रस्तावे लिखनात्। दानाय यः स्थितः प्रतिभूस्तत्पुत्रा दद्युरित्यर्थः। वृहस्पतिरपि। आद्यौ तु वितथे दाप्यौ तत्कालावेदितं धनम्। उत्तरौ तु विसंवादे तौ विना तत्सुतौ तथेति। आद्यौ दर्शनप्रत्ययदानविसम्वादे। उत्तरौ दानर्णिद्रव्यार्पणप्रतिभुवौ। विसम्वादे द्वेषादिना धनिकेनादाने तौ विना। तयोर्देशगमनेमरणे च। अत्र ताविति द्विवचनान्तेन सर्वनाम्ना दानर्णिद्रव्यार्पणप्रतिभुवोः परामर्शः। सर्वनाम्नामसति वाधके सन्निहितपरामर्शकत्वात्। पूर्वोदाहृतदर्शनप्रतिभूर्यत्रेति याज्ञवल्क्यवचनाच्चैतेन दर्शनप्रतिभूप्रत्ययप्रतिभूसुतैर्न तद्देयमिति बोद्धव्यम्। प्रतिभूपुत्रपौत्रयोर्मूलमात्रदानादाने चाह। कात्यायनः। प्रातिभाव्यागतम्पौत्रैर्दातव्यं न तु तत्क्वचित्। पुत्रेणापि समं देयमृणं सर्वत्र पैतृकमिति। सर्वत्र प्रातिभाव्यागतमृणमित्यन्वयः। व्यासोऽपि। पैतामहं पौत्रैः प्रातिभाव्यागतं सुतैः। समं दद्यात्तत्सुतौ तु न दाप्याविति निश्चय इति। पौत्रेण प्रातिभाव्यातिरिक्तं पैतामहमृणं यावद्गृहीतमेव देयम्। तथा पुत्रेण प्रातिभाव्यागतं पैत्र्यमृणं यावद्गृहीतमेव देयम्। तयोः पौत्रपुत्रयोः सुतौ प्रपौत्रपौत्रौ यथाक्रमं प्रातिभाव्यापातं गृहीतधनेन दाप्यावित्यर्थः। यत्तु नारदवचनम्। खादको वित्तहीनः स्याल्लग्नको वित्तवान्यदि। मूलन्त

स्यभवेद्देयंनवृद्धिन्दातुमर्हतीति। तदपिखादकोऽधमर्णः। प्रतिभूर्यदि विन्नवान्मृतस्तदातत्पुत्रेण मूलमात्रन्देयंनवृद्धि रितिमृतपदाध्याहारेण व्याख्येयंविषयविशेषे दर्शनप्रत्ययप्रतिभुवोःपुत्रेण सवृद्धिकन्देयमित्याह। कात्यायनः। गृहीत्वा बन्धकंयत्रदर्शनेस्यस्थितोभवेत्। विनापित्राधनात्तस्माद्दाप्यःस्यात्तदृणंसुतइति। दर्शनग्रहणम्प्रत्ययस्योपलक्षणंसमान न्यायत्वात्। दर्शनेस्थितःदर्शनेप्रतिभूत्वेनस्थितइत्यर्थः। विनापित्रापितरि प्रेतेदूरदेशङ्गतेवेति। सुतग्रहणमुपलक्षणा र्थम्। यस्यहस्तेवन्धकमायातितस्यसर्वस्यापितस्माद्बन्धकाप्रतिदानस्ययुक्तत्वादितिकेचित्। यत्तुदानप्रतिभुविप्रेतेदायादा नपिदापयेदितिमनुवचनन्तत्रदायादशब्दोविशेषलक्षणयासुतविषयएवअन्यथासपिण्डमात्राभिधानेतत्सुतौनदाप्याविति निश्चयइत्यादिपूर्वोदाहृतवचनविरोधःस्यादिति। केचित्त्विदम्प्रतिभूवन्धकविषयम्पूर्वोदाहृतवचनानिखवन्धकप्रतिभूवि षयाणीतिविषयभेदान्नविरोधइत्याहुः। अनेकप्रतिभूदेयविषयेदानप्रकारमाह योगीश्वरः। बहवःस्युर्यदिस्वांशैर्दद्युःप्र तिभुवोधनम्। एकच्छायाश्रितेष्वेषु धनिकस्ययथारुचीति॥ एकच्छायाश्रितेषुएकस्याधमर्णस्यच्छायाम्प्रत्येकंसकलधन दायकत्वरूपसादृश्यमाश्रितास्तेषु। धनिकस्ययथारुचि। धनिकस्योत्तमर्णस्ययथारुचियथाकामंयमेवोत्तमर्णोयाचतेत मेवसर्वन्दद्यादित्यर्थः॥ रुच्यविशेषेतुसमंस्यादश्रुतत्वादितिन्यायेनात्रापियथांशमेवदद्युः॥ एकच्छायाश्रितेषुलग्नकेषुय द्यन्यतरोदूरदेशङ्गतोमृतोवाभवतिउत्तमर्णस्यचतस्माद्वग्रहणेच्छातदाप्रकारमाह। कात्यायनः। एकच्छायाप्रविष्टा नान्दाप्योयस्तत्रदृश्यते॥ प्रोषितेतत्सुतःसर्वम्पित्र्यमंशंमृतेतुसइति। प्रोषितेदेशान्तरगते। सर्वसवृद्धिकमृणम्। मृते तुपितुरंशंसवृद्धिकन्दद्यादित्यर्थः॥ स्मृतिचन्द्रिकायान्तु। एकच्छायाश्रितेसर्वंदद्यात्तुप्रोषितेसुतः। मृतेपितरिपित्रंशं परंणैनवृहस्पतिरितिपठित्वाइत्थंव्याख्यातन्तथाहि॥ सर्वम्परणमपिनपित्र्यंशमात्रमित्यर्थः॥ ननुसर्वंसवृद्धिकमितिव्याख्येय म्। पुत्रेणापिसमन्देयमृणंसर्वन्तुपैतृकमितिवृहस्पतिस्मरणात्। समंमूलमात्रंएतच्चधनिकेच्छायाम्प्रोषितस्यपुत्रोमह्य

न्दद्यादित्येवम्भिधायांसत्यांसर्वदानविधानन्दृष्टव्यं । असत्यान्धनिकेच्छायाम्पित्र्यंशम्प्रोषितपतिकेपुत्रोदद्यादितिवावगन्तव्यम् । परंशंपरस्यपितृव्यतिरिक्तस्यऋणांपितरिमृतेतत्सुतःसत्यामपिधनिकेच्छायांसर्वन्नदातुमर्हतीतिकिन्तुपित्र्यंशमवृद्धिकमेवेतिब्रूतइत्यर्थइतिपरेषाम् । अन्येषांप्रतिभुवामंशमितिमदनरत्ने । प्रातिभाव्यापलापेदण्डमाह । योयस्यैवप्रतिभूर्भूत्वामिथ्याचैवतुगच्छति । धनिकस्यधनन्दाप्योराज्ञादण्डश्चतत्समम् ॥ कुर्याच्चेत्प्रतिभूर्वादमृषिकार्येऽर्थिनासह । सोपसर्गस्तदादण्ड्योविवादाद्द्विगुणन्धनमिति ॥ उपसर्गोविप्लवकारीतिस्मृतिचन्द्रिकायाम् । प्रतिभूभ्योधनग्रहणेविशेषमाहबृहस्पतिः । नात्यन्तम्पीडनीयास्युर्दत्वान्दाप्याःशनैःशनैरिति ॥ ० ॥ अथप्रतिभूदत्तस्यप्रतिक्रियाविधिमाहकात्यायनः । यस्यार्थेयेनयद्दत्तंविधिनाभ्यर्थितेनतु । साक्षिभिर्भावितेनैवप्रतिभूस्तत्समाप्नुयादिति । यस्यप्रातिभाव्यकारयितुःकृतेयेनप्रतिभुवाधनिकादिभिर्याचितेनसाक्ष्यादिभिरङ्गीकारितेनयत्त्वकीयसुवर्णधान्यवस्त्रादिकन्धनिकादिभ्योदत्तन्तत्सकलमेवप्रातिभाव्यकारयितुःसकाशात्सममेवाप्नुयादित्यर्थः । यत्तु । प्रतिभूर्दापितोयत्तुप्रकाशन्धनिनाधनं । द्विगुणम्प्रतिदातव्यमृणिकैस्तस्यतद्भवेदितियाज्ञवल्क्यवचनन्तद्धनिकपीडितप्रतिभूविषयम् । यतआहनारदः । यश्चार्थम्प्रतिभूर्दद्याद्धनिकेनोपपीडितः । ऋणिकस्तम्प्रतिभुवेद्विगुणम्प्रतिदापयेदिति ॥ एतद्द्विगुणदानन्त्रिपक्षानन्तरंबोध्यं । यतआहतुःकात्यायनबृहस्पती । प्रातिभाव्यञ्चयोदद्यात्पीडितःप्रतिभावितः । त्रिपक्षात्परतःसोऽर्थेद्विगुणन्दातुमर्हतीति ॥ प्रातिभाव्यंप्रातिभाव्यागतंधनंप्रातिभावितःप्रतिभूत्वेनकृतः । अत्रवदन्ति । द्विगुणंप्रतिदातव्यमित्यादिभिर्वचनैर्द्वैगुण्यमात्रंप्रतिपाद्यतेतद्वैश्वानरंद्वादशकपालंनिर्वपेत्पुत्रेजातइतिविहितजातेष्टिर्यथाशुचित्वाद्यबाधेनैवप्रवर्त्ततेतथाइदमपिकालकलाक्रमावाधेनाप्युपपन्नम्भवतिएवञ्चपश्वादीनामपिसवृद्धिकमेवदानम्भविष्यतिअन्यथात्रिपक्षादूर्ध्वंसवृद्धिकदानपक्षेतेषांमूल्यदानमेवस्यात्सन्ततिसम्भवात्सन्ततेरेवतद्वृद्धित्वेनोक्तत्वादितितत्रसुन्दरंवचनानर्थक्यात् । कथमानर्थक्यम् । वस्त्रधान्यहिरण्यानाञ्चतुस्त्रिद्विगुणापरेत्यादिभिःकालक्रमेणद्वैगुण्यदान

स्यमिद्धत्वादितिगृहाण। ननूक्तमेवजातेष्टिवदितिप्रत्युक्तमेवतद्वचनानर्थक्यादितिनहितत्रवचनानर्थक्यमस्तियेनतथाक
ल्प्येत। यत्तुपश्चाद्दौमूल्यदानमेवप्राप्नोतिसद्यःसवृद्धिकदानपक्षेयत्रवापिसमानङ्कालक्रमेणसन्तानजननपक्षेपिसवृद्धिक
दानङ्कालान्तरेधमर्णोनसहसङ्कटतेगर्भिण्यादिनेत्यादावेवेति। ननुप्रायेणप्रीत्यैवप्रतिभूर्भवतिअतःप्रतिभुवादत्तंप्रीतिदत्त
मेवनचतद्वर्द्धतेयाचनात्प्राक्। प्रीतिदत्तन्तुयत्किञ्चिद्वर्द्धतेनत्वयाचितं। याच्यमानमदत्तञ्चेद्वर्द्धतेपञ्चकंशतमितिस्मरणात्
। अतस्तानेनास्यप्रीतिदत्तस्यायाचितस्यापिदानदिवसादारभ्ययावद्द्विगुणङ्कालक्रमेणवृद्धिरित्युच्यतइतिचेन्न। वचनवलात्त
द्वैद्विगुण्यंभविष्यतिनचतस्यातिमात्रोस्तीतिस्मृतिचन्द्रिकायां। तन्न। अस्यार्थस्यास्माद्वचनात्प्रतीतेरितिमिताक्षरायां। अयञ्च
द्विगुणलाभोहिरण्यविषयःपश्चादौतुसन्ततिस्त्रीपशुष्वेवधान्यस्त्रिगुणमेवच। वस्त्रञ्चतुर्गुणंप्रोक्तंरसश्चाष्टगुणःस्मृतइतियाज्ञव
ल्क्येनद्वैगुण्यापवादस्योक्तत्वात्। दर्शनप्रतिभूर्यत्राङ्गीकृतेकालेअधमर्णन्दर्शयितुमशक्तस्तदातदन्वेषणार्थंपक्षत्रयन्देयं। यदि
तत्रदर्शयतितदामोचनीयम्। अथनदर्शयतितदाप्रयुक्तन्धनन्दाप्यइत्याहकात्यायनः। नष्टस्यान्वेषणार्थन्तुदेयम्पक्षत्रय
म्परम्। यद्यसौदर्शयेत्तत्रमोक्तव्यःप्रतिभूर्भवेत्॥ कालेव्यतीतेप्रतिभूर्यदितंनैवदर्शयेत्। निवन्धन्दापयेत्तन्तुप्रेतेचैवंविधिः
स्मृतइति। बृहस्पतिरपि। नष्टस्यान्वेषणेकालेदद्यात्प्रतिभुवेधनी। देशानुरूपतःपक्षम्मासंसार्द्धमथापिवा॥ नात्यन्तम्पीड
नीयाःस्युर्वर्द्धयन्दाप्याःशनैःशनैः। स्वसाक्ष्येननियोज्याःस्युर्विधिःप्रतिभुवामयमिति। स्वसाक्ष्येस्वयंसमक्षदर्शनेप्रातिभाव्येनिषे
धानाह। कात्यायनः। नस्वामीनचवैशत्रुःस्वामिनाधिकृतस्तथा। निरुद्धोदण्डितश्चैवसन्दिग्धश्चैवनक्वचित्॥ नैवरिक्थीनमि
त्रञ्चनचैवात्यन्तवासिनः। राजकार्यनियुक्ताश्चयेचप्रव्रजितानराः॥ नाशक्तोधनिनेदातुन्दण्डंराज्ञेचतत्समं। जीवन्वापिपिताय
स्यतथैवेच्छाप्रवर्त्तकः॥ नाविज्ञातोग्रहीतव्यःप्रतिभूःस्वक्रियाम्प्रतिइति॥ सन्दिग्धोऽभिशस्तः। अत्यन्तवासिनोनैष्ठिकब्रह्मचा
रिणः। नारदोपि। साक्षित्वम्प्रातिभाव्यञ्चदानग्रहणमेवच। विभक्ताभ्रातरःकुर्युर्नाविभक्ताःपरस्परमिति॥ याज्ञवल्क्योपि।

भ्रातॄणामथदम्पत्योः पितुः पुत्रस्य चैव हि । प्रातिभाव्यमृणं साक्ष्यमविभक्तेन तु स्मृतमिति । ननु जायापत्योर्न विभागो विद्यत इत्या
पस्तम्बेन विभागस्य निषिद्धत्वाद्दम्पत्योर्विभागात्प्राक्प्रातिभाव्यादिप्रतिषेधो ऽनुपपन्न इति तदंशे विभागात्प्रागिति विशेषणानर्थक्य
मिति चेन्न । अनेन वचनेन श्रौतस्मार्ताग्निसाध्येषु कर्मसु तत्फलेषु च विभागाभावस्योक्तत्वात् । यतो जायापत्योर्न विभागो विद्यत इ
त्यभिसंधाय पाणिग्रहणाद्धि सहत्वं कर्मसु तथा पुण्यफलेषु चेति हेतुमुक्तवान् । हि यस्मात्पाणिग्रहणादारभ्य सहत्वं कर्मसु श्रूय
ते । जायापती अग्निमादधीयातामिति तस्मादाधाने सहाधिकारात्तत्सिद्धाग्निसाध्येषु कर्मसु सहाधिकारः एवं विवाहसिद्धाग्नि
साध्येष्वपि कर्मसु स्मार्ते वैवाह्याग्नौ कुर्वीत प्रत्यहं गृहीति योगीश्वरेणाभिधानात् । तथा पुण्यफलेषु स्वर्गादिषु सहत्वं श्रूयते
। दिविज्योतिरजरमारभेतामित्यादिषु येषु पुण्यकर्मसु सहाधिकारस्तेषां फलेषु सहत्वमित्यर्थः । तेन भर्त्रनुज्ञयानुष्ठितानां
पूर्तानां फलेषु न सहत्वमिति । केचित्तु अनेनैव विभागात्प्राक्दम्पत्योः प्रातिभाव्यादि निषिद्धमभिदधता अनयोर्विभागो ऽस्ती
त्यर्थादुक्तम्भवतीति न चापस्तम्बवचनविरोधः ग्रहस्याग्रहणवत् विकल्पाङ्गीकरणादित्याहुः । तदेतिफल्गुः शास्त्रार्थिकयोस्तु
ल्यबलत्वाभावेन विकल्पानुपपत्तेः अत एव तुल्यार्थास्तु विकल्पेरन्निति भगवता जैमिनिनोक्तम्पाणिग्रहणाद्धि सहत्वं कर्मस्विथ्या
दौ कर्मादि ग्रहणानर्थक्यापाताच्च । किञ्च पूर्वोक्तप्रकारेणैवोपपत्तौ सत्यामष्टदोषदुष्टविकल्पाङ्गीकरणस्याप्यनुचितत्वात् । न
चैवं ग्रहणाग्रहणादावपि विकल्पो न स्यात् । न स्याद्यदि गत्यन्तरयुतत्वं स्यात् । न च तदस्तीत्यनन्यगतिकतया तस्याङ्गीकारा
त् । ननु द्रव्यस्वामित्वेपि सहत्वं श्रूयते । द्रव्यपरिग्रहेषु चनहि भर्तुर्विप्रवासे नैमित्तिके दाने स्तेयमुपदिशन्तीति चेत्सत्यम् । अ
नेनाविभागाभावेनोक्तः किन्तु पत्न्या द्रव्यस्वामित्वमुक्तम् । यतो द्रव्यपरिग्रहेषु चेत्युक्त्वा नहि भर्तुर्विप्रवासे नैमित्तिके ऽवश्यकर्तव्ये
ऽतिथिभोजनादौ हि यस्मात्स्तेयर्मितिनोपदिशन्ति मन्वादयस्तस्माद्भार्याया अपि द्रव्यस्वामित्वमस्ति अन्यथा स्तेयं स्यादिति त
स्माद्भार्याया अपि भर्तुरिच्छया द्रव्यविभागो ऽस्ति न स्वेच्छया । अत एव याज्ञवल्क्यः । यदि कुर्यात्समानंशान्पत्न्यः कार्याः समांशि

काइ तिनस्मात्तुष्टूतम्ग्राग्विभागादस्मद्योनं प्रतिमायादिकमिति ॥●॥ अथ धर्मादिप्रकारमाह बृहस्पतिः । प्रतिपन्नमृणं दाप्यः सा
मादिभिरुपक्रमैरिति । प्रतिपन्नं चदाग्रामभ्युपगतमप्रतिपन्नम् । दाप्यः दानमुन्मुखः कर्त्तव्योऽधमर्ण इत्यर्थः । तथा च मनुः । यैर्यैरु
पायैरर्थं स्वम्प्राप्नुयादुत्तमर्णिकः । तैस्तैरुपायैः संगृह्य दापयेदधमर्णिकम् ॥ केते उपाया इत्यपेक्षायां स एवाह । धर्मेण व्यवहारे
ण च्छलेनाचरितेन च । प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन चेति ॥ बृहस्पतिरपि ॥ धर्मोपधिबलात्कारैर्गृहसंरोधनेन चेति । गृह
संरोधनेनाचरितास्योपायेन । कात्यायनोऽपि । पीडनेनोपरोधेन साधयेद्वृत्ति कं धनी । कर्मणा व्यवहारेण सान्त्वेनादौ विभा
वितम् । आदद्दीतार्थमेवन्तु व्याजेनाचरितेन चेति । धर्मादीनां स्वरूपमाह । सुहृत्सम्बन्धिसंदिष्टैः सामोक्त्यानुगमेन च । प्रा
येणाधमर्णो दाप्यो धर्म एष उदाहृतः ॥ छद्मना याचितं चार्थमानीय ऋणिकाद्धनी । अन्वाहितादि संगृह्य दाप्यते यत्र सो
पधिः ॥ बध्वा स्वगृहमानीय ताडनाद्यैरुपक्रमैः । ऋणिको दाप्यते यत्र बलात्कारः स कीर्त्तितः । दारपुत्रपशून् बध्वा कृत्वा द्वा
रोपवेशनम् । यत्रार्थी दाप्यतेऽर्थं स्वं तदाचरितमुच्यत इति । सुहृत्सम्बन्धिसन्दिष्टैः सुहृदां सम्बन्धिनां सन्दिष्टैः सामोक्त्या प्रि
यवाक्येन अनुगमेन अनुसरणेन प्रायेण प्रार्थनातात्पर्येण । छद्मना उत्सवादिव्याजेन गृहीतं तदीयभूषणादि गृहीत्वा पुनरर्पणेन
। अन्वाहितमन्यस्मै दातुमर्पितम् । आदिशब्दात् प्रकाशान्तरस्थापि प्रकारेणाधमर्णसम्भूषणादि स्वाधीनीकृत्य यत्र सत्यान्दा
प्यते स उपधिरित्यर्थः ॥ दाप्यते प्रतिदानोन्मुखीक्रियते । अर्थं स्वकीयमर्थम् । शेषं स्पष्टार्थं धर्मादयश्चोपायाः । पुरुषा
पेक्षया प्रयोक्तव्याः ॥ यतश्चाह कात्यायनः । राजानं स्वामिनं विप्रं सान्त्वेनैव प्रदापयेत् । रिक्थिनं सुहृदं वापि छलेनैव प्रसाध
येत् ॥ वणिजः कर्षकांश्चैव शिल्पिनश्चाब्रवीद्गुरुः । देशाचारेण दाप्याः स्युर्दुष्टान् सम्पीड्य दापयेदिति । सान्त्वेन साम्ना धर्मा
ख्योपायेनेत्यर्थः । वणिगादयो देशाचारानुसारेण दाप्याः स्युरित्यन्वयः । सम्पीड्येति बलात्काराचरिताख्योपाययोर्ग्रहण
म् ॥●॥ कः पुनर्देशाचारः कृत्याकाङ्क्षायां स एवाह । धार्यो बहुत्र रत्नृषिकः प्रकाश्य जनसंसदि । यावन्न दद्याद्देयं देशा

चार स्थितिर्यथेति । यत्र देशे धनिकेन स्वयमेव धार्यइत्याचारस्तत्र तथैव धार्यः । यत्र तु कोवादिनाऽन्येनावरुद्ध धार्यइतिदे
शाचारस्थितिर्वेश्येत्यस्यार्थः । अवरुद्धस्य विण्मूत्रशङ्कायामन्तप्रतिषेधो न कार्यइति स एव दर्शयति । विण्मूत्रशङ्कायां तस्मा
द्धार्यमाणस्य देहिनः । दृष्टुनो वानुगन्तव्यो निवद्धं वा समुत्सृजेदिति । निवद्धमिति शृङ्खलादिना बद्धमेव मूत्राद्युत्सर्गो यथेष्टदेशे
दित्यर्थः । अत्र चाधमर्णिकविषये द्वितीयः पक्षः तदितरविषये त्वाद्यपक्षइत्युक्तं विवक्षावगन्तव्येति स्मृतिचन्द्रिकायाम् ।
दर्शनप्रतिभुवम्भोजनादिकाले गृहीत्वाऽवरुद्धस्य मोक्षः करणीयः यतस्त्वाह स एव । सकृतप्रतिभूश्चैवमोक्तव्यः स्याद्दिने दिने ।
आहारकाले प्राप्ते च निवन्धे प्रतिभूः स्थितइति । निवन्धे पलायनप्रतिवन्धे । यदा तु प्रतिभूर्न लभ्यते लब्धो वाऽधमर्णो न ददामी
ति वदति तदा पक्षद्वयमाह स एव । योदर्शनप्रतिभुवं नाधिगच्छेन्नाश्रयेत् । स वारके निरोद्धव्यस्तस्याप्यो वा वेद्वा रक्षितइति ।
नाधिगच्छेन्न प्राप्नुयात् । नाश्रयेन्नाङ्गीकुर्यात् वारके कारागृहे । रक्षितो रक्षकान् । रक्षणे पुरुषान्नियुज्य परस्याप्यो वेत्यर्थः ।
एतस्य प्रतिभूविशेषे प्रतिषेधमाह स एव । न वारके निरोद्धव्य आर्यः प्रात्ययिकः शुचिरिति । प्रात्ययिकः विश्वास्यः । कथन्त
र्हि तस्मिन्नीयइत्यपेक्षिते स एवाह । सोनिवद्धः प्रयोक्तव्योनिवद्धः शपथेन चेति । अनिवद्धः रक्षकशून्यः । निवद्धः नियमि
तः स एव मुक्तधर्मादिप्रयोगेण साधयन्धनिको न निवारणीयो राज्ञेत्याह मनुः । यः स्वयं साधयेदर्थमुत्तमर्णोऽधमर्णिकात् न स राज्ञानाऽ
भियोक्तव्यः स्वकं संसाधयन्धनमिति । विष्णुरपि । प्रयुक्तमर्थं यथाकथञ्चित्संसाध्यमानो न राज्ञो वाच्यः स्यादिति यथाकथञ्चित्स्मृ
त्याचारविरुद्धेन मार्गेण । याज्ञवल्क्योपि । प्रपन्नं साधयन्नर्थं न वाच्यो नृपतेर्भवेदिति । साध्यमानश्चेद्राजसन्निधिं गत्वा धनि
कं धारयति तदा स दण्ड्यइत्याह । स एव । साध्यमानो नृपं गच्छन्दण्ड्यो दाप्यश्च तद्धनमिति । तस्य धनिकस्य धनं तत्सममन्यद
ण्डं दाप्यइत्यर्थः । अतएव विष्णुः । साध्यमानश्चेद्राजानमभिगच्छेत्तत्समं दण्ड्यइति । तत्सममन्धनिकद्रव्यसमं । यत्तु मनुना
। यः साधयन्तं छन्देन वेदयेद्धनिकं नृपे । स राज्ञा तच्चतुर्भागं दाप्यस्तस्य च तद्धनमिति । तत्स्वल्पदण्डस्तत्कालसदरिद्राधमर्णवि

यथःब्राह्मणविषय इतिकेचित् छेद नस्वेच्छया । स्मृतिचन्द्रिकायान्तु दण्ड इति सामान्याभिधानं च समर्थविषयं स्वल्पोद्यवे
ब्राह्मणस्यापि इत्येव मर्थमिति व्याख्याय मनुवचनम्प्रमाणत्वेनोपन्यस्तम् । विप्रतिपत्तौ विशेषमाह । वृहस्पतिः प्रतिपन्नस्य धर्मो यंबं
पचापीतु संसदि । लेख्येन साक्षिभिर्वापि भावयित्वा प्रदाप्यत इति ॥ अयम्पूर्वोक्तः अधमर्णेऽर्थितायां सत्यां सम्प्रविपन्नस्य धर्मेस्य
अनिकस्यापलापीतु अपलापीतुं संसदि सभायाम्प्रमाणेनर्णं साध्य प्रतिदानोन्मुखङ्कार्य इत्यर्थः । एवं पूर्वोक्तधर्मे व्यवहारे
णाङ्गुलेनाधिः तेनच प्रयुक्तं साधयेद् र्थम्पञ्चमेनवलेन चमनुवचने व्यवहारेणेति व्यपचारेण नियमं इतरत्सम्प्रतिपन्नविषयमि
ति बोद्धव्यम् । व्यवहारेणसाध्यान्तु पन्यासेन अतएवासम्प्रतिपन्ने व्यवहारानिरिक्तोपायनिषेधमाहस एव । नरोद्धव्यः क्रिया
वादी सन्दिग्धेऽर्थे कथञ्चन । आसेधयंस्तुनासेधयन्दण्ड्यो भवति धर्मत इति । नरोद्धव्यवहारानिरिक्तकलाद्युपायोपलक्षण
म् । क्रियावादि सन्दिग्धपदयोरर्थमाह स एव । प्रदातव्यं यद्भवति न्यायतस्तद्दाम्यहम् । एवं यश्च वर्णिको ब्रूते क्रियावादी स
उच्यते ॥ रूपसंख्यादि लाभेषु यत्र भ्रान्तिर्द्वयोर्भवेत् । देयानादेययोर्वापि सन्दिग्धोऽर्थः स कीर्त्तितः ॥ इति सन्दिग्धेऽर्थे धनव
हणं कुर्वतोऽर्थहानिदण्डावाह स एव । अनावेद्यतु सङ्ग्रह्य सन्दिग्धेऽर्थे प्रवर्त्तते । प्रसह्यासविनेयस्तान्स चाप्यर्थं न समाप्नु
योति । कात्यायनोऽपि । पीडयेत्तु धनी यत्र ऋणिकं न्यायवादिनम् । तस्मादर्थात्स हीयेत तत्समञ्चाप्नुयाद्दममिति । सावधि
कमृणमवधिप्राप्तौ निरवधिकं द्वैगुण्यादिपरमवृद्धेः प्राप्तौ कार्यविशेषोपनिपाते चानवप्राप्तावपि पूर्वोक्तैर्धर्मादिभिरुपायैः
सवृद्धिकं ग्राह्यम् । यद्वा परमवृद्धिसहितं मूलं कृत्वा लेख्यान्तरं ग्राह्यम् । अथवा सवृद्धिकमूलोपभोग्याधिर्ग्राह्यः । तथा
च वृहस्पतिः । सूर्णावधौ ग्रामस्तलाभमृणमुद्ग्राहयेद्धनी । कारयेद्वा न्यलेख्यं वृद्धिं वाधनस्य या ॥ द्विगुणस्योपरि यथा
चक्रवृद्धिः प्रगृह्यते । भोग्याधिभक्तिरूणं मूलं स्यात्सोदयमृणमितिशान्त लाभमृणमशान्तलाभस्योपलक्षणम् । उद्धृतप
न्यर्मावृद्युपायेन साधनम् । यद्वा चक्रवृद्धिभोग्याधिर्वा गृह्यते तत्र सोदयमूलमृणं स्यादित्यर्थः । मनुरपि । चरणान्दानुमष

क्तो यः कर्तुमिच्छेत्पुनः क्रियाम् । स दत्त्वा निर्जितां वृद्धिं करणं परिवर्तयेत् ॥ अदर्शयित्वा तत्रैव हिरण्यं परिवर्तयेत् । याव
ती सम्भवेद्वृद्धिस्तावतीं दातुमर्हति ॥ चक्रवृद्धिं समारूढो देशकालव्यवस्थितः । अतिक्रामन्देशकालौ न तत्फलमवाप्नुयादि
ति । निर्जितामभ्यासेनाधमर्णेन स्वस्मात्करणं परिवर्तयेत् । अदत्त्वा स्वसामर्थ्यादि कुर्वन् । तत्र च छित्त्वा हिरण्यं दीयमा
नमितिविशेषः । तेन धनिने सर्वं सवृद्धिकमृणमदत्त्वेत्यर्थः । तत्रैव पुनः करणं परिवर्तयेत् । वाचिकमप्यसमस्तं न त्रूयाद्दत्तादेव
धनं स्वधारयामि । एतावती च वृद्धिरिति पत्रे चारोपयेदित्यर्थः । एतच्चयावद्वृद्धिर्धनिकस्य प्रत्युक्तानित्तावद्वाकरणं परिवर्त
नकार्यम् । समारूढः प्रतिपन्नः अङ्गीकृतवानित्यावत् । तत्फलं चक्रवृद्धिफलम् । कात्यायनोऽपि । यावद्दद्याद्द्विगुणमृ
णं प्रयुक्तं धनिना सदा । तथैव न द्विगुणां पुनर्वृद्धिं प्रकल्पयेदिति । अधमर्णस्य धनदानासामर्थ्ये प्रकारमाह नारदः । अ
थ शक्तिविहीनः स्यादृणी कालविपर्ययात् । अल्पाल्पं शक्त्या दापयेत्कालेकाले यथोदयमिति । यथोदयं यथाधनोत्पत्तिर्न्याय्योत्क
र्षाद् इति विशेषः । तथा च याज्ञवल्क्यः । हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत् । ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदय
मिति । अत्र च हीनजातिग्रहणं स्वजातेरप्युपलक्षणम् । समानजातिमपि परिक्षीणं श्रेयांसमृणिकं कर्म न कारयेत् । अत्र
ग्रहणं च श्रेयो जातेरुपलक्षणम् । अतः क्षत्रियादिरपि क्षीणो यथोदयं वैश्यादेर्दाप्य इत्यर्थः । एतदेव स्पष्टमाह मनुः ।
कर्मणापि समं कुर्याद्धनिकस्याधमर्णिकः । समोऽपकृष्टजातिश्च दद्याच्छ्रेयांस्तु तच्छनैरिति । कर्मणापि समं कुर्यात्स्वधनाधिक
त्वेनोत्तमर्णादधरीभूतमात्मानं तावद्धनिकार्थं कर्मकरणेनापि समं कुर्यात् । अधमर्णत्वमपनयेदित्यर्थः । श्रेयानुत्तमजाती
योगुणाधिकश्च । बृहस्पतिरपि । निर्धनं कर्म कारयेत न क्षुर्मगृह्यमानी ब्रह्मकारयेत् । शौण्डिकाद्यं ब्राह्मणस्तु दापनीयः शनैः शनै
रिति । शौण्डिकाद्यं समोऽपकृष्टजातिम् । ब्राह्मणग्रहणमुत्कृष्टजातेरुपलक्षणार्थम् । यत्तु कात्यायनवचनं । कर्षकान्क्षत्रवि
ट्छूद्रान्समहीनांस्तु दापयेदिति । तत्रैतेषां यथोदयं धनदानसामर्थ्यमनन्तावम् । कल्पनरोऽनु कर्मणा क्षत्रविट्छूद्रानुमहीनां

स्तु दापयेत् इति पठितं तत्र कर्मणा दापयेदित्यन्वयान्न कोऽपि विरोधः। कात्यायनोऽपि। धनदानासहं बुद्ध्वा स्वाधीनं कर्म कारयेदिति। कर्मकरणासहं तु बन्धनागारे वासयेदित्याह। स एव। अशक्तौ बन्धनागारे प्रवेश्यो ब्राह्मणादृते इति। अत्र कर्मकरणाशक्तौ बन्धनागारे प्रवेशाभिधानं सामर्थ्योत्पत्तौ कथञ्चिद्दत्तप्राप्त्यर्थमित्यभिहितं स्मृतिचन्द्रिकायाम्। यस्तु पूर्वमनावेद्याशुभं कर्म कारयति तत्रापि विशेषं स एवाह। यदि ह्यादावनादिष्टमशुभं कर्म कारयेत्। प्राप्नुयात् साहसं पूर्वं मृणान्मुच्येत च णिकः इति। युगपदनेकोत्तमर्णसमवाये दानानुक्रममाह याज्ञवल्क्यः। गृहीतानुक्रमाद्दाप्यो धनिनामधमर्णिकः। दत्त्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरमिति॥ नृपतेः क्षत्रियस्य समानजातीयेनूत्तमर्णस्य ग्रहणक्रमेण देयम्। विजातीयेषु तु ब्राह्मणादिवर्णक्रमेणेत्यर्थः। कात्यायनोऽपि। नानर्णसमवाये तु यद्यत्पूर्वं कृतं भवेत्। तत्तदेवाग्रतो देयं राज्ञः स्याच्छ्रोत्रियानु चेति। श्रोत्रियानु ब्राह्मणानन्तरम्। एकदिनकृतनानर्णसमवाये युगपद्देयं धनाल्पत्वे तु ऋणयोस्तु तदनुसारेण भागं परिकल्प्य दापनीयम्। तथा च कात्यायन एव। एकाहे लिखितं यत्र तत्र कुर्यात् दृणां समम्। ग्रहणं रक्षणं लाभमन्यथा तु यथाक्रममिति॥ ग्रहणं बन्धकदानम्। रक्षणं बन्धकपरिपालनम्। लाभं बन्धकभोगं च समं युगपदेव कुर्यात्। अन्यथा ग्रहभेदे तु क्रमेण कुर्यादित्यर्थः। अनेकर्णसमवायेऽपि अधमर्णो यदुत्तमर्णाद्द्रव्यं गृहीत्वा यद्व्यवहारादिकं करोति तस्मात्प्राप्तं धनं तदुत्तमर्णायैव दद्यान्नान्येषाम्। तथा च स एव। यस्य द्रव्येण यत्पण्यं साधितं यो विभावयेत्। तद्द्रव्यमृणिकेनैव दातव्यं तस्य नान्यथेति। एवकारस्तस्येत्यनन्तरं व्यवसनीयम्। अधमर्णाभावे तत्पुत्रेण सवृद्धिकमृणं देयमित्याह बृहस्पतिः॥ याचमानाय दातव्यमप्रकालमृणं कृतम्। पूर्णावधौ शान्तलाभमभावे च पितुः सुतैरिति। अप्रकालं अदीर्घकालं निरवधिकमिति यावत्। निरवधि याचनानन्तरमेव देयम्। परमवृद्धौ जातायामिति मदनरत्ने। सावधिपूर्णे शान्तलाभं ग्रहणानन्तरम्। ऋणग्रहीतुः पितुरभावे पितृकृतमृणं पुत्रैरवश्यं देयमित्यर्थः। आवश्यकदाने हेतुमाह नारदः। इच्छन्ति पितरः पुत्रान् स्वार्थहेतोर्यतस्त

नः। उत्तमर्णाधमर्णाभ्यांमामयंमोचयिष्यति ॥ अतःपुत्रेणजातेनस्वार्थमुत्सृज्ययत्नतः। ऋणात्पितामोचनीयोयथानेनरकं
ब्रजेत् ॥ यतस्ततःयेनकेनाप्युपायेन। उत्तममृणाज्ज्ञायमानेवैवाह्यादिभिरर्थैर्यत्नतस्त्वायमप्यादितेभ्योमुक्तं। अ
धममृणंपरहस्तात्कुसीदविधिनागृहीतंजातेनव्यवहाराभिज्ञतयानिष्पन्नेनेत्यर्थः ॥ अप्राप्तव्यवहारःस्वतन्त्रोऽपिहिनसर्वभा
क्। स्वातन्त्र्यंहिस्मृतंज्येष्ठेज्यैष्ठ्यंगुणवयःकृतमितिस्मरणात्। अप्राप्तव्यवहारस्यासेध्यत्वमपिनिषेधस्मर्यते। अप्राप्तव्यव
हारश्चदूतोदानोन्मुखोव्रती। विषमस्थाश्चनासेध्यानचैतानाह्वयेन्नृपइति ॥ कात्यायनोऽपि। पितृणामनुमतेदानेनैते
बाधमाहुर्ऋणात्। विमोक्षस्तुयतस्तस्मादिच्छन्तिपितरःसुतान् ॥ नाप्राप्तव्यवहारैस्तुपितर्युपरतेक्वचित्। कालेनुविधिनाऽदे
यंवसेयुर्नरकेन्यथेति। नाप्राप्तव्यवहारैःहेयोपादेयपरिज्ञानविशेषरहितैःषोडशवर्षैरित्यर्थः। षोडशवार्षिकस्यव्यवहार
ज्ञत्वमाहनारदः। गर्भस्थैःसदृशोज्ञेयआष्टमाद्वत्सराच्छिशुः। बालआषोडशाद्वर्षात्पोगण्डश्चेतिशब्द्यते। परतोव्यवहार
ज्ञःस्वतन्त्रःपितरावृतेइति। यस्यबहवःपुत्रास्तेषांविभक्ताविभक्तभेदेनदानप्रकारमाहनारदः। पितर्युपरतेपुत्राऋणंदद्
युर्यथांशतः। अविभक्ताविभक्तावायोवातामुद्वहेद्धुरमिति। एतदुक्तम्भवतिविभक्तैःस्वांशानुरूपन्देयम्। अविभक्तैरपिसम
प्रधानतयाऽवस्थानेसम्भूयसमुत्थानेनदेयम्। गुणप्रधानभावेनावस्थानेयोमुख्यस्तेनदेयमितिपुत्रेणरिक्थग्रहणाग्रहणयो
स्सवृद्धिकमेवदेयं। पुत्राभावेपौत्रेणरिक्थग्रहणेसोदयन्देयं। अग्रहणेमूलमेव। प्रपौत्रेणतुरिक्थाग्रहणेमूलमपिनदेयम्।
तथाचबृहस्पतिः। ऋणमात्मीयवत्पित्र्यम्पुत्रैर्देयंविभावितम्। पैतामहंसमन्देयमदेयन्तत्सुतस्यत्विति। आत्मीयवत्सवृद्धि
कमित्यर्थः। तत्सुतस्यागृहीतधनस्यप्रपौत्रस्य। एतदेवाभिप्रेत्यनारदः। क्रमादव्याहतम्प्राप्तम्पुत्रैर्यन्नर्णमुद्धृतं। देयम्पैताम
हंपौत्रैस्तच्चतुर्थान्निवर्ततइति। कात्यायनोऽपि। पित्रभावेतुदातव्यमृणंपौत्रेणयत्नतः चतुर्थेननदातव्यन्तस्मात्तद्विनिवर्तयेत
इति। देयमृणमनेनदेयमस्मिन्कालेदेयमित्यपेक्षितेआहयाज्ञवल्क्यः। पितरिप्रोषितेप्रेतेव्यसनाभिप्लुतेपिवा। पुत्रपौत्रैर्ऋणं

देयंनिह्नवे साक्षिभावितमिति। यदिपिताऽदानयंच्चऋणमदत्वामृतोदूरदेशान्तरङ्गतोऽचिकित्सनीयव्याध्यभिभूतोवातदातत्कृ
तमृणंपुत्रेणतदभावेपौत्रेणदेयंइत्यर्थः। पुत्रेणवापह्नुतेऽर्थिनासाक्ष्यादिभिर्भावितमृणंदेयंपुत्रपौत्रैरित्यन्वयः। प्रोषितेयत्प्र
तिदानन्तत्प्रवासादारभ्यविंशतिवर्षादूर्ध्वमन्तव्यं। तथाचनारदः। नार्वाक्संवत्सराद्विंशात्पितरिप्रोषितेसुतः। ऋणन्दद्यात्पि
तृव्येवाज्येष्ठेभ्रातर्यथापिवेति कात्यायनोपि। विद्यमानेपिरोगार्त्तेस्वदेशात्प्रोषितेतथा। विद्यमानेपिकोवर्षेपि॥ विंशात्संवत्सरादू
र्ध्वमितिशेषः अतएवविष्णुः। धनग्राहिणिप्रेतेप्रव्रजितेद्विदशाःसमाःप्रोषितेवातत्पुत्रपौत्रैर्देयंनातःपरमनीप्सुभिरिति। प्रव्र
जितेसंन्यस्तेद्विदशाःसमाःविंशतिवर्षाणिअस्यप्रोषितइत्यनेनसंबन्धः। अतःपरंविंशतिवर्षादूर्ध्वमनीप्सुभिर्देयमित्यर्थः। एत
दुक्तम्भवति। पितरिमृतेप्रव्रजितेवापुत्रपौत्रैःप्राप्तव्यवहारैर्देयंप्रोषितेतुविंशतिवर्षादूर्ध्वमितिनातःपरमनीप्सुभिरिति। अपि
पाठस्तयस्यामर्थः। विंशतिवर्षादूर्ध्वंनविलम्बःकार्यःऋणप्रतिदानमभीप्सुभिरिति॥*॥ अदेयमृणमाहयाज्ञवल्क्यः। सुराका
मद्यूतकृतन्दण्डशुल्कावशिष्टकं। वृथादानन्तथैवेहपुत्रोदद्यान्नपैतृकमिति। सुरापानेनयत्कृतमृणं। कामकृतंस्त्रीव्यसनेस
क्तं। द्यूतेपराजयनिर्वृत्तम्। दण्डशुल्कावशिष्टकन्दण्डशुल्कयोरवशिष्टंवृथादानंधूर्त्तादिभ्योयत्प्रतिज्ञातम्। धूर्त्तेवन्दि
निमल्लेचकुवैद्येकितवेशठे। चाटचारणचौरेषुदत्तम्भवतिनिष्फलमितिवचनात्। नचदण्डशुल्कावशिष्टकमित्यनेनाशेष
स्यदाननिषेधात्सर्वन्दातव्यमितिशङ्कनीयंयतआहोशना। दण्डंवादण्डशेषंवाशुल्कन्तच्छेषमेववा। नदातव्यन्तुपुत्रेणयच्च
नव्यावहारिकमिति। नव्यावहारिकंसुरापानादिनिमित्तमित्यर्थः। गौतमोपि। मद्यशुल्कद्यूतदण्डानपुत्रानध्यावहेयुरि
ति। नपुत्रस्योपरिभवन्तीत्यर्थः। बृहस्पतिरपि। सौराक्षिकंवृथादानङ्कामक्रोधप्रतिश्रुतम्। प्रातिभाव्यंदण्डशुल्कशेषंपुत्रान
दापयेदिति। प्रातिभाव्यम्प्रातिभाव्यागतं। कामक्रोधप्रतिश्रुतयोःस्वरूपन्दर्शयतिकात्यायनः। लिखितम्मुक्तकंवापिदेयंयत्तुप्र
तिश्रुतं। परपूर्वस्त्रियैतत्तुविद्यात्कामकृतन्तथा॥ यच्चहिंसांसमुत्पाद्यक्रोधाद्द्रव्यंविनाश्यवा। उक्तन्तुष्टिकरन्तत्तुविद्यात्क्रो

धहृतन्नुतदिति ॥ मुक्तकंलेखनरहितम्। पित्रा मादिष्टनर्णे समवाये दानक्रममाह वृहस्पतिः। पित्र्यं पूर्वमृणन्देयम्पश्चादात्मीयमेवच। तयोः पैतामहं पूर्वं देयमेवं ऋणं सदेति। तयोस्ताभ्याम्पित्रात्मीयाभ्यामित्यर्थः। रिक्थग्रहाभावेपिपुत्रेणादेयमिति इत्याह कात्यायनः। पित्र्यर्णे विद्यमाने तु न च पुत्रो धनं हरेत्। देयं तद्धनिके द्रव्यं मृते पुत्रस्तु दाप्यत इति ॥ विभक्तः पुत्रो विभागानन्तरम्पितृकृते ऋणे तिष्ठति तस्मिन्मृते तद्धनं न गृह्णीयात्किन्तु धनिकाय दद्यात्। यदि किञ्चित्ततोऽवशिष्टम्भवति तर्हि गृह्णीयात्। पितृधनाभावे रिक्थग्रहणराहित्येपि स्वधनं दद्यादित्यर्थः। अत्र पुत्रग्रहणम्पौत्रस्याप्युपलक्षणम्। पुत्रपौत्रैर्ऋणं देयमिति वचनेनोभयोः साम्येन ग्रहणात्। पौत्रस्य वृद्धिकदानन्तु वार्चनिकमिति न तस्यानेन साम्यपाठेन निवृत्तिः। अनेकऋणदातृसमवाये क्रममाह याज्ञवल्क्यः। रिक्थग्राह ऋणं दाप्यो योषिद्ग्राहस्तथैव च। पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिन इति ॥ दायविभागक्रमेण प्राप्तं यद्द्रव्यं तद्रिक्थन्तद्यो गृह्णाति स रिक्थग्राहो यदीयं द्रव्यं रिक्थरूपेण गृह्णाति स तत्कृतमृणन्दाप्य इत्यर्थः। योषितम्भार्यां गृह्णातीति योषिद्ग्राहो यदीयां योषितं गृह्णाति स तत्कृतमृणन्दाप्य इत्यर्थः। पुत्रोऽनन्याश्रितद्रव्यः। अन्यं आश्रितन्द्रव्यं यस्यासौ अन्याश्रितस्तम्। एतादृशं यद्द्रव्यम्परकीयन्द्रव्यं मातापितृसंबन्धिद्रव्यमिति यावत्। अन्यशब्देन पित्रोर्विवक्षणात्। तन्मातापितृद्रव्यं यस्य नास्ति दायग्रहणायोग्यत्वात्क्लीवादिः पुत्रोऽनन्याश्रितद्रव्य इत्यर्थः। पुत्रहीनस्य दायग्रहणार्हपुत्रहीनस्य रिक्थिन ऋणन्दाप्य इत्यर्थः। एतेषां समवाये पाठक्रमादेव दाप्याः। यत्तु सपुत्रस्य वाप्यपुत्रस्य रिक्थग्राहि ऋणन्दद्यादिति विष्णुवचनम्। तद्दायानर्हपुत्रस्य सद्भावेप्यसद्भावेपि वा तद्दनादरेण रिक्थग्राही ऋणं दद्यादित्येवपरम्। रिक्थग्राह्यभावे योषिद्ग्राहो दाप्य अस्मिन्नर्थे विष्णुरपि। विधनस्य स्त्रीग्राहीति। विधनस्य रिक्थग्राहीरहितस्य। बृहस्पतिरपि। स्त्रीहारी चन तथैव स्यात् अभावे धनहारिण इति। योषिद्ग्राह्यभावे दायभागानर्हः। पुत्रो दाप्य इत्यस्मिन्नर्थे नारदोपि। धनस्त्रीहारीपुत्राणामृणभाग्यो धनं हरेत्। पुत्रासतोः स्त्रीधनिनोः स्त्रीहारीधनिपुत्रयोरिति। स्त्रीधनिनोरसतोः पुत्र ए

वऋणभागीत्यन्वयः स्त्रीचधनञ्च स्त्रीधने तद्वतोः स्त्रीहारिधनहारिणोरित्यर्थः । अत्र स्त्रीहारीधनिपुत्रयोरिति पुत्राभावे योषि
द्ग्राहकस्य ऋणदायित्वाभिधानन्त्वायाहं पुत्राभावे मन्तव्यं । अपुत्रस्य चेत्यनुवृत्तौ विधनस्य स्त्रीहारीति विष्णुनाभिधानात् । पुत्रो
सतोः स्त्रीधनिनोरिति स्वोक्तिविरोधाच्च । ननु रिक्थग्राह ऋणन्दाप्य इति वचनं एतेषां समवायेक्रमविधायकं स एव तु नोपपद्यते
पुत्रे सत्यन्यस्य रिक्थग्राहित्वासम्भवात् न च पुत्रे सत्यपि पितृभ्रात्रो रिक्थहारित्वमिति वाच्यम् । न भ्रातरो न पितरः पुत्रा रिक्थहरा
पितुरिति वचनेन पुत्रे सत्यन्यस्य रिक्थहारित्वनिषेधात् । योषिद्ग्राहोऽपि न सम्भवति न द्वितीयश्च साध्वीनां क्वचिद्भर्तोपदिश्यत इ
ति वचनेन पत्यन्तरनिषेधात् पुत्रोऽनन्याश्रितद्रव्य इत्येतदपि न वक्तव्यम् । रिक्थग्राह ऋणं दाप्य इत्यनेन गतार्थत्वात् न च रिक्थग्रा
हित्वाभावेऽपि पुत्रदातव्यमित्येतदर्थमिदम् । तथा सत्यनन्याश्रितद्रव्यस्य वैयर्थ्यं स्यात् । पुत्रे सति मातापितृद्रव्यस्य अन्यगामि
त्वासम्भवात् । न भ्रातर इति पूर्वोदाहृतवचनात् । पुत्रहीनस्य रिक्थिन इत्येतदपि न वक्तव्यम् । रिक्थग्राह ऋणं दाप्य इत्यनेन
सति पुत्रे रिक्थहारिण एव ऋणापाकरणाधिकारित्वस्याभिधाने सति पुत्रे कैमुतिकन्यायेन तत्सिद्धेरिति चेत् । मैवं वादीः । स
त्स्वपि क्लीवादिषु पुत्रेषु अन्यायवर्तिषु च सवर्णापुत्रेषु पितृव्यादीनां रिक्थग्राहित्वासम्भवात् । क्लीवादीनां रिक्थग्राहित्वाभावं
दर्शयति मनुः । अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा । उन्मत्तजडमूकाश्च ये च के चिन्निरिन्द्रिया इति । याज्ञवल्क्येनापि क्ली
बादीनामनुक्रम्य भर्त्तव्यास्त्वनिरंशका इत्युक्तमन्यायवृत्तस्य सवर्णापुत्रस्य रिक्थग्राहित्वाभावं दर्शयति गौतमः । सवर्णापुत्रोऽप्य
न्यायवृत्तो न लभते केषामिति । तस्मात्पुत्रे सत्यपि रिक्थग्राह्यन्यः सम्भवति योषिद्ग्राहित्वमपि रागकलुषीकृतचित्तस्यातिक्रान्तनि
षेधस्य सम्भवति तस्य ऋणापाकरणेऽधिकारो भवत्येव । यश्च तिसृणां स्वैरिणीनामन्तिमां गृह्णाति यश्च पुनर्भुवां तिसृणां प्रथमां त
था च नारदः । अन्तिमा स्वैरिणीनां या प्रथमा च पुनर्भुवाम् । ऋणान्तयोः पतिकृतं दद्याद्यस्ते उपाश्नुते । अधनस्य ह्यपुत्रस्य मृत
स्योपैति यः स्त्रियं । ऋणं वोढुः स भजते तदेवास्य धनं स्मृतमिति । च तिसृणाम्पुनर्भुवां या प्रथमा तयोः पत्याकृतमृणान्तयेऽउपाश्नुते

पतित्वेनोपभुक्तेत्यर्थः । उद्वाहादिरहिता पतित्वेनोपभुक्ता पुनर्भूः स्वैरिण्यसंस्कृतापि स्वेच्छयैव सवर्णाद्युपगच्छति । पत्युः पूर्वं स्त्रियः स्वैरिण्यः प्रोक्ता यथाक्रमं । पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्विधा ॥ कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता । पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारकर्मणा ॥ देशधर्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते । उत्पन्नसाहसान्यस्मै सा द्वितीया प्रकीर्तिता ॥ असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते । सवर्णायसपिण्डाय सा तृतीया प्रकीर्तिता ॥ स्त्री प्रसूताऽप्रसूता वा पत्यावेव तु जीवति । कामात् समाश्रयेदन्यं स्वैरिणी प्रथमा तु सा ॥ कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता । पुनः पत्युर्गृहं यायात् सा द्वितीया प्रकीर्तिता ॥ मृते भर्तरि तु प्राप्तान् देवरादीनपास्य या । उपगच्छेत् परं कामात् सा तृतीया प्रकीर्तिता ॥ प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा तु या । तवाहमित्युपगता सा चतुर्थी प्रकीर्तितेति ॥ उत्पन्नसाहसा सञ्जातयोनिः । प्रौढेति यावत् । अन्यस्मै देवरव्यतिरिक्ताय असत्सु देवरेष्विति देवरेऽभिधानात् । कीदृशस्य योविदुहस्य ग्रहणे दानेऽधिकार इत्यपेक्षिते स एवाह । या तु सप्रधनैव स्त्री सापत्या वान्यमाश्रयेत् । सोऽस्या दद्यादृणं भर्तुरुत्सृजेद्वा न यैव तामिति । सप्रधना प्रभूतधनसहिता वहुधनेति यावत् । अस्य भर्तुर्ऋणादेर्दद्यादित्यन्वयः । नन्वयोविदुहस्यादानाधिकारश्चास्त्री यान्यथानुपपत्त्या योविदुहस्यापि पूर्वपतिकृतमृणान्तरानुशास्त्रीयमिति प्राङ्गनीयम् । सङ्गतापन्नयोविदुहस्या स्याद्धनवान्नत्वान्यथानुपपत्तिः । अत एवाह संग्रहकारः । यश्च दद्याद्‌गृह्णंवोढः पुनर्भूस्वैरिणीपतिः । अतेनतदुपादानं शास्त्रेण विहितम्भवेदिति ॥ तदुपादानं पुनर्भूवा स्वैरिणी माश्रयहणं । ऋणं पुत्रो दाप्य इति पुनर्वचनं योविदुहाभावेऽस्य ऋणादानेऽधिकारोऽनन्तस्मिन्सतीति क्रमनिरूपणार्थं अनन्याश्रितद्रव्य इति नव्यर्थे पित्र्यरिक्थाभावेपि बहुषु पुत्रेषु समुदायग्रहणायोग्येषु अस्यैव ऋणादानेऽधिकारो न त्वौरसादेर्दायानर्हस्येति प्रतिपादनार्थत्वात् । पुत्रहीनस्य रिक्थिन इत्येतदपि नव्यर्थे पुत्रग्रहणमुपलक्षणार्थं पुत्रपौत्रहीनस्य येसमनन्तरं रिक्थग्राहित्वेन दायभागे निरूपिताः प्रपौत्रादायस्ते सर्वे दायभागोक्तक्रमेणादाप्याः यदि रिक्थं गृह्णन्ति न चेन्न दाप्या पुत्रपौत्रौ तु रिक्थग्रहणाभावे पि दाप्यौ इति पुत्रपौत्रापेक्षया प्रपौत्रादीनां वैषम्यप्रतिपादनार्थत्वात् ।

पुत्रपौत्रयोः प्रपौत्रस्यापेक्षया वैषम्यन्दर्शयति नारदः। क्रमादभ्यागतम्प्राप्तम्पुत्रैर्यन्नर्णमुद्धृतं। दद्युः पैतामहम्पौत्रास्तच्चतुर्थो न्निवर्त्तते इति॥ यद्वा योषिद्ग्राहाभावे पुत्रोदाप्य इत्युक्तं सैव चास्य धनं स्मृतमिति स्मरणात्। लक्षणया रिक्थशब्देन योषितमङ्गीकृत्य पुत्राभावे योषिद्ग्राहो दाप्य इत्युच्यते पुत्रहीनस्य रिक्थिन इत्यनेन पुत्रहीनस्य सयोषित्कस्य ऋणं योषिद्ग्राहो दद्यादित्यर्थः। अ स्मिन्पक्षे वक्तृधनस्त्रीहारिणोन्तिमास्वैरिणी प्रथमा पुनर्भूहारिणस्तदभावे पुत्रो दाप्यः। पुत्राभावे निर्धननिरपत्ययोषिद्ग्राहो दाप्य इति व्यवस्था द्रष्टव्या अन्यथा योषिद्ग्राह पुत्राभावयोः पुत्रयोषिद्ग्राहौ दाप्याविति व्याख्याने उभयसद्भावे कस्यापि दानप्रसङ्गः स्यात्। अत एव नारदः। धनस्त्रीहारी पुत्राणामृणभाग्यो धनं हरेत्। पुत्रोऽसतोः स्त्रीधनिनोः स्त्रीहारी धनपुत्रयोरिति। कस्मिंश्चित्स्त्रीहारिण्यसति पुत्रो दाप्यः पुत्रे नि कश्चित्स्त्रीहारीत्यर्थः। अथवा। एतेरिक्थप्राप्त्यादयः क्रमेण दाप्या इत्युक्ते प्रत्यासन्नदाप्यद्यपेक्षिते उभयसत्त्वे तदभावे न तु त्रादेः तस्याप्यभावे कस्येत्यपेक्षिते आह। पुत्रहीनस्य रिक्थिन इति पुत्राद्यन्वयहीनस्योत्तमर्णस्य योरिक्थी रिक्थग्रहणयोग्यः सपिण्डादिस्तस्य दाप्य इत्यर्थः तथा च नारदः। ब्राह्मणस्य तु यद्देयं सान्वयस्य न चास्ति सः। निर्वापयेत्सकुल्येषु तदभावे स्वबन्धुषु। इत्यभिधायाभिहितवान्। यदा तु न सकुल्याः स्युर्न च संबन्धिबान्धवाः। तदा दद्याद्द्विजेभ्यस्तु तेष्वसत्स्वप्सु निक्षिपेदिति। विज्ञानेश्वरानुयायी यथा। अत्र कश्चिद्वादभयंकरः कदाचन। अहो वत जगत्ख्यातं विज्ञानेश्वरयोगिनः। पूर्वापरविरोधेऽपि नानुसंधानमद्भुतम्॥ रिक्थग्रहणस्य गृहीतरिक्थस्य पुत्रस्यान्येन रिक्थग्राहिणा सह कदा समावेशः सम्भवति। अपि च पुत्रहीनस्य रिक्थिन इति पदद्वयेनापि संबध्यते द्वाभ्यामेव वा प्रथमे पुत्र इति व्याघातस्य मुख्यमुदाहरणम्। द्वितीये भिन्नविषयता तेषामप्यसमावेश इत्येतदपीति तन्मन्दधियान्धं धनमाश्रम्। रिक्थग्रहणार्हपुत्रसत्त्वे एतद्वचनाप्रवृत्तेः पुत्रहीनस्येति त्रिभिरपि सम्बध्यते। न च पुत्रस्य हीनस्य पुत्र इति व्याघातः। पुत्रहीनस्य रिक्थग्रहणार्हपुत्रहीनस्य पुत्रो रिक्थग्रहणानर्हपुत्र इत्यर्थस्योक्तत्वात्। वादभयङ्करकृतास्त्वयमित्थं व्याख्यातन्तथा हि। यद्येषामन्येषां पुत्रवता

मृणमनन्याश्रितद्रव्यः पुत्रो दाप्यस्तथैव पुत्रहीनस्य रिक्थिनः रक्थरिक्थग्राही दाप्यः । तदाह नारदः । अधनस्य ह्यपुत्रस्य मृतस्योपैति यः स्त्रियम् । ऋणं वोढुः स भजते सैव चास्य धनं स्मृतमिति ॥ तथा । धनस्त्रीहारी पुत्राणामृणभाग्यो धनं हरेत् । पुत्रोऽसतोः स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोरिति ॥ ननु स्त्रीहारी धनहारिणोरसतोः पुत्रः धनहारीपुत्रयोरसतोः स्त्रीहारीत्युभयसद्भावे न कश्चिद्दाप्य इति विरोध इति चेन्न पुत्रपदस्य भ्रातृपुत्रपरत्वात् । तदाह मनुः । भ्रातॄणामेकजातानामेकश्चेत् पुत्रवान्भवेत् । सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीदिति । तदप्यसत् । कर्मण्यागमाभावात् । नारदवचनस्य सम्बन्धेऽप्यनिरुद्धम् । किञ्च नारदवचनं पुत्रशब्दस्य मुख्येऽर्थे सम्भवति । गौणार्थग्रहणे प्रमाणाभावात् । न च भ्रातृपुत्रेऽपि मुख्यप्रयोगः । पुत्रिणो मनुरब्रवीदिति स्मरणादिति वाच्यम् । वृद्धव्यवहारेण जन्यपुंसि मुख्यनिर्णयात् । न च मनुवचनविरोधः । गौणत्वेनाप्युपपत्तेः । न च शक्तिरेवास्तु । अन्याय्यश्चानेकार्थत्वमिति न्यायविरोधात् । नवैवं सैन्धवादिशब्दानामप्यनेकार्थत्वं न स्यात् । तस्मादेव यदि विनिगमकं स्यात्तर्हि तत्र सोऽप्यगत्या गौणीकारादिति । दायभागानर्हस्यापि मूर्खस्य धनवत्त्वेऽपि क्लीबादेस्तदाप्य इत्याह कात्यायनः । पूर्वं दद्याद्धनग्राहः पुत्रस्तस्मादनन्तरम् । योषिद्ग्राहः सुताभावे पुत्रो वात्यन्तनिर्धनमिति ॥ पूर्वं रिक्थग्राहो दद्यात्तदभावे तदनन्तरं धनयुक्तो दायार्हः पुत्रो दद्यात्तस्याभावे योषिद्ग्राहो दद्यादित्यर्थः । सत्यपि दायार्हे पुत्रे तस्य यदा दुश्चिकित्स्यरोगाद्युपद्रवेण बाल्येन वा ऋणदानासामर्थ्यं तस्यामवस्थायामपि पितृधनस्य समीपे यः स्थापयति पितृव्यादिः स ऋणं दद्यात्तस्याभावे योषिद्ग्राहो दद्यादित्याह स एव । ऋणं तु दापयेत्पुत्रं यदि स्यान्निरुपद्रवः । द्रविणार्हः सुधुर्यश्च नान्यथा दापयेत्सुतम् ॥ व्यसनाभिप्लुते पुत्रे बाले वा यत्प्रदृश्यते । द्रव्यहृद्दापयेत्तत्तु तस्याभावे पुरंध्रिहृदिति । कुटुम्बार्थं पितृव्यादिना कृतमृणं कुटुम्बिना दातव्यम् । तथा च बृहस्पतिः ॥ पितृव्यभ्रातृपुत्रस्त्रीदासशिष्यानुजीविभिः । यद्गृहीतं कुटुम्बार्थं तद्गृही दातुमर्हतीति । शिष्यग्रहणेनान्तेवास्यपि गृह्यते । कालमात्रस्यापि विवक्षितत्वात् । गृहीत्यनेन गृही

मात्राभिधानम् । किन्तु कुटुम्बिनस्तस्यैव विवक्षितत्वात् अत एव नारदः । शिष्यान्तेवासिदासस्त्रीप्रेष्याश्रयकरैश्च यत् । कुटुम्बहेतोरुत्क्षिप्तं दातव्यं तत्कुटुम्बिनेति । शिष्योऽत्र वेदविद्यार्थी । अन्तेवासी शिल्पविद्यार्थी । कुटुम्बहेतोः कुटुम्बार्थम् उत्क्षिप्तमुत्थापितं कृतमिति यावत् । कुटुम्बिना कुटुम्बार्थे कृतम् ऋणमसन्निधानादिना स्वानुज्ञानाभावेऽपि व्यवहारं समाचरेत् । तदर्थम्मनुराह । कुटुम्बार्थेऽध्यधीनोऽपि व्यवहारं समाचरेत् । स्वदेशे वा विदेशे वा तं विद्वान्न विचालयेदिति । अध्यधीनो दासादिः । अन्यदपि कुटुम्बकृतं कुटुम्बिना दातव्यम् ऋणं दर्शयति कात्यायनः । कुटुम्बार्थमशक्तेन गृहीतं व्याधितेन वा । उपप्लवनिमित्तञ्च विद्याद् आपत्कृतं तु तत् ॥ कन्यावैवाहिकं चैव प्रेतकार्येषु यत्कृतम् । एतत्सर्वं प्रदातव्यं कुटुम्बेन कृतं प्रभोरिति ॥ अशक्तेन कुटुम्बभरणासमर्थेन कुटुम्बिनोऽपत्यः । कन्यावैवाहिकं कन्याविवाहनिमित्तम् । यत्कृतम् । येन धनेन यत्कृतम् । प्रभोः कुटुम्बिनः ॥ * ॥ कुटुम्बार्थव्यतिरिक्तऋणविषये याज्ञवल्क्य आह । न योषित्पतिपुत्राभ्यां न पुत्रेण कृतं पिता । दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतं तथेति । पतिपुत्राभ्यां कृतं ऋणं क्रमेण योषिज्जाया माता च न दद्यात् । तथा पुत्रेण कृतं पिता न दद्यात् । तथा भार्याकृतं पतिः । कुटुम्बार्थादृत इति सर्वत्रान्वयि । तथा च कुटुम्बिना कुटुम्बार्थे येन केनापि कृतं देयमित्यर्थः । नारदोऽपि । न स्त्री पतिकृतं दद्यादृणं पुत्रकृतं तथेति । विष्णुरपि । न स्त्री पतिपुत्रकृतं न स्त्रीकृतं पतिपुत्रौ इति । पुत्रेण कृतं पिता नेत्यस्यापवादं कश्चिदाह बृहस्पतिः । ऋणं पुत्रकृतं पित्रा शोध्यं यदनुमोदितं । सुतस्नेहेन वा दद्यान्नान्यथा दातुमर्हतीति । कात्यायनोऽपि । ऋणं पुत्रकृतं पित्रा न देयमिति धर्मतः । देयं प्रतिश्रुतं यत्स्यात् यच्च स्यादनुमोदितमिति ॥ प्रतिश्रुतं चानुज्ञातम् । अनुमोदितम् ऋणकरणानन्तरमङ्गीकृतं यत्पुत्रेणापद्ग्रस्तेन कृतं तदपि देयमित्याह नारदः । पितुरेव नियोगाद्वा कुटुम्बभरणाय वा । कृतं वापद्गतं कृच्छ्रे दद्यात्पुत्रस्य तत्पितेति ॥ न योषित्पतिपुत्राभ्यामित्यस्यापवादमाह कात्यायनः ॥ भर्त्रा पुत्रेण वा सार्द्धं केवलं वात्मना कृतम् । ऋणमेवंविधं देयं नान्यथा तत्कृतं स्त्रियः इति ॥ भर्त्रा पुत्रेण वा सार्धं कृतम् ऋणं तयोरभावे देयम् ।

स्वयंकृतन्तद्येभावेपि देयमित्यर्थः । अत एव स एवाह । देयम्भार्याकृतमृणम्भर्त्रा पुत्रेण मातृकं । भर्त्रे स्वार्थे कृतं यत्स्यात्तद्विधा
यगते दिशमिति । अविधाय अनपाकृत्य दिशङ्गते मृते सतीत्यर्थः । याज्ञवल्क्योपि । प्रतिपन्नं स्त्रिया देयम्पत्या वा सह यत्कृतं
स्वयंकृतं वाथ दृणं नान्यत्स्त्री दातुमर्हतीति ॥ प्रतिपन्नन्देयत्वेनाङ्गीकृतम् । तद्विवक्षयहणोऽनङ्गीकृतमिति देयमित्याह । का
त्यायनः । भर्तृकामेन या भर्त्रोक्ता देयमृणन्त्वया । अप्रपन्नापि सा दाप्या धनं यद्याश्रितं स्त्रिया इति ॥ नपतिः स्त्रीकृतन्तद्येत्वस्या
पवादमाह याज्ञवल्क्यः । गोपशौण्डिकशैलूषरजकव्याधयोषिताम् । ऋणन्दद्यात्पतिस्तासां यस्माद्वृत्तिस्तदाश्रयेति ॥ शैलू
षो नटः । वृत्तिर्जीवनम् । गोपादिग्रहम्प्रत्यधीनजनानान्तैलिकादीनामुपलक्षणम् । कात्यायनोपि । शौण्डिकव्याधरज
कगोपनाविकयोषिताम् । अधिष्ठातान्नृणन्दाप्यस्तासाम्भर्त्ता क्रियासु तदिति । अधिष्ठाता च पतिरेव । भर्तृक्रियासु तत् । य
तो भर्तुः कर्तव्येषु प्रयोजनेषु तदृणञ्जातन्तासामित्यर्थः । भार्ययाप्यापदुद्धारार्थं यत्कृतन्तदपि देयमित्याह । स एव । न च
भार्याकृतमृणङ्कथञ्चित्पत्युर्भवेत् । आपत्कृताद्दृते पुंसां कुटुम्बार्थाद्धि विस्तरः ॥ अन्यत्र रजकव्याधगोपशौण्डिकयोषिताम्
। तेषान्तु तत्परा वृत्तिः कुटुम्बञ्च तदाश्रयमिति । आपद्देयम्भवेदित्यर्थः । न स्त्री भर्तृकृतं ऋणं दद्यादित्यस्यापवादमाह ।
नारदः । दद्यादपुत्रा विधवा नियुक्ता या मुमूर्षुणा । यावातद्रिक्थमादद्याद्यो नैरिक्थमृणन्तत इति । मातृकृतमृणम्पुत्रेण देय
मित्याह विष्णुः । पैतृकमविभक्तमातृकञ्च । विभक्ताश्च दायानुरूपमिति । दद्युरित्यनुषङ्गः । मातुर्देयपि निर्धनायास्त्रियाः
ऋणम्पुत्रेण देयमित्याह नारदः । पुत्रिणी तु समुत्सृज्य पुत्रं स्त्री यान्यमाश्रयेत् । तस्या ऋणं हरेत्सर्वं निःस्वायाः पुत्र एव
चेति । अन्यम्भर्तारमित्यर्थः । तस्या एव सधनत्वे कात्यायन आह । बालपुत्राधिकार्थी या भर्तारं यान्यमाश्रिता । आश्रित
स्तद्दृणन्दद्याद्बालपुत्राविधिस्मृतः । यद्दृणं कुटुम्बपोषणार्थमविभक्तैः कृतन्तन्नद्या नाधिकारिणि कुटुम्बिनि प्रेते देशान्तरगते
वा तद्रिक्थहरैर्देयमिति । याज्ञवल्क्य आह । अविभक्तैः कुटुम्बार्थं यद्दृणन्तु कृतम्भवेत् । दद्युस्तद्रिक्थिनः प्रेते प्रोषिते वा कुटु

म्विनोति ॥ तत्रापि केनाच्छिद्दभाव्येयस्तिष्ठति स एव दद्यात् । तथा च विष्णुः । अविभक्तैः कृतमृणं यस्तिष्ठति स दद्यादिति । अ
विभक्तैरिति वक्ष्यवचनम्पूर्वं वा विवक्षितम् । तथा च नारदः । पितृव्येणाविभक्तेन भ्रात्रा वा यदृणं कृतम् । मात्रा वा यत्कुटुम्बार्थे
दद्युस्तत्सर्वं रिक्थिन इति । ऋणकर्तुः प्रेते प्रोषिते वेति शेषः । तस्मिन्प्रधानभूते स्थिते सत्येतेषां गुणभूतानामृणादानानधिका
रात् । अत एव मनुः । यद्दीनयदि नष्टः स्यात्कुटुम्बार्थे कृतो व्ययः । दातव्यं बान्धवैस्तत्स्यात्प्रविभक्तैरपि स्वत इति ॥ ऋणस्य
गृहीता पितृव्यादिर्यदि नष्टः प्रोषितो मृतो वा स्यात् । तदा तद्रिक्थिभिर्विभक्तैस्तत्कुटुम्बव्ययकृतमृणन्दातव्यं स्वतः किमुताविभक्तै
रित्यर्थः । एवं वृत्तिकारेण व्याख्यातम् । अस्मिन्व्याख्याने वचनान्तरे वृथैवाविभक्तग्रहणं स्यादिति महाभाष्यकारेण प्रविभक्त
धनैः पितृव्यादिभिः स्वधनाद्दातव्यमित्यर्थः । कृतमिति स्मृतिचन्द्रिकायाम् । एतच्च ऋणप्रतिदानं तत्समर्थाभावे तत्पुत्रादिषु कर्तृ
ष्वन्तेषामभावे तत्सगोत्रेषु तेषामभावे तद्बन्धुषु मातुलादिष्वित्याह नारदः । ब्राह्मणस्य तु यद्देयं सान्वयस्य न चास्ति सः । निर्वपेत्त
त्सकुल्येषु तदभावेऽस्य बन्धुष्विति । ब्राह्मणग्रहणमुत्तमर्णोपलक्षणार्थम् । अन्वयः पुत्रसन्ततिर्दुहितृसन्ततिश्च । बन्धू
नामभावेऽप्याह स एव । यदा तु न सकुल्याः स्युर्न च सम्बन्धिबान्धवाः । तदा दद्याद्द्विजेभ्यस्तु तेष्वसत्स्वप्सु निःक्षिपेदिति । प्र
जापतिरपि । बन्ध्वभावे तु विप्रेभ्यो देयं क्षेप्यं जलेऽपि वा । जले क्षिप्तन्तथाग्नौ च धनं स्यात्पारलौकिकमिति । अग्नौ हुतमिति शे
षः । नन्वक्षिप्तमित्यस्यानुषङ्गः । अत एवोक्तं स्मृतिसंग्रहे । द्रव्यं यत्र धमर्णस्थं क्वचिद्ब्राह्मणगं भवेत् । सुतादिब्राह्मणा
न्तानां रिक्थभाजामसम्भवे ॥ पलाशस्य पलाशेन जुहुयान्मध्यमेन तु । यत्कुसीदमिति प्राच्योदयवार्थे वनर्जनमिति । मध्य
स्य होमे नैव संबन्धो न तु प्रक्षेपेण मध्यमेन पर्णेन जुहुयात् । कुसीदमितीति गोभिलेन होमसंबन्धित्वेनैव स्मृतत्वात् । यस्त्वृ
प्रतिदानकाले समग्रं सवृद्धिकं मूलन्दातुमसमर्थस्तम्प्रत्याह याज्ञवल्क्यः । लेख्यस्य पृष्ठेऽभिलिखेद्दत्वा दत्वर्णिको धनम् । धनी
वोपगतन्दद्यात्स्वहस्तपरिचिह्नितमिति । अयमर्थः । यथाशक्त्या दत्वा दत्वैतावत्सवृद्धिकं मया दत्तमिति मूलपत्रस्य पृष्ठे लिखे

त्। यद्वोत्तमर्णं एतावन्मया लब्धमिति स्वहस्ताक्षरचिह्नितं यथा भवति तथा मूलपत्रे विलिखेत्। स्वहस्तलिखितमुपगतमित्यप्रवेशपत्रं वाधमर्णाय दद्यादिति। एतच्च प्रवेशपत्रदानं मूलपत्रासन्निधानविषयम्। अत एवाह विष्णुः। असमग्रदाने लेख्यासन्निधाने चोत्तमर्णः स्वलिखितं दद्यादिति प्रवेशपत्रादानेऽप्याह नारदः। गृहीत्वोपगतं दद्यादृणिकायोदयं धनी। अददद्याच्यमानस्तु शेषहानिमवाप्नुयादिति॥ उदयमृणिकदत्तधनम्। उदयं गृहीत्वेत्यन्वयः। एतच्च शेषत्वाल्पत्वविषयम्। बाहुल्ये तु धर्मादिनोद्ग्राह्यम्। ऋणं यस्तूपरि न लेखयेन्न चैवोपगतं दद्यात्तस्य तद्वृद्धिमाप्नुयात्। इति वृद्धव्यासोक्तोत्तमर्णस्य गृहीतांशवृद्धिदानमेव। उदयं गृहीत्वा ऋणमसमग्रमिति शेषः। ऋणाप्रतिदाने त्वनिष्टमाह। व्यासः। तपस्वी वाग्निहोत्री वा ऋणवान् म्रियते यदि। तपश्चैवाग्निहोत्रं च सर्वं तद्धनिनो भवेदिति। तेनावश्यमृणमपाकरणीयमित्याशयः। अनेनैवाशयेन कात्यायनोऽप्याह। उद्धारादिकमादाय स्वामिने न ददाति यः। स तस्य दासो भृत्यः स्त्री पशुर्वा जायते गृहे इति। आदिशब्देन निःक्षेपादीनां ग्रहणम्। स दासः क्रीतः। भृत्यो वेतननिकृष्टैस्तयोर्भेदः। नारदोऽपि। याच्यमानं न दद्याद्यदृणं वापि प्रतिग्रहम्। तद्द्रव्यं वर्द्धते तावद्यावत्कोटिशतं भवेत्॥ ततः कोटिशते पूर्णे वेष्टितस्तेन कर्मणा। अश्वः खरो वृषो दासो भवेज्जन्मनि जन्मनि इति। प्रतिग्रहः प्रतिश्रुतम्। लेख्यारूढप्रतिदानानन्तरकर्तव्यमाह याज्ञवल्क्यः। दत्वर्णं पाटयेल्लेख्यं शुद्ध्यै वान्यत्तु कारयेदिति। लेख्यं मूलपत्रम्। शुद्ध्यै ऋणापाकरणार्थम्। अन्यद्विशुद्धिपत्रं वोत्तमर्णाद्गृह्णीयादित्यर्थः। मूलपत्रासन्निधाने कथञ्चिद्विशुद्धिपत्रासम्भवे किं कर्तव्यमित्यपेक्षिते नारद आह। लेख्यं दद्याद्विशुद्धर्णे तदभावे प्रतिश्रवः। धनिकर्णिकयोरेवं विशुद्धिः स्यात्परस्परमिति। प्रतिश्रवः प्रतिदानं कृतमिति साक्षिभिः श्रावणं साक्षिमदृणप्रतिदानप्रकारमप्याह याज्ञवल्क्यः। साक्षिमच्च भवेद्यद्वा तद्दातव्यं ससाक्षिकमिति। ससाक्षिकमृणं पूर्वसाक्षिणां समक्षन्तेषां कथञ्चिदसम्भवे साक्ष्यन्तरसमक्षं वा दातव्यमित्यर्थः। उत्तमर्णेन साक्ष्यादिभिः साधितमृणं दापितव्यो राज्ञाध

मर्णाद्दण्डग्रहणमुत्तमर्णाद्भृतिग्रहणञ्चाहसएव । राज्ञाधमर्णिकोदाप्यः साधितादृशकं शतम् । पञ्चकञ्च शतं दाप्यः प्राप्तार्थो
ह्युत्तमर्णिकइति । अधमर्णात्साधितार्थस्ययोदशमोंऽशस्तावद्द्रव्यं दण्डत्वेनगृह्णीयात् । उत्तमर्णात्तुसाधितार्थस्यविंशतितममं
शं भृतित्वेनेत्यर्थः । अतएवविष्णुः । उत्तमर्णश्चेद्राजानमियात्तत्सद्विभाविर्तेऽधमर्णोराज्ञेधनदशमभागसमन्दण्डन्दद्या
त् । प्राप्तार्थश्चोत्तमर्णोविंशतितममंशमितितद्विभावितेउत्तमर्णोनसाधितेसति । यत्तु मनुवचनं । योयावन्निह्नुवीतार्थं मिथ्या
यावतीवावदेत् । तौनृपेणह्यधर्मज्ञौदाप्यौतद्द्विगुणन्दममिति । तद्दशधनात्तिदुर्वृत्ताधमर्णोत्तमर्णविषयम् । यावन्निह्नुवीत
यावतीमिथ्यावावदेत्मयैतावद्दत्तमित्यसत्यं वदेत्तावुभावपितावतोधनस्यद्विगुणन्धनन्दण्ड्याविथ्यर्थः । यत्पुनस्तस्यैववचनं अर्थे
ऽपव्ययमानन्तुकारणेनविभावितम् । दापयेद्धनिकस्यार्थन्दण्डलेशञ्चशक्तितइति । तद्दशमांशदानासमर्थसद्वृत्ताधमर्णवि
षयं । अपव्ययमानमपलपन्तंयस्तुप्रभुत्वाद्बलेपाद्वुत्तमर्णोनयाचितस्तदाऽसम्प्रतिपद्यराजसभायामानीतःस्वयमेवसम्प्रति
पद्यतेसोभियुक्तार्थस्यविंशतितमममंशं दण्डनीयइत्याहनारदः । ऋणिकःसधनोयस्तुदौरात्म्यान्नप्रयच्छति । राज्ञादाप
यितव्यःस्याद्गृहीत्वांशन्तुविंशकमिति । मनुरपि । ऋणेदेयेप्रतिज्ञातेपञ्चकंशतमर्हति । अपह्नवेतद्द्विगुणन्तन्मनोरनु
शासनमिति । यःपूर्वमप्रतिपद्यराजसभायामानीतोऽधमर्णऋणंदेयतयाप्रतिजानीतेसत्यमस्मैधारयामीतिसपञ्चकंशत
मर्हतिदातुमितिशेषः । यस्तुसभायामप्यपह्नुतेनाहमस्मैधारयामीतिपश्चादंगीकरोमीतिसतद्द्विगुणम्प्रतिपादितंपञ्चकश
ताद्द्विगुणन्दशकन्दण्डमर्हतीत्यर्थः । यस्तुयाज्ञवल्क्यवचनेनिह्नवेभावितोदद्याद्धनंराज्ञेचतत्समम् । मिथ्याभियोगीद्विगु
णमभियोगाद्धनंहरेदिति । अपलपितुःसमदण्डउक्तःसद्विगुणधनदानासमर्थदुर्वृत्ताधमर्णविषयः । अन्यथानिह्नवे
द्विगुणदण्डप्रतिपादकयोर्यावन्निह्नुवीतार्थमितिपूर्वोदाहृतमनुवचनविरोधःस्यात् । अभियोगादभियुक्तधनात् । मिथ्याभि
योगीद्विगुणमभियोगाद्धनंहरेत् । कारणेविधिरेषःस्याज्जितस्यैकतरस्यतु ॥ प्राङ्न्यायवादेचतथायश्चासत्येनयुज्यतइतिव्या

स्ववचनविरोधस्तु स्यात्। कारणेकारणोत्तरे। अस्यायेनमिथ्योत्तरे वा प्रत्यवस्कन्दने प्राङ्न्याये मिथ्योत्तरे च वादिप्रतिवादिनोर्मध्ये यस्यैकतरस्य पराजयस्तस्यापि पूर्वोक्तेन द्विगुणो दण्ड इत्यर्थः। यत्तु मिताक्षरायाम्। मिथ्योत्तरेऽपह्नोतुः पराजये समो दण्डः मिथ्याभियोक्तुर्द्विगुणो दण्डः एवम्प्राङ्न्याये प्रत्यवस्कंदने चार्थिनोऽपह्नववादित्वात्प्रत्यर्थिना प्राङ्न्यायकारणसाधने प्रकृतधने प्रकृतधनएव दण्डः यदि प्रत्यर्थी प्राङ्न्यायकारणेन साधयति तदासमिथ्याभियोग्येवेति तस्य द्विगुणो दण्ड इत्युक्तं तत्पूर्वोक्तव्यास्ववचनविरोधाद्विभावनीयं विद्वद्भिरिति। इत्यृणादानाख्यव्यवहारपदम्॥ ● ॥ अथ निःक्षेपाख्यव्यवहारपदम्। तत्र निःक्षेपोनाम स्वद्रव्यस्य विश्वासेन पुरुषान्तरे स्थापनम्। तथा च नारदः। स्वद्रव्यं यत्र विस्रम्भान्निःक्षिपत्यविशंकितः। निःक्षेपोनाम तत्प्रोक्तं व्यवहारपदं बुधैरिति॥ न च न्यासोपनिध्योरतिव्याप्तिस्तयोर्लक्ष्यत्वान्निःक्षेपएव॥ याज्ञवल्क्यासमक्षं समर्पितो न्यास इत्युच्यते। अतएव बृहस्पतिः। राजचौरारातिकभयाद्दायादानां च वञ्चनात्। स्थाप्यतेऽन्यगृहे द्रव्यं न्यासः स परिकीर्तित इति। अयमेवागणितद्रव्यस्थापनेऽनुपनिधिरित्युच्यते। तथा च नारदः। असंख्यातमविज्ञातं समुद्रं यन्निधीयते तज्जानीयादुपनिधिं निःक्षेपं गणितं विदुरिति। असंख्यातं अदर्शितं अविज्ञातं अनाख्यातम्। अतएव बृहस्पतिः। अनाख्यातं व्यवहितमसंख्यातमदर्शितम्॥ मुद्राङ्कितं च यद्द्रव्यं तदौपनिधिकं स्मृतमिति। व्यवहितं करंडकादौ प्रक्षिप्यापिहितम्। अतएव याज्ञवल्क्यः। वासनस्थमविज्ञातं हस्तेऽन्यस्य यदर्प्यते। द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तदिति॥ वासनं द्रव्याधारनीतं करण्डकादि तत्स्थं वासनस्थम्। हस्तग्रहणमुपलक्षणम्। अतएव नारदः। निःक्षिप्यते परगृहे तदौपनिधिकं स्मृतमिति। तथा चायमेतेषां भेदः। याज्ञवल्क्यसमक्षं गणयित्वा स्थापितं निःक्षेपः। गृहस्वामिनोऽसमक्षं गणितं वा तस्मिन्नागते एतद्दातव्यमित्युक्त्वाऽन्यस्य तत्पुत्रादेर्हस्ते दत्तं न्यासः मुद्रांकितं समक्षमगणितं स्थापनमुपनिधिरिति। निःक्षेपादीनां स्थापनप्रकारमाह मनुः। कुलजे वृत्तसम्पन्ने धर्मज्ञे सत्यवादिनि। महापक्षे धनिन्यार्ये निःक्षेपं निःक्षिपेद्बुध इति। महापक्षे

बकुतरवन्धुयुक्ते। निःक्षेपग्रहणमुपलक्षणम्। वृहस्पतिः। स्थानंगृहस्वनद्वर्णौविधानश्चगुणस्तथा। सत्यंशौचमन्धुजन
न्परीक्ष्यस्थापयेन्निधिमिति॥ निधिरूपनिधिः। एतदप्युपलक्षणम्। निःक्षेपादीनांरक्षणक्रमंव्यंयाहकेणोन्याहवृहस्पतिः।
ससाक्षिकंरहोदत्तंद्विविधंसमुदाहृतम्। पुत्रवत्परिपाल्यंतद्विनश्यत्यनवेक्षणेइति। पालयितुःफलमपालयितुर्दोषश्चाह।
ददतोयद्भवेत्पुण्यंहेमकूप्यांवरादिकम्। तत्स्यात्पालयतोन्यासंयथैवशरणागतम्॥ भर्तृद्रोहंयथानार्याःपुंसःपुत्रसुहृद्वधे
। दोषोभवेत्तथान्यासेभक्षितेपेक्षितेन्तथाम्॥ न्यासद्रव्यंनगृह्णीयान्नाम्नाशस्तयशस्करः॥ गृहीतम्पालयेद्यत्नात्पहर्द्याचि
तमर्पयेदिति। न्यासग्रहणमुपलक्षणम्। तेनफलभृत्यादिकंनिःक्षेपादित्रयसाधारणमितिमन्तव्यम्। दैवराजोपघातेयाह
कस्यनदोषइत्याहवृहस्पतिः। दैवराजोपघातेनयदितन्नाशमाप्नुयात्। गृहीतद्रव्यसहितंननद्दोषेणविद्यतइति। यहीतु
रितिशेषः उपेक्षादिद्रव्यदोषाभावादितिभावः। गृहीतद्रव्यसहितमित्युपेक्षाभावनिश्चयोक्तम्। तेनकथंचिन्निःक्षिप्तमात्र
स्यविनाशेप्रमाणान्तरादुपेक्षाभावेनिश्चितेयहीतुर्दोषेनविद्यतइतिमन्तव्यं। दैवराजग्रहणमसमाधेयं। निमित्तोपलक्षणा
र्थंञ्चतएवकात्यायनः। राजदैविकचौरैर्वानिःक्षिप्तंयत्प्रनाशितम्। यहीतुःसहभाण्डेनदातुर्नष्टन्नदुष्यतइति॥ भाण्डेनस
र्थेन। नारदोपि। यहीतुःसहयोर्थेननष्टःएवसदायिनः॥ दैवराजकृतेतद्वच्चेन्तज्जिह्मकारितमिति। तद्वदितिपदेनैक
मुपमेयमन्यदुपमानमित्यवगम्यते। तेनैवयोजनायहीतुरर्थैसहयोनष्टस्सदायिनएवएवन्दैवराजकृतेयोनष्टःसोपिदायि
नएवनष्टइतिदैवग्रहणान्तस्करोपलक्षणम्। अतएवयाज्ञवल्क्यः। नदाप्योपहृतन्तन्तुराजदैविकतस्करैरिति। दैविकपद
स्यार्थोविवृतोमनुना। चौरैर्हृतञ्जलेनोढमग्निनादग्धमेववा। नदद्याद्यदितस्मात्त्वंनसंहरतिकिञ्चनेति॥ यदितस्मान्निः
क्षेपादल्पमपिधनन्नसंहरतिनगृह्णातितर्हिनदद्यादित्यर्थः। तथाचसएव। समुद्रेनाप्नुयात्किञ्चिद्यदितस्मान्नसंहरेदिति
क्वचिद्येनकेनचिद्धेतुनानष्टमपियहीतामूल्यद्वारेणनदाप्यइत्याह। कात्यायनः। ज्ञात्वाद्रव्यवियोगन्तुदातायववनिःक्षिः

पयेत्। सर्वोपायविनाशेपिग्रहीतानैवदाप्यतेइति। निःक्षेप्यग्रहीतारम्प्रत्याहकात्यायनः। निःक्षिप्तंयस्ययत्किंचित्तंप्रयत्नेनपाल
येत्। दैवराजकृतादन्योविनाशस्तस्यकीर्त्यतइति। यस्यपार्श्वेयत्स्थापितन्तत्तेनावहितेनरक्षणीयं। यतोदैवराजकृतादन्यो
विनाशस्तस्यग्राहकस्यदोषेणकृतत्वेनकीर्त्यतइत्यर्थः। नकेवलन्दुष्कीर्तिरेवतस्यकिन्तुविनाशेजातेवस्तुगत्यादोषोबहुर्थ
हानिश्चेत्याहसएव। यस्यदोषेणयत्किञ्चिद्विनश्येन्नह्रियेतवा। तद्द्रव्यंसोदयन्दाप्योदैवराजकृताद्विनेति॥ दोषःउपेक्षा
दिलक्षणः। बृहस्पतिरपि। भेदेनोपेक्षयान्यासंग्रहीतायदिनाशयेत्। याच्यमानोनदद्याद्वादाप्यन्तत्सोदयम्भवेदिति॥
कात्यायनोपि। न्यासादिकम्परद्रव्यंप्रभक्षितमुपेक्षितम्। अज्ञाननाशितञ्चैवयेनदाप्यःसएवतदिति॥ अत्रविशेषमाह
तुर्योग्रकात्यायनौ। भक्षितेसोदयन्दाप्यःसमन्दाप्यउपेक्षिते। किञ्चिदूनम्प्रदाप्यंस्याद्द्रव्यमज्ञाननाशितमिति॥ किञ्चि
दूनञ्चतुर्थांशन्यूनमितिमिताक्षरायाम्। याचनानन्तरमदत्तस्यपश्चाद्दैवराजकृतेपिविनाशेस्थापकंयन्मूल्यमात्रन्दातव्य
मित्याहव्यासः। याचनानन्तरंनाशेदैवराजकृतेपिशः। गृहीताप्रतिदाप्यःस्यान्मूल्यमात्रन्नसंशयइति। प्रत्यर्पणाविलं
बमात्रापराधेसवृद्धिकदानस्यान्याय्यत्वात्। राज्ञेचतत्समोदण्डोदेयइत्याहनारदः। याच्यमानस्तुयोदातुर्निःक्षेपन्नप्रयच्छ
ति। दण्ड्यःसराज्ञाभवतिनष्टेदाप्यश्चतत्सममिति। नष्टेदैवतोराजतोवेतिशेषः। याज्ञवल्क्योपि। भ्रंशश्चेन्मार्गितेऽदत्तेदा
प्योदण्डश्चतत्सममिति। मार्गितयाचितेऽदत्तेसतियदिभ्रंशोदैवराजकृतोनाशोभवतितथापितद्द्रव्यंमूल्यपरिकल्पनेनध
निनेग्राहकोदाप्योदण्डोराज्ञेचतत्समंदण्डमित्यर्थः। यःपुनस्थापकाननुज्ञयानिःक्षेपमुपभुंक्तेतस्यदण्डमाहनारदः। धना
र्थंसाधयेत्तेननिक्षेप्तुरननुज्ञया। तत्रापिदण्ड्यःसभवेत्तच्चसोदयमावहेदिति। दण्ड्यःसाधितद्रव्यानुसारेण। याज्ञवल्क्यो
पि। आजीवन्स्वेच्छयादण्ड्योदाप्यस्तञ्चापिसोदयमिति। आजीवन्भोगवृद्ध्यर्थप्रयोगादिनाउपजीवन्स्वेच्छयास्वाम्यननु
ज्ञया। वृद्धिप्रमाणंचाहकात्यायनः। निःक्षेपंवृद्धिशेषञ्चक्रयविक्रयमेवच। याच्यमानंनचेद्दद्याद्वर्द्धतेपञ्चकंशतमिति।

निःक्षेपहर्तारम्प्रत्याह विष्णुः । निःक्षेपापहारी वृद्धिसहितन्धनन्धनिकस्य दाप्यः । राज्ञश्च दण्डमाह मनुः । निःक्षेपस्यापहर्तारं त
त्समन्दापयेद्दमं । तथोपनिधिहर्तारमविशेषेण पार्थिवः । निःक्षेपापह्नवे कर्तव्यमाह व्यासः । निःक्षेपन्निह्नुते यस्तु नरो यं धुवका
न्वितः साक्षिभिर्वा यद्दत्तं विभाव्य प्रतिदाप्यते ॥ दण्डमाह बृहस्पतिः । गृहीत्वापह्नुते यस्तु साक्षिभिः शपथेन वा । विभाव्य दा
पयेन्मासं तत्समं विनयन्तथैव ॥ विनयन्दण्डं स साक्षिकनिःक्षेपादेः स्थापकस्यानृतवादित्वे साक्षिभ्यो यथास्थितमर्थमवगम्य द
ण्डनीयः स साक्ष्याह मनुः । निःक्षेपो यः कृतो येन यावांश्च कुलसन्निधौ । तावानेव स विज्ञेयो विब्रुवन्दण्डमर्हतीति ॥ कृतं साक्षि
वृन्दम् । असाक्षिके त्वाह बृहस्पतिः । रहोदत्ते निधौ यश्च विसम्वादः प्रजायते । विभावकन्तत्र दिव्यमुभयोरपि च स्मृतमिति
॥ उभयोर्मध्ये एकस्यैवार्थः । उभयत्र हस्तं चावान्यतरः कुर्यादित्ययमेव पक्षो यथास्यादिति । ग्रहीतृस्थापकयोरन्यतरा
दित्येदण्डमाह मनुः । निःक्षेपस्यापहर्तारमनिःक्षेप्तारमेव च । सर्वैरुपायैरन्विच्छेच्छपथैश्चैव वैदिकैः ॥ यो निःक्षेपं नार्पय
ति यश्चानिःक्षिप्य याचते । उभौ तौ चोरवच्छास्यौ दाप्यौ वा तत्समं दममिति । चोरवच्छास्यौ चोरवद्दण्ड्यौ चोरवद्दण्डेन दण्ड्या
वितियावत् । दण्डस्य प्रमाणमाह स एव युक्तं मनुवृत्तौ । यत्तु मत्स्यपुराणे ॥ यो निःक्षेपं नार्पयति यश्चानिःक्षिप्य याचते । तावु
भौ चोरवच्छास्यौ दाप्यौ च द्विगुणं दममिति । द्विगुणो दण्डस्तूत्तमः । बहुवृत्तविषये ब्राह्मणातिरिक्तविषये वा । अन्यथा समदण्ड
प्रतिपादकमनुवचनविरोधः स्यादिति । निःक्षिप्तद्रव्यमकाले ददतो द्विगुणो दमः इत्याह कात्यायनः । याच्यमानस्तूपनिधिः काले का
लहीनन्तु वर्जयेत् । कालहीने ददद्दण्डं द्विगुणस्य प्रदापयेदिति । याच्यः निःक्षेपकारिणानिक्षेपः यद्यायादुपनिधिरन्यस्य हस्ते
न्यस्तस्तद्व्यातीते काले स याच्य इत्यर्थः । तद्व्यातीते निकाले स्वयमेवनायाचितमर्पणीयम् । स्वयाचितमर्पयेदिति बृहस्पतिस्म
रणात् । तद्यये वर्तमाने स्वयमेवायाचितन्दीयमानं कालहीनन्तस्य दानं दैवेनैवेतितस्य दत्तोऽपि दण्डो युक्तः । प्राड्विवाकं प्रत्या
ह मनुः । यो निःक्षेपं याच्यमानो निःक्षेप्तुर्न प्रयच्छति । स याच्यः प्राड्विवाकेन तन्निःक्षेप्तुरसन्निधौ । स यदि प्रतिपद्येत यथान्यस्तं य

थाश्रितम्। नतत्रविद्यतेकिञ्चिद्यत्परेणाभियुज्यतइति। यदातुनप्रतिपद्येततदाराजानम्प्रत्याहसएव। तेषांनदद्याद्यदितु
तद्धिरण्यंयथाविधि। इयन्निगृह्यदाप्यःस्यादितिधर्मस्यधारणा। निःक्षिप्तस्यधनस्यैवम्प्रीत्योपनिहितस्यच। राजाविनिर्ण
यंकुर्य्यादक्षिण्वन्न्यासधारिणमिति। तेषांअभियोक्तृत्वम्। इयंद्विगुणम्। निगृह्यदण्डयित्वाअक्षिण्वन्अताडयन्।
निःक्षेपग्रहीतारम्प्रत्याहबृहस्पतिः। स्थापितंयेनविधिनायेनयच्चयथाविधि। तथैवतस्यतद्देयंनदेयम्प्रत्यनन्तरइति॥ स्थापि
तेतरस्ययस्यस्थापितद्रव्यस्वाम्यमस्तिसइहप्रत्यनन्तरउच्यतइतिस्मृतिचन्द्रिकायाम्प्रत्यनन्तरेपुत्रादाविति कल्पतरौस्थापक
म्प्रत्याहमनुः। योयथानिःक्षिपेद्धस्तेयमर्थंयस्यमानवः। सतथैवग्रहीतव्योयथादायस्तथाग्रहः। मिथोदायःकृतोयेनग्र
हीतोमिथएववा। मिथएवप्रदातव्योयथादायस्तथाग्रहः। समुद्रेनाप्नुयात्किञ्चिद्यदितस्मान्नसंहरेदिति। दायोदानं
स्थापनमितियावत्। ग्रहोग्रहणंमिथःअन्योन्यमेवएतदुक्तम्भवति। सन्याक्षिप्तेनस्थापितम्। साक्षिसाक्षिसमक्षंगृहीतव्य
म्। रहसिस्थापितंरहस्येवेति। समुद्रेमुद्रासहितेनिःक्षेपेमूषकादिनोपहृतेनिःक्षेपंस्थापयित्वानकिञ्चिद्दूषणमाप्नुयात्।
यदितस्मान्निःक्षेपात्प्रतिमुद्राश्रावणादिनानापहरेत्किञ्चिदित्यर्थः॥ स्थापयितुर्मरणेप्रत्यनन्तरेतद्देयमित्याहसएव। स्व
यमेवतुयोदद्यान्मृतस्यप्रत्यनन्तरे। नसराज्ञाभियोक्तव्योननिःक्षेप्तुश्चबन्धुभिरिति। अनेनवचनेनवचोभंग्यास्थापकेमृतेप्रत्य
नन्तरेप्रत्यर्पणंग्राहकेणकार्यमित्युक्तम्। स्वयमेवयाचनमन्तरेणेत्यर्थः। याचनमन्तरेणदानम्भयादिकालोपायेमन्तव्यम्
अन्यथादोषापत्तेः। प्रत्यनन्तरवक्तृत्वेतुनैकस्मिन्प्रत्यनन्तरेदेयंकिन्तुसर्वप्रत्यनन्तरसन्निधावितिननिःक्षेप्तृबंधुभिरभियो
क्तव्यइत्यनेनसूचयाम्बभूव। यदातुग्राहकःस्वयमेवनददातितदाप्रत्यनन्तरकर्त्तव्यमाहसएव। अच्छलेनैवचान्विच्छेत्तम
र्थंप्रीतिपूर्वकं। विचार्य्यतस्यवावृत्तंसाम्नैवपरिसाधयेदिति। अन्विच्छेत्अवधारयेत्परिसाधनंग्राहकसकाशादादानन्तद्ग्राह
कवृत्तंविचार्यसतद्ग्राहकविषयेसाम्नैवकार्य्यंनभयादिप्रदर्शनेन। दुर्वृत्तग्राहकविषयेतुच्छलादानप्रकरणोक्तेनभयादिप्र

दर्शनाद्युपायान्तरेणाहत्वादिनाकार्य्यमित्यस्मादेव वचनादवगम्यते । तथा सद्भूतेर्थे विप्रतिपन्नेभूतानुसारेण साधयितुमश
क्येसाक्ष्याद्यभावेप्रत्यनन्तरशपथादिना साधयेत् । दुर्वृत्ते तु विप्रतिपन्नेछलादिनापरिहरेदितिवास्मादेव वचनादवगम्यते । स
द्वृत्ते छलादिप्रयोगवच्छपथेनशोधनस्याप्यनुचितत्वात् । ग्राहकेतु मृतेपश्चात्तदधीनन्निःक्षेपादि जायतेतेनैवस्थापकेप्रत्यन
न्तरे वा प्रत्यर्पणीयमित्यतिस्थूलत्वान्स्मृतिकारैरुपेक्षितमित्यस्माद्गृणाकारणामुन्नेयंयदिग्राहकवद सौस्वयंनददातितदास्थाप
कः प्रत्यनन्तरोवा पूर्वोक्तमार्गेणान्विच्छेत्सम्प्रतिपन्नं पूर्वोक्तेनप्रकारेणपरियहं साधयेदित्येतदपि स्मृतिकारैरुपेक्षितंज्ञानुमशक्य
त्वादितिस्मृतिचन्द्रिकायाम् । निःक्षेपेऽभिहितन्धर्मंयाचितादिष्वतिदिशतिनारदः । एषएव विधिर्दृष्टोयाचितान्वाहिता
दिषु । शिल्पिषूपनिधौन्यासेप्रतिन्यासेतथैवचेति ॥ याचितंऽन्यवादिषु परकीयमलंकारादि याचित्वासमानीतम् । अन्वाहि
तं स्वस्मिन् स्थितम्पर धनमन्यहस्तेकृतंशिल्पिषु शिल्पिन्यासेकुण्डलादिकरणायस्वर्णकारादिहस्तन्यस्तसुवर्णादाविपर्ययः ।
प्रतिन्यासेमिथः कार्य्यापेक्षयात्वदीयमेतन्मयास्थाप्यतेमदीयमेतत्त्वयास्थापनीयमितिस्थापितेनारदेननिःक्षेपएवविद्युप
देशादुपनिधिन्यासयोस्तदतिदेशः । याज्ञवल्क्योपि । याचितान्वाहितन्यासनिःक्षेपादिष्वयंविधिरिति । यद्यपिस्मृत्यंतरेन्यास
निःक्षेपयोर्विधिरुपदिष्टस्तथाप्यस्यांस्मृतौनोपदिष्टाइत्युपनिधिधर्माणामतिदेशोयुक्तः । बृहस्पतिरपि । अन्वाहितेयाचि
तकेशिल्पिन्यासेसबन्धके । एषएवोदितोधर्मस्तथाचशरणागतइति ॥ अनेनयाचितस्यशिल्पिन्यासस्यदैवादिनानाशेस्वर्ण
कार प्रभृतिस्तंनदाप्याइत्युक्तन्तस्यक्वचिदपवादमाहकात्यायनः । एनश्चसंलिखितेन्यासोदिवसैःपरिनिष्ठितैः । तदूर्ध्वंस्था
पयंश्छिल्पीदाप्योदैवाद्गतेपिनर्मिते । रजकस्यहस्तेनैमेत्यार्थंदत्तस्यजीर्णवस्त्रादेर्यद्यवघातादिनानाशः अवघातादिश्चनैर्म
ल्यार्थस्तदाशिल्पिदोषाभावान्नशिल्पीनदाप्यः । नूतनादेस्तुपटुतरावघातादिकत्वानाशस्यशिल्पिदोषकृतत्वान्नमूल्यंदा
प्यइत्यभिसन्धायाहसएव । न्यासदोषादिनाशःस्याच्छिल्पिनन्तन्नदापयेत् । दापयेच्छिल्पिदोषान्तत्संस्कारार्थंयदर्पितम्

ति । शिल्पिदोषादिना च विनाशः स्यादित्यनुषज्यते । यत्र तन्त्वादिकं वायनार्थं कुविन्दादेर्न्यस्तं तत्र पटादिद्रव्यार्थं मत्स्यपरिपू
र्णं दत्त्वा वा कुविन्दादिना दीयमानं स्वामिना न गृहीतं तत्र स्वामिन एव नष्टमित्याह तन्तुस्तन्तुकायायनो । स्वल्पेनापि च यत्कर्म मनुष्ये
भृतकस्य तत् । पण्यं प्रतिदिनं तत्तस्य विनश्येन्न प्रतिगृह्णतीति । तत्कर्म वस्त्रनिर्माणादि स्वल्पेनापि ऋणवानादिना पिण्डितकर्म
तं चेत् भृतकस्य शिल्पिन एव नष्टम् । पुनर्वेतनमदत्त्वा विनैव वानादिक्रियां कुर्य्यादित्यर्थः । यदि स्वामी तत्पादिकं पुनर्नीत्वा
यति तद्दानाद्यभावेऽपि शिल्पिने दत्तं वेतनं स्वभक्तेऽपि पण्यं परिपूर्णं वस्त्रादि कर्म्मत्वतो भृतकस्य यः स्वामी तस्यैव नष्टम्
नस्तत्पण्यं प्रशस्यतीत्यर्थः । एवं चात्र भृतको नष्टं न दाप्य इति पर्यवसितोऽर्थः । एवं शिल्पिन्यासविषये विविक्तायाचितकमधिकृत्ये
त्याह स एव । यदि तत्कार्यमुद्दिश्य कच्च सम्परिनियम्य वा । याचितोऽर्द्धकृतोऽथवा अप्राप्ते न तु दाप्यत इति । तात्पर्यन्तावदुच्य
ते । याच्यमानो न दद्याद्दाप्यः स्यात् सोदयमित्यथवा मौयाचितके निर्देशप्राप्तो अनेन वचनेन कश्चित्प्रतिषिध्यते । प्रतिषेध
कवचनस्यायमर्थः । यद्दीर्घकालसाध्यं कार्यं तत्कार्योद्देशेन याचितं यदि घावत्पर्यन्तं दीयतामित्येवं कालं च परिनियम्य याचितं
तत्र कार्यमध्ये परिनियतकालमध्ये वा प्रतियाच्यमानेऽपि याचितकं न ददाति तथापि स उदयं न दाप्यः । किन्तु कार्ये कृते परिनियतका
लात्यये वा याचितकमावहेद्यादिति । यदि न ददाति विवाचितं ननं ददाति तदा तदैवादिना नाशे हरणे वा जाते तन्मूल्यमावहेद्यमि
त्यप्याह स एव । प्राप्तकाले कृते कार्ये न दद्याद्याचितोऽपि सन् । तस्मिन्नष्टे हृते वापि गृहीता मूल्यमावहेदिति । क्वचित्कार्यम
ध्ये परिनियतकार्यमध्ये वा याचितकं दाप्य इत्याह स एव । अपकार्यविपत्तिस्तु नश्यैव स्वामिनो भवेत् । अप्राप्तेऽवेसमवेतु दाप्य
स्तत्कृतेऽपि वदिति । यदि याचितकासप्रतिदानेन स्वामिनः कार्यनाशः सम्भाव्यते तदा दद्यादित्यर्थः । याचितकाच प्रतिदा
नेतुकर्त्तव्यमाह स एव । सोऽयाचितकमादाय न दद्यात्प्रतियाचितः । स निगृह्य बलाद्दाप्यो दण्ड्यश्च न ददाति य इति । स च स्वामि
गृह्यदाप्योदानोन्मुखः कर्त्तव्यः । एवमपि येन ददाति स दण्ड्य इत्यर्थः । प्रक्षालनार्थं निजक हस्ते दत्तं यद्वस्त्रं तस्य तेन नाशे

क्षतेतन्मूल्यं तस्माद्ग्राह्यमित्याह नारदः। मूल्याष्टभागो हीयेत सकृद्धौतस्य वाससः। द्विःपादस्त्रिस्तृतीयांशश्चतुर्द्धौतेऽर्द्ध-
मेव च। अर्द्धक्षयात्तु परतः पादांशापचयः क्रमादिति। सकृद्धौतस्य नाशेऽष्टमांशन्यूनं तन्मूल्यं ग्राह्यं द्विर्द्धौते चतुर्थांश-
न्यूनम्। एवं त्रिर्द्धौते तृतीयांशमित्येवमुत्तरत्रापि योज्यम्। वस्त्राणां प्रक्षालनं नेजकेन न पाषाणे कार्यं किन्तु श्लक्ष्णे शाल्मले-
फलके न च तेषां व्यत्यासः कार्यो न च तानि स्वगृहे रात्रौ स्थापनीयानीत्यमुमेवार्थमभिसन्धायाह मनुः। शाल्मलेफलके श्लक्ष्णे नि-
ज्याद्वासांसि नेजकः। न च वासांसि वासोभिर्निर्हरेन्न च वासयेदिति। निज्यात्प्रक्षालयेत्। अन्यवासांसि अन्यवासोभिर्न निर्ह-
रेत् न मेलयेदित्यर्थः। शिल्पिन्यासोपभोगादौ शिल्पिनो दण्डत्वमाह। याज्ञवल्क्यः। वसानस्त्रीन्पणान्दण्ड्यो नेजकस्तु
परांशुकम्। विक्रयावक्रयाधानयाचितेषु पणान्दश इति। नेजको वस्त्रप्रक्षालकः। अवक्रयः कस्माच्चिद्भाटकं गृहीत्वा तस्यो-
पभोगार्थं कालकॢप्तिं विधाय समर्पणम्। आधानं बन्धकीकरणम्। याचितम्। स्वसुहृद्भ्यो याचितत्वेन दानं सुवर्णकारादिह-
स्ते कङ्कणादिनिर्माणार्थं यानि सुवर्णादीनि दत्तानि तेषां मध्ये सुवर्णे यत्परिमाणकं दत्तं तत्परिमाणक एव सुवर्णविकारः
शिल्पिनो ग्राह्यः। रजतादि वस्तु किञ्चिन्न्यूनं ग्राह्यम्। कम्बलादि यत्तु ऊर्णाद्यपेक्षया किञ्चिदधिकं ग्राह्यम्। यद्येवं शि-
ल्पी न ददाति तदा राजाद्याप्तो दण्डनीयस्त्वित्येतत्सर्वं मनसि निधायाह। स एव। अग्नौ सुवर्णमक्षीणं रजते द्विपलं शते। अ-
ष्टौ त्रपुणि सीसे च ताम्रे पञ्चदशायसि। शते दशपला वृद्धिरौर्णे कार्पाससूत्रके। मध्ये पञ्चपला वृद्धिः सूक्ष्मे तु त्रिपला मता।
। कार्मिके रोमबद्धे च त्रिंशद्भागः क्षयो मतः। न क्षयो न च वृद्धिस्तु कौशेये वल्कलेषु चेति। अग्नौ प्रताप्यमानमिति शेषः। श-
तपले प्रताप्यमाने पलद्वयम्। त्रपुणि सीसे च पलाष्टकम्। ताम्रे पलपञ्चकं लोहे पलदशकं क्षीयेतेत्यर्थः। कांस्यस्य तु
त्रपुताम्रप्रभवत्वात्तदनुसारेण क्षयः कल्पनीय इति पृथगुक्तः। स्थूलेषु ऊर्णाकार्पाससूत्रेषु शतपलेषु पलदशकम्। अनति-
सूक्ष्मेषु तेषु पञ्चकम्। सूक्ष्मेषु पलत्रयं वर्धत इत्यर्थः। एतदक्षप्रक्षालितविषयमित्युक्तं मिताक्षरायाम्। कार्मिकम्।

चित्रे कर्मणा निर्मितं कार्म्मिकम्। यत्र निर्मिते पट्टे स्वस्तिकादिकं शिल्पसूत्रैः क्रियते इत्यर्थः। यत्र प्रावारादौ रोमाणि बध्यन्ते स रोमबन्धः। अनयोः स्वरूपापेक्षया त्रिंशद्भागक्षय इत्यर्थः। इति निःक्षेपाख्यव्यवहारपदम्॥ ● ॥ अथास्वामिविक्रयाख्यं व्यवहारपदम्। तत्स्वरूपमाह नारदः। निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वापहृत्य वा। विक्रीयतेऽसमक्षं यत् स ज्ञेयोऽस्वामिविक्रय इति॥ निःक्षिप्तग्रहणं याचितादीनामुपलक्षणार्थम्। असमक्षं स्वामिन इति शेषः। अत एवाह व्यासः। याचितान्वाहितन्यासंहृत्वा न्यस्तं यच्च धनम्। विक्रीयते स्वाम्यभावे स ज्ञेयोऽस्वामिविक्रय इति। स्वाम्यभावे स्वाम्यसन्निधाने। अत्र विक्रयपदं दानबन्धकयोरप्युपलक्षणं वक्ष्यमाणकात्यायनवचने तयोरपि निवर्त्यत्वाभिधानात्। अस्वामिनं दर्शयति बृहस्पतिः। निक्षेपान्वाहितन्यासंहृत्याचितबन्धकं। उपांशुयेन विक्रीतमस्वामी सोऽभिधीयत इति। निक्षेपादिग्रहणं इदं उपलक्षणम्। उपांशु अप्रकाशम्। प्रनष्टाधिगतादेः परद्रव्यस्योपलक्षणम्। यत आह। मनुः। विक्रीणीते परस्व स्वं योऽस्वामी स्वाम्यसम्मत इति। योनिःक्षेपादिकम्परद्रव्यम्प्रकटमेव विक्रीणीते तस्याप्यस्वामित्वात् अस्वामिकस्य निवर्त्यत्वात्तदाह नारदः। अस्वामिना कृतो यस्तु क्रयो विक्रय एव वा। अकृतः स तु विज्ञेयो व्यवहारेषु नित्यश इति। कात्यायनोऽपि। अस्वामिविक्रयं दानमाधिं वा विनिवर्तयेदिति। अस्वामिविक्रयम्। अस्वामिना कृतं विक्रयम्। अस्वामिकृतत्वं दानाध्योरपि तस्मात् वर्यात् अत एव यमः। अस्वामिना कृतो यस्तु दायो विक्रय एव वा। अकृतः स तु विज्ञेयो व्यवहारेषु नित्यश इति दायो दानं। स्वामिना अस्वामी विक्रीतं स्वकीयं वस्तु यत्र मीपे दृष्टं तस्मात् ग्राह्यमित्याह नारदः। द्रव्यमस्वामिविक्रीतं प्राप्य स्वामी तदाप्नुयात्। प्रकाशं क्रयतः शुद्धिः क्रेतुः स्तेयं रहः क्रयादिति। याज्ञवल्क्योऽपि। स्वं लभेतान्यविक्रीतं क्रेतुर्दोषोऽप्रकाशिते। हीनाद्रहो हीनमूल्ये वेलाहीने च तस्कर इति। स्वामी स्वसम्बन्धि द्रव्यमन्यविक्रीतं अस्वामिविक्रीतं यदि पश्यति तदा लभेत गृह्णीयात्। अस्वामिविक्रीतस्य हेतुमाभावात्। क्रेतुः पुनरप्रकाशिते गोपिते क्रये दोषो भवति हीनात् द्रव्यागमोपायहीनात्। रहसि एकान्ते। हीनमूल्ये।

अल्पतरेणद्रव्येणाधिकमूल्यक्रये । वेलाहीनेरात्र्यादौ क्रतेक्रयेचक्रेता तस्करो भवति । तस्करवद्दण्डादिभाग्भवतीत्यर्थः ।
बृहस्पतिरपि । येनक्रीतन्तुमूल्येन प्राग्राज्ञेविनिवेदितम् । नतत्रविद्यतेदोषस्तेनः स्यादुपधिक्रयादिति ॥ यत्रहीनमूल्येन
क्रीयमाणंक्रयात्प्रागेवराज्ञेनिवेदितन्तत्रनदोषइत्यर्थः । उपधिक्रयशब्दस्यार्थं दर्शयतिसएव । अन्तर्गृहेवहिर्ग्रामान्निशा
यामसतोजनात् । हीनमूल्यञ्चयत्क्रीतंज्ञेयोसावुपधिक्रयइति । असतोजनात्चाण्डालादेरित्यर्थः । असद्ग्रहणंदासा
दीनामुपलक्षणार्थं । अतएवनारदः । अस्वाम्यनुमताद्दासादसतश्चजनाद्ग्रहः । हीनमूल्यमवेलायांक्रीणंस्तद्दोषभा
ग्भवेदिति । अस्वाम्यनुमतात्स्वाम्यनुमतिहीनात् । दासग्रहणंसमानन्यायत्वादस्वतंत्राणांबालादीनामुपलक्षणार्थम् । वि
ष्णुरपि । अज्ञानतःप्रकाशंयत्परद्रव्यंक्रीणीयात् । नतस्यादोषःस्वामीद्रव्यमवाप्नुयात् । यद्यप्रकाशंहीनमूल्यंवाक्रीणी
यात् । तदाक्रेताविक्रेताचचोरवच्छास्यइति । क्रेतुःप्रकाश्यविक्रयाद्यभावादस्वामित्वान्यप्रकाशयादौतुतथाविधविक्रयस्य
विक्रेत्रस्वामित्वेऽप्यज्ञानमस्तीतिदुष्टत्वात्क्रेतापिदण्ड्यइत्यर्थः । स्वामिनास्वज्ञानंज्ञापयित्वैवतद्द्रव्यंग्राह्यंअन्यथाचोरप्र
च्छादकत्वेनसदण्ड्यइत्याहयाज्ञवल्क्यः । हृतम्प्रनष्टंयोद्रव्यंपरहस्तादवाप्नुयात् । अनिवेद्यन्दपेदण्ड्यःसतुषण्णवतिम्प
णानिति । यदापुनःपरहस्तादवाप्नुमसमर्थःस्वामीतदाव्याहसएव । नष्टापहृतमासाद्यहर्तारंग्राहयेन्नयम् । देशकाला
तिपत्तौचगृहीत्वास्वयमर्पयेदिति । विनष्टमपहृतंवास्वकीयन्द्रव्यमधिगंतुरपहर्तुर्हस्तेवादृष्ट्वाऽधिगन्तारंअपहर्तारंवाराज
पुरुषादिभिर्ग्राहयेत्राज्ञोराजपुरुषाणांदूरदेशावस्थितौतुविज्ञापनकालात्प्राक्पलायनादिशंकायांस्वयमेवगृहीत्वाराज्ञेस
मर्पयेदित्यर्थः । हर्तृग्रहेनाक्रेताविवक्षितस्तत्त्वविप्लुत्यर्थंराजदण्डप्राप्त्यर्थञ्चइतिमिताक्षरायांविज्ञानेश्वरः । नष्ट
धनस्वामिनातद्धनेपरस्वत्वनिवृत्तिपूर्वकस्वस्वत्वसिद्ध्यर्थंप्रथमंसाक्ष्यादिभिःप्रतिग्रहादिकंसाधनीयमित्याहकात्यायनः । अ
भियोक्ताधनंकुर्यात्प्रथमंज्ञातिभिःस्वकमिति । ज्ञातिभिःसाक्षिभूतैरितिशेषः । साक्ष्यादिभिःस्वस्वहेतुभूतप्रतिग्रहाद्यागमसाध

मेदग्धुमामाहव्यासएव । यदिस्वंनैवकुरुतेज्ञातिभिर्नोष्टिकोधनम् । प्रसङ्गविनिवृत्त्यर्थेचैवदद्यादण्डमर्हति । नाष्टिकोम
ष्टधनस्वामीप्रसङ्गःखलसन्देहः । व्यासोपि । वादीचेन्मार्गितन्द्रव्यंसाक्षिभिर्नविभावयेत् । दाप्यःस्याद्द्विगुणन्दण्डंकेता
तद्द्रव्यमर्हतीति । साक्षिग्रहणम्प्रमाणान्तरोपलक्षणार्थमितिकेचित् । यत्तूक्तंसाक्षिग्रहणं अस्वामीविक्रयविवादेस्वत्वसा
धनेप्रमाणान्तरनिवृत्त्यर्थमितिमदनरत्नेतदयुक्तम् । वस्तुतःस्वत्वहेतुभूतप्रतिग्रहादिस्वत्वेतत्साधकसाक्षिणामभावेदि
व्यद्युवकाशस्यविद्यमानत्वात् । अलेख्यसाक्षिकेदैवीव्यवहारेविनिर्दिशेदितिकात्यायनवचनविरोधापत्तेश्च । नचतत्राञ
दिव्यनिषेधकस्मृत्यभावस्तत्रदिव्यविधायकं अत्रतुप्रकाशंचक्रयंकुर्यात्साधुभिर्ज्ञातिभिःस्वकैः । नतत्रान्याक्रियाप्रोक्तादैवि
कीनचमानुषीतिदिव्यनिषेधकस्मृतेःसत्वादितिवाच्यम् । एतद्वचनस्यक्रेताक्रयसाधनंसाक्षिसत्वेसाक्षिभिरेवकर्तव्यंना
न्यमानुषेणनदिव्येनवेत्येतत्परत्वात् । नन्वेतद्वचनस्यैतादृशविषयपरत्वेमानाभावः । नचालेख्यसाक्षिकेदैवीमितिवचनविरो
धोमानम् । तस्यसामान्यशास्त्रत्वेनैतद्वचनानुरोधेनतस्यैतदतिरिक्तविषयतायान्याय्यत्वादितिचेन्न । साक्ष्याद्यभावेदिव्यस्यच
निषेधेअनिर्णयप्रसङ्गस्यैवमानत्वात् । अन्यथास्थावरेषुविवादेषुदिव्यानिपरिवर्जयेदितिवचनस्यसाक्ष्यादिसत्वेदिव्यनि
षेधपरत्वन्त्वदभिमतन्नसिद्ध्येत् । यत्तुतेनैववक्ष्यमाणप्रमाणहीनेपादेतिवचनेप्रमाणहीनत्वापादानमपि अत्रदिव्याभाव
ज्ञापकम् । दिव्याङ्गीकरणेप्रमाणहीनतायाअसम्भवादित्युक्तन्तत्तत्प्रमाणहीनेमानुषप्रमाणहीनेअन्यतरेणादिव्याङ्गीक
रणहीनेचेतिव्याख्येयमन्यथाअनिर्णयःस्यात् । तस्मादन्यत्रापिसाक्ष्याद्यभावेदिव्यम्भवत्येवेति । अतएवमिताक्षरायामि
प्युक्तंयदापुनःसाक्ष्यादिभिर्दिव्येनवाक्रयंनभुङ्क्तिशोधयतीत्यादि । केचित्तुस्थावरविवादेस्थारेषुविवादेष्वितिवचनाद्दि
व्याभावएव । एवंअकृतेपिप्रमाणहीनेपादेतिवचनाद्दिव्याभावएवमनिर्णयप्रसंगानुरोधेनवचनान्यथाकरणस्यानुचित
त्वादिव्याङ्गस्त्वचिन्त्यम् । अदृष्टार्थत्वप्रसंगात् । याज्ञवल्क्योपि । आगमेनोपभोगेननष्टम्भाव्यमतोन्यथा । पञ्चबन्धोदम

स्वस्यराज्ञेतेनाविभावितेइति। पञ्चबन्धःनष्टद्रव्यस्यपञ्चमांशसमानोदण्डः। अत्रदण्डविप्रतिपत्तिरपराधाल्पत्वमहत्त्वा
नुसारेणव्यवस्थापनीया। स्वत्वहेतवःपूर्वमेवनिरूपिताः। कृतस्वकीयस्यधनस्यस्वकीयत्वानपगतिरपिदानविक्रयाभावे
साधनीयेत्याहकात्यायनः। नाष्टिकस्तुप्रकुर्वीततद्धनंज्ञातिभिःस्वकम्। अदत्तत्यक्तविक्रीतंकृत्वास्वंलभतेधनमिति॥ अथै
तद्दत्तंसम्प्रदानभूतायविद्युक्तप्रकारेण। त्यक्तंपारितोषिकादिरूपेण। विक्रीतञ्चनभवतीतिप्रमाणैःप्रसाध्यस्वकीयत्वञ्चनष्ट
स्वामीविक्रेत्रादेःसकाशाल्लभतइत्यर्थः। राजपुरुषानीतेनक्रेत्रायत्कर्तव्यन्तद्दर्शयतिवृहस्पतिः। पूर्वस्वामीतुयद्द्रव्यंयद्दाग
त्यविचारयेत्। तत्रमूलंदर्शनीयंक्रेतुःशुद्धिस्ततोभवेदिति॥ मूलमत्रयस्मात्क्रीतमसावुच्यते। शुद्धिर्याज्यत्वनिवृत्तिःअतएव
व्यासः। मूल्येसमाहृतेक्रेतानाभियोज्यःकथञ्चन। मूल्येनसहवादस्तुनाष्टिकस्यविधीयतेइति। समाहृतेअस्मान्मयाक्री
तइतिनिर्दिष्टे। याज्ञवल्क्योपि। विक्रेतुर्दर्शनाच्छुद्धिःस्वामीद्रव्यंनृपोदमम्। क्रेतामूल्यमवाप्नोतितस्माद्यस्तस्यविक्रयी
॥ अत्रस्वामीद्रव्यमित्यभिधानंयदिविक्रेतानष्टधनस्वामिनासहविवादन्नकुर्याद्यदिवाकृतेपराजयीस्यात्तदानाष्टिकस्यस्व मि
त्वमवधारितमितिनाष्टिकादिभ्योविक्रीतद्रव्यादीनिदातव्यानिनान्यथेतिसूचनार्थं। अतएवाहवृहस्पतिः। विक्रेतादर्शि
तोयत्रहीयतेव्यवहारतः। क्रेत्रेराज्ञेमूल्यदण्डौप्रदद्यात्स्वामिनेधनमिति॥ यदातुमूलभूतोविक्रेतादेशान्तरङ्गतस्तदाकात्या
यनआह। मूलानयनकालस्तुदेयोयोजनसंख्ययेति। तत्रदेयोध्वसंख्ययेतिमदनरत्नेपाठः। यदातुबहुकालेनापिमूलंदर्श
यितुमक्षमस्तदासाक्षिभिःक्रयसाधनंकुर्य्यादित्याहनारदमनुः। असमाहार्य्यमूलस्तुक्रयमेवविशोधयेत्। विशोधितेक्रये
राज्ञावक्तव्यःसनकिञ्चनेति॥ क्रयेविशोधितेसाक्षिभावेनप्रकाशितेसतिराज्ञानकिञ्चनवक्तव्योनदण्ड्यइत्यर्थः। यत्तुअभियो
क्ताधनंकुर्यात्प्रथमंज्ञातिभिःस्वकम्। पश्चाद्दानविशुद्ध्यर्थंक्रयंक्रेतास्वबन्धुभिरिति॥ अभियोक्तास्वत्वेसाधितेसतिपश्चात्क्रेताक्र
यसाधनङ्कर्त्तव्यमित्युक्तन्तन्नैवमद समाहार्य्यमूलस्त्वित्यस्मादेववचानान्मूलदर्शनाभावेमन्तव्यं। नष्टधनंस्वामीक्रीतन्तुक्रे

च्चाक्रयेसाधितेपिगृह्णीयादितिप्रदर्शयितुमाह मनुः । अथमूलमनाहार्यम्प्रकाशक्रयशोधितम् । अदण्ड्योमुच्यतेराज्ञाना
ष्टिकोलभतेधनमिति ॥ अनाहार्यमनानीयः । प्रकाशक्रयशोधितन्नाष्टिकोलभते । क्रेतात्वदण्ड्योभूत्वाराज्ञापराधान्मुच्य
तइत्यर्थः । क्वचित्क्रेतुःसकाशाद्धनग्रहणमर्धमूल्यंदत्त्वैवेत्याहकात्यायनः । वणिग्वीथीपरिगतंविज्ञातंराजपूरुषैः । अवि
ज्ञाताश्रयात्क्रीतंविक्रेतायत्रवामृतः । स्वामीदत्त्वार्द्धमूल्यंतुप्रगृह्णीयात्स्वकन्धनमिति ॥ वणिग्वीथीपरिगतंवणिग्वीथ्याम्प्राप्त
म् । अनेनरहःक्रियोनास्तीतिदर्शितम् । विज्ञातंराजपूरुषैरित्यनेनाप्रकाशक्रयोनास्तीतिदर्शितम् । अविज्ञाताश्रयात् ।
अविज्ञातस्थानकात् । यद्रहःक्रयादिरहितंसद्विज्ञाताश्रयात्क्रीतंमृतविक्रेतृकन्तदार्द्धमूल्यंदत्त्वाग्राह्यमित्यर्थः । उ
भयोरर्द्धहानौकारणमाहसएव । अर्द्धंद्वयोरपहृतन्तत्स्याद्व्यवहारतः । अविज्ञातक्रयोदोषस्तथाचापरिपालनम् ॥
एतद्द्वयंसमाख्यातन्द्रव्यहानिकरम्बुधैरिति । हृतंनाशितम् । व्यवहारतःस्वापराधात् अविज्ञातक्रयःअविज्ञातस्थानकात्क्र
यः अपरिपालनमरक्षणम् । उपेक्षेतियावत् मरीचिरपि ॥ अविज्ञातनिवेशाद्वाचमूल्यन्नलभ्यते । हानिस्तत्रसमा
क्रेतृनाष्टिकयोर्द्वयोरिति । यत्रक्रेतामूलोपस्थापनंकरिष्यामीत्युक्त्वापश्चात्क्रयंसाधयिष्यामीतिवदतितत्रमूलोपस्थापनमे
वादरणीयंनक्रयसाधनमित्याह । कात्यायनः । यदामूलमुपन्यस्यपुनर्वादीक्रयंवदेत् । आहरन्मूलमेवासौनक्रयेणप्र
योजनमिति ॥ यदामूलदर्शनंक्रयप्रकाशनंवानकरोतितदादण्ड्यतामाहसएव । अनुपस्थापयन्मूलंक्रयंवाथविशोधयन्
। यथाभियोगन्धनिनेधनंदाप्योदमञ्चसइति । यत्तुप्रकाशितेनक्रयेणक्रेतुःस्वत्वप्रतिपादकंमरीचिवचनंवणिग्वीथीपरि
गतंविज्ञातंराजपूरुषैः । दिवागृहीतंयत्क्रेत्रासभुक्तोलभतेधनमिति ॥ यच्चमनुवचनमविक्रयाच्छोधनंकिञ्चिद्गृह्णीयात्कुत्र
सन्निधौ । क्रयेणसविशुद्धोहिन्यायतोलभतेधनमिति । तद्वचनद्वयमपिनाष्टिकस्वत्वसाधनाभावविषयं । अन्यथात्र
मूलमनाहार्यमितिपूर्वोदाहृतमनुवचनविरोधःस्यात् । यदातुक्रेतासाक्ष्यादिभिःक्रयंनसाधयतिनाष्टिकोवास्वकीयत्वंतदा

निर्णयमाहबृहस्पतिः । प्रमाणहीनेवादेतुपुरुषापेक्षयानृपः । समन्यूनाधिकत्वेचस्वयंकुर्याद्विनिर्णयमिति ॥ अस्वामिविक्रे
तुरिवास्वाम्यदत्तंस्वाम्यनुमतिमन्तरेणोपभुञ्जानस्यदण्डनामाहनारदः । उद्दिष्टमेवभोक्तव्यंस्त्रीपशुर्वस्तुधापिवा । अन
र्पितन्तुयोभुङ्क्तेभुक्तभोगंप्रदापयेत् ॥ अनुद्दिष्टंतुयद्द्रव्यंदासःक्षेत्रगृहादिकम् । स्ववशेनैवभुञ्जानश्चौरवद्दण्डमर्हति । अ
नड्वाहन्तथाधेनुन्नावंवासस्तथैवच । अनिर्दिष्टंतुभुञ्जानोदद्यात्पणचतुष्टयम् ॥ दासीनौकातथाधुर्यावश्वकश्चोपभुज्यते ।
उपभोक्तातुयद्द्रव्यम्पण्येनैवविशोधयेत् ॥ दिवसेद्विपणान्दासीन्धेनुमष्टपणान्तथा । चयोदशांत्वनड्वाहमश्वंभूमिश्चषोड
शःनौकामश्वाश्चधेनुश्चवाक्तत्वंकार्मिकस्यच । बलात्कारेणयोभुङ्क्तेदाप्यस्त्वाष्टगुणान्दिने । उलूखलेपणार्द्धन्तुमुसलस्यप
णाद्वयं । शूर्पस्यचपणार्द्धंतुजैमिनिर्मुनिरब्रवीदिति । पण्येनपणसमूहेनअत्रैकोधेनुश्छागामभिधत्ते । अपसेदोग्धीम
हिष्यादिकम् । कार्मिकस्यकर्मोपजीविनः । यदविज्ञातस्वामिकन्नष्टमपहृतंवाराजपुरुषैःकथंचित्प्राप्यराज्ञेसमर्पितन्त
स्वामीयदिवर्षमध्येआगत्यस्वत्वंसाधयतितदाप्नोतीत्याहयाज्ञवल्क्यः । शौल्किकैःस्थानपालैर्वानष्टापहृतमाहृतम् । अर्वाक्
संवत्सरात्स्वामीहरेततपरतोनृपइति । यत्तुमनुवचनम्प्रनष्टस्वामिकंद्रव्यंराजाच्यब्दंनिधापयेत् । अर्वाक्त्र्यब्दाद्धरेत्स्वामीपर
तोनृपतिर्हरेदिति । तच्छ्रुतवृत्तसम्पन्नब्राह्मणविषयमिति । मदनरत्नेब्राह्मणमात्रविषयमितिकेचित् । इत्यस्वामि
विक्रयाख्यव्यवहारपदम् ॥ ● ॥ अथसम्भूयसमुत्थानाख्यव्यवहारपदम् । तस्यस्वरूपमाहनारदः । वणिक्प्रभृतयोयत्र
कर्मसम्भूयकुर्वते । तत्सम्भूयसमुत्थानंव्यवहारपदंस्मृतमिति ॥ वणिक्प्रभृतयइत्यनेनऋत्विक्कटनर्तककर्षकादीनांग्रहणं ।
यद्यपिलयभूतस्यस्वर्गस्यऋत्विग्गामित्वाभावादात्मनेपदस्यानुपपन्नत्वेनप्रभृतिशब्देनऋत्विक्ग्रहणमनुचितम् । तथापिआ
त्मनेपदाविवक्षयेदमुक्तन्नचऋत्विङ्मात्रेआत्मनेपदाविवक्षायामन्यांशेषविवक्षायांवैरूप्यप्रसंगइतिवाच्यम् । सम्भूयकर्तृ
त्वमात्रस्यलक्षणत्वेनान्यत्रवास्तवतत्त्वेपिलक्षणावैयर्थ्यप्रसङ्गेनाप्रवेशात् । नचचिन्तामणिकृताकर्त्रभिप्रायइत्यस्यकर्त्रभि

प्रायविषयेकर्त्रिच्छाविषयेक्रियाफलइतिव्याख्यानत्वाद्वृत्तिंजामपि स्वफलंयजमानस्यकर्मभवत्वितिवेतनोपरागेणेच्छाया
मभवत्येवेत्यात्मनेपदविवक्षायामपिकाक्षतिरितिवाच्यम्। कर्त्रभिप्रायेकर्तृगामिनीत्यस्यैवव्याख्यानस्यमहाभाष्याद्यनेकग्रन्थ
सम्मतत्वेनान्यादृशव्याख्यानस्यमहाभाष्यादिविरुद्धत्वात्। सहवाणिज्यादिकरणेऽधिकारिणोदर्शयतिबृहस्पतिः। कु
लीनदक्षानलसैःप्राज्ञैर्नाणकवेदिभिः। आयव्ययज्ञैःशुचिभिःशूरैःकुर्यात्सहक्रियामिति॥ क्रियांक्रतुकृषिशिल्पस्तेयवाणि
ज्यरूपाम्। नाणकविज्ञानम्वाणिज्यक्रियायामुपयुज्यते। आयव्ययज्ञाममावंकृषिक्रियायाम्। शिल्पिक्रियायांसङ्गीत्वि
याचप्राज्ञत्वम्। क्रतौकुलीनत्वप्राज्ञत्वशुचित्वानि। स्तेयेतुशूरत्वमात्रमुपयुज्यते। दक्षत्वानलसत्वेसर्वत्रोपयुज्येते। अतए
वदक्षादीन्निषेधयतिसएव। असक्ताऽलसरोगार्त्तमंदभाग्यनिराश्रयाः। वाणिज्याद्याःसहैतैस्तुनकर्त्तव्याबुधैःक्रियेति॥ निरा
श्रयाःमूलधनरहिताः। येतुसम्भूयवाणिज्यादिक्रियांकुर्वंतितेद्रव्यानुरोधेनलाभादिभाजोभवन्तीत्याहनारदः। समोति
रिक्तोहीनोवातत्रांशोयस्ययादृशःक्षयव्ययौतथावृद्धिस्तस्यतथाविधाइति। बृहस्पतिरपि। प्रयोगंकुर्वतेयेतुहेमधान्यर
सादिना। समन्यूनाधिकैरंशैर्लाभस्तेषांयथाविधः॥ समोन्यूनोऽधिकोवांशोयेनक्षिप्तस्तथैवसः। व्ययन्दद्यात्कर्मकुर्याल्लाभं
गृह्णीतचैवहीति। यत्रपुनरस्यद्वौभागौअस्यैकइतिसम्विकृतानत्रतदनुरोधेनव्ययलाभौप्रकल्प्याविन्याहयाज्ञवल्क्यः। स
मवायेनवणिजांलाभार्थङ्कर्मकुर्वताम्। लाभालाभौयथाद्रव्यंयथावासंविदाकृताविति। सम्भूयकारिणांकर्त्तव्यमाह। व्यासः
। समक्षमसमक्षंवावञ्चयन्तःपरस्परम्। नानापण्यानुसारास्तेप्रकुर्युःक्रयविक्रयौ। अगोपयन्तोभाण्डानिदद्युःशुल्कंचते
ध्वनिः। अन्यथाद्विगुणन्दाप्याःशुल्कस्थानाद्बहिस्थिताइति। नारदोपि। भाण्डपिण्डव्ययोद्धारसारसारत्ववेक्षणम्।
कुर्युस्तेव्यभिचारेणसमयेस्वेव्यवस्थिताइति। अथवासर्वानुज्ञयासर्वेषांकार्य्यमेकएवकुर्य्यात्। अतएवबृहस्पतिः। ब
हूनांसम्मतोयस्तुदद्यादेकोधनन्नरः। करणङ्कारयेद्वापिसर्वैर्णैवकृतम्भवेदिति। करणंलेख्यादिकम्। सम्भूयकारिणां

मिथोविवादेनिर्णयप्रकारमाहसएव। परीक्षकाःसाक्षिणस्तएवोक्ताःपरस्परम्। सन्दिग्धेऽर्थेवञ्चनायानचेद्विद्वेषसंयु
ताइति। यदातुविद्वेषसंयुक्तास्तदाप्याहसएव। यःकश्चित्कारयेत्किञ्चिन्नियोगाद्येनकेनचित्। ... यःकश्चिद्वञ्चकस्तेषांविज्ञातःक्रयविक्रये। शपथैःसोपिशोध्यःस्यात्सर्ववा
देष्वयंविधिरिति॥ सर्ववादेपिवचनरहितवादेपिवञ्चकत्वेसन्देहेसतिकिङ्कार्यमित्यपेक्षितेत्वाह। याज्ञवल्क्यः। जिह्मंत्य
जेयुर्निर्लाभमिति। जिह्मंवञ्चकन्निर्लाभंकृत्वात्यजेयुर्बहिःकुर्युरितरेसम्भूयकारिणइत्यर्थः। सम्भूयकारिण्यसमर्थेप्रत्याह
सएव। अशक्तोऽन्येनकारयेदिति। स्वांशानुरूपंकर्मेतिशेषः।दैवराजकृतद्रव्यहानिविषयेसर्वान्प्रत्याहबृहस्पतिः। द्रव्यहा
निर्यदातत्रदैवराजकृताभवेत्। सर्वेषामेवसाप्रोक्ताकल्पनीयायथांशतइति॥ सम्भूयकारिभिःसर्वैरितिशेषः। क्षयहानि
रितिपाठेक्षययायैवहानिःक्षयहानिरुपचयार्थव्यतिरिक्ताहानिरित्यर्थः। प्रातिस्विकदोषेणद्रव्यनाशेसएवाह। अनिर्दिष्टो
वार्यमाणःप्रमादाद्यस्तुनाशयेत्। तेनैवतद्भवेद्देयंसर्वेषांसमवायिनामिति। अनिर्दिष्टःसमवाय्यननुज्ञातःयाज्ञवल्क्योपि।
प्रतिषिद्धमनादिष्टम्प्रमादाद्यच्चनाशितम्। सतद्दद्यादिति। पालनेत्वाहसएव। विप्लवाद्यद्रक्षितात्दशमांशभागिति। बृ
हस्पतिरिति। दैवराजभयाद्यस्तुस्वशक्त्यापरिपालयेत्। तस्यांशन्दशमंदत्वागृह्णीयुस्तेंशतोपरमिति। तस्यतस्मैदशम
मंशन्तेसमवायिनःपालयेत्। समवायिद्रव्यमितिशेषः। अतएवकात्यायनः। चौरतःसलिलादग्नेर्द्रव्यंयस्तुसमाहरेत्। त
स्यांशोदशमोदेयःसर्वद्रव्येष्वयंविधिरिति। समाहरेत्स्वशक्त्याप्रत्याहरेदित्यर्थः।। नारदोपि। दैवतस्कारराजाग्निव्यसने
समुपस्थिते। यस्तत्स्वशक्त्यारक्षेत्तस्यांशोदशमःस्मृतइति। यस्तुसमवायिद्रव्यंसमवायिभिःसहप्रतियाचनादिनानसाधय
तितस्यलाभहानिरित्याहबृहस्पतिः। समवेतैस्तुयद्दत्तंप्रार्थनीयन्तथैवतत्। नयाचतेचयःकश्चिल्लाभात्सपरिहीयतइति॥
याचनग्रहणंयेनयत्कर्मस्वांशानुरूपंकर्त्तव्यन्तस्याप्युपलक्षणार्थंतेनतत्कर्माकरणेपिलाभहानिरित्यस्मादेववचनात्प्रतिपत्त
व्यमितिस्मृतिचन्द्रिकायाम्। सम्भूयकारिणांऋत्विजाङ्कर्त्तव्यमाहमनुः। ऋत्विजःसमवेतास्तुयथासत्रेनिमन्त्रिताः। कु

युर्यथार्हन्तत्कर्म गृह्णीयुर्दक्षिणान्तथेति ॥ अत्र सत्रशब्दोयज्ञमात्रविवक्षयाप्रयुक्तोनपुनर्बहुयजमानकसत्राख्ययज्ञविशेषवि
वक्षया । तत्र यजमानानामेवाध्वर्य्वादिकर्मकारित्वेदक्षिणार्हाणामृत्विजामभावात् । तथाकर्मानुसारेणदक्षिणांगृह्णीयुरित्य
र्थः । तथाचसएव । संभूयस्वानिकर्माणिकुर्वद्भिरिहमानवैः । अनेनकर्मयोगेनकर्त्तव्यांशप्रकल्पनेति ॥ स्वानिकर्माणियथाम
नयतिरिक्तानीतिशेषः । इयंचांशकल्पनाद्वादशशतंगावोदक्षिणेत्येवंक्रतुसम्बन्धित्वेनविधीयमानायांदक्षिणायामेवनत्व
त्विग्विशेषोल्लेखनेविहितायाः तद्विधायकश्रुतिविरोधापत्तेः अतएवाहतुर्मनुबृहस्पतिः । रथंहरेद्ध्यथाध्वर्युर्ब्रह्माधानेचवाजिनं
। होतानिविद्धरंचाश्वमुद्गाताचाप्यनःक्रयेइति । निविद्धरंनिविन्नस्यमन्त्रस्यधरं उद्गाताशब्देनोद्गातृगणमध्यस्थःसुब्रह्म
ण्योगृह्यतइतिमदनरत्नेअनःशकटम् । क्रयेसोमक्रये । दक्षिणांशप्रकल्पनायाःप्रकारमाहतुर्मनुबृहस्पती । सर्वेषामर्द्धि
नोमुख्यास्तदर्द्धेनार्द्धिनोऽपरे । तृतीयिनस्तृतीयांशाश्चतुर्थांशाश्चपादिनइति । सर्वेषांषोडशानामृत्विजांमध्येमुख्याग
ण्याः होताब्रह्माऽध्वर्युरुद्गाताशेऽर्द्धिनः उक्तदक्षिणायाः किञ्चिन्न्यूनमर्द्धंगृह्णीयुः । समपार्द्धग्रहणेवक्ष्यमाणविभागकल्पना
विरोधःस्यात् । अपरेद्वितीयामैत्रावरुणप्रतिप्रस्थातृब्राह्मणाच्छंसिप्रस्तोतारस्तदर्द्धंनमुख्यभागार्द्धंनार्द्धिनोर्द्धयाहिणःतृ
तीयिनोऽच्छावाकाग्नीध्रनेष्टप्रतिहर्तारोमुख्यभागस्यतृतीयांशभाजः । पादिनोन्नायावस्तोतृयोतृनतृसुब्रह्मण्याख्यामुख्यभाग
स्यचतुर्थांशग्राहिणइत्यर्थः ॥ मुख्यानांचतुर्णांमिथोविभागःसमःएवंद्वितीयादिनामपिसएवविभागःतथाचगोशतंदक्षि
णेतिपक्षमाश्रित्यकात्यायनसूत्रम् । द्वादशद्वादशेभ्यःषट्षड्द्वितीयेभ्यश्चतस्रश्चतस्रस्तृतीयेभ्यस्तिस्रस्तिस्रइतरेभ्यइ
ति । संगृहीतमेतद्बोधायनकारिकायामपि । पञ्चविंशतिधाकृत्वावर्गीयादक्षिणाक्रमात् । द्वादशैवाथषट्कंचतस्रएवचेति
। द्वादशाधिकगोशतरूपायादक्षिणायाः प्रथमश्चत्वारोभागाःकर्त्तव्याः । तत्रैकोभागोहोतृवर्गस्यापरोब्रह्मवर्गस्यापरोऽध्वर्युवर्ग
स्यापरउद्गातृवर्गस्य । पुनरेकैकस्यभागस्यपञ्चविंशतिभागाःकर्त्तव्याः । तेष्वाद्यानांहोत्रादीनांद्वादशभागाःद्वितीयिनांच

स्तृतीयानामर्धभाक्चतुर्थानांत्रयइत्यर्थः । पशुबन्धादौतुविषमविभागानभिधानात् । समंस्यादश्रुतत्वादितिन्यायेनसमत्वेनै
वविभागइतिमन्तव्यम् । स्वकीयकर्मकलायांशकर्तृकतानुसारेणभागोदेयइत्याहमनुः । ऋत्विग्यदिवृतोयज्ञेस्वकर्मपरि
हापयेत् । तस्यकर्मानुरूपेणदेयोंऽशःसहकर्तृभिरिति । सहकर्तृभिःसम्भूयकारिभिरित्यर्थः । यद्वाकर्तृभिःसहदेयःदक्षि
णाकालेदेयोयजमानेनेत्यर्थः । अथवाकर्मपरित्यक्तंसकर्तृभिरित्यर्थः । यदानुऋत्विक्कर्मैकदेशंदक्षिणादानानन्तरंत्यज
तितदाऽवशिष्टन्तदृत्विजांमध्येसन्निहितेननान्येनकारयेदित्याहसएव । दक्षिणासुचदत्तासुस्वकर्मपरिहापयेत् । कृत्स्न
मेवलभेतांशमन्येनैवचकारयेदिति । कर्ममध्येऋत्विक्त्यागमकर्तव्यमाहनारदः । ऋत्विजांव्यसनेप्येवमन्येनकर्मनिस्तरेत् । ल
भेतदक्षिणादानंसतस्मात्संप्रकल्पितमिति । अन्येनस्वस्वगणमध्यवर्तिनांमध्येप्रत्यासन्नेनयेनकेनचिदन्येनकार्यमाध्व
र्य्वादिसमाख्याबाधापत्तेरितिध्येयम् । यत्तुशङ्खलिखितयोर्वचनम् । अथचेदनुप्राप्तेसवनेऋत्विक्म्रियेततस्यसगोत्रो
यशिष्योवातत्कार्यमनुपूरयेत् । अथचेद्वान्धवस्ततोन्यमृत्विजंवृणुयादिति । यच्चवृहस्पतिवचनम् । एवंक्रियाप्रवृत्तानां
यदाकश्चिद्विपद्यते । तदंशस्तुनाकियाकार्योसर्वैर्वासहकारिभिरिति ॥ तदेकान्तरगतरविहितार्त्विक्कर्तृकदर्शपूर्णमासादिया
गविषयमित्यभिहितंस्मृतिचन्द्रिकायाम् । जीवच्चेवतुऋत्विजियजमानेनऋत्विगन्तरकरणेकस्यदक्षिणेतिवीक्षायामाह
शङ्खः । अथऋत्विजिवृतेपश्चादन्यंवृणुयात्पूर्वाहूतस्यैवदक्षिणापश्चादाहूतःकिञ्चिल्लभतइति । यदात्वकारणमृत्विग्या
ज्यन्त्यजतियाज्योवाऋत्विजंतदातयोर्दण्डमाहमनुः । ऋत्विजंयस्त्यजेद्याज्योयाज्यमृत्विक्त्यजेद्यदि । शक्तंकर्मण्य
दुष्टञ्चतयोर्दण्डःशतंशतमिति । नारदोपि । ऋत्विक्त्रिविधोदृष्टःपूर्वजुष्टःस्वयंकृतः । यदृच्छयाचयःकुर्यादार्त्विज्य
म्प्रीतिपूर्वकम् । ऋत्विग्याज्यमदुष्टंयस्त्यजेदनपकारिणम् । अदुष्टञ्चर्त्विजंयाज्योविनेयौतावुभावपीति । येकृषिसाधनेस
मानास्तैःसहकृषिकार्येत्याहवृहस्पतिः । बाह्यकर्मकृषीजात्याक्षेत्रोपकरणेनच । येसमानास्तुतैःसार्द्धंकृषिःकार्याविजानता

नेति। वाह्याः लाङ्गलादिवाहकाः वलिवर्दाः। कृष्याः कर्षकाः कृष्यर्थं स्वीकृताः पुरुषाः। आदिशब्देन कृषिसाधनानामन्येषामपि ग्रहणम्। सम्भूयकारिणां कृषिकाणां कर्त्तव्यमाह वृहस्पतिः। पर्वते नगराभ्यासे तथा राजपथस्य च। ऊषरं मूषकव्याप्तं क्षेत्रं यत्नेन वर्जयेदिति। पर्वते पर्वतसमीपे कल्पतरुकृतानुविवीतइतिपठित्वा विवीतशब्देन यव सामर्थ्यं रक्षितः प्रदेश इति व्याख्यातम्। नगराभ्यासे नगरसमीपे। राजपथस्य समीप इति शेषः। एतदुक्तं भवति। पर्वताद्यासन्नमनासन्नमपि ऊषरं मूषकव्याप्तं च क्षेत्रं वर्जयेदिति। वाह्येऽपि वर्जनीयानाह स एव। कृशान्तिवृद्धं क्षुद्रं रोगिणं सम्प्रपलायिनम्। काणं खञ्जं च नाद्याद्वाह्यम्प्राज्ञः कृषीवल इति। काणः एकाक्षः खञ्जः भग्नचरणः कश्चिदन्यैकस्य हानिमाह स एव। वाह्यवीजात्ययाद्यस्य क्षेत्रहानिः प्रजायते। तेनैव सा प्रदातव्या सर्वेषां कृषिजीविनामिति। सम्भूयकारिणामिति शेषः। वाह्यवीजग्रहणं कृषिसाधनानामुपलक्षणार्थं। सम्भूयकारिणां शिल्पिनां स्वरूपन्दर्शयंस्तेषां लाभविभागेंशपरिकल्पनाप्रकारमाह स एव। हिरण्यकुप्यसूत्राणां काष्ठपाषाणचर्म्मणाम्। संस्कर्त्ता तत्कलाभिज्ञः शिल्पी प्रोक्तो मनीषिभिः। हेमकारादयो यत्र शिल्पं सम्भूय कुर्व्वतः। कर्मानुरूपं निर्वेशं लभेरंस्ते यथांशत इति॥ कुप्यं हेमरूप्यव्यतिरिक्तं त्रपुसीसादिकं। हेमरूप्य इति प्रस्तुत्य नाभ्यां यदन्यत्तत्कुप्यमित्यमरसिंहेनोक्तत्वात्। निर्वेशो भृतिः॥ कात्यायनोऽपि। शिक्षकाभिज्ञकुशला आचार्याश्चेति शिल्पिनः। एकद्वित्रिचतुर्भागान्हरेयुस्ते यथोत्तरमिति हर्म्यादिनिर्मातॄणां मध्ये मुख्ये भागद्वयमाह वृहस्पतिः। हर्म्यं देवगृहं वापि वाचिकोपस्करांसि च। संभूय कुर्वतान्तेषां प्रमुखो द्व्यंशमर्हतीति। नर्त्तकेष्वपि मुख्यस्यांशद्वयभागित्वमतिदिशन्विशेषान्तरमप्याह स एव। नर्त्तकानामेष एव धर्मः सद्भिरुदाहृतः तालज्ञो लभतेऽध्यर्द्धं गायनास्तु समांशिन इति अध्यर्द्धं अर्द्धाधिकमेकमंशं संभूयकारिणां चौराणां लाभभागेंशपरिकल्पनाप्रकारमाह कात्यायनः। परराष्ट्राद्धनं यत्स्याच्चौरैः स्वाम्याज्ञयाहृतं। राज्ञे दत्वांशमुद्धृत्य विभजेरन्यथाविधि। चौराणां मुख्यभूतस्तु चतुरोंऽशांस्ततो हरेत्। शूरोंऽशांस्त्रीन्समर्थो द्वौ शेषास्त्वेकैकमेव चेति। एतद्धनं दुर्बलवैरिदेशादाहृतविषयम्। प्रवलतरवैरिदे

ण्यादीनि स्मृत्यन्तरोक्तवचनानि सुतस्यादेयत्वप्रतिपादकानि एकपुत्रविषयाणीति ज्ञेयानि अनेकपुत्रेष्वपि मातापितृवियोगस
हनक्षम एव देयः। अत एव कात्यायनः। विक्रयं चैव दानं च न नेयाः स्युरनिच्छवः। दाराः पुत्राश्च इति यथा दाराः पुत्राश्च विक्रय
दानप्रभर्त्रा नानयेत् तथा मातापितृभ्यां पुत्रोऽपि मातापितृवियोगानिच्छुर्नानेय इत्यर्थ उक्तः स्मृतिचन्द्रिकायाम्। न नेयाः स्युर
निच्छव इत्येतदनापद्विषयं। आपत्काले तु कर्तव्यं दानं विक्रयमेव वा। अन्यथा न प्रवर्तेत इति शास्त्रविनिश्चय इति॥ नानेवा
धिकत्यतेनैवाभिधानात्। मातापि पत्यनुज्ञया देयमित्याह विष्णुः। न तु स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्तुरिति
। अन्वाहितयाचितबन्धकधनमदेयम्। अत एव दक्षः। सामान्यं याचितं न्यासमाधिर्दाराश्च तद्धनं। अन्वाहितं च निःक्षेपः सर्व
स्वं चान्वये सति॥ आपत्स्वपि न देयानि नव वस्तूनि पण्डितैः। यो ददाति स मूढात्मा प्रायश्चित्तीयते नर इति। अदेयदाने प्रति
ग्रहे च दण्डमाह मनुः। अदेयं यश्च गृह्णाति यश्चादेयं प्रयच्छति। तावुभौ चौरवच्छास्यौ दाप्यौ चोत्तमसाहसमिति। अदे
यग्रहणमदत्तस्याप्युपलक्षणार्थम्। अत एव नारदः। गृह्णात्यदत्तं यो मोहाद्यश्चादेयं प्रयच्छति। दण्डनीयावुभावेतौ ध
र्मज्ञेन महीक्षितेति॥ अदत्तादेयग्रहणाद्गृहीतस्य परावर्तनमपि कार्यमिति गम्यते। अदत्तग्रहणे दाने च दानसिद्ध्यभावा
त्परस्वत्वानुत्पत्तेरित्युक्तं स्मृतिचन्द्रिकायाम्। देयस्वरूपमाह स एव। कुटुम्बभरणाद्द्रव्यं यत्किंचिदतिरिच्यते। तद्देयमुप
हृत्यान्यद्ददद्दोषमवाप्नुयादिति। अन्यदुपहृत्य भर्तव्यकुटुम्बमनवसाद्येत्यर्थः। उपरोधश्च भोजनाच्छादनादिराहित्यनिबन्ध
नतोऽत्राभिमतो न तु ताम्बूलादिभोगबाधनवैकल्यनिबन्धनः। अत एव बृहस्पतिः। कुटुम्बभक्तवसनाद्देयं यदतिरिच्यत इ
ति। भक्तं भोजनं वसनं आच्छादनम्। भक्तवसनाद्यदतिरिच्यत इत्यन्वयः। याज्ञवल्क्योऽपि। स्वं कुटुम्बाविरोधेन देयं दारसुता
दृते इति। कुटुम्बाविरोधेन कुटुम्बानुरोधेन कुटुम्बाभरणावशिष्टं स्वं देयमित्यर्थः। स्थावरविषये देयमाहतुः प्रजापतिबृह
स्पती। स्वप्रागमाद्गृहक्षेत्राद्यच्चतुर्थं तत्प्रदीयते। पित्र्यं न्यायस्वयंप्राप्तं न दातव्यं विवक्षितमिति॥ स्वप्रागमात्पूर्वोक्तस्वप्रविधा

गमयुक्तात्। क्षेत्रग्रहणमुपलक्षणम्। पित्र्यं वंशपरंपरायातम्। स्वयम्प्राप्तं स्वयमर्जितम्। पित्र्यं स्वयम्प्राप्तयोरुपादानं की
र्त्यादीनामुपलक्षणार्थम्। पित्र्यं वा स्वयम्प्राप्तं वा यद्गृहक्षेत्रादिकम्प्रदीयते तत्सप्तागमान्वितात्गृहक्षेत्राद्दुत्कृत्य दातव्यमिति स्मृ
तिशास्त्रम्मिवक्षितमित्यर्थः। अत्र सप्तागमाद्गृहक्षेत्रादित्यभिधानं गृहक्षेत्रादिदानं कुटुम्बपर्याप्तसागमके गृहक्षेत्राद्यन्तरे स
त्येव नान्यथेत्येवमर्थम्। अनुकाध्यायेनेनोक्तं। सर्वस्वं गृहवर्ज्जं तु कुटुम्बभरणाधिकम्। यद्द्रव्यन्तत्स्वकन्देयमदेयं स्यादतोऽन्य
थेति। तद्गृहाद्यन्तराभावविषयम्। स्वकं स्वकीयम्। यथेष्टविनियोगार्हद्रव्यमिति यावत्। स्वयंप्राप्तं त्वविभक्तधनैर्भ्रातृभि
रननुज्ञातमपि देयम्। स्वेच्छादेयं स्वयंप्राप्तमन्यथाचारे स्वावन्धकमिति वृहस्पतिस्मरणात्। स्वेच्छादेयं भ्रात्राद्यनुज्ञामन्तरे
णापि देयम्। वन्धकमन्यथाचारेणाधिरूपेणादेयमित्यर्थः। यत्तु तेनैवोक्तं। विभक्ता अविभक्ता वा दायादाः स्थावरे समाः। एको
ह्यनीशः सर्वत्र दानाधमनविक्रये इति। तत्समानाधिकाविभक्तस्थावरविषयम्। आधमनमाधीकरणं विभक्ता अपि स्थावरे स
माः किमुताविभक्ता इति दण्डापूपन्यायेन व्याख्येयम्। अन्यथा विभागो निरर्थकः स्यात्। अतश्च यदुक्तं स्मृत्यंतरे। एकोऽपि स्थाव
रे कुर्य्याद्दानाधमनविक्रयम्। आपत्काले कुटुम्बार्थे धर्मार्थे च विशेषत इति। तत्क्रमायातविभक्तस्थावरविषयं सप्तानधिकस्थावर
विषयं चेति मन्तव्यम्। स्वार्जितमपि किञ्चित्प्राप्तव्यवहारेषु पुत्रेषु सत्सु तदनुमत्यैव दातव्यमित्यभिप्रेत्याह भगवान्व्यासः। स्था
वरं द्विपदञ्चैव यद्यपि स्वयमर्जितं। असम्भूय सुतान्सर्वान्न दानं न च विक्रयः॥ ये जाता येऽप्यजाताश्च ये च गर्भे व्यवस्थिताः। वृ
त्तिञ्च तेऽभिकाङ्क्षन्ति न दानं न च विक्रय इति। अत्रोत्तरपदम्पूर्वं प्रदर्शितवृहस्पतिवचनार्थस्य दण्डापूपन्यायप्रदर्शनेन दृ
ढीकरणार्थम्। किञ्चिद्द्रव्यं चापि अनुज्ञातमेव देयम्। किञ्चिन्मुख्येनापि भ्रात्राद्यनुज्ञानमेव देयम्। तथा च वृहस्पतिः। सौदायिकं
क्रमायातं शौर्य्यं प्राप्तं च यद्भवेत्। स्त्रीज्ञातिस्वाम्यनुज्ञातन्दत्तं सिद्धिमवाप्नुयादिति। सौदायिकं वैवाहिकं च स्त्र्याः परिणयने लब्ध
न्तस्याः अनुज्ञयैव दातव्यम्। क्रमायातम्पितृपितामहादिक्रमायातम्। स्त्रीज्ञात्यनुमतं न स्वकचन्देयम्। वैवाहिके क्रमायाते च

वेदान्नविद्युनहृतिनैवेतान्वात्। देयेतिप्रसङ्गेन प्रतिग्रहे प्रकारविशेषमन्यद्यथेति याज्ञवल्क्यः। प्रतिग्रहः प्रकाशः स्यात् स्थाव
रस्य विशेषत इति। प्रकाशः प्रकटः ससाक्षिकः क्रियावान्। पूर्वप्रतिग्रहे प्रकारविशेषः कात्यायनेन। पुत्रं ग्राह्यं तथा धूना
स्नुषवत्स नित्यावेबुनि वेश्मनस्य मध्ये व्याहृतिभिर्नृपान्तरदूरबान्धवं समक्षमेव गृह्णीयादिति ॥ अदूरबान्धवं सन्निहि
तमातुलादिबान्धवं सन्निकृष्टं सन्निकृष्टभ्रातृपुत्रादि अन्तिकेभ्य एव प्रतिगृह्णीयादित्यर्थः। प्रासङ्गिकमुक्त्वा प्रकृतमप्याह
याज्ञवल्क्यः। देयं प्रतिश्रुतं चैव दत्त्वा नापहरेत् पुनरिति। इदन्नो दास्यामीति यत्प्रतिश्रुतं तदवश्यं तस्मै दातव्यं बाढं धर्मो प्र
च्युतो भवति। प्रश्रुते पुनर्न दातव्यं प्रतिश्रुत्याप्यधर्मसंयुक्ताय न दद्यादिति गौतमस्मरणात्। दत्त्वा नापहरेत् पुनः। न्यायमा
र्गेण यत् दत्तं सप्तविधमपि पुनर्नापहर्तव्यम्। किन्तु न यैवानुमन्तव्यमित्यर्थः। यः पुनः प्रतिश्रुत्य न ददाति दत्त्वा वाऽपहरति
स दण्ड्य इत्याह हारीतः। प्रतिश्रुत्यादाने तद्दत्तस्य छेदने च। विविधान्नरकान्याति तिर्यग्योनौ च जायते। वाचैव यत्प्रति
ज्ञातं कर्मणा नोपपादितं। ऋणं तद्धर्मसंयुक्तमिह लोके परत्र चेति। यत्तु न धर्मसंयुक्तं प्रतिगृहीतुः प्रवृत्तधर्मासम्पत्त्यै
वाचा प्रतिज्ञातमपश्चाद्दीयतामिति उपचारवच्चापेतमित्यर्थः। प्रतिश्रुतमदद्दाज्ञानतः प्राप्नोति दण्ड्यश्चेत्याह कात्यायनः। स्वे
च्छया यः प्रतिश्रुत्य ब्राह्मणाय प्रतिग्रहम्। न दद्यादृणवद्दाप्यः प्राप्नुयात्पूर्वसाहसमिति ॥ मत्स्यपुराणेऽपि। प्रतिश्रुत्याप्रदाता
रं सुवर्णं दण्डयेन्नृप इति। अनयोर्दत्तयोरपराधानुसारे व्यवस्था। दत्तं सप्तविधमदत्तं षोडशप्रकारमित्याह नारदः।
दत्तं सप्तविधं ज्ञेयमदत्तं षोडशात्मकमिति। तत्र दत्तभेदानाह स एव। पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात्प्रत्युपकारतः। स्त्रीशुल्का
नुग्रहार्थं च दत्तं दानविदो विदुरिति। पण्यमूल्यं क्रीतद्रव्यस्य मूल्यम्। भृतिस्वरूपं कात्यायनेन दर्शितम्। अविज्ञातोपलब्ध्य
र्थं तदानीं यत्समर्पितम्। उपकारक्रियया सा वा सा भृतिः परिकीर्तितेति। प्रयोजनक्रियासम्पादनं भृतिरित्युच्यत इत्यर्थः। तु
ष्ट्या परितोषेण वन्दिप्रभृतिभ्यो दत्तमिति शेषः। स्नेहात्पुत्रदुहित्रादिभ्यो दत्तम्। प्रत्युपकारतः कृतोपकाराय प्रत्युपकारित्वा

हृतम्। तत्प्रदर्शनार्थमाह कात्यायनः। भयत्राणोपरक्षार्थं तथा कार्यप्रसाधनात्। अनेन विधिना लब्धं भयत्राणादिकं मतं।
उपकारकरणेन लब्धमिति यावत्। स्त्रीशुल्कं विवाहार्थं कन्याबन्धुभ्यो दत्तं। अनुग्रहार्थं परोपकारः कर्त्तव्य इति विधिबलादयुक्त
कृत्वाप्यनुग्रहार्थं दत्तं सफलं भवतीति दर्शयितुं नारद आह। मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणि। दीनानाथविशिष्टे
भ्यो दत्तं तु सफलं भवेदिति॥ उपकारिणि परोपकारे सफलं फलातिशयोपेतमित्यर्थः। तदेतत्पण्यादिसप्तविधमेव दाना
विदो विदुः अपरावर्त्तनीयमिदं इत्यर्थः। बृहस्पतिरपि। भृतिस्तुष्ट्या पण्यमूल्यं स्त्रीशुल्कमुपकारिणे। श्रद्धानुग्रहसंप्रीत्याद
त्तं सप्तविधं विदुरिति॥ अदत्तानि दर्शयति नारदः। अदत्तं तु भयक्रोधशोकवेगरुगन्वितैः। तथोत्कोचपरीहासव्यत्यासच्छ
लयोगतः। बालमूढास्वतन्त्रार्त्तमत्तोन्मत्तापवर्ज्जितं। कर्त्ता ममायं कर्मेति प्रतिलाभेच्छया च यत्। अपात्रे पात्रमित्युक्ते कार्ये वाधर्म्म
संहिते। यद्दत्तं स्यादविज्ञानाददत्तमिति तत्स्मृतमिति। रुक् उपतापः भयादिजनोयउपतापस्तदन्वितैरित्यन्वयः। अपवर्ज्जि
तन्दत्तं बालादिभिरपवर्ज्जितमित्यन्वयः। एतदुक्तं भवति भयोपपन्नेन बन्दिग्राहादिभ्यो दत्तं क्रोधोपपन्नेन क्रोधविषयीभूताना
म्पुत्रभ्रातादीनां व्ययं कर्तुमितरेभ्यो दत्तम्। पुत्रादिवियोगजनितशोकवेगादुपपन्नेन किं स्थितेन धनेनेति तात्कालिकया बुद्ध्या
दत्तम्। उत्कोचेन राजकीयादिभ्यो दत्तम्। उपहासेन दत्तम्। व्यत्यासेन एकः स्वद्रव्यमन्यस्मै ददाति अन्योपि स्वीयन्तस्मै
ददातीति दानव्यत्यासेन दत्तं। छलयोगतः शतदानमभिसन्धाय सहस्रमिति परिभाष्य दत्तम्। बालेनाप्राप्तव्यवहारेण दत्तम्। मू
ढेन लोकवेदानभिज्ञेन दत्तं। अस्वतन्त्रेण दासादिना दत्तं। आर्त्तेन रोगोपहतेन दत्तं। मत्तेन धुस्तूरादिभक्षणादिना मत्तेन दत्तं
उन्मत्तेन वातपित्तादिदोषादिना चलितधिया दत्तम्। अयं मदीयं कर्म्म करिष्यतीति प्रतिलाभेच्छया प्रतिलाभमकुर्वाणाय द
त्तं। अपात्रायायोग्याय योग्योऽहमित्युक्तिमात्रेण दत्तं। यज्ञादिं करिष्यामीत्युक्त्वा धनं गृहीत्वा द्यूतादिकर्म्मणि विनियुञ्जानाय
दत्तमित्येवं षोडशप्रकारमपि दत्तमपुनःप्रत्याहरणीयत्वाददत्तमुच्यत इत्यर्थः। पुनःप्रत्याहरणीयत्वमेव विधानमाह का

त्यायनः । काममन्योपाधिस्तत्त्वार्त्ते क्रीबोन्मत्तप्रमोहितैः । व्यत्यासपरिहासाय यद्दत्तं तत्पुनर्हरेत् ॥ यातु कार्यप्रसिद्ध्यर्थमुत्को चास्यात्प्रतिक्रिया । तस्मिन्नपि प्रसिद्धेऽर्थे न देया स्यात्कथञ्चन ॥ अथ प्रागेव दत्ता स्यात्प्रतिदाप्यस्ततो बलात् । दण्डश्चैकादश गुणमाहुर्गार्गीयमानवा इति ॥ उत्कोचास्वरूपमाह स एव । स्तेयसाहसिकोद्वृत्तपारदारिकशंसनात् । दर्शनाद्वृत्तनष्टस्य तथासत्यप्रवर्त्तनात् । प्राप्तमेतैस्तु यत्किञ्चिदुत्कोचाख्यं तदुच्यते । न दाता तत्र दण्ड्यः स्यान्मध्यस्थश्चैव दोषभागिति ॥ एतदु क्तम्भवति यदि मह्यं न प्रयच्छसि तदा त्वत्कृतं स्तेयादि कथयामीति भीतिमुत्पाद्य स्तेयादिकर्तृसकाशाद्धनमादत्ते । तथा त्वं यदि न मह्यं प्रयच्छसि तदा पलायमानं त्वां दर्शयामीति भीतिमुत्पाद्य पलायिनः सकाशाद्यत्किञ्चिदादत्ते । तथा त्वमसत्यमपि स्वामि निकटेऽसत्यमिति वदिष्यामीत्युक्त्वा यत्किञ्चिदादत्ते तदुत्कोचाख्यं तद्ग्राहादात्रे दाप्यं उत्कोचापादकग्राहकौ च दण्डनीयाविति । पुनः प्रत्याहरणीयमिति बृहस्पतिरप्याह । प्रतिलाभेच्छया दत्तमपात्रे पात्रशङ्कया । कार्ये चाधर्मसंयुक्ते स्वामी तत्पुनराप्नुया दिति । आर्त्तेदत्तस्यादत्तत्वं धर्मकार्यव्यतिरिक्तविषयम् । तथा च कात्यायनः । स्वस्थेनार्त्तेन वा दत्तं श्रावितं धर्मकारणात् । अ दत्वा तु मृते दाप्यस्तत्सुतो नात्र संशय इति । मनुरपि सोपाधिकदानादेर्निवर्त्तनमाह । योगाधमनविक्रीतं योगदानप्रतिग्रह म् । यस्य वाप्युपधिं पश्येत्तत्सर्वं विनिवर्त्तयेदिति । योग उपाधिः येनागामिनोपाधिविशेषेणाधिविक्रयादानप्रतिग्रहाः कृता स्तदुपाधिविगमे तं सर्वंपि निवर्त्तनीयमित्यर्थः ॥ इति दत्ताप्रदानिकाख्यव्यवहारपदम् ॥ ० ॥ अथाभ्युपेत्याशुश्रूषाख्यव्यवहा रपदम् । तस्य स्वरूपमाह नारदः ॥ अभ्युपेत्य च शुश्रूषां यस्तां न प्रतिपद्यते । अशुश्रूषाभ्युपेत्यैतद्विवादपदमुच्यत इति ॥ शुश्रूषामाज्ञाकारित्वम् । तत्र पञ्चविधः शुश्रूषकः । शिष्यः अन्तेवासी भृतकः अधिकर्मकृत् दासश्चेति । तेषां मध्ये दासभिन्नाः कर्मकराः । ते च शुभकर्मकृतः । दासाः पुनः पञ्चदशविधा गृहजातादिभेदेन तेऽशुभकर्मकृतः । तदेतत्सर्वं मनसि नि धायस एवाह । शुश्रूषकः पञ्चविधः शास्त्रे दृष्टो मनीषिभिः । चतुर्विधः कर्मकरस्तेषां दासास्त्रिपञ्चकाः ॥ शिष्यान्तेवासिभृ

तकाश्चतुर्थस्त्वधिकर्म्मकृत्। एते कर्मकरा ज्ञेया दासास्तु गृहजादयः॥ सामान्यमस्वतन्त्रत्वमेषामाहुर्मनीषिणः॥ जाति
कर्मकृतस्तूक्तो विशेषो वृत्तिरेव च। कर्म्मापि द्विविधं ज्ञेयमशुभं शुभमेव च। अशुभं दासकर्म्मोक्तं शुभं कर्मकृतां स्मृतम्॥ गृ
हद्वाराशुचिस्थानरथ्यावस्करशोधनम्। गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम्॥ इच्छतः स्वामिनश्चाङ्गैरुपस्थान
मथान्ततः। अशुभं कर्म विज्ञेयं शुभमन्यदतः परमिति॥ तेषामिति निर्द्धारणे षष्ठी। त्रिपञ्चकाः पञ्चदश। शिष्यो वेदवि
द्यार्थी। अन्तेवासी शिल्पशिक्षार्थी। मूल्येन यः कर्म्म करोति स भृतकः। अधिकर्म्मकृत्। कर्मकुर्वतामधिष्ठाता। वृत्तितः
जीवनोपायतः। अशुचिस्थानमुच्छिष्टप्रक्षेपणार्थं गर्त्तादिकम्। अवस्करो गृहमार्जितपांश्वादिनिचयस्थानम्। चतुर्भिर
पि गृहद्वारादिभिः शोधनपदं सम्बध्यते। उज्झनं त्यागः। अन्ततः स्वामिनः। इच्छतः स्वाम्यनुज्ञया मूत्रपुरीषादिस्थानेनिर्मा
र्जनार्थमङ्गैरुपस्थानं हस्तादुपर्पणं तेषां कर्मकराणां दासानाञ्चास्वतन्त्रत्वलक्षणान्धर्मं मनीषिणः साधारणमाहुः। जाति
कर्मकृतः कर्मकृतो वृत्तिकृतश्च विशेषः शिष्यान्तेवासिनामेवेत्ययमर्थः। तत्र शिष्याणां त्रैवर्णिकान्यतमलक्षणो जातिकृतो
विशेषो वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यादिशास्त्रसिद्धोऽवगन्तव्यः। कर्मकृतविशेषन्त्वाह वृहस्पतिः। विद्यात्रयी समाख्याता
ऋग्यजुःसामलक्षणा। तदर्थं गुरुशुश्रूषां प्रकुर्याच्छास्त्रचोदितामिति॥ शिष्य इति शेषः। तथा च नारदः। आविद्याग्रह
णाच्छिष्यः शुश्रूषेत्प्रयतो गुरुम्। तद्वृत्तिर्गुरुदारेषु गुरुपुत्रे तथैव चेति। वृत्तितो विशेषमाह स एव। समावृत्तश्च गुरवे प्र
दाय गुरुदक्षिणाम्। प्रतीयात्स्वगृहानेषा शिष्यवृत्तिरुदाहृतेति। वृत्तिरत्र धर्मः। मनुरपि। प्रतिगृह्येप्सितं दण्डमुपस्था
य च भास्करम्। प्रदक्षिणम्परीत्याग्निं चरेद्भैक्षं यथाविधि॥ भवत्पूर्वं चरेद्भैक्षमुपनीतो द्विजोत्तमः। भवन्मध्यन्तु राजन्यो
वैश्यस्तु भवदुत्तरमिति॥ कः पुनरन्तेवासिनां जातिकर्मकृतो विशेष इत्यपेक्षिते वृहस्पतिराह। विज्ञानमुच्यते शिल्पे हेमकुप्यादि
संस्कृतिः। नृत्यादिकञ्च तत्प्राप्तुं कुर्यात्कर्म गुरोर्गृह इति। कङ्कणकटकादिनिर्माणविषयं नृत्यगीतादिकरणविषयञ्च

दिगद्वात्तम्भकुम्भादिविरचनविषयञ्च । विज्ञातं शिल्पविज्ञानमुच्यते तत्प्राप्त्यर्थं अन्तेवासी गुरोर्गृहे कङ्कणकरणादिकं
कुर्यादित्यर्थः । अनेन हेमकारादिजातितः कङ्कणकरणादिकर्म्मकृतस्तु विशेषोऽन्तेवासिनां दर्शितः । तेषाङ्कर्म्मकृतं वृत्तिकृ
तञ्च विशेषं दर्शयति नारदः । स्वशिल्पमिच्छन्नाहर्तुं बान्धवानामनुज्ञया । आचार्य्यस्य वसेदन्ते कालं कृत्वा सुनिश्चितमिति
॥ अन्ते समीपे कृत्वा सुनिश्चितं एतावन्तं कालं मत्समीपे स्थातव्यमित्याचार्य्येण कालपरिमाणं सुनिश्चितं कृत्वेत्यर्थः ॥ आचार्य्य
स्यापि कर्त्तव्यमाह स एव । आचार्य्यः शिक्षयेदेनं स्वगृहे दत्तभोजनम् । न चान्यत्कारयेत्कर्म्म पुत्रवच्चैनमाचरेदिति । अन्य
च्छिल्पकर्म्मव्यतिरिक्तं कर्म्म । एवञ्चान्तेवासिना कङ्कणकरणादिकर्म्मफलार्प्पणमात्रेण शुश्रूषा कार्य्येत्यवगन्तव्यम् । स्वगृहे द
त्तभोजनमिति वृत्तिर्दर्शिता । अन्यत्कर्म्मकारकमाचार्य्यम्प्रत्याह कात्यायनः । यस्तु न ग्राहयेच्छिल्पं कर्म्माण्यन्यानि कारयेत्
। प्राप्नुयात्साहसम्पूर्वं तस्माच्छिष्यो निवर्त्तत इति । शिष्यश्चान्तेवासी । परिभाषितकालात्प्रागेव विद्याप्राप्तावपि परि
भाषितकालसमापनं कार्य्यमित्याह नारदः । शिक्षितोऽपि कृतं कालमन्तेवासी समापयेत् । तच्च कर्म्म च यत्कुर्य्यादाचार्य्यस्यै
व तत्फलमिति ॥ याज्ञवल्क्योऽपि । कृतशिल्पोऽपि निवसेत्कृतकालं गुरोर्गृहे । अन्तेवासी गुरुप्राप्तभोजनस्तत्फलप्रद इति
। दुष्टमन्तेवासिनं प्रत्याह नारदः । शिक्षयन्तमदुष्टञ्च यस्त्वाचार्य्यं परित्यजेत् । बलाद्वासयितव्यः स्याद्वधबन्धौ च सोऽर्हतीति
। वासयितव्यः स्थापनीयः । आचार्य्यपार्श्वे इति शेषः । वधोऽत्र ताडनं न प्राणच्छेदः । अपराधस्याल्पत्वात् । शुश्रूषासमा
प्त्यनन्तरमन्तेवासिनः कृत्यमाह स एव । गृहीतशिल्पः समये कृत्वाचार्य्यं प्रदक्षिणाम् । शिक्षितश्चानुमान्यैनमन्तेवासी निवर्त्तेत
इति ॥ भृतकानामन्तेवासिवन्न जातितो वृत्तितो वा विशेषः । किन्तु भृतितः कर्म्मतः कालतश्च विशेषः । तदेतदाह बृह
स्पतिः । यो भुङ्क्ते परदासीं तु स ज्ञेयो वनिताभृतः । कर्म्म तत्स्वामिनः कुर्य्याद्यथान्योऽर्थभृतो नरः । वकुधार्य्यकृतः प्रोक्तस्तथा भाग
भृतोऽपरः । हीनमध्योत्तमत्वञ्च सर्व्वेषामेव चोदितम् । दिनमासार्द्धषण्मासत्रिमासाब्दभृतस्तथा । कर्म्म कुर्य्यात्प्रतिज्ञातं लभते प

रिभाषितमिति। अयमर्थः। यःपरदास्युपभोगेन तत्स्वामिनःकर्म्म करोति सवनिताभृतः। योधनग्रहणेनकर्मकरोति सअर्थभृतः। यःपरिकल्पितांशग्रहणेनकर्म्म करोति सभागभृतः। एतावन्तङ्कालमेतत्कर्म्म करिष्यामीति प्रतिज्ञातङ्कर्म एतावन्तङ्कालंकुर्व्वन्नेवअपरिकल्पितांभृतिंलभतइति। अर्थभृतस्यबहुविधत्वमर्थाल्पत्वमहत्वाभ्यांज्ञेयम्। तेचाल्पत्वमहत्वेशक्तिभक्त्यानुसारेणाद्रष्टव्यं। भृतकस्त्रिविधोज्ञेयउत्तमोमध्यमोऽधमः। शक्तिभक्त्यानुरूपास्यादेषांकर्माश्रयाभृतिरितिनारदस्मरणात्। भागभृतकस्यविभागमाहसएव। द्विप्रकारोभागभृतःकृषिगोवीजिनांस्मृतः। जातशस्यात्तथाक्षीरात्सलभेतनसंशयइति॥ हीनमध्योत्तमत्वलक्षणाःकर्मकृतोभेदोरक्षणादिकर्म्म निवन्धनइत्याहसएव। आयुधीतूत्तमःप्रोक्तोमध्यमस्तुकृषीवलः। भारवाहोऽधमःप्रोक्तस्तथाचगृहकर्म्मकृदिति। कृषीवलःकर्षकः। अधिकर्म्मकृतस्तुस्वरूपमाहनारदः। सर्वेष्वधिकृतोयःस्यात्कुटुम्बस्यतथोपरि। सोधिकर्म्मकृतोज्ञेयःसचकौटुम्बिकःस्मृतइति॥ सर्वेषुभृतकेषुअधिकृतउपरिकृतोऽधिष्ठातृत्वेनकृतइतियावत्। अर्थेष्वधिकृतइतिकेचित्पठन्ति। अर्थेषुक्षेत्रहिरण्यादिषुअधिकृतःपालकत्वेननियुक्तइति। कुटुम्बस्योपरीत्यत्राधिकृतइत्यनुषंगः। सर्वभृतकेष्वधिष्ठातृत्वेननियुक्तोयःसोधिकर्मकृतोज्ञेयः। कुटुम्बरक्षणायव्ययकारीत्वेनस्थापितोयःसतुकौटुम्बिनइत्यर्थः। शिष्यान्तेवासिभृतकाधिकर्म्मकरेभ्योदासानाम्भेदन्दासशब्दव्युत्पत्तिप्रदर्शनमुखेनाहकात्यायनः। स्वतन्त्रस्यात्मनोदानाद्दासत्वन्दारवद्भृगुरिति। यथाभर्त्तुःसम्भोगार्थेस्वशरीरदानाद्दारत्वम्। तथास्वतंत्रस्यात्मनःपरार्थत्वेनदानाद्दासत्वमितिभृगुराचार्योमन्यतइत्यर्थः। अनेनात्यंतपारार्थ्यमासाद्यशुश्रूषकादासाः। पारार्थ्यमात्रमासाद्यशुश्रूषकास्तुकर्म्मकराइतिभेदोप्युक्तइत्यवगन्तव्यम्। अत्यंतपारार्थ्यंतुतेषाम्भवतियेःस्वपुरुषार्थवृत्तिनिरोधेनपरार्थत्वमाश्रितमितिस्मृतिचन्द्रिकायाम्। दासत्वम्ब्राह्मणव्यतिरिक्तेष्वेव। त्रिषुवर्णेषुविज्ञेयंदास्यंविप्रस्यनक्वचिदितितेनैवाभिधानात्। अनेनदासानांजातितोभेदउक्तः। विप्रेतरेष्वपिदास्यमानुलोम्येनैवभवति। वर्णानामानुलोम्येनदास्यन्नप्रतिलोमतः। राजन्यवैश्यशूद्राणान्त्यजतांस्व-

स्वतंत्रतामिति तेनैवोक्तत्वात् । स्वतंत्रतां त्यजताम् । अत्यन्तपारार्थ्यं भजतामित्यर्थः । न प्रातिलोम्यं त्विति स्वधर्मोपरि यामित्योव
तिभ्योऽपि ऽन्यत्र द्रष्टव्यं तत एव नारदः । वर्णानां प्रातिलोम्येन दासत्वं न विधीयते । स्वधर्मत्यागिनोऽन्यत्र दारवद्दासता मतेति ।
यथोत्तमवर्णं प्रतिहीनवर्णा सवर्णा वा भार्या भवति न पुनर्हीनवर्णस्योत्तमवर्णा तथैव दासोऽपि भवेदित्यर्थः । एतच्च प्रव्रज्यावसितो
हीनवर्णस्यापि दासो भवतीत्यभिधानं क्षत्रियवैश्यप्रव्रज्यावसितविषयं न तु ब्राह्मणप्रव्रज्यावसितविषयम् । तस्य निर्वासनाभि
धानेन दासत्वाभावात् । तस्य निर्वासनञ्च दर्शितं कात्यायनेन । प्रव्रज्यावसितायचत्रयो वर्णा द्विजातयः । निर्वासं कारयेद्विप्रं दा
सत्वं क्षत्रविड्भृगुरिति । कारयेद्राजेति शेषः । क्षत्रञ्च विट् च क्षत्रविट् । सर्वो द्वन्द्वो विभाषैकवद्भवतीति स्मरणादेकवद्भावः ।
निर्वासनञ्च श्वपदेनाङ्कयित्वा कर्त्तव्यमित्याह नारदः । परिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति । श्वपदेनाङ्कयित्वा तं राजा
शीघ्रं प्रवासयेदिति ॥ न चैवं सति राज्ञ एव तु दासः स्यात् प्रव्रज्यावसितो नरः । न तस्य प्रतिमोक्षोऽस्ति न विशुद्धिः कथञ्चनेति नार
देन प्रव्रज्यावसितो राज्ञ एव दासो नान्यस्येत्यभिधानात् स्वधर्मत्यागिनोऽन्यत्रेति याज्ञवल्क्येनैवोक्तत्वात् विषयमितो निरूपणम् । यतोऽत्रैव
धिकरणन्यायेन क्षत्रियमात्रवचनेनापि राजशब्देनाभिषिक्तस्य यथा प्रजापालकस्य ग्रहणात् प्रजापालकत्वञ्च सत्ताधिकत्वेनैवास्य रूपस्यापि
सम्भवाद्यः क्षत्रियः प्रव्रज्यावसितः स हीनवर्णस्यापि प्रजापालकस्य वैश्यस्य दासो भवतीति प्रतिपादनार्थत्वात् । केचित्तु प्रव्रज्यावसि
तस्य ब्राह्मणस्य दासत्वनिर्वासनयोर्विकल्पमाहुः तत्र पूर्वोक्तप्रकारेण सम्भवन्त्यां गतौ अष्टदोषदुष्टविकल्पाङ्गीकारस्यान्या
य्यत्वात् । दास्यन्तु विप्रस्य न क्वचिदिति निषेधाच्च । दारवद्दासता मतेति वचनाद्ब्राह्मणस्य सवर्णं प्रति दासत्वं प्राप्तं तन्निषेधार्थमाह
कात्यायनः । सवर्णेऽपि हि विप्रं तु दासत्वं नैव कारयेदिति । यदि ब्राह्मणः स्वेच्छया दासत्वं भजते तदा स्वबन्धुभक्ष्मं न कुर्यादित्या
ह स एव । शीलाध्ययनसम्पन्ने तदूनं कर्म्म कामतः । तत्रापि नाशुभं कर्म्म प्रकुर्वीत द्विजोत्तम इति । यस्मात्स्वेपकारः कर्त्तव्य इ
ति विधिः तस्माद्द्रूनं कर्म्म मध्यमोत्तमव्यतिरिक्तमपि कर्म्म कामतो वेतनमन्तरेण स्वेच्छया परोपकारार्थं कुर्यादित्यर्थः पूर्वार्द्धे

त्य । तत्रापि तेष्वपि हीनकर्मसु यदशुभकर्म गृहद्वारशोधनादिकं तत्र कुर्यादित्युत्तरार्द्धार्थः । क्षत्रियवैश्यविषये स्वामिनः कर्तव्यमाह मनुः । क्षत्रियञ्चैव वैश्यञ्च ब्राह्मणो वृत्तिकर्षितौ । बिभृयादानृशंस्येन स्वानि कर्माणि कारयन्निति । आनृशंस्येन स्वकार्येण । अयमर्थः । वृत्तिकर्षितं क्षत्रियं वैश्यञ्च दासीभूतमकौर्येण स्वानि कर्माणि कारयन् स्वामी पोषयेदिति । अथ स्वामी यत्नेनेन सम्बन्धिजनकर्माणि कारयेदित्याह । कर्माणीति सामान्याभिधानेन जघन्यकर्माण्येव कारयितव्यानीति नियमो नास्तीति सूचयति । वृत्तिकर्षिताविव्यनेन गत्यन्तराभाव एव क्षत्रियवैश्ययोर्दासत्वाङ्गीकारः कार्यो न तु गत्यन्तरसम्भव इति दर्शयति । बलाद्दासीकरणे दण्डमाह मनुः । दास्यन्तु कारयँल्लोभाद्ब्राह्मणः संस्कृतान् द्विजान् । अनिच्छतः प्राभवत्याद्राज्ञा दण्ड्यः शतानि षडिति । प्रभवतो भावः प्राभवत्वं तस्मात् प्रभुत्वादित्यर्थः । साधारणादिभ्यः स्वार्थे ष्यञ्छन्दस्य इति वार्त्तिकादस्य । द्विजातिपदस्य दासः शूद्रविषय इति दर्शयति । मन एवाह । शूद्रन्तु कारयेद्दास्यं क्रीतमक्रीतमेव वा । दास्यायैव हि सृष्टोऽसौ ब्राह्मणस्य स्वयम्भुवेति । स च दासः पञ्चदशप्रकार इत्याह नारदः । गृहजातस्तथा क्रीतो लब्धो दायादुपागतः । अनाकालभृतस्तद्वत् आहितः स्वामिना च यः ॥ मोक्षितो महतश्चर्णात् युद्धप्राप्तः पणे जितः । तवाहमित्युपगतः प्रव्रज्यावसितः कृतः । भक्तदासश्च विज्ञेयस्तथैव वडवाहृतः । विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृता इति । गृहजातः स्वगृहे दास्यां जातः । क्रीतो मूल्येन स्वाम्यन्तरात् प्राप्तः । लब्धः तत एव प्रतिग्रहादिना । दायादुपागतः रिक्थग्राहित्वेन लब्धः । अनाकालभृतः दुर्भिक्षे यो मरणाद्दासत्वाय रक्षितः । आहितः स्वामिना ऋणादानार्थाधितया गृहीतः । ऋणमोचनेन दासत्वमभ्युपगतो ऋणदासः । युद्धप्राप्तः समरे विजित्य गृहीतः । पणेजितः दास्यत्वपणके द्यूतादौ जितः । तवाहमित्युपगतः तवाहन्दासोऽस्मीति स्वयमेवोपगतः । प्रव्रज्यावसितः प्रव्रज्यातश्च्युतः । कृतः एतावत्कालं त्वद्दासो भवामीत्यभ्युपगतः । भक्तदासः सर्वकालं भक्तार्थमेव दासत्वमभ्युपगम्य यः प्रविष्टः । भक्षितं यावत्तेमूल्यद्वारेण दास्यामि तावद्दास इत्यभ्युपगत इति स्मृतिचन्द्रिकायां । वडवाहृतः वडवा गृहदा

सीनयाहृतस्तल्लोभेनमामुद्दाह्यदासत्वेनप्रविष्टः। यश्चात्मानमिविक्रीणीते अस्यावात्मविक्रेतेत्येवन्त्वमेशास्त्रेदासभेदाःपञ्चदश प्रकाराःस्मृताइत्यर्थः। अत्राद्यानांगृहजातक्रीतलब्धदायागतानाञ्चतुर्णांदासत्वापगमःस्वामिप्रसादादेवनान्यथेत्याहसएव। तत्रपूर्वश्चतुर्वर्गोदासत्वान्नविमुच्यते। प्रसादस्वामिनोन्यत्रदास्यमेषांक्रमागतमिति॥ आत्मविक्रेतुरपिदासत्वंस्वामिप्रसादा दन्यतोनापैतीत्याहसएव। विक्रीणीतेस्वतंत्रःसन्यआत्मानमधमः। सजघन्यतमस्तेषांसोपिदास्यान्नमुच्यतइति। अत्रप्र सादात्स्वामिनोऽन्यत्रइत्यनुषज्यते। ततश्चायमर्थः। आत्मविक्रेतापिगृहजातादिवत्स्वामिप्रसादंविनादास्यान्नविमुच्यतइति । एवञ्चगृहदासादयोप्यात्मविक्रेतृपञ्चमाःस्वामिप्रसादादकालभृताइवदास्यान्मुच्यन्तइतिवचोभंग्यादर्शितमितिमन्तव्य म्। स्वामिप्राणरक्षणादगृहजातादयोऽकालभृताश्चसर्वेपिदास्यान्मुच्यन्तइत्याहसएव। यश्चैषांस्वामिनंकश्चिन्मोचयेत्प्रा णसंशयात्। दासत्वात्सविमुच्येतपुत्रभागंलभेतचेति। एषामितिनिर्द्धारणेषष्ठी। पञ्चदशानांमध्येअन्यतमइत्यर्थः। यत्तु। ध्वजाहृतोभक्तदासोगृहजःक्रीतदत्रिमौ। पैत्रिकोदण्डदासश्चसप्तैतेदासयोनयइतिमनुवचनेसप्तविधत्वमुक्तन्तत्तेषांदास त्वप्रतिपादनार्थंनपरिसंख्यार्थम्। ध्वजागृहदासीएतच्चस्वामिप्रसादात्प्राणरक्षणाद्वादास्यापगमनम्प्रव्रज्यावसितभिन्नदा सेषुद्रष्टव्यम्। तस्यदासत्वेन्मोक्षाभावात्। अतएवयाज्ञवल्क्यः॥ प्रव्रज्यावसितोराज्ञोदासआमरणान्तिकइति। राज्ञोदा सःपार्थिवस्यैवदासोनान्यस्येत्यर्थः। अनाकालभृतादीनांप्रव्रज्यावसितात्मविक्रेतृव्यतिरिक्तानान्तुवानान्दास्यापमयनप्रकारमा हनारदः। अनाकालभृतोदास्यान्मुच्यतेगोयुगन्ददत्। आहितोपिधनंदत्वास्वामीयद्येनमुद्धरेत्। ऋणंतुसोदयंदत्वाऋणी दास्यात्प्रमुच्यते। तवाहमित्युपगतोयुद्धप्राप्तःपणेजितः। प्रतिशीर्षप्रदानेनमुच्येरंस्तुल्यकर्मणा। कृतकालव्यपगमात्कृतो दासोविमुच्यते। भक्तस्योत्क्षेपणात्सद्योभक्तदासःप्रमुच्यते। निग्रहाद्वडवायास्तुमुच्यतेवडवाभृतइति। एतदुक्तंभवतिदुर्भि क्षेपोषणेनकारितोदासोगोयुगार्पणान्मुच्यते। आहितदासस्तुस्वामिनागृहीतऋणेप्रत्यर्पितेसतितत्क्षणमेवदास्याद्विमुच्यते

।ऋणाद्दासस्तु स्वकृतमृणं येनोत्तमर्णाय यावद्धनं दत्त्वा पाशततस्मै तावद्धनं सवृद्धिकं दत्त्वा विमुच्यते। तवाहमित्युपगतादय
स्त्रयो दासाः स्वनिर्वर्त्यावधीयव्यापारनिवर्तकदासान्तरप्रदानाद्विमुच्यन्ते। तत्कालकृतस्तु दासो दास्यावधित्वेन परिभावितकाल
स्यातिक्रमणाद्विमुच्यते। भक्तदासस्तु भक्तस्योत्क्षेपणाद्भक्षितभक्तमूल्यसमर्पणाद्विमुच्यते। गृहदासीलोभेन दासत्वम्प्राप्तस्त
त्सम्भोगत्यागाद्विमुच्यत इति। दासाभासानाह्यन्यगमाह याज्ञवल्क्यः। बलाद्दासीकृतश्चौरैर्विक्रीतश्चापि मुच्यत इति। अपिश
ब्देन दत्ताहितौ गृह्येते। तत्रायमर्थः। बलात्कारेण यो दासीकृतः यश्च चौरैरपहृत्य दासत्वेन विक्रीतश्चाहितो दत्तो वा स यस्य
पार्श्वे दासभावेन तिष्ठति तेन प्रागुक्तमोचनहेतुमन्तरेणैव शीघ्रं मोचनीय इत्यर्थः। यदि तेन लोभादिवशाद्दासो न मुक्तस्तदा राज्ञा
मोचयितव्य इत्याह नारदः। चौरापहृतविक्रीता ये च दासीकृता बलात्। राज्ञा मोचयितव्यास्ते दास्यत्वं तेषु नेष्यत इति। चौरा
पहृत्यास्वमेविक्रीतास्वेविविकम्प्राधारयः। यस्त्वेकस्य दासत्वम्पूर्वमङ्गीकृत्यापरस्यापि दासत्वमंगीकरोति स पावपरेणापि विक्रे
नीय इति वचनाद्युक्तमाह। तवाहमिति चात्मानं योऽस्वतंत्रः प्रयच्छति। न स तम्प्राप्नुयात्कामं पूर्वस्वामी लभेत तमिति॥ अस्वतं
त्रः परदासत्वेनास्वतंत्रः। कामं नूतनस्वामिदास्यं काम्यमानं तु तरदासीभवं तं दासं पूर्वस्वामी गृह्णीयादित्यर्थः। एवं यदेतद्दा
समधिकृत्योक्तं तत्सर्वं दास्यामपि समानन्यायत्वाद्योजनीयम्। दासीस्वामिनमधिकृत्य विशेषमाह कात्यायनः। स्वां दासीं य
स्तु संगच्छेत्प्रसूता च भवेत्ततः। अवेक्ष्य बीजं कार्या स्याद्दासी सान्वया तु सेति। स्वकृतगर्भाधानमनुसन्धाय सा दासी स्वकान्त
हिता दासत्वविमोकविधिना स्वकृतगर्भादेर्दासत्वपरिहारार्थं अदासीत्वेन कार्या स्यादित्यर्थः। कः पुनर्दासत्वविमोचको विधिरि
त्याकांक्षायामाह नारदः। स्वं दासमिच्छेद्यः कर्तुमदासम्प्रीतमानसः। स्कन्धादादाय तस्यासौ भिंद्यात्कुम्भं सहाम्भसा। साक्ष
ताभिः सपुष्पाभिर्मूर्द्ध्न्यद्भिरवाकिरेत्। अदास इति चोक्त्वा त्रिः प्राङ्मुखं तमथोत्सृजेदिति। अत्रापि दासशब्देन दास्या अपि
ग्रहणम्। लिङ्गस्योद्देश्यविशेषणत्वेन ग्रहाधिकरणन्यायेनाविवक्षितत्वात्। एवमुत्सर्गे सति यद्भवति तदाह स एव। ततः प्र

भृतिवक्तव्यः स्वाम्यनुग्रहपालितः ॥ भोज्यान्नोऽप्यप्रतिग्राह्यो भवत्यभिमतः सतामिति ॥ स्वाम्यनुग्रहे च दासापाकरणरूपे वक्त
व्यः सम्भाषणार्हः । अदास्यामपि दासेन परिणीतायां मादासीत्वमेव भवतीत्याह कात्यायनः । दासेनोढा त्वदासी या सापि दासी
त्वमाप्नुयात् । यस्माद्भर्त्ता प्रभुस्तस्याः स्वाम्यधीनः प्रभुर्यत इति ॥ दासधनस्यापि तत्स्वामिधनत्वमित्याह स एव । दासस्य तु धनं
यत्स्यात्स्वामी तस्य प्रभुः स्मृत इति । ब्राह्मण्यादिषु दासीकरणे दण्डमाह कात्यायनः । याऽदद्यात् ब्राह्मणीं यस्तु विक्रीणीयात्तथैव
च । राजा तदकृतं कार्य्यं दण्ड्याः स्युः सर्व एव ते ॥ कामानुसंश्रितां यस्तु कुर्य्याद्दासीं कुलस्त्रियम् । स कामयन्न वान्यत्र दर्शी
स्त्यावाप्तनम्भवेत् । बालधात्रीमदासीञ्च दासीमिव भुनक्ति यः । परिचारकपत्नीं वा प्राप्नुयात्पूर्वसाहसमिति । तत्कार्यं यद्यत्
निवर्त्तनीयमित्यर्थः । तेन राज्ञा दण्ड्याः स्युरित्यन्वयः । विष्णुरपि । यस्तूत्तमवर्णं दासत्वे नियोजयति तस्योत्तमसाहसो दण्ड इ
ति । क्वचिद्दासीविक्रयणे दण्डमाह कात्यायनः । विक्रीणाति मातरं यो भक्तां दासीं विक्रेतुमिच्छति । अनापदिस्थः शक्तः सन्प्राप्नु
याद्द्विशतन्दममिति । द्विशतम्पणानामिति शेषः । भक्तामित्यनेन दुष्टाया विक्रयणे दण्डाभाव इति दर्शितमिति ॥ ● ॥ इति
अभ्युपेत्याशुश्रूषाख्यव्यवहारपदं ॥ अथ वेतनानपाकर्म्माख्यव्यवहारपदम् । तत्र मनुः । अतः ऊर्ध्वं प्रवक्ष्यामि वेतनस्याऽन
पक्रियामिति । तत्स्वरूपमाह नारदः । भृतानां वेतनस्योक्तो दानादानविधिक्रमः । वेतनस्यानपाकर्म्म तद्विवादपदं स्मृतमि
ति । वेतनं कर्म्ममूल्यं तस्यानपाकर्म्म भृत्याय समर्पणं समर्पितस्य वापुनर्ग्रहणम् । तत्र समर्पणे विशेषमाह स एव । भृताय वेतनं
दद्यात्कर्म्मस्वामी यथाक्रमम् । आदौ मध्येऽवसाने तु कर्म्मणो यद्विनिश्चितमिति । तुभ्यमेतावद्दास्यामीति यद्वेतनम्परिभा
षातो निश्चितं तत्त्रिधा विभज्य कर्म्मण आदिमध्यान्तेषु त्रिषु कालेष्वन्यतमकाले दद्यादित्यर्थः । एतच्चैतावद्वेतनं दास्यामीति परिभा
षायां सत्त्वे । असत्त्वे त्वाह स एव । भृतावनिश्चितायां तु दशभागमवाप्नुयुः । लाभगोवीर्य्यशस्यानां वणिग्गोपकृषीवला इति ।
दशभागं दशमम्भागं गोवीर्य्यं पाल्यमानगवादिभवम्पयोदध्यादि । यदि कर्म्मस्वामी भृत्याय दशमम्भागन्न प्रयच्छति तदा

वीराज्ञादाप्यइत्याह याज्ञवल्क्यः ॥ दाप्यस्तु दशमम्भागं वाणिज्यपशुशस्यतः । अनिश्चित्य भृतिं यस्तु कारयेत्स महीक्षितेति । यस्तु स्वामी वेतनपरिच्छेदमकृत्वैव भृत्यं कारयति स तस्माद्वाणिज्यपशुशस्यलक्षणात्कर्मणः सकाशादुत्पन्नधनात्स दशमम्भागम्भृत्याय महीक्षिता राज्ञा दापनीय इत्यर्थः । यत्तु त्रिभागम्पञ्चभागम्वा गृह्णीयात्सीरवाहक इति बृहस्पतिवचनं । तद्दृष्टाया ससाध्यादृष्टक्षेत्रविषयम् । व्यवस्थितविकल्पस्त्वायम् । कथमत्र व्यवस्थेत्याकांक्षायामाह स एव । भक्ताच्छादभृतः सीराद्भागं गृह्णीत पञ्चमम् । जातशस्यात्त्रिभागन्तु प्रगृह्णीयाद्यथाभृत इति । अशनाच्छादनाभ्यां भृतः कृषीवलो वा गवादिविकृष्टक्षेत्रजातशस्यात्पञ्चमम्भागं गृह्णीयात् । ताभ्यामभृतस्तु तृतीयम्भागमित्यर्थः । अयवा यच्चैतावद्दास्यामीति नास्ति परिभाषा तत्र बृहस्पत्युक्तं द्रष्टव्यम् । समुद्रयानकुशला देशकालार्थदर्शिनः । नियच्छेयुर्भृतिं यान्तु साक्षात्प्रागकृतायदीति । एतावद्दास्यामीति परिभाषिते पि कर्तव्य कृत्स्नकर्मा चेदेकेन न्यूनमपि स्ववुद्धिमात्रपरिकल्पितन्देयं । कचिन्नतोऽधिकमपि देयमित्याह याज्ञवल्क्यः । देशं कालञ्च योऽतीयाल्लाभं कुर्य्याच्च योऽन्यथा । तत्र स्यात्स्वामीनश्छन्दोऽधिकन्देयं कृतेऽधिके इति । यो भृत्यः स्वाम्यनुज्ञां विना स्वातंत्र्येण वाणिज्यादिकर्म्मणः फलसाधकत्वापादकं देशं कालं चातिक्रामति लाभं वा वहुतरव्ययेन स्वल्पं करोति तस्मै पूर्वपरिभाषितभृतिमध्ये स्वामी स्वेच्छानुसारेण किञ्चिद्दद्यात् । यस्तु स्वातंत्र्येण वहुलाभं करोति तस्मै परिभाषितमूल्याधिकं किञ्चिद्देयं स्वामिना पारितोषिकमित्यर्थः । अनेकभृत्यसाध्यकर्मणि वेतनार्पणप्रकारमाह स एव । यो यावत्कुरुते कर्म तावत्तस्य तु वेतनम् । उभयोरप्यसाध्यं चेत्साध्ये कुर्याद्यथाश्रुतमिति । उभयोरपीत्यपि नावहूनां यद्वयं शस्मिन्गृहादौ कृते भवतामेतावद्दास्यामीति परिभाषिते द्विवहुभिरारब्धं कर्म्म यदि व्याध्यादिवशान्न समापितं तदा तेषु यो यावत्कर्म करोति तस्मै तत्कर्म्मानुसारेण मध्यस्थपरिकल्पितं वेतनन्देयं । ननु साम्येन दानन्न च परिसमाप्त्यभावाददानं । यदि तैः समापितन्तदा यथापरिभाषितन्देयं न तु प्रत्येकं तत्तत्कृत्स्नानुरूपिकर्म्मानुसारेणापरिकल्प्य दातव्यमित्यर्थः । यस्तु वेतनं गृहीत्वा असमर्पितकर्म करोति तन्नाह बृहस्पतिः । गृहीतवेतनः कर्म

नकरोति यदा भृतः । समर्थश्चेद्दमन्दाप्यो द्विगुणं तच्च वेतनमिति ॥ दमं च तदनुसारेण सहोदद्यात् । गृहीतस्य वेतनस्य द्विगु
णमेव स्वामिने दद्यादित्यर्थः । नारदोऽपि । भृतिं गृहीत्वाऽकुर्वाणो द्विगुणां भृतिमावहेदिति । याज्ञवल्क्योऽपि । गृहीतवेतनः क
र्म त्यजन् द्विगुणमावहेदिति । अस्मिन्नेव विषये वेतनाग्रहणेऽप्याह स एव । अगृहीते समं दाप्य इति यावता वेतनेन भृत्यत्वमङ्गी
कृतन्तावदेव स्वामिने देयान्न तु राज्ञे दण्डमित्यर्थः । यद्यङ्गीकृत्य तां भृतिन्न कुर्याद्बलात्कारयितव्य इत्याह नारदः । कर्माकुर्वन्प्रति
श्रुत्य कार्यो दत्त्वा भृतिं बलादिति । प्रतिश्रुत्येति प्रारम्भस्याप्युपलक्षणार्थम् । अत एव कात्यायनः ॥ कर्मारम्भं तु यः कृत्वा सि
द्धं नैव तु कारयेत् । बलात्कारयितव्योऽसावकुर्वन्दण्डमर्हतीति ॥ कियान्दण्ड इत्यपेक्षायामाहतुर्वृद्धमनुबृहस्पती । प्र
तिश्रुत्य न कुर्याद्यः स कार्यः स्याद्बलादपि । स चेन्न कुर्यात्तत्कर्म प्राप्नुयाद्द्विशतं दमम् इति । द्विशतन्द्वाषिपणा द्विशतमित्यर्थः ।
यत्तु मनुवचनम् भृतो नार्त्तो न कुर्याद्यो दर्पात्कर्म यथोदितम् । स दण्ड्यः कृष्णलान्यष्टौ न देयन्तस्य वेतनमिति ॥ तदल्पदण्डका
र्यागारादिविषयमिति स्मृतिचन्द्रिकायाम् । अर्द्धन्यूनकर्मकरणविषयमिति मदनरत्ने । किंचिन्न्यूनकर्मकरणे त्वाह स एव
यथोक्तमार्त्तः सुस्थो वा यस्तत्कर्म न कारयेत् । न तस्य वेतनन्देयमल्पोनस्यापि कर्मण इति ॥ सुस्थो वा कर्म कारयेदिति वदता सु
स्थेऽपि स्वयं कर्तृत्वनियमो नास्तीति दर्शयति । आर्त्तो यदि व्याध्युपशमानन्तरं स्वाङ्गीकृतं कर्म करोति तदार्त्तेर्दीर्घकालतया काल
क्षेपेऽपि भृत्यदोषाभावाद्वेतनमसौ निर्विवादं लभत इत्याह स एव । आर्त्तस्तु कुर्यात्सुस्थः सन्यथाभाषितमादितः । सुदीर्घस्यापि
कालस्य तल्लभेतैव वेतनमिति । आदितः आदौ यथाभाषितं यथाप्रतिज्ञातं तथा कुर्यादित्यर्थः । सुदीर्घस्यापि कालस्यात्ययेऽपी
ति शेषः । यस्तु कालविशेषावधिकं कर्म प्रतिज्ञाय तत्कालापूर्त्तावेव कर्म त्यजति तं प्रत्याह नारदः । कालेऽपूर्णे त्यजन्कर्म भृते
र्नाशमवाप्नुयादिति । अत्र दण्डमप्याह विष्णुः । भृतकश्चापूर्णे काले त्यजन्सकलमेव मूल्यं जह्यात् राज्ञे च पणशतं दद्यादिति
। मूल्यं वेतनम् । स्वामिदोषात्त्यागे तु यावतिकाले कर्म कृतं तत्कालानुसारेण कल्पितं वेतनं च लभत इत्याह नारदः । स्वामिदो

षाट्पञ्चामन्याचक्कृतमवाप्नुयादिति॥ स्वामिदोषेविनापराधंनिष्ठुरभाषणादिः। अत्रदण्डमप्याह विष्णुः। स्वामीचेद्भृत
कमपूर्णेकालेजह्यात्तस्यसर्वमेवमूल्यन्दद्यात्पणशतंचराजन्यत्रभृतकदोषादिति। स्वामिद्रव्यस्यभृत्यदोषेणनाशेयत्कर्मैव
न्तदाहसएव। तद्दोषेणयद्विनश्येत्तत्स्वामिनेदेयमन्यत्रदैवोपघातादिति। दैवोपघातोराजकृतस्याप्युपलक्षणम्। स्वामि
नेदेयंमूल्यद्वारेणेतिशेषः। अत्रदासविशेषाद्विशेषमाहबृहन्मनुः। प्रमादान्नाशितन्दाप्यःसमंद्विद्रोहनाशितमिति। प्रमा
दान्नाशितमनवधाननाशितंसममेवदद्यात्। द्रोहनाशिमत्तीवप्रहारादिनाद्रोहेणनाशितंद्विर्दाप्योद्विगुणन्दाप्यइत्यर्थः
। भृत्यदोषाभावेयदन्यतएवनष्टन्तन्नदेयमित्याहसएव। नतुदाप्योहृतञ्चौरैर्दग्धमूढजलेनवेति। ऊढंनीतं। यस्तुवाह
कोवाह्यन्द्रव्यम्प्रज्ञाहीनत्वादिनास्वदोषेणनाशयतितम्प्रत्याहनारदः। भाण्डंव्यसनमागच्छेद्यदिवाहकदोषतः। दाप्योयत्त
त्रनश्येत्तुदैवराजकृतादृते इति। भाण्डंवहनीयंद्रव्यंमुक्ताकादि। व्यसनन्नाशम्। अत्रभाण्डवाहकयोर्ग्रहणंकर्मणावजीव
द्दृक्षयीवलयोरुपलक्षणमितिमदनरत्ने। अत्रापिप्रमादान्नाशितंदाप्यःसमंद्विर्द्रोहनाशितमितिवृद्धमनूक्तोविशेषोऽवग
न्तव्यः। यस्तुवाहकःस्वदोषेणप्रस्थानविघ्नङ्करोतीतिसद्विगुणांभृतिन्दाप्यइत्याहकात्यायनः। विघ्नंयोवाहकोदाप्यःप्रस्था
नेद्विगुणाम्भृतिमिति। विघ्नंकरोतीतिशेषः। वाहकग्रहणंप्रदर्शनार्थंनतुविवक्षितन्तेनायुधीयादिविघ्नकारिणोप्येतदितिम
न्तव्यम्। अतएवनारदः। द्विगुणांतुभृतिन्दाप्यःप्रस्थानेविघ्नमाचरन्नितिसामान्येनोक्तवान्। याज्ञवल्क्योपि। प्रस्थानविघ्नकृ
च्चैवप्रदाप्योद्विगुणांभृतिमिति। एतच्चभृत्यन्तरसम्पादनकालासम्भवविषयम्। अंगीकृतकर्माकरणस्यापियदासहाया
न्तरलाभेनप्रस्थानविघ्नानापादकत्वन्तदाहसएव। प्रक्रान्तेसप्तमम्भागञ्चतुर्थम्पथिसन्त्यजन्। भृतिमर्द्धपथेसर्वाम्प्र
दाप्यस्त्याजकोपिचेति। प्रक्रान्तेकर्मणिस्वांगीकृतङ्कर्मत्यजन्भृत्योभृतेःसप्तमम्भागन्दाप्यः। गमनेप्रारब्धेपथित्यजन्भृते
श्चतुर्थंभागम्। अर्द्धपथेत्यजन्सर्वांभृतिमित्यर्थः। त्याजकोपिचेत्यस्यायमर्थःगमनारम्भानन्तरंस्वामीयदित्याजयतितदापूर्वो

क्रमेणाभृत्याय सप्तमभागादिकं दापनीय इति। एतच्चाव्याधितादिविषयम्। व्याधितस्यापराधाभावात्। यच्च स्वामिनात्यागे ज
ने चतुर्थभागदापनमुक्तं तद्विक्रीतभाण्डस्वामिविषयम्। विक्रीतभाण्डस्वामिना यत्कर्त्तव्यं तदाह बृहन्मनुः। पथि विक्री
य तद्भाण्डं वणिक् भृत्यं त्यजेद्यदि। अध्वनस्यापि देयं स्याद्भृतेरर्द्धं लभेत स इति। पथि भाण्डस्य चौरादिभिः। प्रतिषेधे राजादिभि
रपहृते स्वामिनः कर्त्तव्यमाह कात्यायनः। यदा तु पथि तद्भाण्डमाहृतं नष्टं ह्रियेत वा। यावानध्वागतस्तेन प्राप्नुयात्तावतो धनमिति
। भारवाहकस्वीकृतेन यानादिना भाण्डनेतारं प्रत्याह नारदः। अनयन् भाटयित्वा तु भाण्डवान् यानवाहनं। दाप्यो भृतिं चतुर्भागं
सर्वामर्द्धपथे त्यजन्निति। यानं शकटादि वाहनं अश्वादि इत्यर्थः। यो यानादिना भाण्डनयनं कर्त्तुं परकीयं यानादिकं भाटयि
त्वा प्रापणादिकार्योपाधिकं परिकल्प्य तन्न नयति स यानस्वामिने परिकल्पितस्य भाटकस्य चतुर्थांशं दाप्यः। यस्तु तन्मध्या
ऽर्द्धे मार्गे त्यजति स सर्वां भृतिं दाप्य इति। यस्तु शकटादिकं भाटयित्वा तमेवोपकारमूल्यमादाय देशान्तरं कृत्वापि भाटकं च
न प्रयच्छति तं प्रत्याह बृहन्मनुः। यो भाटयित्वा शकटं नीत्वा चान्यत्र गच्छति। भाटं न दद्याद्दाप्यः स्यादनूढस्यापि भाटकमिति
। अनूढस्यापि अकृतोपकारस्यापीत्यर्थः। यस्तु कृते कार्ये समनन्तरं वाहनादेः समर्पणं न करोति तस्य समर्पणपर्यन्तं भाटकदा
नमाह कात्यायनः। हस्त्यश्वगोखरोष्ट्रादीन् गृहीत्वा भाटकेन यः। नार्पयेत्कृतकार्यः सन् स दाप्यः सभाटकम्। गृहवाट्याप
णादीन् गृहीत्वा भाटकेन यः। स्वामिने नार्पयेद्यावत्तावद्दाप्यः सभाटकमिति। वारिशब्देन तदाधारभूतं पात्रमुपलक्ष्यते। ना
र्पयेत्कृतकार्यः सन्नित्यनुषङ्गः। परभूमौ गृहनिर्माणाय भाटकदातारं प्रत्याह नारदः। परभूमौ गृहं कृत्वा स्तोमं दत्त्वा वसेत्तु यः।
स तद्गृहीत्वा निर्गच्छेत्तृणकाष्ठेष्टकादिकमिति। स्तोमं भाटकं स्तोमाप्रदाने त्वाह स एव। स्तोमाद्विना वसित्वा तु परभूमाव
निश्चितः। निर्गच्छंस्तृणकाष्ठानि न गृह्णीयात्कथञ्चन॥ यान्येव तृणकाष्ठानि निविष्टानि विनिवेशिताः। विनिर्गच्छंस्तु तत्सर्वं भू
मिस्वामिनि वेदयेदिति। स्वामिने निवेदयेदित्यर्थः। अनिश्चित इति यद्यत्तृणकाष्ठादि ग्रहणाग्रहणपरिभाषाविहीनविष

षडन्तथाधर्म्मोनहीयते ॥ बहूनांव्रजतामेकांसर्वैतद्द्विगुणान्धनम् । तस्यैदद्युःपृथक्राह्नेदशडश्चद्विगुणाम्परमिति । अत्र
निर्णीतूनाहनारदः । वेश्याप्रधानायास्तत्रकामुकास्तद्गृहोषिताः । तत्समुत्थेषुकार्येषुनिर्णयंसंशयेविदुरिति । इतिवेतना
दानाख्यव्यवहारपदम् ॥●॥ अथसंविद्व्यतिक्रमाख्यव्यवहारपदम् । तस्यस्वरूपंव्यतिरेकमुखेनदर्शयतिनारदः । पाख
ण्डनैगमादीनांस्थितिःसमयउच्यते । समयस्यानपाकर्मतद्विवादपदंस्मृतमिति ॥ पाखण्डाःवैदिकमार्गद्वेषिणःक्षपणका
दयः । नैगमाःसार्थिकाःवणिजइतिमदनरत्ने । नैगमाःवेदप्रामाण्याभ्युपगन्तारःपाशुपतादयइतिमिताक्षरायाम् । आदि
शब्देनविद्वाह्मणसमूहादीनांग्रहणम् । समयस्यानपाकर्मअव्यतिक्रमः । समयपरिपालनमितियावत्तद्व्यतिक्रम्यमाणं
विवादपदम्भवतीत्यर्थः । तद्रुपयोग्यार्थमाहबृहस्पतिः । वेदविद्याविदोविप्रान्श्रोत्रियानग्निहोत्रिणः । आहृत्यस्थापयेत्त
त्रतेषांवृत्तिम्प्रकल्पयेदिति । याज्ञवल्क्योपि । राजाकृत्वापुरेस्थानंब्राह्मणंन्यस्यतत्रतु । त्रैविद्यंवृत्तिमद्ब्रूयात्स्वधर्मःपाल्यता
मिति । ब्राह्मणानांसमूहोब्राह्मण्यम् । ब्राह्मणमाणवचाडवाद्यदितिसूत्रेणयत् । विद्यावेदाःतिस्रणांविद्यानांसमाहारस्त्रि
विद्यम् । त्रिविद्यमधीतेइतित्रैविद्यम् । तदधीतेतद्वेदेतिअणप्रत्ययः ॥ ननुद्विगोर्लुगनपत्येइतिसूत्रेणाणोलुक्कस्मान्नभ
वतिद्विगुनिमित्तत्वाभावादितिगृहाण । तेषांवृत्तिम्प्रकल्पयेदित्यस्याऽर्थोबृहस्पतिनैवविवृतः । अनाच्छेद्यकरास्तेभ्यःप्र
दद्याद्गृहभूमयः । मुक्तभाव्यश्चनृपतिर्लेखयित्वास्वशासनमिति । अनाच्छेद्यकराः । अग्राह्यकराः । एतदुक्तम्भवति ।
आगामिन्नृपतिभिरग्राह्यकराःतेभ्यविसृष्टकराश्चगृहभूमयःप्रदद्यादिति । एवंनियुक्तैर्यत्कर्तव्यन्तदाहयाज्ञवल्क्यः ।
निजधर्माविरोधेनयस्तुसामयिकोभवेत् । सोपियत्नेनसंरक्ष्योधर्मोराजकृतश्चयइति । निजधर्माविरोधेनश्रौतस्मार्तकर्मावि
रोधेनासामयिकःसमयान्निष्पन्नोयोधर्मोगोप्रचारोदकरक्षणादेवगृहपालनादिरूपःसोपियत्नेनपालनीयः । यश्चराज्ञाकृतो
निजधर्माविरोधेनैवयःसामयिकोधर्मोयावत्पथिकम्भोजनन्देयमस्मद्रातिमण्डलेतुरगादयोनप्रस्थापनीयइत्येवंरूपःसोपि

यत्नेन रक्षणीय इत्यर्थः । बृहस्पतिरपि । नित्यं नैमित्तिकं काम्यं शान्तिकं पौष्टिकं तथा । पौराणां कर्म कुर्युस्ते सन्दिग्धे निर्णयं तथेति ॥ पौराणां पुरवासिनामित्यर्थः । एवं ग्रामनियुक्तसमुदायविशेषस्य कार्यविशेषमुक्त्वा । सर्वसमुदायानाञ्च कार्यमाह स एव । ग्रामश्रेणिगणानाञ्च संकेतः समयक्रिया । बाधाकाले तु सा कार्या धर्मकार्ये तथैव च । चाटचौरभये बाधाः सर्वसाधारणाः स्मृताः । तत्रोपशमनं कार्यं सर्वैर्नैकेन केनचिदिति । गणानाञ्चेत्यत्र चशब्दः पाषण्डनैगमादीनां समुच्चयार्थः । तत्र ग्रामगणपाषण्डनैगमादीनां समयकरणमन्तरेण यद्यपि बाधापरिहारः धर्मकार्यं च दुःसाधं तथापि पारिभाषिकी समयक्रिया सर्वैर्मिलितैः कार्या । चाटो वञ्चकः । चाटचौरादिभ्यो भये प्राप्ते तदुपशमनं सर्वैः कार्यमित्यर्थः । धर्मकार्यमपि सम्भूय कार्यमित्युक्तं तेनैव । सभाप्रपादेवगृहतटाकारामसंस्कृतिः । तथानाथदरिद्राणां संस्कारो यजनक्रिया ॥ कुलायननिरोधश्च कार्यमस्माभिरंशतः । यत्रैतल्लिखितं पत्रे धर्म्या सा समयक्रिया । पालनीया समस्तैस्तैः समर्थो विसंवदेत् । सर्वस्वहरणं दण्ड्यस्तस्य निर्वासनं पुरादिति । सभा मण्डपः । प्रपा पानीयशालिका । आरामः उपवनं । संस्कृतिः जीर्णोद्धारः । संस्कारः उपनयनादिकः प्रेतदहनादिकश्च । यजनक्रिया सोमयागादिकर्तृभ्यो दानम् । कुलायननिरोधः । कुलायनं दुर्भिक्षाद्युपगमपर्यन्तं तस्य धारणम् । कुल्यायननिरोधश्चेति कल्पतरौ पाठः । कुल्यायननिरोधः कुल्यायाः प्रवर्त्तनप्रतिबन्धः । एवंकृता समयक्रिया न केवलं समुदायिभिरेव पालनीया अपि तु राज्ञापि यथाह नारदः । पाषण्डनैगमश्रेणिपूगव्रातगणादिषु । संरक्षेत्समयं राजा दुर्गे जनपदे तथेति । पाषण्डा वेदोक्तलिङ्गधारणव्यतिरिक्ताः सर्वे लिङ्गिनः । तेषु विहितभिक्षाचरणाद्याः सन्ति । नैगमाः सार्थिका वणिक्प्रभृतयः । तेषु सकुम्भकसन्देशहरपुरुषनिरस्कारिगोटसङ्घाद्यन्येवमादयो बहवः समया विद्यन्ते । अथवा नैगमाः आप्तप्रणीतत्वेन येवेदं प्रामाण्यमिच्छन्ति पाशुपतादयः । श्रेणयः एकशिल्पोपजीविनः । नास्त्विदमनयैव श्रेण्या विक्रेयमित्येवमादिकाः समया वरीवर्त्तन्ते । पूगा हस्त्यश्वारोहादयः । व्रातगणशब्दयोरर्थमाह कात्यायनः । नानायुधधरा व्राताः समवेतास्तु कीर्त्तिताः । कुला

नांहिसमूहस्तुगणाःसम्परिकीर्त्तितइति। पूगेव्रातेवास्त्रमुन्नह्यसमरेनगन्तव्यमित्येवमादयःसमयानवर्त्तन्ते। गणेतुपञ्च
मेदिनेपञ्चमेवर्षेवाकर्णवेधःकर्त्तव्यइत्येवमादिःसमयासमस्ति। गणादित्यत्रादिशब्देनब्रह्मपुरीनिविष्टस्यमहाजनादेःप
रिग्रहः। तत्रगुरुर्दक्षिणार्थमागतोमाननीयइत्यादिसमयोस्ति। दुर्गेतुधान्यादिकंगृहीत्वाऽन्यत्रनतद्विक्रेयमित्या
दिरस्तिसमयः। जनपदेतुकश्चिद्विक्रेतृसकाशात्कुल्कग्रहणमित्याद्यनेकविधःसमयोवरीवर्त्तते। तदेतत्समयजातंयथा
नभ्रश्यतितथाराजाकुर्य्यादित्यर्थः। समूहादिपुरुषविषयेविशेषमाहबृहस्पतिः। कोशेनलेख्यक्रिययामध्यस्थैर्वापरस्पर
म्। विश्वासंकृत्वायःकुर्य्युःकार्याणिसमनन्तरमिति। कोशेनदेवतास्नानोदकपानेन। लेख्यक्रिययासमयपत्रेण। मध्यस्थैः
प्रतिभूभिःकार्याणिसमूहकार्याणि। एतदुक्तंभवति। समुदायिभिःपरस्परंसमयातिक्रमाभावायकोशादिभिर्विश्वासमुत्पा
द्यसामयिककार्याणिकर्त्तव्यानीति। कात्यायनोपि। समूहानांतुयोधर्मस्तेनधर्मेणतेसदा। प्रकुर्युःसर्वकर्माणिस्वधर्मेषु
व्यवस्थिताइति। सामयिकधर्मेनिजधर्मानतिक्रमेणसमूहकार्याणिसमुदायिनःकुर्युरित्यर्थः। याज्ञवल्क्योपि। निजधर्म
विरोधेनयस्तुसामयिकोभवेत्। सोपियत्नेनसंरक्ष्योधर्मोराजकृतश्चयइति। निजधर्माविरोधेनेत्यनेननिजधर्मविरोधीसा
मयिकोधर्मोयथासंध्यावन्दनवेलायांसर्वैरेवस्वव्यापारपरिहारेणराजभवनम्प्रत्यागन्तव्यंयोनायास्यतितस्यप्रथमसाहसोदण्ड
इतिनासौरक्ष्यइत्यर्थादुक्तम्। कात्यायनोपि। अविरोधेनधर्मस्यनिर्जितंराजशासनम्। तस्यैवाचरणम्पूर्वंकर्त्तव्यन्तुनृपाज्ञ
येति। धर्मस्यश्रौतस्मार्त्तादिधर्मस्यनिर्जितंकृतमित्यर्थः। राज्ञाप्रवर्त्तितान्धर्मान्योनानुपालयतितस्यदण्डमाहसएव।
राज्ञाप्रवर्त्तितान्धर्मान्योनरोनानुपालयेत्। गर्ह्यःसपापोदण्ड्यश्चलोपयन्राजशासनमिति। विचित्रबुद्धिभिःसमुदायिभिर
नेकैरेकमत्येनकार्यकरणासम्भवाद्द्वित्राःपञ्चवाकार्यचिन्तकाःकर्त्तव्याइत्याहबृहस्पतिः। द्वौत्रयःपञ्चवाकार्याःसमूहहित
वादिनः। कर्त्तव्यंवचनन्तेषांग्रामश्रेणिगणादिभिरिति। कार्यचिन्तकेषुदेयोपादेयान्दर्शयतिसएव। विद्वेषिणोव्यसनि

नः प्राचीनाश्च सभीरवः । लुब्धातिवृद्धबालाश्च न कार्याः कार्यचिन्तकाः । शुचयो वेदधर्मज्ञा दक्षा दान्ताः कुलोद्भवाः । सर्व
कार्य्यप्रवीणाश्च कर्तव्याश्च महत्तमा इति । प्राचीनाः । अधृष्टाः । कार्यचिन्तकाः । समुदायकार्यसाधकविचारकाः । का
र्यचिन्तकानामपि समूहहितवादिनां वचनं सर्वैः समूहिभिः कार्य्यमित्याह याज्ञवल्क्यः । कर्तव्यं वचनं सर्वैः समूहहितवादि
नामिति । समूहनप्रतिकूलस्य प्रथमसाहसं दण्डमित्याह स एव । यस्तत्र विपरीतः स्यात्स दाप्यः प्रथमन्दममिति । प्रथम
म्पूर्वसाहसम् । कात्यायनोऽपि । युक्तियुक्तं वचो हन्यात्कुर्यान्नवकाशतः । अयुक्तञ्चैव यो ब्रूयात्स दाप्यः पूर्वसाहसमिति । बृ
हस्पतिरपि । यस्तु साधारणं हिंस्यात् क्षिपेत्त्रैविद्यमेव वा । संविक्रियां विहन्याच्च स निर्वास्यस्ततः पुरादिति । साधारणम् ।
समुदायधनं ग्राम्यं दण्डादिद्रव्यम् । हिंस्यात् । दण्ड्यादेः साहाय्यकरणं नाशयेत् । क्षिपेत् तिरस्कुर्यादित्यर्थः । समूहिना
मपृथग्धर्म्मिणां त्रैविद्यानां कार्यकरणे दण्डमाह स एव । बाधां कुर्युरेकमत्यसंभूता द्वेषसंयुताः । राज्ञा तु विनिवार्यास्ते शास्याश्चै
वानुबन्धत इति । अनुबन्धतो नियमतः तारतम्यानुसारेण मुख्यानामपराधविशेषे दण्डविशेषमाह याज्ञवल्क्यः । गणद्रव्यं हरे
द्यस्तु संविदं लंघयेच्च यः । सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेदिति । मुख्यदण्डने समूहस्यैवाधिकारः । अत एव कात्या
यनः । साहसी भेदकारी च गणद्रव्यविनाशकः । उच्छेद्याः सर्व एवैते विख्याप्यैवं नृपे भृगुरिति । नृपे विख्याप्य गणेनोच्छे
द्या इत्यर्थः । समूहस्य कोशस्य दण्डो राज्ञा विधेयः । अत एव मनुः । यो ग्रामदेशसङ्घानां कृत्वा सत्येन संविदम् । विसंवदेन्न
रो लोभात्तं राष्ट्राद्विप्रवासयेत् । निगृह्य दापयेच्चैनं समयव्यभिचारिणम् । चतुःसुवर्णान् षण्निष्कान् शतमानञ्च राजतम् । एवं द
ण्डविधिं कुर्याद्धार्मिकः पृथिवीपतिः । ग्रामजातिसमूहेषु समयव्यभिचारिणामिति । एतेषां प्रवासनचतुःसुवर्णषण्निष्कश
तमानरूपाणाञ्चतुर्णां दण्डानां जातिविद्यागुणाद्यपेक्षया व्यवस्था कल्पनीया । यत्तु कश्चिदेतेषाञ्चतुर्णां दण्डानां क्रमेण
ब्राह्मणादिचतुर्वर्णविषयत्वमित्याह तदज्ञानविलसितम् । एवमादृशव्यवस्थायाम्प्रमाणाभावात् । ब्राह्मणस्य प्रवासनं स्व

त्रियादीनाञ्चतुःसुवर्णादिदण्डइत्यस्यानुचितत्वाच्च । मर्म्मोद्घट्टकादीनाम्पुरान्निर्वासनमेवदण्डइत्याहबृहस्पतिः । भ्रूणहानुदःसूचकश्चभेदकृत्साहसीतथा । श्रेणिपूगनृपद्विष्टःक्षिप्रंनिर्वास्यतेततइति ॥ भ्रूणहानुदःमर्म्मोद्घाटकः । सूचकःपिशुनः । पिशुनेखलसूचकावित्यभिधानात् । भेदकृत्समुदायिषुभेदकृत् । समूहस्थानान्निर्वास्यतेसमूहेनेतिशेषः । नचसमूहस्यदण्डकरणेऽनधिकारात्समूहेनेतिशेषकरणमयुक्तमितिवक्तव्यम् । पूर्वोक्तकात्यायनवचनेनसमूहस्यैवमुख्यदण्डनेऽधिकारस्यप्रतिपादितत्वात् । पूगश्रेणिगणाध्यक्षाःपुरदुर्गनिवासिनः । वाग्धिग्दण्डपरित्यागम्प्रकुर्य्युःपापकारिणाम् । तैःकृतंचस्वधर्म्मेणनिग्रहानुग्रहंनृणाम् । तद्राज्ञाप्यनुमन्तव्यंनिसृष्टार्थाहितेस्मृताइतिबृहस्पतिनाप्यभिधानाच्च । वाग्दण्डःपापिष्ठोसीत्यादिभाषणम् । धिग्दण्डोधिक्त्वामितिभाषणम् । परित्यागोऽसद्व्यवहार्य्यत्वकरणंनिर्वासनंवा । उभयत्रापिलोकेपरित्यागशब्दप्रयोगदर्शनात् । एतच्चार्थदण्डादेरुपलक्षणार्थम् । निग्रहानुग्रहमित्येतेपुनःसाम्येनाभिधानात्निसृष्टार्थाअनुज्ञातकार्य्याः । नारदोपि । पृथग्गणांस्तुयेभिंद्युस्तेविज्ञेयाविशेषतः । आवहेयुर्भयंघोरंव्याधिवत्तेह्युपेक्षिताइति । गणान्श्रेण्यादिरूपान्समुदायान् । बृहस्पतिरपि । तत्रभेदमुपेक्षांवायःकश्चित्कुरुतेनरः । चतुःसुवर्णाःषण्निष्कास्तस्यदण्डोविधीयतइति । सुवर्णचतुष्टयषण्निष्कयोःधनाद्यनुसारेणगुणवद्गुणवद्विषयत्वेनवाव्यवस्थामन्तव्या । पाषण्ड्यादिसर्वसमूहेषुराज्ञायथावर्त्तितव्यन्तदाहनारदः । योधर्मःकर्मयच्चैषामुपस्थानविधिश्चयः । यच्चैषाम्वृत्त्युपादानमनुमन्येततत्तथेति । धर्मःसत्यवदनादिः । कर्मप्रातःपर्युषितभिक्षाटनादिःउपस्थानविधिःसमूहकार्यार्थंमृदङ्गादिध्वनिमाकर्ण्यमण्डपादौमेलनम् । वृत्त्युपादानञ्जीवनायतापसवेषपरिग्रहः । एषाम्पाषण्डिनामित्यर्थः । अन्यदपिराजकृत्यमाहसएव । प्रतिकूलञ्चयद्राज्ञःप्रकृत्यावमतञ्चयत् । बाधकञ्चयदर्थानान्तत्तेभ्योविनिवर्त्तयेदिति । यद्राज्ञःप्रतिकूलम् । यथायस्यराज्ञस्तुरुष्केभ्योधर्मविवेचनम् । तस्यप्रक्षुभ्यतेराष्ट्रन्तत्कोशश्चनश्यतिइति । एवञ्चसार्थिकादिष्वप्र

कर्तृकयोर्विवादे धर्म्मं विवेचनं चयद्राज्ञइत्यस्योदाहरणमन्तव्यम्। प्रकृत्यास्वभावतएव। मतंश्रवज्ञातार्थम्पाषण्डादि षुताम्बूलभक्षणादिकम्। यच्चार्थानांबाधकन्धननाशकरादिकंरसवादादिकन्तत्तेभ्योपिनिवर्त्तयेत्। यथातेनकुर्वन्तित थाकुर्यादित्यर्थः। अन्यदपिनिवर्त्त्यमाहसएव। दोषवत्करणंयत्स्यादनाम्नायप्रकल्पितम्। प्रवृत्तमपितद्राजाश्रेयस्कामो निवर्त्तयेत्। लोभादिदोषवत्करणंश्रुतिस्मृतिविरुद्धम्विधवादेवेश्यात्वादिकंपाषण्डादिभिःप्रकल्पितम्। तद्दृकालप्र वृत्तमपिराज्ञानिवर्त्तनीयमित्यर्थः। त्रैविद्यानाम्प्रतिपादितन्धर्म्मंश्रेण्यादिष्वतिदिशतियाज्ञवल्क्यः। श्रेणिनैगमपाषण्डि गणानामप्ययंविधिः। भेदञ्चैषान्नृपोरक्षेत्पूर्ववृत्तिंचपालयेदिति। समूहकार्यार्थमागतायद्राज्ञासमूहपूजार्थंदत्तन्त स्यादिसमूहायासौनददातितदाएतद्दत्तंएकादशगुणन्दाप्यइत्याहसएव। समूहकार्येआयातान्कृतकार्यान्विसर्जयेत्। सदानमानसत्कारैःपूजयित्वामहीपतिः। समूहकार्य्यप्रहितोयल्लभेततदर्प्पयेत्। एकादशगुणन्दाप्योयद्यसौनार्प्पयेत्स्व यमिति। यल्लभेतसमूहंसम्माननार्थमितिशेषः। यतोराजदत्तंसर्वसाधारणमतोयथांशतोविभागंकृत्वाग्राह्यंनिःस्वादिभ्यो वादातव्यमित्याहवृहस्पतिः। ततोलभ्येतयत्किञ्चित्सर्वेषामेवतत्समम्। षण्मासिकंमासिकंवाविभक्तव्यंयथांशतः॥ देयंवा निःस्ववृद्धान्धस्त्रीबालातुररोगिषु। सान्तानिकादिषुतथाधर्म्मएषसनातनइति। एकस्यपुरुषस्यषण्मासनिर्वाहायपर्य्या प्तंकुटुम्बस्यवैकस्यषण्मासनिर्वाहायपर्य्याप्तंलब्धंवायथांशतःस्वस्वांशानुरूपेणविभजनीयन्निःस्वादिभ्योवादेयमितितात्पर्या र्थः। राजप्रसादलब्धवद्गणमपिसर्वेषांसममित्याहसएव। यत्तैःप्राप्तंरक्षितन्वागणार्थेवाऋणंकृतं। राजप्रसादलब्धञ्चसर्वेषा मेवतत्सममिति। अयमर्थः। तैःसमूहकार्य्यार्थम्प्रहितैर्यत्सीमाविवादावधिकंक्षेत्रारामादिकन्धर्म्माधिकरणेन्यायतःप्राप्तं। य च्चपरैरपह्रियमाणंरक्षितंयच्चसमूहप्रयोजनार्थमुपात्तमृणं। यच्चराजप्रसादलब्धंतत्सर्वंसर्वेषांसमुदायिनांसममिति। ग णकृतमृणंसर्वेषांसममित्यस्यक्वचिदपवादमाहकात्यायनः। गणमुद्दिश्ययत्किञ्चित्कृत्वर्णंभक्षितम्भवेत्। आत्मार्थेविनियु

क्रंवा देयन्तैरेवतद्भवेदिति। तैःमुख्यैःयेतुसमुदायानुग्रहान्तदन्तर्भावंप्राप्ताःयेचसमुदायक्षोभादिनाततोबहिर्भूतास्तान्प्रत्या
हसएव। गणानांश्रेणिवर्गाणांगताःस्युर्येपिमध्यताम्। प्राक्तनस्यधनर्णस्यसमांशाःसर्वएवेति। तथैवभोज्यवैभव्यदानध
र्मक्रियासुच। समूहस्थोंशभागीस्यात्प्रागतस्त्वंशभाङ्नेति। इतिसम्भूयोत्थानकमाख्यंव्यवहारपदम्॥ ● ॥ अथक्रीतानुश
याख्यव्यवहारपदम्॥ तत्स्वरूपमाहनारदः। क्रीत्वामूल्येनयःपण्यंक्रेतानबहुमन्यते। क्रीतानुशयइत्येतद्विवादपदमु
च्यतइति। नबहुमन्यते। सम्यगसम्यगितिपूर्वमविचार्यगृहीतमित्यर्थः। क्रीतम्परीक्षणीयमित्याहवृहस्पतिः। परीक्षेत
स्वयंक्रीतमन्येषाञ्चप्रदर्शयेत्। परीक्षितम्बहुमतंगृहीतानपुनस्त्यजेदिति॥ अन्येषाम्पण्यगुणदोषविदामितिशेषःनारदो
पि। क्रेतापण्यम्परीक्षेतप्राक्स्वयंगुणदोषतः। परीक्ष्याभिमतंक्रीतंविक्रेतुर्नभवेत्पुनरिति। चर्मादीनांपरीक्षासद्यःकार्या।
तथाचव्यासःचर्मकाष्ठेष्टकासूत्रधान्यासवरसस्यच। वसुकुप्यहिरण्यानांसद्यएवपरिक्षणमिति। अत्रवसुशब्देनरूप्यंगृ
ह्यते। कुप्यंहेमरूप्यव्यतिरिक्तत्रपुसीसादिकम्। तथाचहेमरूप्येप्रस्तुत्यामरसिंहः। ताभ्यांयदन्यत्तत्कुप्यमिति। क्रीतपण्य
द्रव्यविशेषेणपरीक्षणकालावधिमाहनारदः। त्र्यहाद्दोह्यम्परीक्षेतपञ्चाहाद्वाह्यमेवतु। मुक्तावज्रप्रवालानांसप्ताहंस्यात्प
रीक्षणम्॥ द्विपदामर्द्धमासन्तुपुंसान्तद्द्विगुणंस्त्रियाः। दशाहःसर्वबीजानामेकाहोलोहवाससाम्। अतोर्वाक्पण्यदोषस्तु
यदिसञ्जायतेक्वचित्। विक्रेतुःप्रतिदेयन्तत्क्रेतामूल्यमवाप्नुयादिति। त्र्यहात्क्रयदिनादारभ्येतिशेषः। पञ्चाहादित्या
दावप्येवमेवशेषोऽवगन्तव्यः। त्र्यहंविक्रेतृप्रतिदेयमित्यादिविधिदर्शनात्त्र्यहाद्दोह्यमित्यादिपरीक्षणंप्रीतिदोह्यादिद्रव्य
विषयमितिगम्यतइतिस्मृतिचन्द्रिकायाम्। दोह्यमहिष्यादिकम्। वाह्यम्बलीवर्द्दादिकम्। मुक्ताग्रहणंरत्नोपलक्षणम्
। द्विपदाम्पुंसान्दासानामित्यर्थः। तद्द्विगुणंमासेत्यर्थःस्त्रियादास्याइत्यर्थः। पूर्वोदाहृतचर्मकाष्ठेत्यादिव्यासवचनेनभक्ष
णाद्यर्थगृहीतानान्धान्यादीनांसद्यःपरीक्षणाभिधानात्सर्वबीजानामित्यत्रबीजशब्दोवाप्यर्थगृहीतधान्यपरः। अन्यथास

द्युः परीक्ष्यत्वप्रतिपादकयास्ववचनविरोधः स्यात् अतो वीक्ष्यहादेरभ्यन्तर इत्यर्थः । कात्यायनोऽपि । भूमेर्दशाहो ऽनुशयः क्रेतु र्विक्रेतुरेव चेति । भूमेर्गृहक्षेत्रादिरूपाया अनुशयः परावर्त्तनयोग्यः कालः परिक्षाकाल इति यावत् । यथोक्तपरीक्षाकाला त्तिक्रमे दोषदर्शनेन प्रतिदानमिथ्याह स एव । अविज्ञातन्तु यत्क्रीतन्दुष्टम्पश्चाद्विभावितम् । क्रीतन्तत्स्वामिने देयम्पण्यङ्का लेऽन्यथा नत्विति । अविज्ञातम्परिक्षाशेषित्वाभावतोऽपरिज्ञातम् । दुष्टं विभावितं दोषवत्तया ज्ञातमित्यर्थः । काले परीक्षा काले । अन्यथा तत्कालात्यये दुष्टतया परिभावितमपि तत्स्वामिने देयम् । अविज्ञातन्तु यत्क्रीतमित्यनेन यत्क्रयात्प्राक् अपरीक्ष्य क्रीतन्तत्परीक्षासमये दोषदर्शने परावर्त्तनीयम् । यत्तु परीक्ष्य गृहीतन्तन्न परावर्त्तनीयमिति दर्शितमर्थं नारद आह । क्रीत्वा नानुशयं कुर्य्याद्वणिक् पण्यविचक्षणः । क्षयं वृद्धिञ्च जानीयात्पण्यानामागमन्तथा ॥ क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः । परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत्पुनरिति ॥ अनुशयं पश्चात्तापम् । पण्यानां अश्वादीनां अस्मिन्देशे मूल्यहानिरस्मिन्देशे तदाधिक्यमिति क्षयवृद्धी एतद्देशसम्भवमित्यागमञ्च क्रयात्प्रागेव जानीयादित्यर्थः । दोषदर्शनमन्तरेणापरीक्षाकाल एव प्र त्यर्प्पणे विशेषमाह कात्यायनः । क्रीत्वा प्राप्तनुशयम्पश्चात्तत्यजेद्दोषाद्दृते नरः । अदुष्टमेव काले तु समूल्याद्दशमं वहेत् । क्रीत्वाग च्छन्ननुशयं कयीह समुपागते । षड्भागमस्य मूल्यस्य दत्वा क्रीतं त्यजेन्नर इति । अदुष्टमनभियुक्तम् । काले परीक्षाकाले । अत्र मूल्यदशमभागदानव्यवस्था उपभुज्यमानमपि न नश्यति भूम्यादिकन्तद्विषयं उपभोगविनश्वरबीजादिविषयं षड्भागदानमिति व्यवस्था ज्ञेया । ननु विज्ञानतोऽप्यनुशयो न कार्यः क्रीत्वा नानुशयं कुर्यादिति निषेधसद्भावादिति चेन्मैवं अपवादस्य सत्वात् स चापवादो दर्शितो नारदेन । क्रीत्वा मूल्येन यत्पण्यं दुःक्रीतं मन्यते क्रयी । विक्रेतुः प्रतिदेयन्तत्तस्मिन्नेवाह्न्यविक्षतमिति ॥ मन्यत इत्यनेन वस्तुतो दोषाभाव उक्तः द्वितीयादिदिवसप्रत्यर्प्पणे विशेषमाह स एव । द्वितीयेऽह्नि ददत्क्रेता मूल्यात्त्रिंशांशमाहरे त् । द्विगुणन्तत्तृतीयेऽह्नि परतः क्रेतुरेव तदिति ॥ परतः तृतीयादह्नः परतः क्रेतुरेव तत् क्रीत्वा अनुशयादिकं ज्ञानमपि न कुर्यादि

त्यर्थः। यत्तु मनुवचनं क्रीत्वा विक्रीय वा किञ्चिद्यस्येहानुशयो भवेत्। सोऽन्तर्दशाहात्तद्द्रव्यं दद्याच्चैवाददीत चेति। तदुपभोगेनश्वरक्षेत्रगृहयानशयनादिविषयम्। यत्तूपभोगेन सदोषमपि विकारं प्रापितं तत्परीक्षाकालमध्येऽपि न प्रतिदेयमित्याह नारदः। परिभुक्तं तु यद्वासः क्लिष्टरूपं मलीमसम्। सदोषमपि तत्क्रीतं विक्रेतुर्न भवेत्पुनरिति। वासोग्रहणमुपलक्षणमिति मदनरत्ने वासोविषयत्वैवास्येति माधवीये। पण्यानां देशकालज्ञ उपचयापचयौ ज्ञातव्याविन्याह नारदः। क्षयं वृद्धिं च जानीयात्पण्यानामागमं तथेति। अश्वादिपण्यानामस्मिन्काले ऽस्मिन्देशे च क्षयं वृद्धिं वा जानीयात्तथागमं कुलीनत्वादिज्ञानार्थं उत्पादकजन्मभूम्यादिकं च जानीयादित्यर्थः। क्रयकाले मूल्यक्षयवृद्धिदोषदर्शनमन्तरेण क्रीतविक्रीतयोः प्रत्यर्पणे पुनर्ग्रहणे दण्डमाह याज्ञवल्क्यः। वृद्धिं क्षयं वा वणिजा पण्यानामविजानता। क्रीत्वा नानुशयः कार्यः कुर्वन्षड्भागदण्डभागिति॥ वृद्धिं मूल्यवृद्धिं च विजानता क्रेत्रा। एवं मूल्यक्षयमविजानता विक्रेत्रेत्यर्थः। परीक्षाकालातिक्रमे प्रत्यर्पणे दण्डमाह मनुः। परेण तु दशाहस्य न दद्यान्नापि दापयेत्। आददानो ददच्चैव राज्ञा दण्ड्यः शतानि षडिति॥ दशाहग्रहणं परीक्षाकालस्य पूर्वोक्तस्योपलक्षणं। सर्वमेतत्परिभाषणे ऽपरिभाषणे तु तदनुसारेणैव प्रतिदानं तदभावादिकं मन्तव्यं। इति क्रीतानुशयाख्यव्यवहारपदं॥*॥

अथ विक्रियासम्प्रदानाख्यव्यवहारपदम्। तत्स्वरूपमाह नारदः। विक्रीय पण्यं मूल्येन क्रेतुर्यन्न प्रदीयते। विक्रीयासम्प्रदानं तद्विवादपदमुच्यत इति। तत्र विक्रेयद्रव्यस्य द्वैविध्यं षड्विधत्वं क्रमेणाह स एव। लोकेऽस्मिन्द्विविधं पण्यं जङ्गमं स्थावरं तथा। षड्विधस्तस्य तु बुधैर्दानादानविधिः स्मृतः। गणिमं तुलिमं मेयं क्रियया रूपतः श्रियेति। दानं विक्रयः। आदानं क्रयः। गणयित्वा यस्य क्रयो तद्गणिमम्। एवं तुलिमादि कं गणिमं संख्येयं क्रमुकफलादि कं तुलिमं तुलाधृतं हेमचन्दनादिकम्। मेयं व्रीह्यादिकम्। क्रियया वाहनदोहनादिरूपया युक्तमिति शेषः। रूपतः रूपेण युक्तं वस्तु पण्याङ्गनादि। श्रिया दीप्त्या युक्तं पद्मरागादिकम्। यदा विक्रेता मूल्यं गृहीत्वा याचमानाय क्रेत्रे विक्रीतं वस्तु न ददाति तदा यत्कर्तव्यं तदाह स एव। विक्रीय पण्यम्

स्येन क्रेतुर्यो न प्रयच्छति। स्थावरस्य क्षयं दाप्यो जङ्गमस्य क्रियाफलमिति। यो गृहीतमूल्यो विक्रेता अजातानुशयाय क्रेत्रे प्रा-
र्थ्यमानाय नार्पयति तत्पण्यं यदि स्थावरात्मकं तदा क्षयेण सहितमसौ दाप्यः। यदा तु जङ्गमात्मकं तदा क्रियाफलेन सहितं
इत्यर्थः। विक्रयानन्तरं ज्ञातमुपभोगोऽत्र क्षयः। क्रियाफलं दोहनादि क्रियाफलं क्षीरादिकम्। इदञ्च क्रयकालापेक्षया
अर्घक्षयसे मूल्याधिक्ये वेदितव्यम्। मूल्यह्रासे बन्धाभिधानात्। तथा च स एव। अर्थश्चेदवहीयेत सोदयं पण्यमावहेदि-
ति। अर्वाक्चेदपचीयेतेति कल्पतरौ पाठः॥ अर्वाक् विक्रीतस्य क्रेत्रे समर्पणात् पूर्वं अपचीयेत हीनमूल्यं भवेत् सोदयं पण्यमाव-
हेत्। विक्रयकाले यावन्मूल्यं गृहीतं तावता मूल्येनार्पणसमये मूल्यह्रासवशाद्यावदुपचयसहितं लभ्यते तावद्दद्यादित्यर्थः
। यदा तु मूल्यसाम्यं तदा पण्यस्योपचयरूपस्यासम्भवात्। निक्षेपं वृद्धिशेषञ्च क्रयं विक्रयमेव च। याच्यमानमदत्तञ्चेद्वर्धते पञ्चकं
शतमिति वचनोक्तवृद्धिसहितं पण्यं दाप्यः। अत एव याज्ञवल्क्यः। गृहीतमूल्यं यः पण्यं क्रेतुर्नैव प्रयच्छति। सोदयं तस्य दा-
प्योऽसौ दिग्लाभं वा दिगागते इति। गृहीतमूल्यं पण्यं विक्रेता यदि प्रार्थयमानाय स्वदेशवणिजे क्रेत्रे न समर्पयति तत्पण्यं य-
दि क्रयकाले यावन्मूल्यं तत्कालान्तरे अल्पमूल्येनैव लभ्यते तदा सोदयं वृद्ध्या सहितं विक्रेता क्रेत्रे दापनीयः। यदा मूल्यह्रासव-
नः पण्यस्योदयो नास्ति किन्तु क्रयकाले यावद्वेतनो मूल्यस्य यत्पण्यमिति प्रतिपन्नम्। तावदेव तदा तत्पण्यमादाय तस्मिन्देशे वि-
क्रीतस्य यो लाभस्तेनोदयेन सहितं दापनीयो वचनस्य यस्यार्थः। चतुर्थस्य तु यो देशान्तरात् क्रयार्थमागत्य क्रीतवांस्तस्मै दे-
शान्तरे तत्पण्यविक्रये यो लाभस्तेन सहितं तत्पण्यं दापनीय इत्यर्थः। देशान्तरलाभसहितपण्यदानं न केवलमागन्तुकस्यैव
। किन्तु मूल्यस्य वृद्धौ क्षयेऽपीत्याह नारदः। स्थायिनामेष नियमो दिग्लाभं दिग्विचारिणामिति। स्थायिनां विक्रेतृदेशस्थायिनां
एष नियमः स्थावरस्य क्षयं दाप्य इत्यादिवचनोक्तो नियम इत्यर्थः। विष्णुर्विक्रेतुर्दण्डमप्याह। गृहीतमूल्यं यः पण्यं क्रेतुर्नैव
दद्यात्तस्यासौ सोदयं दाप्यो राज्ञा च पणशतं दण्ड्य इति। एतच्चानुशयरहितक्रेतृविक्रेतृविषयमिति मदनरत्ने। यस्तु विक्री-

यानुशयवशान्नार्पयति यश्च क्रीत्वाऽनुशयवशान्न गृह्णातीति। प्राह कात्यायनः। क्रीत्वा प्राप्तं न गृह्णीयाद्यो न दद्याददूषितम्।
समूल्याद्दशभागन्तु दत्त्वा स द्रव्यमाप्नुयात्। अप्राप्तेऽर्थक्रियाकाले कृते नैव प्रदापयेत्। एष धर्मो दशाहात्तु परतोऽनुशयो न
त्विति। अदूषितं ज्वरादिनेति शेषः। दोह्यवाह्यादिपण्यस्य दोहनवाहनादिरूपः कालोऽल्पक्रियाकालस्तस्मिन्नप्राप्ते सति
ग्रहणेऽदाने वा कृते सति न दशमभागं प्रदापयेत् किन्तु तमदत्त्वैव स क्रीतद्रव्यं प्राप्नुयादिति। एष धर्मो दशाहात्प्राग्वेदि
तव्यः ततऊर्ध्वमनुशयो न कर्त्तव्यः। विक्रीयासम्प्रयच्छतो यद्धि क्रीतं पण्यं विक्रेतृपार्श्वे स्थितं तस्य यदि नाशः स्यात्तदा वि
क्रेतुरेव हानिरित्याह याज्ञवल्क्यः। राजदैवोपघातेन पण्ये दोषमुपागते। हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छत इति। अ
त्र याचितस्येति विशेषणोपादानाद्याचनाभावे न विक्रेतुर्हानिरित्यर्थाद्गम्यते। नारदोऽपि। उपहन्येत वा पण्यं दह्येतापह्रि
येत वा। विक्रेतुरेव सोऽनर्थो विक्रीयासम्प्रयच्छत इति॥ यथायाचितस्याप्रयच्छतो विक्रेतुर्हानिस्तथा दीयमानं पण्यमगृह्णतः क्रे
तुरपीत्याह स एव। दीयमानं न गृह्णाति क्रीतं पण्यञ्च यः क्रयी। स एवास्य भवेद्दोषो विक्रेतुर्योऽप्रयच्छतः इति॥ अप्रयच्छतः
विक्रेतुर्यो दोषः स एवास्य भवेदित्यन्वयः। क्रेतुर्दोषाभिधानस्य फलं पण्यस्य मूल्यं क्रेत्रे विक्रेत्रा न प्रत्यर्पणीयमिति। दीयमानम
गृह्णातीति वदता दीयमानग्रहणेन मूल्यहानिरिति दर्शितम्। क्रयानन्तरं क्रेत्रा नयाचितं विक्रेत्राचनसमर्पितं ज्ञातं चौ
राद्युपद्रवस्तत्र द्वयोः समा हानिः। क्रेतृविक्रेत्रोरुभयोरपि याचनानर्पणायोर्वैयर्थ्येन सापराधत्वादित्युक्तं देवणभट्टैः स्मृतिच
न्द्रिकायाम्। याज्ञवल्क्योऽपि। हानिश्चेत्क्रेतृदोषेण क्रेतुरेव हि सा भवेदिति। क्रेतृदोषो दीयमानस्याग्रहणं यच्च पुनर्जातानुश
यः। क्रेता विक्रेत्रा दीयमानं न गृह्णाति तत्राप्याह नारदः। दीयमानं न गृह्णाति क्रीत्वा पण्यं च विक्रयी। विक्रीणानस्तदन्यत्र
विक्रेता नापराध्नुयादिति। क्रयी जातानुशय इति शेषः। याज्ञवल्क्योऽपि। विक्रीतमपि विक्रेयं पूर्वं क्रेतर्यगृह्णतीति। यस्तु दु
ष्टं पण्यं दर्शयित्वा सदोषं विक्रीणीते यश्चान्यहस्ते विक्रीतं तत्क्रेत्रनुशयाभाव एवान्यत्र विक्रीणीते तयोः समानो दण्ड इत्याह

नारदः। निर्दोषन्दर्शयित्वातु सदोषंयःप्रयच्छति। समूल्याद्द्विगुणन्दाप्योविनयन्तावदेवतु॥ तथान्यहस्तेतुविक्रीययो न्यस्मैतत्प्रयच्छति। द्रव्यन्तद्द्विगुणन्दाप्योविनयन्तावदेवत्विति। याज्ञवल्क्योपि। अन्यहस्तेचविक्रीतंदुष्टंवादुष्टवद्यदि। विक्रीणीतेदमस्तस्यमूल्यात्तुद्विगुणोभवेदिति। बुद्धिपूर्वविषयमेतत्। ज्ञात्वासदोषंयःपण्यंविक्रीणीताविचक्षणः। तदेवद्द्विगुणन्दाप्यस्तत्समंविनयन्तथेतिबृहस्पतिनोक्तत्वात्। अबुद्धिपूर्वकविक्रयेतुक्रयपरावर्त्तनमेव। अन्यत्रापिविषयविशेषेपरावर्त्तनमाहबृहस्पतिः। मत्तोन्मत्तेनविक्रीतंहीनमूल्यंभयेनवा। अस्वतन्त्रेणमूढेनत्याज्यन्तस्यपुनर्भवेदिति॥ एतच्चवैदत्तमूल्येपण्येद्रष्टव्यम्। अतएवनारदः। दत्तमूल्यस्यपण्यस्यविधिरेषःप्रकीर्त्तितइति। यत्रपुनर्मूल्यंनदत्तंतत्रापिसएवाह। अदत्तेऽन्यत्रसमयान्नविक्रेतुरतिक्रमइति। अदत्तमूल्येतुपण्येवाङ्मात्रेणक्रयेकृतेनपरावर्त्तनीयमित्येवमादिसमयाभावेसतिप्रवृत्तानिवृत्तौनकश्चिद्दोषइत्यर्थः। यत्रपुनर्वाङ्मात्रक्रयपरिहारार्थंविक्रेतुर्हस्तेक्रेत्राकिञ्चिद्द्रव्यन्दत्तंतत्रक्रेतृदोषवशेनक्रयासिद्धौत्वाहव्यासः। सत्यंकारंचयोदत्वायथाकालंनदृश्यते। पण्यम्भवेन्निसृष्टन्तद्दीयमानमगृह्णतइति॥ निसृष्टंभवेत् उत्सृष्टम्भवेदित्यर्थः। अत्रपण्यद्रव्यस्योत्सर्गःसत्यंकारद्रव्योत्सर्गोभिमतः। अन्यथावाङ्मात्रक्रयकर्तृतुल्यत्वेनविक्रेतुःसत्यंकारद्रव्यग्राहकत्वस्यानमन्यत्रविक्रयणाद्यपराधनिमित्तकंसत्यंकारद्रव्यस्यद्वैगुण्येनप्रतिदानंनस्यात्। अत्रापिविक्रीतमविक्रेयमित्यनुसंधेयम्। अस्मिन्नेवविषयेविक्रेतृदोषवशेनक्रयासिद्धौत्वाहयाज्ञवल्क्यः। सत्यंकारकृतन्द्रव्यंद्विगुणम्प्रतिदापयेदिति। सत्यङ्कारःसत्यापनंकृतस्यक्रयस्यसत्यप्रतीकरणमितियावत्। क्लीवेसत्यापनंसत्यंकारःसत्याकृतिःस्त्रियामित्यमरकोशाभिधानात्। सत्यंकारायकृतंसमर्पितंसत्यंकारकृतंक्रयंसत्यंकर्तुंयद्विक्रेतृहस्तेकृतमित्यर्थः॥ इति विक्रीयासम्प्रदानाख्यव्यवहारपदम्॥०॥ अथस्वामिपालविवादाख्यव्यवहारपदम्। तत्रमनुस्तदभिधानप्रतिज्ञांकरोति। पशुषुस्वामिनांचैवपालानाञ्चव्यतिक्रमे। विवादंसम्प्रवक्ष्यामियथावद्धर्मतत्त्वतइति। स्वामिपालयोःप्रतिदिनकृत्यमाहनार

ष्टः। उपानयेद्गां गोपाय प्रत्यहं रजनीक्षये। चीर्णाः पीताश्च ता गोपः सायाह्ने प्रत्युपानयेदिति। चीर्णाः तृणादिकं भक्षितवतीः। पीताः पीतवतीः। स्वामिना प्रातर्यावन्तः समर्पितास्तावन्तो गोपालेन सायं प्रत्यर्पणीया इत्यर्थः। गोग्रहणम्पशुमात्रोपलक्षणार्थं। तथा च याज्ञवल्क्यः। यथार्पितान्पशून्गोपः सायम्प्रत्यर्पयेत्तथेति। गवादिपरिपालकस्य भृतिपरिमाणमाह नारदः। गवां शताद्वत्सतरी धेनुः स्याद्द्विशताद्भृतिः। प्रतिसंवत्सरं गोपे संदोहश्चाष्टमेऽहनीति। प्रतिसंवत्सरं संवत्सरे संवत्सरे गोशतपरिपालने वत्सतरी द्विहायनी गोर्भृतिः। द्विशतपरिपालने धेनुर्दोग्ध्री सवत्सेति यावत्। अष्टमे दिवसे सन्दोहः सर्वासाङ्गवां दोहश्च भृतित्वेन कल्पनीय इत्यर्थः। बृहस्पतिरपि। तथा धेनुभृतः क्षीरं लभेताष्टमेऽहनीति। धेनुभृतः धेन्वा भृतः द्विशतपालक इत्यर्थः। तथा च सन्दोहो धेन्वा समुच्चीयते न वत्सतर्येति मदनरत्ने। कल्पतरौ तु। धेनुभृतो गोपाल इति व्याख्यातं तेन वत्सतर्यापि समुच्चीयत इति गम्यते। गोग्रहणं महिष्यादीनामुपलक्षणं। न्यूनाधिकपरिपालनत्वे तदनुसारेण भृतिकल्पना द्रष्टव्या। इयञ्च वत्सतर्यादिभृतिकल्पना परिभाषितभृत्यभावविषया। परिभाषिते तु परिभाषानतिक्रमेणैव देया। मनुस्तु प्रकारान्तरेण भृतिपरिमाणमाह। गोपः क्षीरभृतो यस्तु स दुह्याद्दशतो वराम्। गोस्वाम्यनुमते भृत्यः सा स्यात्पालेऽभृते भृतिरिति। दशानां दोग्ध्रीणां मध्ये वरामुत्कृष्टां स्वीकृत्य तत्क्षीरभृतो भृत्यो गोपो दशदोग्ध्रीपालनकृद्गृह्णीयादित्यर्थः। सैषा भृतिः पूर्वं द्रव्यान्तरेणाभृते ज्ञेया। यस्तु द्रव्यान्तरेण भृतः न तत्रैव भृतिरित्यर्थः। यस्तु भृतिं गृहीत्वा पशून्मारयेत् विनाशयति वा तं प्रत्याह याज्ञवल्क्यः। प्रमादमृतनष्टांश्च प्रदाप्यः कृतवेतनः इति। प्रमादग्रहणम्पशुपालकदोषोपलक्षणार्थं। मनुना प्रमादनाशः स्पष्टीकृतः। नष्टं विनष्टं कृमिभिः श्वहतं विषमे मृतम्। हीनम्पुरुषकारेण प्रदद्यात्पाल एव त्विति। श्वहतम्। शुना हतम्। विषमे दुर्गमप्रदेशे। पुरुषकारः पुरुषप्रयत्नः। यत्पुरुषप्रयत्नेन हीनं सन्नाशादिकं प्राप्नुयात्तद्दातव्यमित्यर्थः। पुरुषकारश्च बृहस्पतिनारदाभ्यां स्पष्टीकृतः। कृमिचोरव्याघ्रभयाद्दरीश्वभ्राच्च पालयेत्। व्यायच्छेच्छक्तितः क्रोशेत्स्वामिने वा निवेदयेदिति। व्यायच्छेत् ...

स्तनाभावाययतेतेत्यर्थः । चौरैर्बलात्कारेणापहृतेनदाप्याइत्याहमनुः । विघुष्य तु हृतञ्चौरैर्नपालोदातुमर्हति । यदिदे
शे चकाले च स्वामिनः स्वस्य शंसतीति । विघुष्य शृङ्गकादिभिर्घोषंकृत्वा । देशे स्वाम्यवस्थानदेशे । काले अपहरणकाला
व्यवहितकाले । विषयविशेषे पशुपालस्य दण्डमाह व्यासः । गृहीतमूल्यो गोपालस्तांस्त्यक्त्वा निर्जले वने । ग्रामचारीन्वपैर्वा
ध्यःशताकोचवनेचरइति । शताकीनापितइतिकल्पतरौ । पुरुषेण प्रयत्नाकरणे दण्डमाह नारदः । स्वाचेद्द्रोव्यसनंगो
पोत्थायच्छेननशक्तितः । अशक्तस्तूर्णमागम्य स्वामिने चानिवेदयेत् । अव्यायच्छेत । विक्रोशन्स्वामिने चानिवेदयन् । वो
ढुमर्हति गोपस्तं विनयञ्चैव राजमोति । तञ्च वादिकम् । पशूनान्दैवान्मरणे पालकस्य दोषाभावज्ञानोपायमाह व्यासः । मृ
तेषु च विशुद्धः स्याद्वालशृङ्गादिदर्शनात् । आदिशब्देन कर्णादिनां ग्रहणम् । तथा च मनुः । कर्णौ चर्म च वालांश्च वस्तिंस्ना
युञ्च रोचनाम् । पशुषु स्वामिनान्दद्यान्मृतेष्वङ्गानि दर्शयेदिति । अङ्कादि दर्शयेदिति क्वचित्पाटः । अङ्कः शृङ्गकर्णादिरू
पश्चिह्नम् । आदिशब्दः साक्षिसंग्रहार्थः । पशुषु मृतेष्वङ्कादिकं स्वामिने दर्शयेत् । रोचनादिकं यत्प्रयोजनन्तत्तस्मै दद्या
दित्यर्थः । नष्टगवादिदानन्तु तत्स्वामिने मूल्यद्वारेण ज्ञातव्यम् । अत एव विष्णुः ॥ व्योको वा पशूनां वृकाद्युपघाते पाले त्वना
यति पालकदोषो विनष्टपशूनां मूल्यं स्वामिने दद्यादिति । अनायति । अनागच्छति । विनयद्रव्यप्रमाणमाह याज्ञवल्क्यः
। पालदोषविनाशे तु पाले दण्डो विधीयते । अर्द्धत्रयोदशपणः स्वामिनो द्रव्यमेव चेति । अर्द्धत्रयोदशपणः अर्द्धरहितत्र
योदशपणः ॥ सार्द्धद्वादशपण इति यावत् । तात्तृतीयपूर्वपदास्समानाधिकरणेन समस्यनाउत्तरपदलोपश्चेति वार्त्ति
कादुत्तरपदलोपी कर्म्मधारयः । यत्तु केनचिदर्द्धाधिकत्रयोदशपणो दण्ड इति व्याख्यातन्तत्सार्द्धद्विमासादिषु अर्द्धत्रिमा
सादि महाभाष्यकारशब्दप्रयोगदर्शनादुपेक्ष्यम् । पालदोषमाह मनुः । अजाविके तु संरुद्धे वृकैः पाले त्वनायति । यां प्रस
ह्य वृको हन्यात्पाले तत्किल्बिषम्भवेदिति । अनायति । उपद्रवनिवारणाय अनागच्छतीत्यर्थः । यां अजाविकजातीयाम् । सु

गमस्य तस्य विषयमेतत् । दुर्गमस्य तस्य विषये त्वाह स एव । नाशाच्छेदवरुद्धानाञ्चरन्तीनां मिथो वने । यामुत्प्लुत्य वृको
हन्यान्न पालस्तत्र किल्बिषीति । अवरुद्धानाम्पालकेन स्थापितानामित्यर्थः । गवादिप्रचारार्थम्भूमिमाह याज्ञवल्क्यः ।
ग्राम्येच्छया गोप्रचारो भूमिराजवशेन वा । ग्राम्येच्छया ग्रामीणजनवशेन राजेच्छया वा । गोप्रचारो गवां तृणादिभक्षणार्थं कि
यानपि भूभागोऽवसृष्टः परिकल्पनीय इत्यर्थः । गवां स्थानासनसौकर्य्याय ग्रामक्षेत्रयोरन्तरमाह स एव । धनुःशतम्परी
णाहो ग्रामक्षेत्रान्तरम्भवेत् । द्विशते खर्वटस्य स्यान्नगरस्य चतुःशतमिति । परीणाहशब्देनात्र सर्वासु दिक्षु अनुप्रभस्त
स्थलं गृह्यते । एतादृशन्धनुःशतम्परिमितं ग्रामक्षेत्रयोरन्तरं कार्यम् । खर्वटस्य शतद्वयपरिमितन्नगरस्य शतचतुष्टय
परिमितमित्यर्थः । खर्वटः अनेककारुकृषीवलयुक्तो ग्राम इति मदनरत्ने । माधवाचार्य्यैस्तु प्रचुरकण्टकसन्तानो ग्रा
म इति व्याख्यातम् । तत्र शस्योत्पत्तेः प्रागेवावरणं कार्य्यमित्याह कात्यायनः । अजातेष्वेव शस्येषु कुर्य्यादावरणं महत् ।
दुःखेन विनिवार्य्यन्ते लब्धस्वादुरसा मृगा इति । एवम्पशुनिवारणार्थं कृतेऽप्यावरणे तमतिक्रम्य पशुभिः शस्यादिविनाशे क
र्तव्यमाह मनुः । पथि क्षेत्रे परिवृते ग्रामान्तीयेऽथवा पुनः । सपालः शतदण्डार्हो विपालं वारयेत्पशुमिति । पथि क्षेत्रे
। मार्गसमीपक्षेत्रे । ग्रामान्तीये ग्रामसमीपवर्त्तिनि । सपालः पशुः पालः शतदण्डार्हः तत्पशुपालः पणशतं दण्डनीय इ
त्यर्थः । अयञ्च दण्डः पशुपालेन समर्थेन सता पशावनिवार्य्यमाणे वेदितव्यः । अत एव नारदः । उक्तमप्यनुवृत्तिं यः स्याच्छस्य
घाते गवादिभिः । पालः शास्यो भवेत्तत्र न चेच्छक्तो निवारयेदिति । आवरणाभावेनापरिहार्य्ये शस्योपघातेऽपि न पालस्य द
ण्डः । तथा च मनुः । तत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि । न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणामिति । अनेनावृत
क्षेत्रशस्योपघाते पशुरक्षिणां दण्ड इत्यर्थादुक्तम्भवति । अदीर्घकालप्रचारविषयमेतत् । दीर्घकालप्रचारे तु अपरिवृतेऽपि
पशुपालो दण्डार्हो भवति । अत एवाल्पकालप्रचारे दोषाभावं दर्शयति विष्णुः । पथि ग्रामविवीतान्ते न दोषोऽल्पकालमिति

। पशुविशेषेदण्डपरिमाणमाहयाज्ञवल्क्यः ॥ माषानष्टौतुमहिषीशस्यघातस्यकारिणी । दण्डनीयातदर्द्धंतुगौस्तदर्द्धम
जाविकं ॥ भक्षयित्वोपविष्टानांयथोक्ताद्द्विगुणोदमः । सममेषांविवीतेपिखरोष्ट्रंमहिषीसममिति ॥ परशस्यघातकारिण्या
महिष्याःस्वामीअष्टौमाषान्दण्ड्यः । गोःस्वामीचतुरः । छागस्वामीद्वौद्वौमेषस्वामीचद्वौद्वौ । एतेषांपशूनांसस्यभक्षणादारभ्य
तत्रैवउपविष्टानांस्वामीयथोक्तदण्डाद्द्विगुणन्दण्डंदाप्यः । विवीतस्थतृणाद्युपघातेपिशस्योपघातवद्दण्डनीयः । खरस्वाम्यु
ष्ट्रस्वामीमहिषीस्वामीवद्दण्डनीयः । अत्रपशुस्वामिनोदण्डइत्यभिधानतएवमहिष्यादिग्रहणम्प्रतिपशुदण्डप्राप्त्यर्थम् । भ
क्षयित्वोपविष्टस्यवत्सविषयेयथोक्ताच्चतुर्गुणोदण्डः । तथाचस्मृत्यन्तरम् । वत्सतोद्विगुणाःप्रोक्ताःसवत्सानाञ्चतुर्गुणाइति ।
अत्रापराधानुसारेणदण्डनार्थंतान्त्रिकमाषोग्राह्यःनपुनःसौवर्णोराजतोवेतिस्मृतिचन्द्रिकायाम् । तान्त्रिकमाषश्चकर्षपरिभा
षितस्यकार्षात्षोडशोभागोभवति । अयमेवपणस्यपञ्चवापिप्रकीर्त्तिताइतियाज्ञवल्क्योक्तपञ्चसुवर्णपरिमितत्वपक्षेपणश्चतु
र्थांशस्यचर्विंतिमाषात्मकार्षापणस्यमाषोविंशतितमोभागःपणस्यपरिकीर्त्तितइतिनारदोक्तोविंशोभागोपिभवति । एतेनस्मृति
चन्द्रिकायाम् । अपराधानुसारेणदण्डनार्थंमाषोविंशतितमोभागःपणस्यपरिकीर्त्तितइतिनारदोक्तोमाषःकैश्चिन्लौकिकइत्येकीय
मतत्वेनोपन्यस्यसंस्कारभिन्नरजोमूलामनुनासमुदाहृताकार्षापणानामादिर्व्येतियोज्याविनयेतथेतिबृहस्पतिवचनविरोधेनदू
षितन्तदुभययाप्यर्थभेदाभावेनविरोधाभावान्निरस्तंमन्तव्यम् । यत्तुमनुनोक्तंसपादम्पणमर्हतीतितत्स्वामिमतिपूर्वंपशुव्यति
क्रमविषयम् । याज्ञवल्क्यवचनन्त्वबुद्धिपूर्वविषयमितिनतयोर्विरोधः । यत्तुपणस्यपादौद्वौगान्तुद्विगुणंमहिषीन्तथा । तं
थाजाविकवत्सानांपादोदण्डःप्रकीर्त्तितइतिस्मृत्यन्तरन्तद्भक्षयित्वोपविष्टगवादिविषयम् । यत्पुनर्नारदेनाभिहितं । मा
षञ्चान्दापयेद्दण्डंद्वौमाषौमहिषीन्तथा । तथाजाविकवत्सानांदण्डःस्यादर्द्धमाषिकइतितन्मुहूर्त्तमात्रभक्षणविषयंअतए
वाहतुःशङ्खलिखितौ । सत्रीचरन्तीगोःपञ्चमाषान्दिवारात्रौमुहूर्त्तमाषंग्रासेत्वदण्डमिति । ग्रासेत्वदण्डइत्यस्यायमर्थः । म

हिंस्यादिभिःपरशस्येषुकवलमात्रभक्षणे कथञ्चित्कृते पालस्वामिनोर्वा स्वल्पोऽपि दण्डो नास्तीति। आतुरपशुविषयेऽवक्रमस्य नाशेऽप्येवमेव दण्डाभावप्रतिपादनमुखेनाह नारदः॥ राजग्रहगृहीतो वा वज्राशनिहतोऽपि वा। अथ सर्पेण वा दष्टो वा वृक्षाद्वा पतितो भवेत्। व्याघ्रादिभिर्हतो वापि व्याधिभिर्वाप्युपद्रुतः। न तत्र दोषः पालस्य न च दोषोऽस्ति गोमिनामिति। गोमिनां गोस्वामिनाम्। आतुराणामनिवार्यत्वादित्यभिप्रायः। अनातुराणामपि केषाञ्चित्पशूनां दण्डाभावमाह स एव। गौः प्रसूता दशाहानु महोक्षा वाजिकुञ्जराः। निर्धार्याः स्युः प्रयत्नेन तेषां स्वामी न दण्डभागिति। दशदिनपर्यन्तं प्रसूतायानिरोद्धुमशक्यत्वान्न स्वामी दण्डभाक्। महोक्षस्य सर्वासाङ्गर्भाधानार्थं सर्वदा बन्धनायोगात् तत्स्वामी न दण्डभाक्। वाजिकुञ्जराणां स्वामी नोऽदण्डभागित्वे हेतुमाहोशना। अदण्ड्या हस्तिनो ह्यश्वाः प्रजापाला हि ते स्मृता इति। स्वामिग्रहणं पालकस्याप्युपलक्षणार्थम्। यदाह मनुः। अनिर्दशाहां गां सूतां वृषान्देवपशूंस्तथा। सपालान्वा विपालान्वा अदण्ड्यान्मनुरब्रवीदिति। वृषा महोक्षाः। यद्वा वृषोत्सर्गविधानेनोत्सृष्टाः। देवपशवः देवालयेषु देवोपभोगार्थं स्थापिताः पशवः। याज्ञवल्क्योऽपि॥ महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः। पालो येषां न ते मोच्याः दैवराजपरिप्लुताः। अनिर्दशाहा आगंतुकः स्वयूथात्परिभ्रष्टः सन्देशान्तरात्समागतः। येषाम्पालो नास्ति तेऽपि दैवराजोपहताः सस्यादिनाशकारिणो न दण्ड्या इत्यर्थः। आदिशब्देन मृतवत्सादीनां ग्रहणम्। अत एवोशना। अदण्ड्या मृतवत्सा च संज्ञा रोगवती कृशा। अदण्ड्याः काणकूटाश्च वृषाश्च कृतलक्षणाः। अदण्ड्यागन्तुका गौश्च सूतिका चाभिसारिणीति। कूटः एकशृङ्गः। कृतलक्षणाः प्रतप्तायसेन कृतलाञ्छनः। अभिसारिणी स्वयूथात्प्रच्युता पुनः स्वयूथगामिनी परशस्यविनाशेन केवलम्पशुस्वामी दण्डनीयः सदमपि दापनीय इत्याह बृहस्पतिः। शस्याग्निवारयेद्गांस्तु चीर्णे दोषो द्वयोर्भवेत्। स्वामी सदण्डमन्याप्यः पालस्ताडनमर्हतीति। सदश्च समश्च सदसमम्। समूलशस्यनाशविषयमेतत्। अत एव नारदः। समूलशस्यनाशे तु तत्स्वामी प्राप्नुयात्सदम्। वधेन गोर्योमुच्येत दण्डं स्वामिनि पातयेदिति।

तत्स्वामी गोस्वामी स दण्डं प्राप्नुयात् । पशुस्वामिनः सकाशादिति शेषः । वधोऽत्र कशादिना ताडनम् । न प्राणच्छेदः । पाशस्ताडनमर्हतीति वचनात् । स दण्डः सामन्तादिभिः परिकल्पितो देयः । अत एव स एवाह । गोभिस्तु भक्षितं सस्यं यो नरः प्रतियाचते । सामन्तानुमतं तत् स्याद्धान्यं यत्तत्र वापितमिति । यत्तु सदण्डवचननिषेधकं । गोभिर्विनाशितं धान्यं यो नरः प्रतियाचते । पितरस्तस्य नाश्नन्ति न वा पिबन्ति दिवौकस इत्युशनो वचनं तद्ग्रामादिसमीपस्थानावृतक्षेत्रविषयमिति माधवाचार्याः । श्राद्धकालादौ गोभक्षितविषयमिति मदनरत्नकृतः । सर्वासामेव गवामुत्सवे श्राद्धदिवसे वा दण्डाभावमाह स एव । अदण्ड्या हस्तिनो गावः श्राद्धकाले तथैव चेति । गोभिः श्राद्धकालादौ भुक्तमति श्रेयस्करं मिथ्याशयेनाप्युच्यासः । आचारस्य पद्धे जैर्भुक्तं परिरक्षीयाद्वाचाद्यैः । गोभिस्त्वनरशार्दूल वाजपेयादिविशिष्यत इति । एतत्पदमुपसंहरति मनुः । एतद्विधानमातिष्ठेद्धार्मिकः पृथिवीपतिः । स्वामिनाञ्च पशूनाञ्च पालानाञ्च व्यतिक्रमे इति ॥ इति स्वामिपालविवादाख्यव्यवहारपदम् ॥ ● ॥ अथ सीमाविवादाख्यव्यवहारपदम् ॥ तत्स्वरूपमाह नारदः । सेतुकेदारमर्यादाविकृष्टाकृष्टनिश्चयः । क्षेत्राधिकारो यत्र स्याद्विवादः क्षेत्रजस्तु सः ॥ तस्यार्थः सेतुर्जलप्रवाहबन्धः । केदारः क्षेत्रं । मर्य्यादा सीमा । विकृष्टो लाङ्गलप्रहतो देशः अकृष्टस्तद्रहितः एतेषां निश्चयो यत्र विवादे स्यात्सक्षेत्राधिकारः क्षेत्रविषयको विवादः क्षेत्रज उच्यत इति । अयं विवादः षड्विधः तथा च कात्यायनः । आधिक्यं न्यूनता चांशे अस्ति नास्तित्वमेव च । अभोगभुक्तिः सीमा च षड्भूवादस्य हेतवः । ममैतावती भूरस्तीत्युक्तेऽनेनेति विवाद आधिक्यविवादः एतावती भूस्तवेत्युक्ते ममैतावतीति यो विवादः स न्यूनताविवादः अत्र ममांशोऽस्तीत्युक्ते सति यो विवादः सोऽस्तित्वविवादः अत्र तवांशो नास्तीत्युक्ते विद्यत इत्येवंविधो विवादो नास्तित्वविवादः । सीमाविवाद इति षड्विधो विवाद इत्यर्थः । तत्र सीमा चतुर्विधा । देशसीमा ग्रामसीमा क्षेत्रसीमा गृहसीमा चेति । तस्याश्चतुर्विधाया अपि यथासम्भवं पञ्चविधत्वमाह नारदः । ध्वजिनी मत्स्यिनी चैव नैधानी भयवर्ज्जिता । राजशासननीता च सीमा पञ्चविधा स्मृता । ध्वजिनी वृक्षादिचिह्नता । व

क्षाश्वत्थन्यग्रोधादयः । तदाह मनुः । सीमावृक्षांस्तु कुर्वीत न्यग्रोधाश्वत्थकिंशुकान् । शाल्मलीन्सालतालांश्च क्षीरिणश्चैव पा
दपानिति । मल्लिनी जलचिह्निता । नैधानी निखाततुषांगारादिलक्षिता । भयवर्जिता । अर्थिप्रत्यर्थिपरस्परसम्प्रतिपत्ति
निर्म्मिता । राजशासननीता । ज्ञातृचिह्नाद्यभावे राजेच्छया निर्म्मिता । तथा च व्यासः । ग्रामयोरुभयोः सीम्नि वृक्षा यत्र समुन्न
ताः । समुच्छ्रिता ध्वजाकारा ध्वजिनी सा प्रकीर्त्तिता । स्वच्छन्दगा बहुजला झषकूर्मसमन्विता । नित्यप्रवाहिणी यत्र सीमा साम
त्स्यिनी मता । तुषांगारकपालैस्तु कुम्भैरायतनैस्तथा । सीमा प्रचिह्निता यत्र नैधानी सा निगद्यते इति । नित्यप्रवाहिणीत्यनेन कू
पवाप्यादीनि प्रकाशचिह्नान्युपलक्ष्यन्ते । तानि च बृहस्पतिना दर्शितानि । वापीकूपतडागानि चैत्यारामसुरालयाः । स्थल
निम्नं नदीस्रोतः शरगुल्मनगादयः । प्रकाशचिह्नान्येतानि सीमायां कारयेत्सदा । निहितानि तथान्यानि यानि भूमिर्न भक्षयेत्
। अश्मनोऽस्थीनि गोवालांस्तुषान्भस्मकपालिकाः । करीषमिष्टकांगारशर्करावालुकास्तथा । तानि संधिषु सीमायामप्रका
शानि कारयेत् । चैत्यं इष्टकादिभिः रचितस्तम्बरादिकम् । स्थलं उन्नतो भूप्रदेशः । निम्नं परिखा । नगा अश्वत्थादयो वृक्षाः
। आदिशब्देन मार्गादीनां कार्षापणबीजानामादृश्यपदार्थानाम् । अस्थीनि पशुमनुष्याद्यस्थीनि । तुषांगारकपालैरिति करीषादीनामप्र
त्येषां लिङ्गानामप्युपलक्षणम् । तानि धापयेत् । तत्र योगमनुपालानां प्रयत्नेन प्रदर्शयेत् । वार्द्धके च शिशूनां तान्दर्शयेत्तथैव
च ॥ एवं परम्पराज्ञाने सीमाभ्रान्तिर्न जायत इति । प्रदर्शयेदिति छन्दःसमत्वादेकवचनम् । एतेषां लिङ्गानां कथंचिद
भावे निश्चयोपायमाह नारदः । निम्नगापहृतोत्सृष्टनष्टचिह्नासु भूमिषु । तत्प्रदेशानुमानैश्च प्रमाणैर्भोगदर्शनैः ॥ निम्नगा
या नद्या अपहृते मत्रापहरणेनोत्सृष्टानि स्वस्थानाद्भ्रष्टानि चिह्नानि यासां तास्तथोक्ताः । प्रमाणैः साक्षिसामन्तादिभिः । ए
वं निह्नुतैर्लिङ्गैर्निर्णयं कुर्यादित्याह मनुः । एतैर्लिङ्गैर्नयेत्सीमां राजा विवदमानयोः । यदि संशय एव स्याल्लिंगानामपि द
र्शने । साक्षिप्रत्यय एव स्यात्सीमावादविनिर्णयः । साक्षिप्रत्ययः साक्षिहेतुकः । लिङ्गाभावपक्षपरिग्रहार्थोऽपिशब्दः । तै

मिश्रमेलयित्वा । मौलादीनाश्च लक्षणान्दर्शितङ्कात्यायनेन । ग्रामेतत्रपूर्वेसामन्ताःपश्चाद्देशान्तरङ्गताः । तन्मूलत्वात्तुनेमौ लास्तर्षिभिःपरिकीर्त्तिताः ॥ निष्पाद्यमानंयैर्दृष्टन्तत्कार्य्यलेख्यसमन्विते । वृद्धावायदिवावृद्धास्तेचवृद्धाःपरीकीर्त्तिताः ॥ न्वगुणान्वितैःपुरुषगुणान्वितैः । बाकारोऽनास्थायांवयोवृद्धत्वस्याप्रयोजकत्वात् । येपरम्परयाकार्यज्ञातारस्तेउद्धृताइत्या शयः । तथाचसंसक्तसंसक्तेषुस्फुटदोषदुष्टेषुपूर्वसामन्ताद्युपेतनागारिकयाम्यजनश्रेणिवयोवृद्धदर्शितैःसम्यक्‌लिंगैःसी मानिर्णयःकार्य्यः । यदातुप्रतिवादिनासामन्तेषुकश्चिद्दोषउद्भावितःतेचनप्रकटदोषयुक्तास्तदोक्तोविशेषोमनुना । साम न्ताःसाधनंपूर्वमनिष्टोक्तौगुणान्विताः । द्विगुणास्तूत्तराज्ञेयाःपश्चात्येत्रिगुणामताः । अनिष्टोक्तौप्रतिवादिनागुप्तदोषाभि धानेतत्सामन्तास्ततोद्विगुणायाह्यास्तेष्वपिदोषाभिधानेतत्सामन्तास्तेभ्योद्विगुणायाह्याः तत्रापितथात्वेमौलवृद्धादयःसाम न्तत्रिगुणायाह्याइत्यर्थः । साक्ष्यादीनामेतेषांयदाभावस्तदाहमनुः । सामन्तानामभावेतुमौलानांसीम्निसाक्षिणाम् । इमानप्यनुयुञ्जीतपुरुषान्वनगोचरान् । व्याधान्शाकुनिकानगोपान्कैवर्त्तान्मूलखानकान् । व्यालग्राहानुञ्छवृत्तीनन्यां श्चवनगोचरान् । वनगोचराणांग्रहणांसीमासन्निहितदेशकर्षकाणामस्त्वेविज्ञेयम् । अतएवोक्तन्नारदेन । सीमासुचव हिर्येस्युर्येपितत्कृषिजीविनः । गोपाःशाकुनिकाव्याधायेचान्येवनगोचराइति । अत्रचसर्वत्रस्थावरविवादेसेत्वादिविवादे चसामन्तादयोनिर्णायकाः तथाचकात्यायनः । तेषामभावेसामन्तामौलवृद्धोद्धृतादयः । स्थावरेषट्प्रकारेपिकार्य्यांना त्रविचारणा । क्षेत्रवास्तुतडागेषुआरामवनसेतुषु । समेतभावात्सामन्तैःकुर्यादत्रविनिर्णयम् । ग्रामसीमासुचतथातद्वन्न गरदेशयोः । तेषांसाक्षिणाम् । याज्ञवल्क्योपि । आरामायतनग्रामनिपानोद्यानवेश्मसु । एषएवविधिर्ज्ञेयोवर्षाम्बुप्रवहा दिषु । आयतनन्निवेशनन्निपानंपानीयस्थानंवर्षाम्बुप्रवहोवृष्ट्युद्भूतजलप्रवाहः पुनःकात्यायनोपि । क्षेत्रकूपतडागानांके दारारामयोरपि । गृहप्रसादावसथन्टपदेवगृहेषुच । केदारःक्षुद्रसेतुयुक्तःक्षेत्रविशेषः । गोबलीवर्दन्यायेनभिन्नोक्तिःप्र

साद:प्रसदः ॥ वृहस्पतिरपि। सर्वत्रस्थावरेवादेविधिरेषाप्रकीर्त्तिता। राज्ञायामीणामांवादिप्रतिवादिनोस्वसमक्षंसामन्तांद
यःप्रष्टव्याःतैर्व्यदुक्तन्तत्पत्रेलेखनीयमित्याहमनुः। यामीयककुलानान्तुसमक्षंसीम्निसाक्षिणः। प्रष्टव्यास्सीमलिङ्गानितयोश्चै
वविवादिनोः॥ तेपृष्टास्तुयथाब्रूयुस्समस्ताःसीम्निनिर्णयम्। निवध्नीयात्तथासीमांसर्वांस्तांश्चैवनामतः॥ सीमलिङ्गसाक्ष्यभि
प्रायेणसीमलिंगानीत्युक्तम्। सीमासाक्षिणस्तुसीमांब्रूयुः। तथाचवृहस्पतिः। शपथैःशापिताःस्वैःस्वैर्ब्रूयुःसीमाविनिर्णयम्।
दर्शयेयुश्चलिङ्गानितत्प्रमाणमितिस्थितिः॥ स्वैःस्वैः। सत्येनशापयेद्विप्रंक्षत्रियंवाहनायुधैरित्यादिनोक्तशपथस्थानतिक्रमेणे
त्यर्थः। यदातुयेसीमालिङ्गसाक्षिणःसीमाचिह्नानिदर्शयितुन्नशक्नुवन्तिकेवलंसीमामात्रंजानन्तितदातेकथंब्रूयुरित्याकांक्षा
यामाहमनुः। शिरोभिस्तेगृहीत्वोर्वीस्रग्विणोरक्तवाससः। सुकृतैःशापिताःस्वैःस्वैर्नयेयुस्तेसमञ्जसमिति॥ उर्वीम्मृदम्।
सीमाक्रमणाद्इतिशेषः। नयेयुरिदंद्वयोर्निरसार्थेवक्तुवचनन्नत्वेकस्य। नारदेन। एकश्चेदुन्नयेत्सीमांसोपवासःसमु
न्नयेत्। रक्तमाल्याम्बरधरोभूमिमादायमूर्द्धनीति॥ एकस्याप्यनुज्ञानात्। वृहस्पतिरपि। ज्ञातृचिह्नैर्विनासाधुरेकोप्युभय
संमतः। रक्तमाल्यांवरधरोमृदमादायमूर्द्धनि॥ सत्यव्रतस्सोपवासःसीमान्तान्दर्शयेन्नरः। ज्ञातृचिह्नैर्विनासीमायाःज्ञातृणां
लिङ्गानाञ्चासत्वे। ननुकथमेकस्यसीमानिर्णायकत्वन्नैकःसमुन्नयेत्सीमान्नरःप्रत्ययवानपि। गुरुत्वादस्यकार्यस्यक्रियैषावहुषु
स्थिताइत्येकस्यनारदेननिषेधादितिचेन्नैवम्। सतुभयानुमतधर्मविज्ञातिरिक्तविषयइतिमकाप्यनुपपत्तिः। अयञ्चनि
र्णयःसीमाक्रमणदिनादारभ्यपक्षत्रयपर्य्यन्तंसाक्षिसामन्तादीनान्दैविकराजिकोपद्रवाभावेऽवसेयःनतुसीमाक्रमणाव्यव
हितोत्तरमेव। तथाचकात्यायनः। सीमाचंक्रमणेकोशेपादस्पर्शेतथैवच। त्रिपक्षपक्षसप्ताहन्दैवराजिकमिष्यते। यथासंख्यमि
तिशेषः। यदातुसाक्ष्यादीनाम्पक्षत्रयाभ्यन्तरेदैविकराजिकोपद्रवःअन्यथावामिथ्यावादित्वनिश्चयस्तदातेपणाद्यनन्तरदण्ड
मप्रत्येकंदाप्याः। तथाचमनुः। यथोक्तेननयन्तस्तेपूयन्तेसत्यसाक्षिणः। विपरीतन्नयन्तस्तुदाप्याःस्युर्द्विशतन्दमम्। य

S 3

थोक्तेनशिरोभिस्तेगृहीत्वोर्वीं मिथ्यादिनोक्तप्रकारेणानयन्तोनिर्णयंकुर्वन्तःयथाभूतेनार्थेनेतिशेषः। द्विशतंपणाशतद्वयम्। पणाशतद्वयन्दण्डम्प्रत्येकम्। यथोक्तेनशिरोभिस्तेगृहीत्वोदाप्याइत्यर्थः। सामन्तानांमिथ्यावादित्वेसङ्गामध्यमसाहसविज्ञ त्वेनदण्डेनदण्डनीयाः। तथाचाहयाज्ञवल्क्यः। अनृतेतुपृथक्दण्ड्याराज्ञामध्यमसाहसम्। सामन्तायद्यनृतंमिथ्याभूतंसीमानिर्णयंकुर्युःतदामध्यमसाहसंकार्षापणानांचत्वारिंशत्अधिकानिपञ्चशतानिदण्डनीयाः। नारदोपि। अथ चेदनृतंब्रूयुःसामन्ताःसीम्निनिर्णये। सर्वेपृथक्पृथक्दण्ड्याराज्ञामध्यमसाहसं॥ सामन्तव्यतिरिक्तानान्तत्संसक्तादीनांमिथ्यावादित्वेपूर्वसाहसाख्येनदण्डेनप्रत्येकन्तेदण्डनीयाः। तथाचनारदः। शेषाश्चेदनृतंब्रूयुर्नियुक्ताभूमिकर्मणि। प्रत्येकन्तुजघन्यास्तेविनेयाःपूर्वसाहसमिति। मौलादीनामनृतवादित्वेतमेवदण्डंसएवाह। मौलवृद्धादयश्चान्येदण्डनीयाःपृथक्पृथक्। विनेयाःप्रथमेनैवसाहसेनानृतेस्थिताइति। आदियहणेनगोपशाकुनिकादिवनगोचराणांग्रहणम्। दण्डनीयाःमिथ्यावादित्वेनदण्डयितुमर्हाःमौलवृद्धादयःपृथक्पृथक्प्रथमेनसाहसेनविनेयादण्ड्याइत्यर्थः। यद्यपिसामन्तादीनांसाक्ष्यपेक्षयादण्डाल्पत्वमुक्तन्तथापितेषाम्वाचनिकन्दण्डाधिक्यमितिनकोपिदोषः। यद्यपिशाकुनिकादयोबहुधापापरतत्वाल्लिङ्गप्रदर्शनोपयोगेनान्यथाविद्वानसाक्षात्सीमानिर्णयेउपयुज्यन्तेतथापिवृक्षादिलिङ्गप्रदर्शनएवमिथ्याभावितत्वेसंभवात्तदभिप्रायेणैवदण्डविधानम्। लोभादिनाभेदेनोक्तौअनुक्तौचसाक्ष्यादीनादण्डमाहकात्यायनः। बहूनान्तुगृहीतानान्नसर्वैर्निर्णयंयदि। कुर्युर्भयाद्वालोभाद्वादाप्यास्तूत्तमसाहसं। एवमज्ञानादिनाअनृतवचनेसाक्ष्यादीन्दण्डयित्वापुनःसीमाविचारःप्रवर्तयितव्यः। तथाचसएवाह। अज्ञानोक्तौदण्डयित्वापुनःसीमांविचारयेत्। कीर्तितेयदिभेदःस्याद्दण्ड्याउत्तमसाहसम्। साक्ष्यादीनांसर्वेषांअज्ञानोक्तौभेदेनोक्तौचपुनर्विचारणांलेख्यप्रमाणेनकर्तव्यम्। अतएवशंखलिखितावपि। सामन्तविरोधेलेख्यप्रत्ययइति। यदापुनःसामन्तप्रभृतयोज्ञातारश्चिह्नानिचनसन्तितदाराजालेख्ययानिर्णयंकुर्या

न्। तथा च याज्ञवल्क्यः। अभावे ज्ञातृचिह्नानां राजा सीम्नः प्रवर्त्तिता। ज्ञातॄणां सामन्तादीनां लिंगादीनाञ्च वृक्षादीनामभावे रा
जैव स्वातन्त्र्येण सीमानम्प्रवर्त्तयेत्। नारदोऽपि। यदा च न स्युर्ज्ञातारः सीमायाश्चापि लक्षणम्। तदा राजा द्वयोः सीमामुन्नयेदि
ष्टतः स्वयम्॥ इष्टतः इच्छया सार्वविभक्तिकस्तसिः। ग्रामद्वयमध्यवर्त्तिनीं विवादास्पदीभूताम्भुवं समम्प्रविभज्यास्ये यम्भू
रित्युभयोः समर्प्य तन्मध्ये सीमालिंगानि कुर्य्यात्। यदा तस्यां भूमावुपकारातिशयो दृश्यते तदा तत्रैव साकल्येन भूमिं योजनीया
न तूभयत्र। तथा च मनुः। सीमायामविषह्यायां स्वयं राजैव धर्मवित्। प्रदिशेद्भूमिमेतेषामुपकारादिति स्थितिरिति। अविष
ह्यायां ज्ञातृचिह्नरहितायाम्। प्रदिशेत् प्रवेशयेदित्यर्थः। अयञ्च निर्णयो राज्ञा निर्णयान्तरं बदव्यवच्छिन्नोऽपरमेव न कर्त्त
व्यः किन्तु सीमालिंगानि यदा स्थावरकाद्यभावात् स्फुटं दृश्यन्ते तदा कर्त्तव्यः तथा च मनुः। सीमाम्प्रति समुत्पन्ने विवादे ग्रामयोर्द्व
योः। ज्येष्ठे मासि नयेत्सीमां सुप्रकाशेषु सेतुषु॥ द्वयोर्ग्रामाधिपयोर्विवादे सीमां प्रति समुत्पन्ने ज्येष्ठे मासि ग्रीष्मे उपलक्षणं मासान्तरे
ऽपि सेतुभृतिषु सीमालिंगेषु व्यक्तेषु विवादाध्यासितां सीमान्निर्णयेदित्यर्थः। ग्रामग्रहणं नगरादेरुपलक्षणार्थं। अत एव कात्या
यनः। सामन्ताश्चेत्सामन्तैः कुर्यात् क्षेत्रादिनिर्णयम्। ग्रामसीमादिषु तथा तद्वन्नगरदेशयोरिति। यदा पुनर्ग्रामादीनां सी
मात्वेन परिकल्पिता नदी कदाचित् ग्रामान्तरम्भित्वा प्रवर्त्तते तौ दक्षिणभागे स्थितां पूर्वं कांचिद्भूमिं वामभागनिविष्टां करोति तथा
यत्रैकग्रामसम्बन्धिनी भूरन्यत्र राज्ञा योज्यते तत्र निर्णयोपायमाह बृहस्पतिः। अन्यग्रामात्समाहृत्य दत्तान्यस्य यदा मही। म
हानद्याथ राज्ञा च कथं तत्र विचारणा। नद्योत्सृष्टा राजदत्ता यस्य तस्यैव सा मही। अन्यथा न भवेल्लाभो नराणां राजदैविकः॥
क्षयोदयौ जीवनञ्च दैवराजवशान्नृणाम्। तस्मात्सर्वेषु कार्य्येषु तत्कृतं न विचालयेत्॥ न च नदीकृतस्य दैवकृतत्वाभावः शङ्क
नीयः। दैवशब्दस्य भाग्यवाचित्वान्नदीकृतमपि दैवकृतम्भवत्येव। तथा चाह स एव। ग्रामयोरुभयोर्यत्र मर्यादाकल्पिता न
दी। कुरुते दानहरणं भाग्याभाग्यवशान्नृणाम्॥ एकत्र कूलपातन्तु भूमेरन्यत्र संस्थितिम्। नदीतीरे प्रकुरुते तस्मात्तान्न

विचालयेत्। तस्य नदीवशात्प्राप्तभूमिकस्य तां प्राप्तां भूमिं न विचालयेत्। नान्यथा कुर्यात्पूर्वस्वामीनापच्छिंद्यादित्यर्थः। स्यं तदनुपन्नसस्यतीरविषयम्। उपन्नसस्यविषये पुनः स एवाह। क्षेत्रं च सस्यमुल्लंघ्य भूमिश्छिन्ना यदा भवेत्। नदीस्रोतःप्रवाहेण पूर्वस्वामी लभेत ताम्। तां सस्यां भूमिं पूर्वस्वामी यावदुत्पन्नस्य शस्यफलप्राप्तिस्तावल्लभेतेत्यर्थः। फलप्राप्तेरूर्ध्वं पुनः पूर्ववचनविषयसमानता। राजदत्तविषये कंचित्प्रतिप्रसवमाह स एव। या राज्ञा क्रोधलोभेन छलन्यायेन वा हृता। प्रदत्तान्यस्य तुष्टेन न सा सिद्धिमवाप्नुयात्॥ स्वत्वहेतुप्रतिग्रहादिलब्धक्षेत्रविषयमेतत्। स्वत्वहेतुप्रतिग्रहादिप्रमाणाभावे पुनः स एवाह। प्रमाणरहितां भूमिं भुञ्जानो यस्य या हृता। गुणाधिकाय वै दत्ता तस्य तां न विचालयेत्॥ प्रमाणरहितां स्वत्वहेतुप्रतिग्रहादिप्रमाणरहिताम्। गृहादिविषयकं निर्णयमाह स एव। निवेशकालादारभ्य गृहचर्यापणादिकम्। येन यावद्यथाभुक्तं तस्य तन्न विचालयेत्॥ येन स्वामिना यावत्प्रचारभूम्यादियुक्तं यथा येन पूर्वादिदिगभिमुखद्वारादियुक्तत्वादिरूपेणोपभुक्तं तस्य स्वामिनः सकाशान्न विचालयेत् नान्यथा कुर्यादित्यर्थः। स च निवेशकालादारभ्येत्यभिधानान्मध्ये कृताया व्यवस्थाया निवर्त्यत्वं दर्शितम्। निवेशकालादारभ्य स्थितानि गवाक्षादिकानि प्रातिवेशिकाद्यनिष्टकारिण्यपि न निवर्त्यन्त इत्युक्तं तेनैव। वातायनं प्रणालीं च तथा निर्व्यूहवेदिका। चतुःशालस्यन्दनिकां प्राग्विष्टां न चालयेत्। वातायनं गवाक्षः। प्रणाली पाषाणादिनिर्मितजलनिर्गमोपायः। निर्व्यूहो द्वारनिर्गतकाष्ठविशेषः इति हलायुधकल्पतरू। निर्व्यूहो गृहकोण इति स्मृतिचन्द्रिकायाम्। वेदिका रथ्यादिप्रदेशसंस्कृतोन्नतभूमिः। चतसृणां शालानां समाहारः चतुःशालम्। तस्मात् स्यन्दनिका वृष्टिजलनिपातः। चतुःशालपदं तृणगृहस्योपलक्षणम्। कात्यायनोऽपि। मेखलाभ्रमनिःकाशगवाक्षान्नोपरोधयेत्। प्रणालीं गृहवास्तुञ्च पीडयन् दण्डभाग्भवेत्॥ मेखला कुड्यमूलबन्धः। भ्रमो जलनिर्गमः। निःकाशः हर्म्यादिभित्तिषु निर्गतं काष्ठादिनिर्मितमस्पृष्टभूमिकमुपवेशनस्थानम्। नोपरोधयेत्। न निरुंध्यात् गृहवास्तुः वासभूमिः। पूर्वमविद्यमानाः परानिष्ट

कारिणा एतेन कर्त्तव्यमित्याह स एव । निवेशनमयादूर्ध्वं नैतेयोज्याः कदाचन । दृष्टिपातं प्रणालीञ्च न कुर्य्यात्पर वेश्मसु ॥ दृष्टिपातो गवाक्षः । परवेश्मसु परवेश्माभिमुखेन । परकुड्यनिकटे पुरीषोत्सर्गादिकमपि न कर्त्तव्यम् ॥ तथाच बृहस्पतिः । वर्च्चःस्थानं वह्निचयञ्च गर्त्तां च्छिष्टं वुसेचनम् । अयारात्परकुड्यास्य न कर्त्तव्यं कथञ्चन । वर्च्चःस्थानम् । पुरीषोत्सर्गस्थानम् । अयारात् अति समीपे । अरत्निद्वयपरिमितप्रदेश इत्यर्थः । तथाच कात्यायनः । चिरमूत्रोदकमेकञ्च वह्निश्वभ्रनिवेशनम् । अरत्निद्वयमुत्सृज्य परकुड्यान्निवेशयेत् । संसरणशब्दार्थनिर्वचनपुरःसरं तस्यानिरोद्धव्यत्वमाह बृहस्पतिः । यान्त्यायान्ति जना येन पशवश्चानिवारिताः । तदुच्यते संसरणं न्न रोद्धव्यं न्तु केनचित् ॥ तथाच सम्यगनिवारितसंसरणयोग्यभूमिः संसरणमिति निर्वचनमित्यर्थः । चतुष्पथाद्यो ऽपि न निरोद्धव्याः । तथाच नारदः । अवस्करस्थलश्वभ्रमस्यन्दनिकादिभिः । चतुष्पथसुरस्थानराजमार्गान्न रोधयेत् । अवस्करः पुरीषं । गृहादिशोधनार्थपांशुसमूह इति हरिहरादयः । स्थलं वेदिका श्वभ्रं गर्त्तः । भ्रमोऽजलनिर्गममार्गः । स्यन्दनिका पटलप्रान्तः । अन्यदपि आदिशब्देन तादृशं ग्राह्यम् । रथ्यामार्गो राजमार्गमनुचतुष्पथ इति कल्पतरुः । न चतुष्पथराजमार्गयोरभेद इति शङ्कनीयमनयोर्भेदात् । तथाच कात्यायनः । सर्वे जनाः सदा येन प्रयान्ति स चतुष्पथः । अनिषिद्धा यथाकामं राजमार्गः स उच्यते ॥ अनिषिद्धा इत्यत्र पूर्वेणान्वयः । यत्र राजमार्गे रथावमार्गो निषिध्यते स राजमार्ग इत्यर्थः । देवस्य समीपे मध्ये वा यस्य सर्वदा मार्गो ऽस्ति तत्र निरोधो न कर्त्तव्यः । तथाच शङ्खलिखितौ । मार्गस्य देवपथे विसर्गो राजमार्गे रथ्यापरिवर्त्तनमिति । पथिविसर्गः पथो विसर्गः । राजमार्गे यावता प्रदेशेन रथैः परिवर्त्त्यते तावत्प्रदेशस्य मोक्ष इत्यर्थः । संसरणानामवरोधकारिणामनुदण्डमाह कात्यायनः । तथाह बृहस्पतिः । यस्तत्र सङ्करं कुर्यान्मूत्रारोपणमेव च । कामात्पूरीषं कुर्याच्च तस्य दण्डस्तु माषकः ॥ सङ्करोऽत्र शकटादिसङ्कीर्णता । वृक्षोपादानं लतादीनामप्युपलक्षकम् । माषोऽत्र ताम्रिकः दण्डस्य अपराधानुसारेण कल्पयितुमुचितत्वात् । ये तु राजमार्गे पुरीषोत्सर्गादिकं कुर्वते तेषामधिको

दण्डः । तथा च मनुः । समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि । स द्वौ कार्षापणौ दद्यादमेध्यं चाशु शोधयेत् ॥ आपद्गता-
दिषु तु दण्डस्तेनेत्यर्थः । आपद्गतस्तथा वृद्धा गर्भिणी बाल एव च । परिभाषणमर्हन्ति तच्च शोध्यमिति स्थितिः ॥ परिभाषणं
रूक्षभाषणम् । तडागभेदकोत्तीर्थधर्षको दण्ड्यः । तथा च कात्यायनः । तडागोद्यानतीर्थानि योऽमेध्येन विनाशयेत् । अमेध्यं
शोधयित्वा तु दण्डयेत्पूर्वसाहसम् ॥ ये पुनर्मलिनवस्त्रप्रक्षालनादिना तीर्थानि दूषयन्ति तत्राप्ययमेव दण्ड इत्याह स एव ।
दूषयेच्चिह्नतीर्थानि स्थापितानि महात्मभिः । पुण्यानि पावनीयानि प्राप्नुयात्पूर्वसाहसम् ॥ मर्यादाप्रभेदनादौ दण्डमाह
याज्ञवल्क्यः । मर्यादायाः प्रभेदे तु सीमातिक्रमणे तथा । क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः । अनेकक्षेत्रव्यवच्छेदि-
कासाधारणी भूर्मर्यादा सीमा तस्याः प्रकर्षेण भेदने सीमातिक्रमणे सीमामतिलंघ्य कर्षणे क्षेत्रस्य च भयादिप्रदर्शनेन ह-
रणे यथाक्रमेणाधमोत्तममध्यमसाहसदण्डा वेदितव्याः । यत्तु विष्णुवचनम् । सीमाभेत्तारमुत्तमसाहसं दण्डयित्वा पु-
नः सीमां कारयेदिति । तत्र हि सीमामतिलंघ्य कर्षकः पुनः सीमाकरणम्पुनस्तत्र कर्षकस्याकरणमित्येवं व्याख्येयम् । तेनन
पूर्ववचनविरोधः क्षेत्रग्रहणं गृहाद्युपलक्षणार्थम् । अज्ञानात्क्षेत्रादिहरणेऽधर्म्म एव । यथाह मनुः । गृहं तडागमारामं
क्षेत्रं वा भीषया हरन् । शतानि पञ्च दण्ड्यः स्यादज्ञानाद्द्विशतो दमः । बृहन्मनुः । स्थापितां चैव मर्यादामुभयोर्ग्रामयोस्तथा ।
अतिक्रामन्ति ये पापास्ते दण्ड्या द्विशतन्दमम् । अपह्रियमाणक्षेत्रादिभूयस्त्वे तूत्तमोऽपि दण्डः प्रयोक्तव्यः । वधः सर्वस्वहरणं पु-
रान्निर्वासनाङ्कने । तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसमिति स्मरणात् ॥ यत्तु शङ्खलिखिताभ्यां सीमातिक्रमणे दण्डाधिक्य-
मुक्तं । सीमाव्यतिक्रमे त्वष्टसहस्रमिति तत्सम्पूर्णसीमातिक्रमविषयम् । सीमासन्धिषूत्पन्नवृक्षादिफलं नैव ग्राह्यं यथाह कात्या-
यनः । सीमामध्ये तु जातानां वृक्षाणां क्षेत्रयोर्द्वयोः । फलम्पुष्पञ्च सामान्यं क्षेत्रस्वामिषु निर्दिशेत् ॥ सामान्यं साधारणं क्षेत्र-
योः स्वामिषु क्षेत्रस्वामिषु । तथा चान्यतरेणैव तद्वृक्षीयफलादिग्रहणे तदनुरूपेण दण्ड्य इति ध्वनितम् । यदा पुनरन्यक्षेत्रे वृ-

क्षादिरुत्पन्नोऽन्यक्षेत्रे शाखादिप्ररूढनाः तत्र कः स्वामीत्याकांक्षायां स एवाह । अन्यक्षेत्रे तु जातानां शाखा यत्रान्यसंस्थिताः । स्वा
मिनं तं विजानीयाद्यस्य क्षेत्रस्य संश्रिताः । संश्रिताः प्ररूढाः । परक्षेत्रे प्रार्थनया क्रियमाणं सेतुकूपादिकं क्षेत्रस्वामिना नासेद्धव्यं त
थाह याज्ञवल्क्यः । न निषेध्योऽल्पबाधस्तु सेतुः कल्याणकारकः । परभूमिं हरन्कूपः स्वल्पक्षेत्रो बहूदकः ॥ अल्पबाधः अल्पपीडाका
रः कल्याणकारको बहूपकारकः । स्वल्पक्षेत्रः स्वल्पक्षेत्रवर्ती आभ्यां विशेषणाभ्यां यः सेतुः क्षेत्रमध्यवर्तिनया बहुपीडाकरो बदा
दिभुसन्निहितक्षेत्रवर्तितयाऽल्पोपकारको वा नदाऽनिषेद्धव्य इति दर्शितम् । तथा नारदोऽपि । परक्षेत्रस्य मध्ये तु सेतुर्न प्रतिषि
ध्यते ॥ महागुणोऽल्पदोषश्चेद्वृद्धिरिष्टा क्षये सति ॥ क्षये अल्पक्षेत्रक्षये सत्यपि वृद्धिर्यतइष्टा अतो महागुणः स्वक्षेत्रेऽपि उपका
रकरोऽल्पदोषस्तेन दानप्रतिषेद्धव्य इत्यर्थः । अन्यक्षेत्रे सेतुकूपादिवर्तनं तत्स्वाम्याद्याज्ञालाभपूर्वकं कर्तव्यमित्याह याज्ञव
ल्क्यः । स्वामिने योऽनिवेद्यैव क्षेत्रे सेतुं प्रवर्तयेत् । उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः । यस्तु क्षेत्रस्वामिनं तदभा
वे राजानं वा प्रार्थ्य अर्थादाने न वा तत्क्षेत्रे सेत्वादिकं करोति स सेत्वाद्युत्पन्नफलोपभोगं दृष्टमदृष्टं वा न लभते किन्तु तत्स्वाम्येव तल्लभते
तदभावे राजा । अतस्तदाज्ञां गृहीत्वा सेत्वादि कर्तव्यमित्यर्थः । जीर्णानां अन्यदीयसेत्वादीनां उद्धारे पितत्स्वाम्याद्यनुज्ञां गृ
हीत्वा कार्य इत्याह नारदः । पूर्वप्रवृत्तमुत्पन्नमपृष्ट्वा स्वामिनं तु यः । सेतुं प्रवर्तयेद्यस्तु न स तत्फलभाग्भवेत् ॥ मृते तु स्वामिनि पु
नस्तद्वंश्ये वापि मानवे । राजानमामन्त्र्य ततः कुर्यात्सेतुप्रवर्तनम् । अतोऽन्यथा क्लेशमायान्मृगव्याधनिदर्शनात् । मृगव्याधवृ
ष्टान्तः स्फुटीकृतस्तेनैव । इषवस्तस्य नश्यन्ति यो विद्धमनुविध्यति । तस्य मृगव्याधस्य । कात्यायनोऽपि । अस्वाम्यनुमतेनैव संस्का
रं कुरुते तु यः । गृहोद्यानतडागानां संस्कर्ता लभते न तु ॥ देयं स्वामिनि वायाते तन्निवेद्यान्यथा पेयादि । अथावेद्य प्रयुक्तस्तु तद्धनं
लभते व्ययम् ॥ न्यपि अनावेद्य गृहोद्यानतडागादिसंस्कारार्थं व्ययं तत्स्वामिनि यामान्तरादागते तेन देयमपि न प्राप्नोति । न्यपेति
वेद्य संस्कारकर्ता तदभ्यये व्ययमाप्नोति । फलं तु स्वाम्यनुमत्यभावेन प्राप्नोतीत्यर्थः । यः परक्षेत्रमध्ये इदं वापामीत्युरीकृत्य पश्चा

द्रोनक्षयन्तिनाप्यन्येनकर्षयन्ति तत्स्वाम्याह याज्ञवल्क्यः । फालाहतमपि क्षेत्रं योनकुर्य्यान्नकारयेत् । स प्रदाप्यः कृष्टफलं क्षेत्रमन्येनकारयेत् ॥ यद्यपि फालाहतं किञ्चिद्धलेनविदारितं सम्यग्बीजावापयोग्यं न भवति तथापि कृष्टक्षेत्रस्य फलं यावत्तत्रोत्पत्तियोग्यं सामन्तादिकल्पितं तावत्स क्षेत्रस्वामिने दापनीयः । तच्च पूर्वकर्षकाद्दाप्यित्वा परेण कारयेत् । व्यासोपि । क्षेत्रं गृहीत्वा यः कश्चिन्न कुर्य्यान्न च कारयेत् । स्वामिने स शदं दाप्यो राज्ञे दण्डञ्च तत्समम् ॥ शदं क्षेत्रफलम् । तत्सममनन्तरं नुरूपमित्यर्थः । स्वामिग्राह्यं क्षेत्रफलमपि कियदित्याकांक्षायां स एवाह । चिरावसन्ने दशमं कृष्यमाणे तथाष्टकम् । सुसंस्कृतेपि षष्ठं स्यात्परिकल्प्यं यथास्थितिरिति । चिरावसन्ने चिरकालसंकष्टक्षेत्रेऽहमिदं कृषामीत्यूरीकृत्योपेक्षिते स्वामन्तैर्यथास्थिति क्षेत्रस्थित्यनुसारेणैतावदत्रोत्पत्तियोग्यमिति परिकल्प्य क्षेत्रस्वामिने तस्य दशमभागः कृष्यमाणे चिरावसन्ने स्वीकृत्यनुपेक्षितेत्वष्टमम्भागं सुसंस्कृते नूपेक्षितं षष्ठं भागं दाप्य इत्यर्थः । यस्तु क्षेत्रस्वामिनः सामर्थ्यवैकल्यादिनाऽधोलाघवावस्थां प्राप्ते क्षेत्रे स्वाम्यनिवारितस्सन्स्वयमेव तत्कर्षणादि कुरुते तेन तदा स क्षेत्रस्वामिने फलं न दापनीयः । किन्तु तस्य फलं स्वयमेव गृह्णीयादित्याह नारदः । अशक्तप्रेतनष्टेषु क्षेत्रिकेष्वनिवारितः । क्षेत्रं चेद्विकृषेत्कश्चिदश्नुवीत स तत्फलम् ॥ प्रेता मृताः । नष्टाः कुत्रगता इति चिरमपरिचिता ॥ क्षेत्रिकेषु क्षेत्रस्वामिषु तेन क्षेत्रस्वामिना तत्सुतादिना वा समागतेनैवं विधाय कर्षादि खिलभञ्जनार्थे व्ययस्तस्मै वसीयं क्षेत्रं ग्राह्यमिति स एवाह । विकृष्यमाणे क्षेत्रे तु क्षेत्रिकः पुनराव्रजेत् । खिलोपचारं तत्सर्वं दत्वा क्षेत्रमवाप्नुयात् ॥ अर्धखिलाद्यवस्थाकदा क्षेत्रस्य भवतीत्याकांक्षायां स एवाह । संवत्सरेणार्द्धखिलमितः स्याद्वत्सरैस्त्रिभिः । पञ्चवर्षावसन्नन्तु क्षेत्रं स्यादटवीसमम् । कर्षणरहितं संवत्सरेणार्द्धखिलम्भवति तत्साध्यम्भवति वर्षत्रयेण तद्रहितं खिलं महायत्नसाध्यं भवति । वर्षपञ्चकेन तद्रहितं क्षेत्रं अटवीतुल्यं स्यात् । अतिदुष्कर्षम्भवेदित्यर्थः । खिलभञ्जनार्थं व्ययदानासामर्थ्ये क्षेत्रस्वामिनः क्षेत्रफलं स्याष्टमो भागः कर्षकेणाष्टवर्षाष्टकं स्वामिने देयः । अवशिष्टं सर्वं स्वयमेव ग्राह्यम् । क्षेत्रं चवर्षाष्टकानन्तरं तत्स्वामिने देयम् ।

तथा च कात्यायनः । अशक्तितोन दद्याच्चाखिलार्थं यः कृतोव्ययः । तदष्टभागहीनन्तु कर्षकः फलमाप्नुयादिति ॥ वर्षात्यये चोत्सृष्टभोक्तास्याप्यरतः स्वामिनेतु नदिति ॥ इति सीमाविवादाख्यव्यवहारपदम् ॥ ● ॥ अथ दण्डपारुष्याख्यव्यवहारपदम् । तत्स्वरूपन्दर्शयति । नारदः । परगात्रेष्वभिद्रोहो हस्तपादायुधादिभिः । भस्मादिभिश्चोपघातो दण्डपारुष्यमुच्यते इति । परगात्रेषु स्थावरजङ्गमात्मकेषु । आदिग्रहणात्पाषाणादीनां ग्रहणम् । तथा अभिद्रोहो हिंसनं दुःखोत्पादनम् भस्मादिभिरित्यादिग्रहणाद्रजःपङ्कपुरीषादीनां ग्रहणं । उपघातः संस्पर्शनरूपं मनोदुःखोत्पादनम् । तदुभयन्दण्डपारुष्यमित्यर्थः । तस्यैव त्रैविध्यमाह स एव । तस्यापि दृष्टं त्रैविध्यं हीनमध्योत्तमक्रमात् । अवगोरणनिःशङ्कपातनक्षतदर्शनैः ॥ हीनमध्योत्तमानान्तु द्रव्याणां समतिक्रमात् । त्रीण्येव साहसान्याहुस्तत्र कण्टकशोधनमिति ॥ अवगोरणं ताडनायोद्योगः । निःशङ्कपातनं निःशङ्कप्रहरणम् । त्रीण्येव साहसानि त्रिप्रकारस्यैव साहसकृतानि दण्डपारुष्याणीत्यर्थः । अन्यानपि भेदानाह परिशिष्टकारः । दुःखं रक्तं व्रणं भङ्गश्छेदनम्भेदनन्तथा । कुर्य्याद्यः प्राणिनान्तद्धि दण्डपारुष्यमुच्यते इति । स्थावरजङ्गमप्राणिनां प्राण्यन्तरहननखादिनाच्छेदनादिभवन्दुःखं रक्तव्रणादिकञ्च दण्डपारुष्यमुच्यत इत्यर्थः । व्यासोपि । भस्मादिनाप्रक्षिपणीताडनञ्च करादिना । आवेष्टनञ्चांशुकाद्यैर्द्दण्डपारुष्यमुच्यत इति । आदिग्रहणाद्दुःखकरं पङ्कमपांशुमलादिद्रव्यं गृह्यते । करादिनेत्यादिशब्देन पाषाणलोष्टकायुधादि द्रष्टव्यं । अंशुकाद्यैरित्यादिशब्देन रज्जुशृङ्खलादि द्रष्टव्यं । दण्डपारुष्यस्य पञ्चप्रकारविषयो नारदेन दर्शितः । विधिः पञ्चविधस्तूक्तः एतयोरुभयोरपि । पारुष्ये सति संरम्भादुत्पन्ने क्रुद्धयोर्द्वयोः ॥ स मान्यते यः क्षमते दण्डभाग्योऽतिवर्त्तते । पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स दोषभाक् । पश्चाद्यः सोप्यसत्कारी पूर्वेन्तु विनयो गुरुः । द्वयोरापन्नयोस्तुल्यमनुबध्नाति यः पुनः ॥ स तयोर्द्दण्डमाप्नोति पूर्वो वा यदि चेतरः । पारुष्यदोषावृतयोर्युगपत्सम्प्रवृत्तयोः । विशेषश्चेन्न लक्ष्येत विनयः स्यात्समस्तयोः ॥ श्वपाकषण्डचाण्डालव्यङ्गेषु वधवृत्तिषु । हस्तिपव्रात्यदासेषु गुर्वाचार्य

न्टपेषु च। मर्य्यादातिक्रमे सद्यो घात एवानुशासनम्। यमेव ह्यतिवर्त्तेरन्नेते सन्तं जनं न्टषु। स एव निर्णयं कुर्य्यात्तद्विनय भाग्नृपः। मला ह्येते मनुष्याणां धनमेषां मलात्मकम्। अतस्तान्घातयेद्राजा नार्थदण्डेन दण्डयेदिति। अयमर्थः। वाग्दण्डपारुष्ययोरुभयोरपि द्वयोः प्रवृत्तकलहयोर्मध्ये यः क्षमते न तस्य केवलं दण्डाभाव एव किन्तु पूज्यत्वमपि। तथा पूर्वे कलहे प्रवृत्तस्य दंडगुरुत्वम्। कलहे च वद्धवैरानुसन्धातुरेव दण्डभाक्त्वम्। तथा तयोर्द्वयोरपराधविशेषापरिज्ञाने सम एव दण्डः। तथा श्वपचादिभिरार्य्याणामपराधे कृते सज्जना एव दण्डदाने अधिकारिणस्तेषामशक्यत्वे तान् राजा घातयेदेव नार्थं गृह्णीयादिति। यत्तु वृहस्पतिवचनं। आक्रुष्टस्तु समाक्रोशन्ताडितः प्रतिताडयन्॥ हत्वापराधिनञ्चैव नापराधी भवेन्नर इति। तत्पूर्वप्रवृत्तसमन्दंडं। पश्चात्प्रवृत्तस्य नेत्येवम्परं न तु दण्डाभावपरम्। दण्डपारुष्यस्वरूपसन्देहे निर्णायकमाह याज्ञवल्क्यः। असाक्षिकहते चिह्नैर्युक्तिभिश्चागमेन च। द्रष्टव्यो व्यवहारस्तु कूटचिह्नकृतो भयादिति। यदा कश्चिद्[illegible]ति राज्ञे निवेदयति तदा चिह्नैर्व्रणादिभिस्तत्स्वपगतैर्लिंगैः युक्तिभिः कारणप्रयोजनपर्य्यालोचनादिभिः आगमेन जनप्रवादेन च शङ्कादिव्येन वा कूटचिह्नकृतसम्भावनभयात्परीक्षा कार्य्येत्यर्थः। एवन्निश्चिते साधनविशेषाद्दण्डविशेषमाह स एव। भस्मपङ्करजःस्पर्शे दण्डो दशपणः स्मृतः। अमेध्यपार्ष्णिनिष्ठ्यूतस्पर्शने द्विगुणस्ततः। समेष्वेवम्परस्त्रीषु द्विगुणस्तूत्तमेषु च। हीनेष्वर्द्धदमो मोहमदादिभिरदण्डनमिति। अमेध्यानि अश्रुश्लेष्मादीनि। पार्ष्णिः पादस्य पश्चिमो भागः॥ निःष्ठ्यूतं मुखनिस्सारितं जलम्। मोहश्चित्तवैकल्यं मदो मद्यपानजन्योऽवस्थाविशेषः। आदिशब्देन ग्रहावेशादीनां ग्रहणम्। पुरीषादिस्पर्शने त्वाह कात्यायनः। छर्दिमूत्रपुरीषाद्यैः स्पर्शने स चतुर्गुणः। षड्गुणः कायमध्ये स्यान्मूर्द्ध्नि त्वष्टगुणः स्मृत इति। ताडनाय हस्तस्योद्गूरणे दण्डमाह स एव। उद्गूरणे तु हस्तस्य कार्य्यो द्वादशको दमः। स एव द्विगुणः प्रोक्तः पातने तु सजातिष्विति। वृहस्पतिरपि। उद्यते स्यमशिलाकाष्ठे कर्त्तव्यः प्रथमो दम इति। विष्णुरपि। हस्तेनोद्गूरयिता दशकार्षापणान्पादे

नविंशतिकृष्णलेनप्रथमसाहसंशस्त्रेणोन्नमितमिति । दण्डइत्यनुवर्त्तते । अधमःशस्त्रेणोन्नमय्ययदोद्गूरणङ्करोतितदा
सावुत्तमसाहसन्दण्ड्यइत्यर्थः । वृहस्पतिरपि । मध्यमःशस्त्रसम्पातेसंयोज्यश्चुभ्ययोर्द्वयोः । कार्यःक्षतानुरूपस्तुलग्नेघातेद
मोवुधैः । इष्टिकोपलकाष्ठेनताडनेनुद्विमाषकः । द्विगुणःशोणितोद्भेदेदण्डःकार्योमनीषिभिरिति । विष्णुरपि । शो
णितेनविनादुःखमुत्पादयित्वाद्वात्रिंशत्पणान्सहशोणितेनचतुःषष्टिमिति । अत्रसर्वत्रदण्डभेदोऽपराधाल्पत्वमहत्वा
नुसारेणव्यवस्थापनीयइति । ताडनार्थंहस्तपादाद्युद्योगेदण्डविशेषमाहयाज्ञवल्क्यः । उद्गूर्णेहस्तपादेतुदशविंश
तिकौदमौ । परस्परन्तुसर्वेषांशस्त्रेमध्यमसाहसमिति । हस्तेपादेवाताडनार्थमुद्यतेयथाक्रमन्दशविंशतिपणकौद
मौ । परस्परंवधार्थंशस्त्रउद्यतेसर्वेषांवर्णानांमध्यमसाहसोदण्डइत्यर्थः । काष्ठादिभिस्ताडनेयोग्याहसएव । शोणि
तेनविनादुःखंकुर्वन्काष्ठादिभिर्नरः । द्वात्रिंशतम्पणान्दण्ड्योद्विगुणोदर्शनेऽसृजइति । त्वङ्मांसास्थिभेदेमनुराह । त्व
ग्भेदकःशतंदण्ड्योलोहितस्यचदर्शकः । मांसभेत्तातुषण्णिष्कान्प्रवास्यस्त्वस्थिभेदकइति । मांसभेत्ताव्रणकर्त्ता । कात्या
यनोपि । कर्णौष्ठघ्राणपादाक्षिजिह्वाशिश्नकरस्यच । छेदनेचोत्तमोदण्डोभेदनेमध्यमोभृगुरिति । पादाद्याघर्षणादौ
त्वाहयाज्ञवल्क्यः । पादकेशांशुककरोल्लुञ्चनेषुपणान्दश । पीडाकर्षांशुकावेष्ट्यपादाध्यासेशतन्दमः । पादकेशकराणा
मन्यतमंगृहीत्वायउल्लुञ्चतिझटित्याकर्षयत्यसौदशपणान्दण्ड्यः । योवस्त्रेणावेष्ट्यगाढंसंपीड्याकृष्यपादेनघट्टयतिस
शतम्पणान्दण्ड्यइत्यर्थः । करादिभङ्गेत्वाहसएव । करपाददन्तोभङ्गेछेदनेकर्णनासयोः । मध्योदण्डोव्रणोद्भेदेमृतक
ल्पहतेतथा ॥ चेष्टाभोजनवाग्रोधेनेत्रादिप्रतिभेदने । कन्धराबाहुशक्थ्नांचभङ्गेमध्यमसाहसः ॥ एकघ्नतांवहूनाञ्च
यथोक्ताद्विगुणोदमइति । करपाददन्तानांप्रत्येकम्भेदेकर्णनासिकयोश्चछेदनेमृतकल्पहतेचमध्यमसाहसोदण्डः । ग
मनभोजनभाषणनिरोधनेचादिप्रतिभेदनेचग्रीवाबाहूरुभङ्गेचमध्यमसाहसएवदण्डः । मिलित्वैकस्यांगभंगंकुर्वतांवहू

नायस्मिन्नपराधे योदण्डउक्तस्तत्रतत्रतस्माद्द्विगुणोदण्डः प्रत्येकंमन्तव्यइत्यर्थः । कात्यायनोपि । मनुष्याणाम्पशूनाञ्चदुः
खायप्रहृतेसति । यथामहत्तरन्दुःखन्दण्डंकुर्यात्तथातथेति । प्रातिलोम्यापराधेदण्डमाहयाज्ञवल्क्यः । विप्रपीडाकरञ्छे
द्यमङ्गमब्राह्मणस्यतु । उद्गूर्णेप्रथमोदण्डःसंस्पर्शेतुतदर्द्धिकइति । अब्राह्मणस्यक्षत्रियादेः । संस्पर्शेग्रहणादिस्पर्शे ।
तदर्द्धिकःप्रथमसाहसार्द्धदण्डइत्यर्थः । ब्राह्मणवधार्थमुद्यतेशस्त्रेप्रथमसाहसाभिधानंतच्छूद्रविषयम् । अतएवमनुः । येनकेन
चिदङ्गेनहिंस्याच्छ्रेयांसमन्त्यजः । छेत्तव्यन्तत्तदेवास्यतन्मनोरनुशासनम् । पाणिमुद्यम्यदण्डंवापाणिच्छेदनमर्हतीति ।
अत्रक्षत्रियवैश्ययोःपीडाकारिणोपिशूद्रस्यायमेवदण्डः । श्रेयांसमितिसामान्येनोपादानात् । समानन्यायत्वाच्चक्षत्रियपी
डाकारिणोवैश्यस्यतुयाज्ञवल्क्यप्रतिपादितएवदण्डः । भस्मादिसंस्पर्शे पुनःक्षत्रियवैश्ययोःप्रातिलोम्यापवादेपूर्वद्विगुणात्त्रिगु
णादमाइतिवक्ष्यमाणवाक्यपारुष्यन्यायेनकल्प्यः । नारदोपि । येनाङ्गेनापरोवर्णोब्राह्मणस्यापराध्नुयात् । तदङ्गन्तस्यछेत्त
व्यमेवम्बुद्धिमवाप्नुयात् । राजनिप्रहरेद्यस्तुकृतागस्यपिदुर्मतिः । शूल्यन्तमग्नौविपचेद्ब्रह्महत्याशतादिकेति । कृतागसि
तापराधे । शूलमारोपयेत्संस्थियेतनच्छूल्यं । प्रातिलोम्यानुलोम्यविषयेवाक्पारुष्येउक्तान्दण्डानतिदिशतिकात्यायनः
। वाक्पारुष्येयथैवोक्ताःप्रातिलोम्यानुलोमतः । तथैवदण्डपारुष्येपात्यादंडाययथाक्रममिति । शूद्रस्यतत्राप्यङ्गच्छेदएव । त
थाचाहतुर्मनुनारदौ । अवनिष्ठीवतोदर्पात्द्वावोष्ठौछेदयेन्नृपः । अवमूत्रयतोमेढ्रमवशर्द्धयतोगुदम् । केशेषुगृह्णतोह
स्तौछेदयेदविचारयन् । पादयोर्दाढिकायांचग्रीवायांवृषणेषुचेति । ताडनेदुःसहव्रणाद्युत्पत्तौचाहकात्यायनः । देहे
न्द्रियविनाशेतुयथादण्डंप्रकल्पयेत् । तथातुष्टिकरंदेयंसमुत्थानञ्चपण्डितैरिति । तुष्टिकरंव्रणितुष्टिकरं । समुत्थानंव्रणा
रोपणान्तन्निमित्तकश्चव्ययःव्रणगौरवाद्यनुसारेणपण्डितैरौषधार्थपथ्यार्थञ्चकल्पितमाव्रणरोपणादेयम् । समुत्थानव्ययश्चा
रोदघ्नादाव्रणारोपणमितितेनैवोक्तत्वात् । यत्तुसहकालेऽपहृतन्तत्स्वामिनेदानव्यमित्याहवृहस्पतिः । अङ्गावपीडनेचैवभे

द्दनेछेदनेतथा । तच्च यन्दाप्यः स्वीकं वहापहृतञ्चयदिति । याज्ञवल्क्योपि । कलहापहृतन्देयन्दण्डश्चद्विगुणस्ततः । दुः
खमुत्पादयेद्यस्तु ससमुत्थानजंव्ययम् ॥ दाप्योदण्डंचयोयस्मिन्कलहे समुदाहृतइति । ग्राम्यपशुभिद्रोहेदण्डमाह विष्णुः
ग्राम्यपशुघातीकार्षापणशन्दण्ड्यः पशुस्वामिनेतुतन्मूल्यन्दद्यादिति ॥ मूल्यदानमृतपशुविषयम् । मरणाभावेतु समुत्थानव्य
यंदद्यात् । तथाचसएव । सर्वेपुरुषपीडाकराः समुत्थानव्ययंदाप्याः ग्राम्यपशुपीडाकराश्चेति । बहुभिरेकस्यहननेदण्डमा
हसएव । एकंबहूनांघ्नतांप्रत्येकमुक्तोदण्डोद्विगुणइति । सम्भूयताडनञ्चैः क्रोशन्तन्ताड्यमानमुपेक्षमाणानान्तत्समी
पवर्तिनामपितमेवदंडः सएवाह । द्विगुणस्तत्रः क्रोशन्तमनभिधावतान्तत्समिपवर्तिनांसताञ्चेति । क्वचिदशक्यप्रतीकारविषये
प्राणिघातनिबन्धनोदण्डोनेत्याह मनुः । छिन्नेनास्येभग्नयुगेतिर्यक्प्रतिमुखागते । अक्षभङ्गेचयामस्यचक्रभङ्गेतथैवच । छेद
नेचैवयन्त्राणांयोक्त्ररश्म्योस्तथैवच । आक्रन्देचाप्यपैहीतिनदण्डंमनुरब्रवीदिति । छिन्नेनास्येबलीवर्दादेर्नासिकास्वार
ज्ज्वादौत्रुटिते । युगेभग्नेशकटादियुगकाष्ठभग्ने । यन्त्राणांशकटादिकाष्ठानाम्बन्धनानांरज्ज्वादीनां । शक्यप्रतीकारेतुप्रेष्य
कस्याहसएव । यत्राप्रवर्ततेयुग्मंवैगुण्यात्प्राजकस्यतु । तत्रस्वामीभवेद्दण्ड्योहिंसायांद्विशतन्दमिति । प्राजकः शक
टादिनेता । द्विशतग्रहणन्तत्प्राणिहिंसायांविशेषविहितदण्डोपलक्षणार्थमितिस्मृतिचन्द्रिकायाम् । यत्रसमर्थप्राजकदो
षेणप्राणिहिंसानतत्रस्वामिनोदण्डः किन्तुप्राजकस्येत्याहसएव । प्राजकश्चेद्भवेदाप्तः प्राजकोदण्डमर्हतीति । आप्तः सम
र्थइत्यर्थः । स्थावरप्राणिपीडायांसएवाह । वनस्पतीनांसर्वेषामुपभोगोयथायथा । तथातथादमः कार्योहिंसायामितिधारणे
ति । वनस्पतिग्रहणंस्थावरप्राणिमात्रोपलक्षणम् । उपभोगोयथायथेत्यनेनयेषामाम्रादीनांफलमुपभुज्यतेतेषांहिंसाया
मधिकोदण्डः । येषाञ्चम्पकादीनाम्पुष्पमुपभुज्यतेतेषान्ततोन्यूनः । येषांपत्रमुपभुज्यतेतेषान्ततोपिन्यूनइतिदर्शितम् । ए
तदेवविवरणपूर्वकंविष्णुराह । फलोपभोगद्रुमच्छेदीतूत्तमसाहसम्पुष्पोपभोगच्छेदीमध्यमसाहसंवल्लीगुल्मलताच्छेदी

कार्षापणशतं तृणच्छेदेऽर्कस्य सर्वे तत्स्वामिनां तदुत्पत्तिमिति । दण्ड इत्यनुवर्त्तते । सर्वे फलोपभोगद्रुमच्छेद्यादयः तत्स्वामिनां छि-
न्नद्रुमादिस्वामिनां तदुत्पत्तिफलभोगद्रुमाद्युत्पत्तिं पुनः प्रतिरोपितभोगकालपर्याप्तां दद्युरिति शेषः । पश्वभिद्रोहे दण्डमाह
याज्ञवल्क्यः । दुःखे च शोणितोत्पादे शाखाङ्गच्छेदने तथा । दण्डः क्षुद्रपशूनां स्याद्द्विपणप्रभृतिक्रमात् ॥ लिङ्गस्य छेदने मृत्यौ
मध्यमो मूल्यमेव च । महापशूनामेतेषु स्थानेषु द्विगुणो दमः इति ॥ क्षुद्रपशूनामजाविकप्रभृतीनाम् । ताडनेन दुःखोत्पाद-
ने । शोणितोत्पादे रक्तस्रावणे । शाखाशब्देनात्र शृङ्गादिकं गृह्यते अङ्गानि करचरणादीनि तेषां छेदने च यथाक्रमं द्विपणप्र-
भृतिर्दण्डः । द्विपणश्चतुष्पणः षट्पण इत्येवंरूपः । तेषां लिङ्गच्छेदने मारणे च मध्यमसाहसो दण्डः स्वामिने मूल्यदानञ्च ।
महापशूनां गोगजवाज्यादीनामेतेषु स्थानेषु पूर्वोक्ताद्दण्डाद्द्विगुणो दण्डो वेदितव्य इत्यर्थः । विष्णुरपि । पशूनां पुंस्त्वोपघा-
तीति कार्षापणशतमङ्गप्रकर्तनं । स एव । गवाश्वोष्ट्रगोघाती त्वेककरपादः कार्यः विमांसविक्रयी अग्राम्यपशुघाती कार्षापणश-
तं दण्ड्यः । पशुस्वामिने च तन्मूल्यं दद्यात् । आरण्यपशुघाती पञ्चाशत्कार्षापणान् । पक्षिघाती मत्स्यघाती च दश कार्षापणा-
न् । कीटोपघाती कार्षापणमिति । विमांसं सृगालादिमांसमिति कल्पतरौ । कात्यायनोऽपि । द्विपणो द्वादशपणो वधे तु
मृगपक्षिणाम् । सर्पमार्जारनकुलश्वसूकरवधे नृणाम् । गोकुमारीदेवपशूक्षाणं वृषभं तथा ॥ वाहयन् साहसं पूर्वं प्रा-
प्नुयादुत्तमं वधे इति ॥ परकुड्याभिघाते परगृहे कण्टकादिप्रक्षेपे च दण्डमाह याज्ञवल्क्यः । अभिघाते तथा छेदे भेदे कुड्या-
वपातने । पणान् दाप्यः पञ्चदश विंशतिं तद्व्ययं तथा ॥ दुःखोत्पादि गृहे द्रव्यं क्षिपन् प्राणहरं तथा । षोडशाद्यः पणान्द-
ण्ड्यो द्वितीयो मध्यमं दममिति ॥ मुद्गरादिना कुड्यस्याभिघाते विदारणे द्वैधीकरणे च यथाक्रमं पञ्चपणो दशपणो विंशतिप-
णो दण्डः । कुड्यस्यावपातने तु समुच्चिता एते त्रयो दण्डा ग्राह्याः । कुड्यसम्पादनार्थं च धनमपि तत्स्वामिने दद्यात् । परगृ-
हे कण्टकादिप्रक्षेपणे षोडशपणो दण्डः । विषभुजङ्गादिप्रक्षेपणे मध्यमसाहसो दण्ड इत्यर्थः । स्थावराभिद्रोहे दण्डमाह

स एव । प्ररोहिशाखिनां शाखास्कन्धसर्वविदारणे । उपजीव्यद्रुमाणान्तु विंशतेर्द्विगुणो दमः ॥ चैत्यश्मशानसीमासु पुण्यस्थानेसुरालये । जातद्रुमाणां द्विगुणो दमो वृक्षे च विश्रुते । गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधां । पूर्वस्मृतादर्द्धदण्डः स्थानेषूक्तेषु कर्त्तने इति ॥ प्ररोहिशाखिनाम्वटादीनां शाखाच्छेदने स्कन्धच्छेदने समूलवृक्षच्छेदने च यथाक्रमम्विंशतिपणाद् दण्डादारभ्य पूर्वस्माद् उत्तरोत्तरं द्विगुणो दण्डः । विंशतिपणश्चत्वारिंशत्पणोऽशीतिपण इत्येवं रूपः । अप्ररोहिशाखिनामाम्रादीनामुपजीव्यद्रुमाणां पूर्वोक्तेषु स्थानेषु छेदने पूर्वोक्ता एव दण्डाः । चैत्यादिस्थानेषूत्पन्नानां वृक्षाणां शाखादिछेदने पूर्वोक्ताद्दण्डाद्द्विगुणाः । विश्रुते चाश्वत्थपलाशादिके द्विगुणो दण्डः । गुल्मा मालत्यादयः गुच्छाः कुरण्टकादयः क्षुपाः करवीरादयः लताः द्राक्षातिमुक्तादयः । प्रतानाः काण्डप्ररोहरहिताः । ओषध्यः फलपाकान्ताः शालिप्रभृतयः । वीरुधः गुडूचीप्रभृतयः । एतेषु पूर्वोक्तेषु स्थानेषु विकर्त्तने छेदने पूर्वोक्ताद्दण्डादर्द्धदण्डो वेदितव्य इत्यर्थः । भार्य्यादीनामपराधे रज्ज्वा वेणुदलाभ्यामधमाङ्गे ताडयेत् । अन्येनोत्तमाङ्गे च ताडयन्स्तेनवदण्ड्य इत्याह यमः । भार्या पुत्रश्च दासश्च दासी शिष्यश्च पञ्चमः । प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा ॥ अधस्तात्तु प्रहर्त्तव्यं नोत्तमाङ्गे कथञ्चन । अतोऽन्यथा प्रवृत्तस्तु यथा स्तेनं दण्डमर्हतीति ॥ भार्य्या पुत्रश्च शिष्यश्च दासो भ्राता च सोदरः । प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा ॥ पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कथञ्चन । अतोऽन्यथा तु प्रहरन्प्राप्तः स्याच्चौरकिल्बिषमिति ॥ शिष्यानुवृत्तावापस्तम्बोऽपि । अपराधेषु चैनं सततमुपालभेत अतित्रासमुपवासमुदकोपस्पर्शनमिति दण्डाः यथा तन्मात्रनिवृत्तिरिति अपराधनिवृत्तिपर्य्यन्तमपराधानुरूपं दण्डपातनं कर्त्तव्यमित्यर्थः । यत्र तु आत्मनः कश्चिद्द्वेषात्ताडनादिचिह्नं विधाय परमभिद्रवति तत्र साक्ष्यादिभिर्दिव्येन वा परीक्षणं कर्त्तव्यमित्याह मनुर्नारदबृहस्पती । कश्चित्कृत्वात्मनश्चिह्नं द्वेषात्परमभिद्रवेत् । हेत्वर्थमतिसामर्थ्यैस्तत्र युक्तम्परीक्षणमिति । याज्ञवल्क्योऽपि । असाक्षिकहते चिह्नैर्युक्तिभिश्चागमेन च । द्रष्टव्यो व्यवहारस्तु कूटचिह्नकृताद्भयादिति ॥ कात्यायनोऽपि । हेत्वादिभिर्न पश्येच्चेद्दण्डपारुष्यकारणं । तदा साक्षिकृतं

श्वदित्थंनाविनियोजयेदिति। इतिदंडपारुष्याख्यव्यवहारपदम्॥०॥ तथावाक्पारुष्याख्यव्यवहारपदम्॥ तस्यचस्वरूप
माहनारदः। देशजातिकुलादीनामाक्रोशंन्यंगसंयुतम्। यद्वचःप्रतिकूलार्थंवाक्पारुष्यंतदुच्यतेइति। आक्रोशःआक्षेपःभ
र्त्सनमितियावत्। कलहप्रियाःगौडाइतिदेशाक्रोशः। अत्यंतलोलुपाब्राह्मणाइतिजात्याक्रोशः। क्रूरचरितावैश्वामित्राइतिकु
लाक्षेपः। न्यङ्गमवद्यन्तदुभययुक्तंयदुद्वेगजननार्थंवाक्यन्तद्वाक्पारुष्यमित्यर्थः। तस्यचैविध्यमाहसएव॥ निष्ठुराश्लीलतीव्र
त्वात्तदपित्रिविधंस्मृतम्। गौरवानुक्रमात्तस्यदंडोऽपिस्यात्क्रमाद्गुरुरिति। निष्ठुरादीनांस्वरूपमाहसएव। साक्षेपन्निष्ठुरं
ज्ञेयमश्लीलंन्यंगसंयुतं। पतनीयैरुपाक्रोशैस्तीव्रमाहुर्मनीषिणइति॥ धिङ्मूर्खंजाल्मइत्यादिसाक्षेपम्भाषणंनिष्ठुरं। न्यङ्ग
संयुतंअवद्यम्भगिन्यादिगमनसंयुतं। अश्लीलंपतनीयैःसुरापानादिभिरुपाक्रोशस्तीव्रंवाक्पारुष्यमित्यर्थः। कात्यायनोपि।
यत्त्वसत्संज्ञितैरङ्गैःपरमाक्षिपतिक्वचित्। अभूतैर्वाथभूतैर्वानिष्ठुरावाक्स्मृतातुसा॥ न्यग्भावकरणंवाचाक्रोधात्तुकुरुतेयदा।
वृत्तदेशकुलानान्तुअश्लीलासाबुधैःस्मृताः॥ महापातकयोक्त्रीचरागद्वेषकरीचया। जातीभ्रंशकरीवाथतीव्रासाप्रथितानुवागि
ति॥ कल्पतरौन्यंगावगूरणमितिपठित्वानिकृष्टांगप्रकाशनेनतिरस्करणमितिव्याख्यातम्। न्यग्भावकरणमितितुमाधवादि
संमतःपाठः। प्रथममध्यमोत्तमभेदेनत्रैविध्यमाहबृहस्पतिः। देशग्रामकुलादीनांक्षेपःपापेनयोजनम्। द्रव्यम्विनातुप्रथ
मम्वाक्पारुष्यन्तदुच्यते॥ भगिनीमातृसम्बन्धमुपपातकशंसनम्। पारुष्यम्मध्यमम्प्रोक्तम्वाचिकंशास्त्रवेदिभिः॥ अभक्ष्या
पेयकथनंमहापातकदूषणं। पारुष्यमुत्तमम्प्रोक्तन्तीव्रंमर्माभिघट्टनमिति॥ द्रव्यम्विनेत्यत्रद्रव्यशब्दोऽभिधेयपरः। तेनोच्य
मानार्थव्यतिरेकेणैवंविधमभिधानंवाक्पारुष्यमित्यर्थइतिकल्पतरौ। द्रव्यंविनाद्रव्यवैशिष्ट्यंविनेतिमदनरत्ने। अभिघट्टनंउ
त्पाटनं। निष्ठुराक्रोशेदंडमाहयाज्ञवल्क्यः। सत्यासत्यान्यथास्तोत्रैर्न्यूनांगेन्द्रियरोगिणाम्। क्षेपङ्करोतिचेद्दण्ड्यःपणानर्द्ध
त्रयोदशानिति। अन्यथास्तोत्रन्निन्दास्तुतिः। न्यूनांगाःकरादिरहिताः। न्यूनेन्द्रियाःनेत्रादिरहिताः। रोगिणःकुष्ठ्यादयः

। अर्द्धं त्रयोदशान् । अर्द्धाधिकद्वादशपणानित्यर्थः । एतत्सवर्णविषयम् । अत एव बृहस्पतिः । समजातिगुणानान्तु वाक्पारु
ष्ये परस्परम् । विनयोविहितः शास्त्रेपणा अर्द्धत्रयोदशाइति । विष्णुरपि । समवर्णाक्रोशने द्वादशपणान्दण्ड्यइति । परस्पर
मिति शेषः । मनुनारदावपि । समवर्णे द्विजातीनां द्वादशैव व्यतिक्रमे । वादेष्ववचनीयेषु तदेव द्विगुणं भवेदिति ॥ अक्षुवि
षिणावपि । समवर्णव्यतिक्रमे द्वादशपणाय यारूपविशिष्टाक्षेपेषु विशिष्टस्य चतुर्विंशतिर विशिष्टस्यातिक्रमे च विशिष्टस्यत
मोर्द्धमिति ॥ अत्र द्वादशसार्द्धद्वादशयोरुत्कृष्टानुत्कृष्टत्वेन व्यवस्था द्रष्टव्या । कात्यायनोपि । योगुणान्कीर्त्तयेत्क्रोधान्नि
र्गुणेवागुणवत्तां । अन्यसंस्थानि योजीयवाग्दुष्टं तन्नरं विदुरिति ॥ नारदोपि । दुष्टस्यैव तु योदोषान्कीर्त्तयेत् क्रोधकारणा
त् । अन्यायदेशवादी च वाग्दुष्टं तन्नरं विदुरिति ॥ अत्र क्रोधकारणादित्यनेन दुष्टपरित्यागार्थे दोषकीर्त्तनेन दोष इति सू
चितम् । अत एवोक्तङ्कात्यायनेन । यत्रस्यात्परिहारार्थं पतितस्तेनकीर्त्तनं । वचनात्तत्र नस्यात्तु दोषो यत्र विभावयेदिति । वच
नात् दोषकीर्त्तनात् । यथाभियोगादौ पातित्यादिकं साधयेत्तत्रापि वचनाद्दोषो नस्यादिति यत्र विभावयेदित्यस्यार्थ उक्तः स्मृतिच
न्द्रिकायाम् । अत्रापि दण्डपारुष्यन्यायेन युगपत्प्रवृत्तयोर्दण्डतुल्यत्वं अयुगपत्प्रवृत्तयोः पूर्वप्रवृत्तस्य दण्डाधिक्यमिति द्रष्टव्यम्
। जातिगुणवत्तेविशेषेदण्डवैषम्यमाह बृहस्पतिः । समानयोः समोदण्डोन्यूनस्य द्विगुणोदमः । उत्तमस्याधिकः प्रोक्तोवाक्पारु
ष्ये परस्परमिति ॥ हीनस्योत्तमाक्षेपे द्विगुणः । उत्तमस्य हीनाक्षेपेऽर्द्धपरिमितो दण्ड इत्यर्थः । याज्ञवल्क्योपि । अर्द्धाधमे
षु द्विगुणः परस्त्रीषूत्तमेषु च । दण्डप्रणयनं कार्यं वर्णजात्युत्तराधरैरिति । अर्द्धः सार्द्धद्वादशपणात्मक इत्यर्थः । पूर्ववाक्ये पञ्च
विंशतिकोदम इति पञ्चविंशतेः प्रकृतत्वात् । वर्णाब्राह्मणादयः । जातयोमूर्द्धावसिक्तादयः । ते च ते उत्तराधराश्च वर्णजा
त्युत्तराधरास्तैरन्योन्याक्षेपे क्रियमाणे दण्डस्य प्रणयनं ऊहनीयं ज्ञातव्यम् । उत्तराधरभावमालोच्य दण्डः कल्पनीय इत्यर्थः ।
तमेव कल्पनीयं दण्डमादर्शयति मनुः । शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति । वैश्योप्यर्द्धशतं द्वे वा शूद्रस्तु वधमर्हति ॥

विप्रः पञ्चाशतन्दण्ड्यः क्षत्रियस्याभिशंसने। वैश्ये स्यादर्द्धपञ्चाशच्छूद्रे द्वादशकोदमइति। बृहस्पतिरपि। क्षिपन्विप्रादिक
न्दद्यात्पञ्चाशत्पणिकन्दममिति। शङ्खलिखिताववपि। आक्रोशे ब्राह्मणस्य क्षत्रियः पणशतन्दण्ड्यः शतार्द्धं वैश्यस्य पञ्चविंशतिंशू
द्रस्येति। बृहस्पतिरपि। विप्रे शतार्द्धं दण्डस्तु क्षत्रियस्याभिशंसने। विशस्तथार्द्धं पञ्चाशच्छूद्रस्यार्द्धं त्रयोदश। सच्छूद्रस्या
यमुदितो विनयो मपराधिनः। गुणहीनस्य पारुष्ये ब्राह्मणो नापराघ्नुयात्॥ वैश्यस्तु क्षत्रियाक्रोशे दण्डनीयः शतम्भवेत्।
तदर्द्धं क्षत्रिये वैश्यं क्षिपन्नविनयमर्हति॥ शूद्राक्रोशे क्षत्रियस्य पञ्चविंशतिकोदमः। वैश्यस्य चैतद्द्विगुणः शास्त्रविद्भिरुदाहृ
तः॥ वैश्यमाक्षारयन्शूद्रो दाप्यः स्यात्प्रथमन्दमम्। क्षत्रियं मध्यमञ्चैव विप्रमुत्तमसाहसमिति॥ जिह्वाच्छेदनरूपोत्रोत्तम
साहसो द्रष्टव्यः। तथा च स एव। धर्मोपदेशकर्त्ता च वेदोदाहरणान्वितः। आक्रोशकस्तु विप्राणां जिह्वाछेदेन दण्ड्यत इति
॥ शूद्र इत्यनुषङ्गः। आपस्तम्बोपि। जिह्वाछेदनं शूद्रस्यार्यन्धार्म्मिकमाक्रोशत इति। गौतमोपि। शूद्रो द्विजातीनभिसन्धा
याभिहत्य च वाग्दण्डपारुष्याभ्यामङ्गमोच्योयेनोपहन्यादिति। अभिसन्धाय बुद्धिपूर्वं वाचातिक्रम्य अभिहत्य दण्डेन दण्डेन
ताडयित्वा अङ्गं मोच्यते नाङ्गेन वियोजनीय इत्यर्थः। गुर्वाद्याक्रोशे त्वाहतुः शङ्खलिखितौ। तथाऽधिक्षतान्विप्रान्गुरूंश्च निर्वा
सनमुडनन्ताडनं वा गोमयानुलेपनं खरारोहणं दर्पहरणं वा दण्डो वेति। दण्डः कार्षापणशतरूपः। अत एव विष्णुः। गु
रूनाक्षारयन्कार्षापणशतमिति। पुत्रादिभिर्मात्रादीनामाक्रोशे दण्डमाह मनुः। मातरम्पितरञ्जायां भ्रातरं श्वशुरं गुरुं।
आक्षारयन्शतन्दाप्यः पन्थानञ्चाददद्गुरोरिति॥ भ्रातरं ज्येष्ठभ्रातरम्। एतच्चापराधेषु मात्रादिषु गुरुषु निरपराधायां जा
यायामिति मिताक्षरायामभाणि। श्वश्रुःश्वाद्यधिक्षेपे दण्डमाह बृहस्पतिः। क्षिपन्श्वश्र्वादिकन्दद्यात्पञ्चाशत्पणिकन्दममिति
बाह्वादिच्छेदननिष्ठुरभाषाभिभाषणे दण्डमाह याज्ञवल्क्यः। बाहुग्रीवानेत्रसक्थिविनाशे वाचिके दमः। शत्यस्तदर्द्धिकः पाद
नासाकर्णकरादिष्विति। बाह्वादिविनाशे वाचिके करिष्यामीति वाचा प्रतिपादितं शत्यः शतपरिमितो दण्डः। पादादिभङ्गक

रिष्यामीत्याक्षेपेपंचाशत्परिमितोदण्डइत्यर्थः ॥ एवंवादिनोऽशक्तस्यदशपणादंडनीयाइत्याहसएव । अशक्तस्तुवदन्नेवं
दंडनीयःपणान्दशेति । यःपुनःशक्तश्चाशक्तस्यबाह्वादिभङ्गाक्षेपङ्करोतिनकेवलंसदण्ड्यःकिन्त्वाशक्ताक्षेपार्थम्प्रतिभुवमपिदा
पनीयइत्याहसएव । तथाशक्तःप्रतिभुवन्दाप्यःक्षेमायतस्यचेति । अश्लीलभाषणेदण्डमाहसएव । अभिगन्तास्मिभगि
नींमातरंवातवेतिह । शपन्तन्दापयेद्राजापञ्चविंशतिकन्दममिति ॥ तीव्राक्रोशेदंडमाहसएव । पतनीयकृतक्षेपेदंडमु
त्तमसाहसः । उपपातकयुक्तेतुदाप्यःप्रथमसाहसमिति । पतनीयैःपातित्यहेतुभिर्ब्रह्महत्यादिभिः । उपपातकानिगोवधादी
नि । मनुरपि । ब्राह्मणक्षत्रियाभ्यान्तुदण्डःकार्योविजानता । ब्राह्मणेसाहसःपूर्वःक्षत्रियेत्वेवमध्यमः ॥ विट्शूद्रयोस्त्वेव
मेवस्वजातिम्प्रतितत्त्वतः । छेदवर्जंप्रणयनन्दण्डस्येतिविनिश्चयः ॥ पापोपपातकाक्रोशेमहापातकशंसकाः । आद्यमध्योत्त
मान्दण्डान्दद्युस्तेमेयथाक्रममिति । विष्णुरपि । परस्परपतनीयक्षेपेकृतेतूत्तमसाहसंउपपातकयुक्तन्तुमध्यमम् । त्रैविद्य
वृद्धानांक्षेपेजातिपूगानाञ्चग्रामदेशयोःप्रथममिति । देशाद्याक्रोशेदण्डमाहबृहस्पतिः । देशादिकंक्षिपन्दाप्यःपणानर्द्ध
त्रयोदश । पापेनयोजयन्दर्पाद्दाप्यःप्रथमसाहसम् ॥ एषदण्डःसमाख्यातःपुरुषापेक्षयामया । समन्यूनाधिकत्वेनकल्प
नीयोमनीषिभिरिति ॥ याज्ञवल्क्योपि । मध्यमोजातिपूगानांप्रथमोग्रामदेशयोरिति । राजन्याक्रोशेदण्डमाहनारदः
। अवकुश्यचराजानंवर्त्मनिस्वेव्यवस्थितम् । जिह्वाछेदाद्भवेच्छुद्धिःसर्वस्वहरणेनवेति ॥ याज्ञवल्क्योपि । राज्ञोनिष्टप्रवक्ता
रन्तस्यैवाक्रोशकन्तथा । तन्मन्त्रस्यचभेत्तारञ्छित्त्वाजिह्वाम्प्रवासयेदिति ॥ सत्यदोषाभिधानेपिवाक्पारुष्यदंडोस्त्येव । तथाच
नारदः । पतितम्पतितेत्युक्त्वाचौरञ्चौरेतिवापुनः । वचनात्तुल्यदोषःस्यान्मिथ्याद्विर्दोषतांव्रजेदिति ॥ मनुनारदावपि । का
णंवाप्यथवाखञ्जमन्यंवापितथाविधम् । तथ्येनापिब्रुवन्दाप्योदंडङ्कार्षापणावरमिति ॥ विष्णुरपि । काणखञ्जादीनान्तथ्य
वाच्यपिकार्षापणद्वयमिति । एतच्चचतुर्वृत्तविषयमितिमाधवीयेविद्यारण्यश्रीपादैरभिधायि । मिथ्यावदनशीलानान्दंड

माह कात्यायनः । अन्तराख्यानशीलानां जिह्वाछेदो विशोधनमिति । हारीतोपि । मिथ्याभाषिणां मेलकानाञ्चराज्ञा जिह्वा
श्छिंद्याद्दंडयेद्वेति । मेलको भक्षकः । कस्यचिद्वाक्यारुष्यकृतोऽर्द्धदंडमाहोशना । मोहात्प्रमादात्संघर्षात्प्रीत्या वोक्तं मयेति
यः । नाहमेवं पुनर्वक्ष्ये दंडार्द्धन्तस्य कल्पयेदिति । वक्ष्येऽत्र यत्र वक्तीति शेषः ॥ इति वाक्पारुष्याख्यव्यवहारपदम् ॥ ● ●
● ● ॥ अथ स्तेयाख्यव्यवहारपदम् ॥ तल्लक्षणमाह मनुः । स्यात्साहसं त्वन्वयवत्प्रसभङ्कर्म यत्कृतम् । निरन्वयम्भवेत्
स्तेयं हृत्वापह्नुयते च यदिति । अस्यायमर्थः । अन्वयवद्द्रव्यरक्षकसमक्षमाद्यक्षादि समक्षं बलावष्टम्भेन यत्परधनापहरणा
दिकं क्रियते तत्साहसं । स्तेयम्पुनर्निरन्वयं स्वाम्याद्यसमक्षं यद्वञ्चयित्वा परधनाद्यपहरणान्तदुच्यते । यच्च राजाद्यध्यक्षादिस
मक्षमपहृत्य न मयेदं हृतमिति भयान्निह्नुते तदपि स्तेयमिति । अत एव नारदः । उपायैर्विविधैरेषाञ्छलयित्वापकर्षणम् । सु
प्तमत्तप्रमत्तेभ्यः स्तेयमाहुर्मनीषिण इति ॥ एषामित्येतच्छुद्रनिर्दिष्टान्याह स एव । मृद्भांडासनखट्वास्थिदारुचर्मतृणादि
यत् । शमीधान्यं कृतान्नञ्च क्षुद्रद्रव्यमुदाहृतम् । वासः कौशेयवर्ज्जञ्च गोवर्ज्जम्पशवस्तथा ॥ हिरण्यवर्ज्जं लोहञ्च मध्यं व्रीहि
यवादि च । हिरण्यरत्नकौशेयस्त्रीपुङ्गोगजवाजिनः । देवब्राह्मणराज्ञाञ्च विज्ञेयन्द्रव्यमुत्तममिति । बलात्कारहृतमपहर
णं साहसान्तर्गतं स्तेयमित्याह स एव । तस्यैव भेदः स्तेयः स्याद्विशेषस्तत्रतूच्यते । आधिः साहसमाक्रम्य स्तेयमाधिश्छलेनत्विति
। तस्यैव साहसस्यैव । आधिः पीडा धनापहरणादि द्वारा आक्रम्य प्रसह्य परस्य क्रियमाणक्लेशः साहसरूपं स्तेयम् । छलेन क्रिय
माणश्चाधिः केवलस्तेयमित्यर्थः । तस्करज्ञानोपायमाह याज्ञवल्क्यः । ग्राहकैर्गृह्यते चौरो लोप्त्रेणाथ पदेन वा । पूर्वकर्म्मापरा
धी च तथा चाशुद्धवासकः ॥ अन्येपि शङ्कया ग्राह्या जातिनामादिनिह्नवैः । द्यूतस्त्रीपानसक्ताश्च शुष्कभिन्नमुखस्वराः ॥ परद्र
व्यगृहाणाञ्च पृच्छका गूढचारिणः । निराया व्ययवन्तश्च विनष्टद्रव्यविक्रया इति । ग्राहकैराजपुरुषैर्लोप्त्रेणापहृतभाण्ड
नादिना चौर्यः । अशुद्धवासः अप्रज्ञातस्थानवासी । जातिनिह्नवो नाहं शूद्र इत्येवंरूपः । नामनिह्नवो नाहं डित्थ इत्येवं रू

पः । आदिग्रहणात्खदेशग्रामकुलाद्यपलापेन च लक्षिताग्राह्याः । घृतपण्याङ्गनामद्यपानादिष्वतिप्रसक्ताः तथा कुतस्त्यो
ऽसि त्वं मितिचौरग्राहिभिः पृष्टो यदि शुष्कमुखो भिन्नस्वरो वा भवति । वक्रवचनात्खिन्नललाटादीनां ग्रहणम् । तथा ये निष्कार
णाङ्किञ्चदस्य द्रव्यं किं वास्य गृहमित्येवं पृच्छन्ति । ये च वेशान्तरधारणेनात्मानं गूहयित्वा चरन्ति । ये चायाभावेऽपि व्ययकारि
णः । ये च विनष्टद्रव्याणां जीर्णवस्त्रभिन्नभाजनादीनामनिर्ज्ञातस्वामिकानां विक्रयकारिणः ते सर्वेऽपि चौर्यसम्भावनया ग्राह्या
इत्यर्थः । एवंविधलिङ्गयुक्तान् पुरुषान् गृहीत्वैते चौरा भवन्ति न वेति सम्यक् परीक्षेत न तावन्मात्रेण निश्चिनुयात् । चौरस्या
पि लिङ्गसम्बन्धसम्भवात् । अत एव नारदः । अन्यहस्तात्परिभ्रष्टमकामादुत्थितं भुवि । चौरेण वा परिक्षिप्तं लोप्त्रं यत्नात्प
रीक्षयेत् ॥ असत्याः सत्यसङ्काशाः सत्याश्चासत्यसन्निभाः । दृश्यन्ते विविधा भावास्तस्माद्युक्तम्परीक्षणमिति ॥ स्तेयस्यैव विध्य
माह स एव । तदपि त्रिविधं ज्ञेयं द्रव्यापेक्षम्मनीषिभिः । क्षुद्रमध्योत्तमानां तु द्रव्याणामपकर्षणादिति । चौरस्य द्वैविध्यमा
ह बृहस्पतिः । प्रकाशाश्चाप्रकाशाश्च तस्करा द्विविधाः स्मृताः । प्रज्ञासामर्थ्यमायाभिः प्रभिन्नास्ते सहस्रधेति ॥ प्रकाशतस्करान्
ह स एव । नैगमा वैद्यकितवाः सभ्योत्कोचकवञ्चकाः । दैवोत्पातविदो भद्राः शिल्पज्ञाः प्रतिरूपकाः ॥ अक्रियाकारिणश्चैव मध्य
स्थाः कूटसाक्षिणः । प्रकाशतस्करा ह्येते तथा कुहकजीविन इति ॥ प्रतिरूपकाः प्रतिरूपकारिणः । अत एव नारदः । प्रका
शवञ्चकास्तत्र कूटमानतुलाश्रिताः । उत्कोचकाः सोपधिका वञ्चकाः परयोषितः ॥ प्रतिरूपकराश्चैव मङ्गलादेशवृत्तयः । इत्ये
वमाद्यो ज्ञेयाः प्रकाशास्तस्करा भुवीति ॥ नैगमादिव्याजेन ये परद्रव्यापहारकास्ते नैगमाद्याः प्रकाशतस्करा इत्यर्थः । अप्रकाश
तस्करस्वरूपभेदानाह व्यासः । साधनाङ्गान्विता रात्रौ विचरन्त्यविभाविताः । अविज्ञातनिवासाश्च ज्ञेयाः प्रच्छन्नतस्कराः । उ
त्क्षेपकः सन्धिभेत्ता पान्थमुड्ग्रन्थिभेदकः । स्त्रीपुंसाश्वपशुस्तेयी चौरो नवविधः स्मृत इति ॥ राज्ञा वितिप्रायिकम् । अरण्यादौ दि
वापि सम्भवात् । उत्क्षेपकः धनिनामनवधानतां निश्चित्य तत्समीपस्थधनमुत्क्षिप्यापहारकः । सन्धिभेत्ता गृहयोः सन्धौ छिद्रमात

X 3

भयभिन्नभिन्नमेता। पांथमुदकान्नादौ पथिकानामन्नप्रद्यापहारकः। ग्रंथिभेदकः परिधानीवादि ग्रथितधनं गृहीत्वा तद्ग्रंथिमो चकाइति। प्रकाशतस्करार्णां दण्डमाह सएव। स्त्रीपुंसौ वञ्चयन्तीह मञ्जवादेश वृत्तयः॥ गृह्णन्ति छद्मनाचार्यमनार्थ्यास्त्वं येलिङ्गिनः॥ नैगमाद्याभूरिधनाद्दण्डाद्दोषानुरूपतः। यथा तेनानिवर्त्तन्ते तिष्ठन्ति सन्मयेन थेति॥ दोषानुरूपतो दण्डान् नु धनानुरूपत इत्यभिप्रायः। केषांश्चित्प्रकाशतस्कराणां दण्डमाह वृहस्पतिः। प्रच्छाद्य दोषं व्याजिस्थ पुनः संस्कृत्य विक्रयी। पश्यंतद्द्विगुणं दाप्यो वणिग्दण्डश्च तत्समम्॥ अज्ञातौषधिमन्त्रस्तु यश्च व्याधेरतत्ववित्। रोगिभ्योर्थं समादत्ते स दण्ड्यश्चोरवद्भि षक्॥ कूटाक्षदेविनः क्षुद्रा राजभाव्यहराश्च ये। गणकावञ्चकाश्चैव दाण्ड्यास्ते कितवाः स्मृताः॥ अन्यायवादिनः सभ्यास्तथै वोत्कोचजीविनः। विश्वस्तवञ्चकाश्चैव निर्वास्याः सर्वएव ते॥ ज्योतिर्ज्ञानन्तथोत्पातमविदित्वा तु ये नृणाम्। आवयन्त्यर्थ लोभेन विनेयास्ते प्रयत्नतः॥ दण्डाजिनादिभिर्युक्तमात्मानन्दर्शयन्ति ये। हिंसन्ति छद्मना नृणामध्यास्ते राजपूरुषैः। अ ल्पमूल्यं तु संस्कृत्य नयन्ति बहुमूल्यताम्। स्त्रीबालकान्वञ्चयन्ति दण्ड्यास्तेर्थानुसारतः। हेमरत्नप्रवालाद्यान्कृत्रिमान्कु र्वन्ति तु ये। केतुर्मूल्यं प्रदाप्यास्ते राज्ञा तद्द्विगुणं दमम्। मध्यस्थं वञ्चयन्त्येकं स्नेहलोभादिना यदा। साक्षिणश्चान्यथा ब्रूयुर्दा प्यास्ते द्विगुणन्दममिति॥ भाव्यङ्करविशेषः। मनुरपि। सर्वकण्टकपापिष्ठं हेमकारन्तु पार्थिवः। अवर्त्तमानमन्याये छेद येल्लवशः क्षुरैरिति। विष्णुरपि। द्यूतेषु कूटाक्षदेविनां करच्छेद इति। अप्रकाशतस्कराणां दण्डमाह सएव। उत्क्षेपकसन्ध च्छेत्त्रोः राजपूरुषैः। सन्दंशोत्रकरः। तथा च याज्ञवल्क्यः। उत्क्षेपकग्रन्थिभेदौ करसन्दंशहीनकौ। कार्य्यौ द्वितीया पराधे करपादैकहीनकाविति। अंगुष्ठतर्जन्योर्ग्रन्थिमोचने साधकतमत्वेनात्र सन्दंशशब्देन तयोर्ग्रहणम्। प्रथमापराधे नैकमेव पाणि सन्दंशाभाववन्तौ कर्तव्यौ। द्वितीयापराधे तु भावव्येकपाणि पादाभाववन्तौ कर्त्तव्याविप्यर्थः। सन्धिभेत्तॄणां दण्ड माह मनुः। सन्धिं भित्वा तु ये चौर्य्यं रात्रौ कुर्वन्ति तस्कराः। तेषां छित्वा नृपो हस्तौ तीक्ष्णशूले निवेशयेदिति॥ तानि निशेयः।

वृहस्पतिरपि । सन्धिछेदकृतो ज्ञात्वा शूलमारोपयेत्प्रभुरिति । आरोपयेत् शूले आरोपयेदित्यर्थः । पांथमुखोद्दण्डमाह स एव । त

थापान्थमुखं वृक्षे गलेबद्ध्वावलम्बयेदिति । पांथमुखं पथिलुण्ठकान् । ग्रन्थिभेदकस्य दण्डमाह मनुः । अंगुलीग्रन्थिभेदस्य

छेदयेत्प्रथमे ग्रहे । द्वितीये हस्तचरणौ तृतीये वधमर्हतीति ॥ अङ्गुलीतर्जन्यंगुष्ठौ । द्वितीये हस्तस्य छेदः चरणस्य च तृ

तीये वध इत्यर्थः । अत एव नारद आह । प्रथमे ग्रन्थिभेदानामंगुष्ठहस्तयोर्वध इति । स्त्रीहन्तुर्दण्डमाह व्यासः । स्त्रीहन्तारोहय

पयेद्दग्धव्यो वैकराग्निनेति । पुंहन्तुर्दण्डमाह स एव । नरहन्तुर्हस्तपादौ छित्वास्थाप्य स्तु तुष्यय इति । गोहन्तुर्दण्डमाह वृ

हस्पतिः । गोहन्तुर्नासिकां छित्वा बध्वांभसि निमज्जयेदिति । नारदः । सर्वस्वं हरतो नारीं कन्यां तु हरतो वधः । वाजिवार

णलोहानां झ्रादद्दीत वृहस्पतिरिति । सर्वस्वमित्यनुषङ्गः । पशुहन्तुर्दण्डमाह व्यासः । पशुहन्तुस्त्वर्द्धपादन्तीक्ष्णा शस्त्रेण

कर्त्तयेदिति । पशुहर्त्तापश्वनुसारेण दण्डनीय इत्याह नारदः । महापशून्स्तेनयतो दण्डमुत्तमसाहसम् । मध्यमप

शून्पूर्वन्तु क्षुद्रपशून्तथा हृते इति । हृते इति षष्ठी । वन्दिग्रहादीनान्दण्डमाह याज्ञवल्क्यः । वन्दिग्राहांस्तथा वाजिकुञ्ज

राणांच हारिणः । प्रसह्य घातिनश्चैव शूलानारोपयेन्नर इति ॥ अङ्गच्छेदादयः उत्तमसाहसत्वाद्ब्राह्मणव्यतिरिक्तेषूत्तमद्र

व्यापहारविषयाः । साहसेषु य एवोक्तस्त्रिषु दण्डो मनीषिभिः । स एव दण्डः स्तेयेपि द्रव्येषु त्रिष्वनुक्रमादिति नारदेनोत्त

मसाहसस्योत्तमद्रव्यविषयत्वेन व्यवस्थापनात्तेन क्षुद्रमध्यमद्रव्योत्क्षेपकादीनान्तदनुरूपेन करच्छेदादिः । तस्करस्यापहृ

तं धनन्तत्स्वामिने दापयित्वा दण्डः कर्त्तव्य इत्याह याज्ञवल्क्यः ॥ चौरं प्रदाप्यापहृतं घातयेद्विविधैर्वधैरिति । धान्याद्यपहरणे द

ण्डमाह मनुः । धान्यन्दशभ्यः कुम्भेभ्यो हरतोभ्यधिकं वधः । शेषेप्येकादशगुणं दाप्यस्तस्य च तद्धनमिति ॥ कुम्भो विंशतिप्रस्थाः

शेषे दशकुम्भाधिकान्न्यूने । तस्य धान्यस्वामिनः । रत्नहरणे दण्डमाह स एव । मुख्यानाञ्चैव रत्नानां हरणे वधमर्हतीति ।

स एव । सुवर्णरजतादीनामुत्तमानाञ्च वाससाम् । पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते । शेषेत्वेकादशगुणं मूल्या

दण्डं प्रकल्पयेत् । पुरुषाणां कुलीनानां नारीणाञ्च विशेषत इति । अत्र सुवर्णादीनां संख्याकर्षतेनाहुः वृद्धा इति मदन
रत्ने । अत्राङ्गच्छेदादिदण्डो ब्राह्मणव्यतिरिक्तविषयः । स चिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेदिति याज्ञवल्क्यस्मरणा
त् । चिह्नं ललाटे श्वपदाकाराङ्कनम् । तथा च मनुः । गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः । स्तेये च श्वपदं कार्यं ब्रह्मण
स्यशिरः पुमानिति । एतच्च प्रायश्चित्तमकुर्वतां दण्डोत्तरकालं तु प्रायश्चित्तं चिकीर्षताम् । प्रायश्चित्तं तु कुर्वाणाः पूर्वे वर्णा यथो
दितम् । नाङ्क्या राज्ञा ललाटे तु दाप्यमूत्तमसाहसमिति मनुस्मरणात् । जात्यादिभेदेन च दण्डतारतम्यमाह स एव । अष्टापा
द्यं तु शूद्रस्य स्तेये भवति किल्बिषम् । षोडशैव तु वैश्यस्य द्वात्रिंशत्क्षत्रियस्य तु । ब्राह्मणस्य चतुःषष्टिः पूर्णं वापि शतं भवेत् । द्वि
गुणा वा चतुःषष्टिस्तद्दोषगुणवेदिन इति ॥ यस्मिन्नपराधे यो दण्ड उक्तः स शूद्रकर्तृके तस्मिन्नष्टगुणो दापनीयः वैश्यकर्तृके षो
डशगुणः क्षत्रियकर्तृके द्वात्रिंशद्गुणः । ब्राह्मणकर्तृके चतुःषष्टिगुणः । शतगुणो वा अष्टाविंशत्युत्तरशतगुणो वेत्यर्थः । भा
षान्यूनमूल्यानां क्षुद्राणां मूल्यात्पञ्चगुणो दम इत्याह नारदः । काष्ठभाण्डतृणादीनां मृन्मयानां तथैव च । वेणुवैणवभाण्डा
नां तथा स्नाय्वस्थिचर्मणाम् । शाकानामार्द्रमूलानां हरणे फलमूलयोः । गोरसेक्षुविकाराणां तथा लवणतैलयोः । पक्वान्ना
नां कृतान्नानां मत्स्यानामामिषस्य च । सर्वेषामल्पमूल्यानां मूल्यात्पञ्चगुणो दम इति । यत्पुनः क्षुद्रद्रव्यविषये द्विगुणदण्डप्रति
पादकमनुवचनम् । सूत्रकार्पाससकिण्वानां गोमयस्य गुडस्य च । दध्नः क्षीरस्य तक्रस्य पानीयस्य तृणस्य च । वेणुवैदलभाण्डा
नां लवणानां तथैव च । मृन्मयानाञ्च हरणे मृदो भस्मन एव च ॥ मत्स्यानां पक्षिणाञ्चैव तैलस्य च घृतस्य च । मांसस्य मधु
नश्चैव यच्चान्यत्पशुसम्भवम् । अन्येषाञ्चैवमादीनां मद्यानामोदनस्य च । पक्वान्नानाञ्च सर्वेषां तन्मूल्याद्द्विगुणो दम इति । त
दल्पप्रयोजनविषयम् । पंथादीनामल्पप्रयोजनद्रव्यापहारे दण्डः । तथा च स एव । द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे
च मूलके । आददानः परक्षेत्रान्न दण्डं दातुमर्हति ॥ चणकव्रीहिगोधूमयवानां मुद्गमाषयोः । अनिषिद्धैर्गृहीतव्यो मुष्टिरे

कापथिस्थितैः। तथैवसप्तमेभक्तेभक्तानिवडनश्नता। अश्वस्तनविधानेनहर्त्तव्यंहीनकर्म्मणइति। नकेवलचौरस्यैवदण्डः किन्त्वचोरस्यापिचौरोपकारिणइत्याहयाज्ञवल्क्यः। भक्तावकाशाग्न्युदकमन्त्रोपकरणव्ययान्। दत्वाचौरस्यवाहन्तुर्जानतोदमउत्तमइति। भक्तंअशनं। अवकाशोनिवासस्थानम्। अग्निश्चौरस्यशीतापनोदनाद्यर्थः। उदकन्तृषितस्य। मन्त्रःचौर्यप्रकारोपदेशः। उपकरणंचौर्यसाधनम्। व्ययःअपहारर्थन्देशान्तरङ्गच्छतःपाथेयम्। एतानिचौरस्यहन्तुर्वादुष्टत्वं जानन्नपियःप्रयच्छतितस्योत्तमसाहसोदण्डइत्यर्थः। कात्यायनोपि। चौराणाम्भक्तदावेस्तुस्तथाग्न्युदकदायिनः। क्रेतारश्चैवभाण्डानाम्प्रतिग्राहिणएवच॥ समदण्डाःस्मृताह्येतेयेचप्रच्छादयन्तितानिति। चौरोपेक्षाकारिणंप्रत्याहनारदः। शक्ताश्चयद्युपेक्षन्तेतेपितद्दोषभागिनः। उत्क्रोशतांजनानान्तुह्रीयमाणेधनेतथा। श्रुत्वायेनाभिधावन्तितेपितद्दोषभागिनइति। इतिस्तेयाख्यव्यवहारपदम्॥ ● ॥ अथसाहसाख्यंव्यवहारपदम्। तस्यस्वरूपमाहनारदः। सहसाक्रियतेकर्मयत्किञ्चिद्बलदर्प्पितैः। तत्साहसमितिप्रोक्तंसहोबलमिहोच्यतेइति। तस्यचातुर्विध्यमाहवृहस्पतिः। मनुष्यमारणञ्चौर्यम्परदाराभिमर्शनम्। पारुष्यमुभयञ्चेतिसाहसंस्याच्चतुर्विधमिति। उभयपारुष्यम्वाग्दण्डपारुष्ये। तस्यत्रैविध्यमाहनारदः॥ तत्पुनस्त्रिविधंज्ञेयम्प्रथमंमध्यमन्तथा। उत्तमञ्चेतिशास्त्रेषुतस्योक्तंलक्षणंपृथगिति। एतेषांस्वरूपमाहसएव। फलमूलोदकादीनांक्षेत्रोपकरणस्यच॥ भङ्गाक्षेपोपमर्दाद्यैःप्रथमंसाहसंस्मृतम्॥ वासःपश्वन्नपानानांगृहोपकरणस्यच। एतेनैवप्रकारेणमध्यमंसाहसंस्मृतम्॥ व्यापादोविषशस्त्राद्यैःपरदाराभिमर्शनम्। प्राणोपरोधियच्चान्यदुक्तमुत्तमसाहसमिति॥ भङ्गःफलादिस्वरूपनाशनम्। आक्षेपआक्रोशःवाक्तिरस्करणमितियावत्। अपमर्दःस्वरूपावशेषणपीडनम्। एतेनैवप्रकारेणेत्यर्थः। त्रिविधेपिसाहसेदण्डमाहनारदः। तस्यदण्डःक्रियापेक्षःप्रथमस्यशतावरः। मध्यमस्यतुशास्त्रज्ञैर्दृष्टःपञ्चशतावरः। उत्तमेसाहसेदण्डःसहस्रावरइष्यते। वधःसर्वस्वहरणंपुरान्निर्वासनांकने॥ तदङ्ग

च्छेदइत्युक्तोदण्डउत्तमसाहसइति॥ ब्राह्मणस्यतुमहत्यप्यपराधेशारीरदण्डाभावमाहसएव। अविशेषेणसर्वेषामेषदण्ड
विधिःस्मृतः। वधादृतेब्राह्मणस्यनवधेब्राह्मणोर्हतीति। यमोपि। नशारीरोब्राह्मणस्यदण्डोभवतिकस्यचिदिति। महत्यप
राधेब्राह्मणस्यदण्डमाहसएव। गुप्तेतुबन्धनेबध्वाराजाभक्तम्प्रदापयेदिति। नारदोपि। शिरसोमुण्डनन्दण्डस्तस्यनिर्वास
नंपुरात्। ललाटेचाभिशस्ताङ्कःप्रयाणङ्गर्दभेनचेति। परद्रव्यापहरणरूपसाहसस्वरूपकन्तत्रदण्डमाहयाज्ञवल्क्यः।
सामान्यद्रव्यप्रसभहरणंसाहसंस्मृतम्। तन्मूल्याद्द्विगुणोदण्डोनिह्नवेतुचतुर्गुणइति। बकुभिर्जनैःप्रहरणादिकालक्रमेण
रक्षमाणस्यद्रव्यस्यबलात्कारेणहरणंसाहसरूपंस्तेयमितिपूर्वार्द्धार्थः। तन्मूल्यादपहृतद्रव्यमूल्यात्। निह्नवे। अपला
पेयःसाहसंकरोतितद्द्विगुणान्दमम्। यस्तुसाहसंकृत्वानिह्नुतेसचतुर्गुणान्दाप्यइत्युत्तरार्द्धार्थः। साहसिकस्यप्रयोजयितारंप्र
त्याहसएव। यःसाहसंकारयतिसदाप्योद्विगुणान्दमम्। यस्त्वेवमुक्त्वाहन्दाताकारयेत्सचतुर्गुणमिति। द्विगुणान्दमंसाह
सिकदण्डाद्द्विगुणंदण्डं। साहसिकविशेषंप्रत्याहसएव। अर्घ्याक्रोशातिक्रमकृद्भ्रातृभार्याप्रहारदः। संदिष्टस्याप्रदाताच
समुद्रगृहभेदकृत्॥ सामन्तकुलिकादीनामपकारस्यकारकः। पञ्चाशत्पणिकोदण्डएषामितिविनिश्चयः॥ स्वच्छन्दविध
वागामीविक्रुष्टेनाभिधावकः। अकारणेनविक्रोष्टाचाण्डालश्चोत्तमान्स्पृशन्। शूद्रप्रव्रजितानाञ्चदैवेपित्र्येचभोजकः।
अयुक्तंशपथंकुर्वन्नयोग्योयोग्यकर्मकृत्। वृषक्षुद्रपशूनाञ्चपुंस्त्वस्यप्रतिघातकृत्। साधारणस्यापलापीदासीगर्भविनाश
कृत्॥ पितृपुत्रस्वसृभ्रातृदम्पत्याचार्यशिष्यकाः। एषामपतितान्योन्यत्यागीचशतदण्डभागिति। अज्ञानकर्तृकेसाहसिके
पित्रारिबान्धवाः। प्रष्टव्याराजपुरुषैःसामादिभिरुपक्रमैः। विज्ञेयोऽसाधुसंसर्गाच्चिह्नैर्होढेनवानरैः। एषोदितोघातकाना
न्तस्करणाञ्चभावना। गृहीतःशङ्कयायस्तुनतत्कार्यंप्रपद्यते। शपथेनाववोद्धव्यःसर्ववादेष्वयंविधिरिति। चिह्नंरक्तलेपा
दि। होढोमृतस्यधनादिकम्। ज्ञानानन्तरकर्तव्यमाहव्यासः। ज्ञात्वानुघातकंसम्यक्सहायंसबान्धवम्। हन्याच्चि

स्ववधोपायैरुद्वेजनकैर्नृपइतिः । बृहस्पतिः । प्रकाशघातकायेतु तथाचोपांशुघातकाः । ज्ञात्वासम्यग्धनंहृत्वाहन्तव्याविवि
धैर्वधैरिति ॥ ब्रह्मघ्नक्षत्रियादिविषयमेतत् । यतश्चाह बौधायनः । क्षत्रियादीनांब्राह्मणस्यवधःसर्वस्वहरणञ्चतेषामेवतु
ल्यापकृष्टवधेयथाबलमनुरूपन्दण्डञ्चकल्पयेदिति । तेषांक्षत्रियादीनान्तुल्यापकृष्टवधेसजातीयहीनजातीयवधेद
ण्डंशारीरदण्डम् । एकघातार्थप्रवृत्तानांबहूनान्दोषानुरूपन्दण्डमाहकात्यायनः । एकश्चेद्बहवोहन्युःसंरब्धाःपुरुष
न्नराः । मर्मघातीतुयस्तेषांसघातकइतिस्मृतः । योमर्मघातकःसएववधापराधदण्डभागित्यर्थः । सएव । आरंभकृत्सहा
यश्चदोषवक्तानुदेशकः । आश्रयःशस्त्रदाताचभक्तदातायोविकर्म्मिणाम् ॥ युद्धोपदेशकश्चैवतद्विनाशप्रवर्त्तकः । उपेक्षा
कार्य्ययुक्तश्चदोषवक्तानुमोदकः ॥ अनिषेद्धाक्षमोयःस्यात्सर्वेतेकार्यकारिणः । यथाशक्त्यनुरूपन्तुदण्डमेषाम्प्रकल्पयेदि
ति । बृहस्पतिरपि । एकस्यबहवोयत्रप्रहरन्तिरुषान्विताः । मर्म्मप्रहारकोयस्तुघातकःसउदाहृतः ॥ मर्मघातीतुयस्ते
षांयथोक्तम्प्रापयेद्दमम् । आरम्भकृत्सहायश्चदोषभागीतदर्द्धतः ॥ क्षतस्याल्पमहत्त्वञ्चमर्म्मस्थानञ्चयत्नतः । सामर्थ्य
ञ्चानुबन्धञ्चज्ञात्वाचिह्नैःप्रसाधयेदिति ॥ विषयविशेषेमनुष्यवधकर्त्तुर्दण्डाभावंदोषाभावप्रदर्शनमुखेनाहमनुः । शस्त्रंद्वि
जातिभिर्ग्राह्यन्धर्मोयत्रोपरुध्यते । द्विजातीनाञ्चवर्णानांविप्लवेकालकारिते ॥ आत्मनश्चपरित्राणेदक्षिणानाञ्चसङ्गरे ।
स्त्रीविप्राभ्युपपत्तौचघ्नन्धर्मेणनदुष्यतीति । यत्रदेशेकालेचधर्म्मस्तटाकारामादिरूपोभेदनच्छेदनादिनापरुध्यतेतत्रत
थाशूद्रेतरवर्णसङ्करेपरदारक्रमणादिरूपेराजाभावकालकारिते । तथात्मनःपरतःप्राणसंशये । तथादक्षिणानांसङ्ग
रेगोग्रहणनिमित्तकेयुद्धे । तथास्त्रीविप्राभ्युपपत्तौदुर्बलहिंसानिबाधने । धर्म्मार्थहेतोर्धर्म्मेदुष्यतियतः । अतस्तत्रद्विजाति
भिःक्षत्रधर्माश्रयणरहितैरपिसमर्थैःशस्त्रंग्राह्यमित्यन्वयः । अत्रद्विजातिग्रहणंब्राह्मणवैश्यविषयम् । प्रजापालनार्थंक्ष
त्रियस्यवचनान्तरेणैवशस्त्रग्रहणस्यप्राप्तत्वादित्यभिसन्धायैवबौधायनआह । ब्राह्मणार्थेगवार्थेचवर्णानांवापिसङ्करे । गृह्णी

यातां विप्रविशोश्च स्वधर्मेऽव्यतिक्रमे इति ॥ अनुपरीक्षार्थमपि ब्राह्मणः शस्त्रमायुधमाददीतेत्यापस्तम्बवचनम् । यच्चबौधायनवचनम् । हास्यार्थमपि ब्रह्म आयुधं नाददीतेति । तद्द्वयमपिधर्मोपरोधादिभिन्नविषयम् । साहसस्तेयस्य क्रोधलोभहृततम्
माह बृहस्पतिः । साम्प्रतं साहसस्तेयं श्रूयतां क्रोधलोभजमिति । स्त्रीसंग्रहणाख्यसाहसस्वरूपमाह स एव च । अनिच्छन्त्याय
क्रियते सुप्तोन्मत्तप्रमत्तया । प्रलपन्त्या वा रहसि बलात्कारकृतन्तु तदिति । अनिच्छन्त्या परपुरुषेण सह स्थितिर्यो बलात्कृते
षेऽपि वा नैवं कर्म साहसम् । तदुक्तं व्यासेन अनिच्छन्त्यायानिचिह्नानितस्याः कर्त्तव्यं राजकर्त्तव्यं चाह स एव च । नेच्छन्त्यायानिचिह्नानि बलात्कारकृतानि च । परपुंसः प्रसंगेषु नारी
णां तानि सुस्फुटम् । नखदन्तक्षतक्षामा सकचग्रहविक्षिता । सद्यो विस्रावितानारी बलात्कारेण दूषिता ॥ उच्चैर्विक्रोशयन्ती
च रुदन्ती लोकसन्निधौ । तस्य नाम वदन्ती च यथा हन्तेन दूषिता ॥ शोचेदेवं विधैर्लिङ्गैर्भ्रष्टीकृतपयोधरा । चिह्नालंकारकेशी
स्वव्याकुलीकृतलोचना । राज्ञा सभ्यैः सभाज्ञो वा स्वयमन्विष्यतश्च साक्षिणाम् । यद्ब्रूयात्तु हता ज्ञानात्तत्र तत्कर्तव्यम् प्रयत्नतः । विवादे साक्षि
णामत्र प्रकुर्वीत परिग्रहम् ॥ प्रार्थनादभिशस्तस्य न दिव्यं दातुमर्हतीति । अत्र दण्डमाह मनुः । सहसं ब्राह्मणो दण्ड्यो वि
प्रां गुप्तामव्रजन् व्रजन्निति । गुप्तांस्वनियमेन रक्षिताम् । क्षत्रियादि सवर्णविषये दण्डमाह बृहस्पतिः । सहसा कामयेद्यस्तु ध
नन्तस्याखिलं हरेत् । उत्कृष्टलिङ्ग वृषणौ भ्रामयेद्गर्दभेन चेति । कामयेत् परस्त्रियं गच्छेत । अयमेव दण्डो अनुलोम
प्रतिलोमजात्योः सजातीयपरभार्यागमने वेदितव्य इति मदनरत्ने । हीनजातीयपरस्त्रीगमने ब्राह्मणादिष्वेतदर्द्धप
रिमितो दण्डः । उत्कृष्टजातीयपरदारगमने अयमेव दण्डो वधसहितः कार्य इत्याह स एव । दमो नेयः समायान्तु हीनायामधिकस्ततः । पुंसः कार्योऽधिकायान्तु गमने सप्रमापणमिति ॥ दमः सहसा कामयेदिति वाक्योक्तः । नेयः प्रापणीयः । यत्तु वध
मात्राभिधायकं कात्यायनवचनं । स्त्रीषु वृत्तोपभोगः स्यात्प्रसह्य पुरुषो यदा । बधे तत्र प्रवर्त्तेत कार्य्यातिक्रमणं हि तदिति । तद्भि
न्नवर्णस्य भार्यागमने वेदितव्यम् ॥ इति साहसाख्यव्यवहारपदम् ॥ * ॥ अथ स्त्रीसंग्रहणाख्यं व्यवहारपदम् । तस्य त्रैविध्यमा

ह। बृहस्पतिः। पापमूलंसंग्रहणंत्रिप्रकारन्निबोधत। बलोपधिकृतेद्वेतुतृतीयमनुरागजमिति॥ एतेषांस्वरूपन्दर्शयतिस
एव। अनिच्छन्त्याःक्रियतेमत्तोन्मत्तप्रमत्तया। प्रलपन्त्यावारहसिबलात्कारकृतन्तुतत्॥ छद्मनागृहमानीयदत्वास्वंम
दकारणम्। संयोगःक्रियतेयत्रतमुपधिकृतंविदुः॥ अन्योन्यचक्षुरागेणदूतीसम्प्रेषणेनवा। कृतंरूपार्थलोभेनज्ञेयन्तद
नुरागजमिति॥ अनुरागजसंग्रहस्यत्रिविधत्वन्दर्शयतिसएव। तत्पुनस्त्रिविधम्प्रोक्तम्प्रथमंमध्यमोत्तममिति। व्यासोपि। संग्र
हस्त्रिविधोज्ञेयःप्रथमोमध्यमस्तथा। उत्तमश्चेतिशास्त्रेषुतस्योक्तंलक्षणंपृथगिति॥ एतेषांस्वरूपमाहतुर्व्यासबृहस्पती।
कटाक्षावेक्षणंहास्यन्दूतीसम्प्रेषणन्तथा। स्पर्शोभूषणवस्त्राणाम्प्रथमःसंग्रहःस्मृतः॥ प्रेषणङ्गन्धमाल्यानाम्फलधूपान्नवा
ससाम्। सम्भाषणञ्चरहसिमध्यमंसंग्रहंविदुः॥ एकशय्यासनंक्रीडाचुम्बनालिङ्गनन्तथा। एतत्संग्रहणम्प्रोक्तमुत्तमंशा
स्त्रवेदिभिरिति॥ स्त्रीसंग्रहणस्यज्ञानोपायमाहयाज्ञवल्क्यः। पुमान्संग्रहणेग्राह्यःकेशाकेशिपरस्त्रिया॥ सद्योवाकामजैश्चि
ह्नैःप्रतिपत्तौद्वयोस्तथेति॥ परभार्ययासहकेशाकेशिक्रीडनेनसद्यःअभिनवैःकामजैःकररुहदशनादिकृतव्रणादिभिश्चि
ह्नैर्द्वयोःसम्प्रतिपत्त्यावायंस्त्रीसंग्रहणवानितिप्रतिपत्तव्यइत्यर्थः। उपायान्तरमाहसएव। नीवीस्तनप्रावरणसक्थिकेशाव
मर्शनम्। अदेशकालसम्भाषंसहैकस्थानमेवचेति॥ कुर्वाणइतिशेषः। सक्थिऊरू। मनुरपि। स्त्रियंस्पृशेददेशेयःस्पृ
ष्टोवामर्षयेत्तया। परस्परस्यानुमतेसर्वंसंग्रहणंस्मृतमिति। यस्तुदर्पादिनामयेयम्भुक्तेतिवदतिसोपितथाविधत्वेनग्राह्य
इत्याहतुर्मनुनारदौ। दर्पाद्वायदिवामोहात्श्लाघयावास्वयंवदेत्। पूर्वंमयेयम्भुक्तेतिसचसंग्रहणंस्मृतमिति॥ बलात्कार
कृतस्यस्त्रीसंग्रहणस्यसाहसान्तर्भूतत्वेनतत्रैवदर्शितत्वादुपधिकृतेदण्डमाहबृहस्पतिः। दण्डानाकामयेद्यस्तुतस्यसर्वहरो
दमः। अङ्कयित्वाभगाङ्केनपुरान्निर्वासयेत्ततइति॥ सर्वहरःसर्वस्वहरःएतत्सजातीयविषयम्। हीनोत्कृष्टगमनेतुक्रमेणा
र्द्धधनंसर्वस्वहरणरूपोवधसहितसर्वस्वहरणरूपोदण्डोवावगन्तव्यः। दमोनेयःसमायान्त्विति याहसवादनिरूपणाद

शीति वचनात्। तत्रवचनेपुरुषस्यापकर्षेऽभवेयुक्तोदण्डोन स्त्रियाइतिनोक्तस्तस्याःदण्डः। तेनसाहसस्त्रीसंग्रहस्थलाप्रकृते
पिसजातीयोपभुक्तायाःसंव्यवहार्य्यायाःप्रायश्चित्ताचरणानन्तरव्यवहितोपभुक्तायाइतिज्ञातव्यमित्युक्तंमदनरत्ने। अनुसम
न्वविधसंग्रहसोदण्डमाहसएव। त्रयाणामपिचैतेषाम्प्रथमोमध्यमउत्तमः। विनयःकल्पनयाकांक्षादधिकोद्रविणाधिक
इति॥ अधिकःप्रथमसाहसादिभ्योधिकः। सम्भोगेदण्डमाहयाज्ञवल्क्यः। सजातावुत्तमोदण्डआनुलोम्येतुमध्यमः। प्रातिलो
म्येवधःपुंसोनार्य्याःकर्णादिकर्त्तनमिति। चतुर्णामपिवर्णानाम्बलात्कारेणसजातीयपरभार्यागमनेसाशीतिपणसाहस्रोदण्डः
।यदात्वानुलोम्येनहीनजातीयागमनेमध्यमसाहसः। उत्कृष्टजातीयागमनेगन्तुर्वधः। तस्याःकर्णादिकर्त्तनमित्यर्थः। य
स्त्वानुरागजंग्रहणविषयंस्त्रिया अपिदण्डाभिधानात्। बलात्कारेपधिकृतयोस्तुस्त्रियाअनपराधित्वेनदंडाभावात्। असमा
देवप्रातिलोम्येनगमनेपुरुषस्यवधंविधायस्त्रियास्तदर्द्धतुल्यकर्णनासादिकर्त्तनविधानात्सजातीयागमनेपुरुषस्ययावुक्ता
वुत्तममध्यमसाहसौदण्डौतदर्द्धंस्त्रियादण्डइतिसूचितम्। अतएवकात्यायनः॥ सर्वेषुचापराधेषुपुंसोयोर्थदमस्तथा।
तदर्द्धंयोषितोदद्युर्वधेपुंसोङ्गकर्त्तनमिति। स्त्रियाइतिशेषः। यदापुनःसवर्णासगुप्तांआनुलोम्येनगुप्तांवाब्रजतितदाविशेष
माहमनुः। सहस्रंब्राह्मणोदण्डोगुप्तांविप्राम्बलाद्व्रजन्। शतानिपञ्चदण्ड्यःस्यादिच्छन्त्यासहसङ्गतः। सहस्रम्ब्राह्मणोद
ण्ड्यःदाप्योगुप्तेतुतेव्रजन्। शूद्रायांक्षत्रियविशोःसहस्रन्तुभवेद्दमइति। तेक्षत्रियवैश्ये॥ एतच्चगुरुसखिभार्य्यादिव्यतिरिक्त
विषयम्। तत्रदण्डांतरविधानात्। तदाहनारदः। मातामातृष्वसाश्वश्रूर्मातुलानीपितृष्वसा। पितृव्यसखिशिष्यस्त्रीभगि
नीतत्सखीस्नुषा। दुहिताचार्यभार्य्याचसगोत्राशरणागता। राज्ञीप्रव्रजिताधात्रीसाध्वीवर्णोत्तमाचया। आसामन्यतमा
ङ्गच्छन्गुरुतल्पगउच्यते। शिश्नस्योत्कर्त्तनात्तत्रनान्योदण्डोविधीयतइति। यत्तुप्रातिलोम्येगमनेक्षत्रियादेःपुरुषस्यवध
इत्युक्तंयोगीश्वरवचने। तद्गुप्ताविषयमन्यथाधनदण्डः। तथाचमनुः। उभावपिहितावेवब्राह्मण्यागुप्तयासह। विप्लु

तोऽशूद्रवद्दण्ड्यो दग्धव्यो वा कटाग्निना ॥ ब्राह्मणीं यद्यगुप्तान्तु सेवेतां वैश्यपार्थिवौ । वैश्यम्पञ्चशतं कुर्य्यात् क्षत्रियन्तु सहस्रिण
मिति । पञ्चशतम्पणशतपञ्चकदण्डभाजमित्यर्थः । एवं सहस्रिणमित्यत्रापि । क्षत्रियस्यागुप्तवैश्यागमने वैश्यस्य चागुप्तक्ष
त्रियागमने क्रमेण पणसहस्रपणशतपञ्चकन्तयोर्दण्ड इत्याह स एव । वैश्यश्चेत्क्षत्रियांगुप्तां वैश्यां वा क्षत्रियो व्रजेत् । यो ब्राह्म
ण्यामगुप्तायान्तावुभौ दण्डमर्हत इति ॥ शूद्रस्यागुप्तोत्कृष्टस्त्रीगमने लिङ्गच्छेदनसर्वस्वापहरणे गुप्तागमने तु वधसर्वस्वापहा
रौ । तथा च स एव । शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमावरन् । अगुप्तैकाङ्गसर्वस्वो गुप्ते सर्वेण हीयत इति । अयञ्च वधाद्युपदे
शः प्रजापालनाधिकाराद्राज्ञ एव न द्विजातिमात्रस्य । ब्राह्मणः परीक्षार्थमपि शस्त्रं नाददीतेति शस्त्रग्रहणस्य निषिद्धत्वात् ।
यदा तु राज्ञो निवेदने कालविलम्बेन कार्य्यातिपातस्तदा द्विजातिमात्रस्यापि शस्त्रग्रहणेऽधिकारोऽस्त्येव । शस्त्रं द्विजातिभिर्ग्राह्यं ध
र्म्मो यत्रोपरुध्यते । नाततायिवधे दोषो हन्तुर्भवति कश्चन ॥ प्रच्छन्नं वा प्रकाशं वा मन्युस्तम्मन्युमृच्छतीति शस्त्रग्रहणाभ्य
नुज्ञानात् । परस्त्रिया सह सम्भाषणकर्त्तुर्दण्डमाह मनुः । परस्य पत्न्या पुरुषः संलापं योजयेद्रहः । पूर्वमाक्षारितो दोषैः प्रा
प्नुयात्पूर्वसाहसमिति ॥ आक्षारितः अभिशस्तः । दोषैर्नानास्त्र्युपभोगवाञ्छाभिः । पापबुद्ध्या यः सम्भाषणं करोति तद्विषयमे
तत् । अत एव । यस्त्वनाक्षारितः पूर्वमभिभाषेत कारणात् । न दोषं प्राप्नुयात्किञ्चिन्न हि तस्य व्यतिक्रम इति ॥ मनुवृहस्पत्यु
क्तपूर्वसाहसमध्यमसाहसयोरुत्कृष्टसजातीयासम्भाषणादिविषयत्वेन व्यवस्था परिकल्पनीया । परपुरुषेण सह पित्रा
दिभिर्निषिद्धं संभाषणं या करोति सा पणशतं दण्ड्या परस्त्रिया सह पित्रादिभिर्निषिद्धसम्भाषणं यः पुरुषः करोति स पणशतद्वयं
दण्डनीयः । द्वयोरपि निषिद्धपरस्परसम्भाषणादि कुर्वतोः सम्भोगे यो दण्डः स एव दण्ड इत्याह याज्ञवल्क्यः । स्त्री निषेधे श
तन्दद्यात् द्विशतन्तु दमम्पुमान् । प्रतिषेधे तयोर्दण्डो यथा संग्रहणे तथेति ॥ निषिध्यत इति निषेधः कर्म्मणि हलश्चेति घञ् । चा
रणादिस्त्रीव्यतिरिक्तविषयमेतत् । नैष चारणदारेषु विधिर्नात्मोपजीविषु । सज्जयन्ति हि ते नारीर्निगूढाश्चारयन्ति चेति मनु

स्मरणात् नटाः आत्मोपजीविनः वेषोपजीनः। एतेषान्दारेषु एष विधिर्न। अभिभाषणादिनिमित्तकदण्डविधिर्न। परर
नारीः स्वभार्याः सज्जयन्ति पुरुषान्तरे संयोजयन्ति प्रच्छन्नीकृतव्यभिचारयन्ति चेत्यर्थः। साधारणस्त्रीगमने दंडमाह याज्ञव
ल्क्यः। अवरुद्धासु दासीषु भुजिष्यासु तथैव च। गम्यास्वपि पुमान्दाप्यः पञ्चाशत्पणिकन्दममिति। स्वामिना याः शुश्रूषार्थं
गृह एव स्थातव्यमित्येवम्पुरुषान्तरोपभोगतो निरुद्धा अवरुद्धाः। पुरुषान्तरेणावरुध्य भुज्यमाना भुजिष्याः या दास्यो भुजि
ष्या अवरुद्धा वा तासु सर्वपुरुषगम्यास्वपि गमने पञ्चाशत्पणान्दण्ड्याः। तासाम्परपरिगृहीतत्वेन परस्त्रीतुल्यत्वात्। च शब्दा
द्वेश्यास्वैरिणीनामपि ग्रहणं। तास्वपि सर्वपुरुषसाधारणासु परपरिगृहीतासु गमनेऽयमेव दंड इति मन्तव्यम्। एतदेवाभि
प्रेत्याह नारदोऽपि। स्वैरिण्यब्राह्मणी वेश्या दासी निःकासिनी च या। गम्याः स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः॥ आस्वेव तु भुजि
ष्यासु दोषः स्यात्परदारवत्। गम्यास्वपि हि नोपेयाद्यन्ताः परपरिग्रहाः इति। अब्राह्मणीति स्वैरिण्यविशेषणम्। स्वैरिणी स्व
तन्त्रा पुंश्चली। निष्कासिनी कुटुम्बान्निर्गतेति मदनरत्ने। स्वाम्यनवरुद्धा दासीति विज्ञानेश्वरमाधवाचार्यप्रभृतयः। भुजि
ष्यास्वास्वेति सम्बन्धः। व्यासोऽपि। परोपरुद्धागमने पञ्चाशत्पणिको दमः। प्रसह्य वेश्यागमने दंडो दशपणाः स्मृत इति। प्र
सह्य वेतनदानं विना। अत्रानवरुद्धासु वेश्यादिषु गम्यत्वाभिधानन्न पापाभावप्रतिपादनार्थं किन्तु राजदंडाभावप्रतिपादना
र्थम्। पशुवेश्यादिगमने प्राजापत्यं विधीयत इत्यादिवचनैः प्रायश्चित्तस्मरणात् बलात्कारेण अनवरुद्धदास्यभिगमने दंडमा
ह याज्ञवल्क्यः। प्रसह्य दास्यभिगमे दंडो दशपणाः स्मृतः। बहूनां यद्यकामासौ चतुर्विंशतिकः पृथगिति। पुरुषसम्भोगजीवि
कासु दासीषु स्वैरिण्यादिषु शुल्कदानमन्तरेण बलात्कारेणाभिगच्छतो दशपणो दंडः। यद्यनिच्छन्तीमेकाम्बलात्कारेण बह
वो गच्छन्ति तर्हि प्रत्येकञ्चतुर्विंशतिपणात्मको दंड इत्यर्थः। यदि पुनः सा स्वेच्छया भाटकं गृहीत्वा पश्चान्नेच्छति तदा बलाद्गन्तृणाम
पि बहूनामदोषः यदि तस्या व्याध्याद्यभिभवो न भवेत्। अत एव नारदः। व्याधिता सश्रमा व्यग्रा राजकर्मपरायणा। आमन्त्रिता

चेन्नागच्छेद्दंड्यावडवास्मृतेति ॥ पारदार्यप्रसंगात्कन्यायामपिदंडमाह याज्ञवल्क्यः । अलंकृतांहरन्कन्यामुत्तमंत्वन्यथाधमम् । दंडंदद्यात्सवर्णासु प्रातिलोम्येवधःस्मृतइति ॥ अलंकृताविवाहाभिमुखीतांसवर्णांकन्यामपहरन्उत्तमसाहसंदंडनीयः । तदनभिमुखींहरन्प्रथमसाहसम् । उत्कृष्टवर्णांकन्यांहरतःक्षत्रियादेर्वधइत्यर्थः । आनुलोम्येनसकामाहरणेप्रथमसाहसोदंडःतथाचसएव । सकामास्वनुलोमासुनदोषस्त्वन्यथादमइति । कन्यादूषणेदंडमाहसएव । दूषणेतुकरच्छेद उत्तमायांवधःस्मृतः । शतंस्त्रीदूषणेदद्याद्द्वेतुमिथ्याभिशंसनेति । पशून्गच्छन्शतंदाप्योहीनांस्त्रींगांचमध्यममिति । सकामांकन्यामनक्षतादिनाप्रसह्यदूषयतितदाकरच्छेदः । यदातुअंगुलिप्रक्षेपेणतामेवयोनिक्षतांकुर्वन्दूषयतितदाविशेषमाहमनुः । अभिषह्यतुयःकन्यांकुर्याद्दर्पेणमानवः । तस्याशुकर्त्येअंगुल्यौदंडंचार्हतिषट्शतमिति । सकामदूषणेप्याहसएव । सकामांदूषयंस्तुल्योनांगुलिच्छेदमर्हति । द्विशतन्तुदमन्दाप्यःप्रसंगविनिवृत्तयइति । यदाकन्याविदग्धाबालकन्यांदूषयतितदाप्याहसएव ॥ कन्यैवकन्यांयाकुर्यात्तस्यास्तुद्विशतोदमः । यातुकन्यांप्रकुर्यात्स्त्रीसासद्योमौण्ड्यमर्हति ॥ अंगुल्योरेववाच्छेदःखरेणोद्वहनन्तथेति । कुर्यादन्योनिक्षतवतीमितिशेषः । यदापुनरुत्कृष्टजातीयांकन्यांसकामामकामांवाभिगच्छतितदाहीनस्यक्षत्रियादेर्वधः । यदासकामांसवर्णामभिगच्छतितदाशुल्कंगोमिथुनन्तत्पित्रेदद्यात् । अनिच्छतितस्मिन्दंडरूपेणराज्ञेदद्यात् । सवर्णामकामांगच्छतोवधएव । तदाहमनुः । उत्तमांसेवमानस्तुजघन्योवधमर्हति । शुल्कंदद्यात्सेवमानःसमामिच्छेत्पितायदि ॥ योकामांदूषयेत्कन्यांससद्योवधमर्हति । सकामांदूषयंस्तुल्योनवधम्प्राप्नुयान्नरइति ॥ चांडाल्यादिगमनेदंडमाहयाज्ञवल्क्यः । अन्त्याभिगमनेत्वंक्यःकुबंधेनप्रवासयेत् । शूद्रस्तथान्त्यएवस्यादन्त्यस्यार्यागमेवधइति ॥ अन्त्याचांडालीतद्गमने । त्रैवर्णिकाम्प्रायश्चित्तानभिमुखान्सहस्रन्त्वन्त्यजस्त्रियमितिमनुवचनानुसारेणपणसहस्रन्दंडयित्वाकुत्सितवर्णेनभगाकारेणाङ्कयित्वास्वराष्ट्रान्निर्वासयेत् । शूद्रःपुनश्चांडालीङ्गच्छंश्चांडालएव । अं

भवएवेतिमाधवीयेपाठः ॥ चाण्डालस्यतूत्कृष्टजातिस्त्र्यभिगमनेवधएवेत्यर्थः । योनिव्यतिरिक्तस्थलेगच्छतोदण्डमाहसएव
। अयोनौगच्छतोयोषाम्पुरुषंवाभिमेहतः । चतुर्विंशतिकोदण्डस्तथाप्रव्रजितागमेइति । यस्तुयोषांमुखादावभिगच्छति
पुरुषंवाभिमुखेमेहतितथाप्रव्रजितांवागच्छतिअसौचतुर्विंशतिपणान्दण्डनीयइत्यर्थः । स्त्रीकृतेसंग्रहणेदण्डमाहवृहस्प
तिः । गृहमागम्ययानारीप्रलोभ्यस्पर्शनादिना । कामयेत्तत्रसादण्ड्यानरस्यार्द्धदमःस्मृतइति । वचसाक्षियमुक्तोऽम्यगच्छतः
पुरुषस्ययोदण्डस्तंयाह्याःनदर्डार्द्धपुरुषोयाह्यइत्यर्थः ॥ इतिस्त्रीसंग्रहणाख्यव्यवहारपदम् ॥ ● ॥ अथस्त्रीपुंयोगाख्य
व्यवहारपदम् ॥ तत्स्वरूपमाहनारदः । विवाहादिविधिःस्त्रीणांयत्रपुंसाञ्चकीर्त्यते । स्त्रीपुंसयोगसंज्ञन्तद्विवादपदमुच्य
तइति ॥ विवाहादिशब्देनस्त्रीपुन्धर्मागृह्यन्ते । अतएवमनुर्व्यवहारपदोद्देशकालेस्त्रीपुन्धर्मोविभागश्चेत्युद्दिश्यप्रतिज्ञापू
र्वकन्तेषांनिरूपणञ्चकार । पुरुषस्यस्त्रियाश्चैवधर्म्येवर्त्मनितिष्ठतोः । संयोगेविप्रयोगेचधर्मान्वक्ष्यामिशाश्वतानित्यादिना ।
संयोगेअन्योन्यसन्निधाने । विप्रयोगे । देशतःकालतोवाव्यवधाने । शाश्वतानिन्त्यान्अवश्यानुष्ठेयानितियावत् । केतेधर्मा
इत्याकांक्षायामाहसएव । अस्वतन्त्राःस्त्रियःकार्याःपुरुषैःस्वैर्दिवानिशं । विषयेषुचसज्जन्त्यःसंस्थाप्याह्यात्मनोवशइ(?)त्यादि
। पुरुषैःभर्तृपुरुषैः । विषयेदण्डहेतुभूतचाञ्चल्यादिविषये । नारदोपि । स्वातन्त्र्याद्विप्रणश्यन्तिकुलेजाताअपिस्त्रियः । अ
स्वातन्त्र्यमतस्तासांप्रजापतिरकल्पयदिति । अतोन्यैरपिस्वस्त्रीणामस्वातन्त्र्यंयथाभवतितथाकल्प्यमितिनत्वाशयः । पुरु
षेणस्वस्त्रीव्यभिचारादवश्यंरक्षणीया । तथाचहारितः । एकत्रनस्कन्नभावात्परेन्द्रियोपहतत्वाच्चदुष्टाःकुलसङ्करकारि
ण्योभवन्तिजीवतिजारजःकुण्डोमृतेभर्त्तरिगोलकस्तस्मात्तेलोपघाताज्जायांरक्षेज्जायानाशेकुलनाशःकुलनाशेतन्तुनाशस्त
न्तुनाशेदेवपितृयज्ञनाशोदेवपितृयज्ञनाशेआत्मनाशेआत्मनाशेसर्वस्वनाशइति । एकत्रनस्कन्नभावात् । स्त्रीणांस्वकभ
र्त्रैतिनियमनाभावात् । परेन्द्रियोपहतत्वात् । परस्मिन्पुंसिइन्द्रियस्यमनसोरागादिनाऽपहतत्वात् । कुलसङ्करकारिण्यस्त

ज्जातिस्वभावानुगतप्रजोत्पादनेनकुलसांकर्य्यम्। अतएवशंखलिखितौ। यस्मिन्भावेर्पितंस्त्रीणामात्मवैदृशमन्तमात्मनाप्ना
यन्तीति। तन्तुःपुत्रादिसन्ततिः। मनुरपि। सूक्ष्मेभ्योपिप्रसङ्गेभ्यःस्त्रियोरक्ष्याविशेषतः। द्वयोर्हिकुलयोःशोकमावहे
युररक्षिताः॥ इमंहिसर्ववर्णानांपश्यन्तोधर्म्ममुत्तमम्। यतन्तेरक्षितुम्भार्य्याम्भर्त्तारोदुर्बलाअपि॥ स्वाम्प्रसूतिंचरित्र
ञ्चकुलमात्मानमेवच। स्वधर्म्मंहिप्रयत्नेनजायांरक्षन्हिरक्षतिइति॥ द्वयोःकुलयोर्भर्तृकुलपितृकुलयोः। अनेनकुल
द्वयवृद्धैरपिरक्ष्याइतिशोककथनमुखेनदर्शितम्। अतएववृहस्पतिः। सूक्ष्मेभ्योपिप्रसङ्गेभ्योनिवार्य्यास्त्रीस्वबन्धुभिः।
श्वश्र्वादिभिःपालनीयागुरुस्त्रीभिर्दिवानिशम्। मनुरपि। कालेऽदातापितावाच्योवाच्यश्चानुपयन्पतिः। मृतेभर्त्तरिपुत्र
स्तुवाच्योमातुररक्षितेति॥ कालेकन्यादानयोग्येकाले। वाच्योनिंद्यः। अनुपयन्अनुगच्छन्। सएव। पितारक्षतिकौमारे
भर्त्तारक्षतियौवने। पुत्रास्तुस्थाविरेभावेनस्त्रीस्वातन्त्र्यमर्हतीति॥ याज्ञवल्क्योपि। रक्षेत्कन्याम्पिताविन्नांपतिःपुत्रास्तुवार्द्ध
के। अभावेज्ञातयस्तेषान्नस्वातन्त्र्यंक्वचित्स्त्रियाइति। विन्नाविवाहिता। पतिपुत्रविहीनायास्तुरक्षासम्पतिपक्षान्तर्गतैरन
प्रत्यासन्नेनकार्य्या। तथाचनारदः। मृतेभर्त्तर्य्यपुत्रायाःपतिपक्षःप्रभुःस्त्रियः। विनियोगात्मरक्षासुभरणेषुचईश्वरः॥ प
रिक्षीणेपतिकुलेनिर्म्मनुष्येनिराश्रये। तत्सपिण्डेषुवासत्सुपितृपक्षःप्रभुःस्त्रियःपितृपक्षस्याप्यभावेसएवाह। पक्षद्वयाव
सानेतुराजाभर्त्तास्मृतःस्त्रियः। सतस्याभरणंकुर्य्यान्निगृह्णीयात्पथश्च्युतामिति। विनियोगःकर्म्मणिनियोजनम्। भर्त्ता
पोषकःस्त्रीस्वभावन्दर्शयतिदक्षः। जलौकावत्स्त्रियःसर्वाभूषणाच्छादनाशनैः। सुहितापिकृतानित्यंपुरुषंह्यपकर्षति
॥ जलौकारक्तमादत्तेकेवलंसानपस्विनी। इतरातुधनंवित्तंमांसंवीर्य्यंबलंसुखम्॥ साशंकाबालभावेतुयौवनेभिमुखीभवे
त्। तृणवन्मन्यतेनारीवृद्धभावेस्वकम्पतिम्। स्वकाम्येवर्त्तमानायास्नेहान्नचनिवारिता। अपथ्यानुभवेत्पश्चाद्व्याधिरु
पेक्षिताइति। सुहितातृप्ताकृतापोष्यन्तयः। अपकर्षतिसन्ततमात्मानमाचंकरोतिस्वकाम्येस्वेच्छायाम्। अपथ्याअयन्ताहि

न हेतुभूता । मनुरपि । नैता रूपम्परीक्षन्ते नासां वयसि संस्थितिः । सुरूपं वा विरूपं वा पुमानित्येव भुञ्जते ॥ पौंश्चल्याच्चल
चित्ताच्च नैस्नेह्याच्च स्वभावतः । रक्षिता यत्नतोऽपीह भर्तृष्वेता विकुर्वते ॥ शय्यासनमलंकारं कामं क्रोधमनार्जवम् । द्रोहभा
वं कुचर्यां च स्त्रीभ्यो मनुरकल्पयत् । नास्ति स्त्रीणां क्रिया मन्त्रैरिति धर्मे व्यवस्थितिः । निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृत
मिति स्थितिः ॥ तथा च श्रुतयो बह्व्यो निगीता निगमेष्वपि । स्त्रीलक्षणपरीक्षार्थं तासां शृणुत निष्कृतीः । यन्मे माता प्रलुलुभे वि
चरन्त्यपतिव्रता । तन्मे रेतः पिता वृङ्क्तामित्यस्यैतन्निदर्शनम् । ध्यायत्यनिष्टं यत्किंचित्पाणिग्राहस्य चेतसा । तस्यैष व्यभि
चारस्य निह्नवः सम्यगुच्यते ॥ एवंस्वभावं ज्ञात्वासां प्रजापतिनिसर्गजम् । परमं यत्नमातिष्ठेत्पुरुषो रक्षणं प्रति इति ॥
निरिन्द्रिया निर्वीर्य्या धैर्यप्रज्ञादिरहिता इति यावत् । स्त्रियोऽनृतमिति प्रायशोऽनृतवदनशीलत्वादुच्यन्ते । श्रुतयः श्रुतिवाक्या
नि । निगमेषु वेदेषु स्त्रीलक्षणं स्वरूपं तासां श्रुतीनां मध्ये या निष्कृतिरूपा व्यभिचारप्रायश्चित्तरूपास्ताः श्रुतीः शृणुत स्त्रीस्व
भावज्ञानार्थमित्यर्थः । महाभारतेऽपि । कुलीना रूपवत्यश्च नाथवत्यश्च योषितः । मर्यादासु न तिष्ठन्ति स दोषः स्त्रीषु नारद ।
अनर्थित्वान्मनुष्याणां भयात्परिजनस्य च । मर्यादायाममर्यादाः स्त्रियस्तिष्ठन्ति भर्तृषु । यौवने वर्तमानानां मृष्टाभरणवास
साम् । नारीणां स्वैरवृत्तीनां स्पृहयन्ति कुलस्त्रियः ॥ यदि पुंसां गतिर्ब्रह्मन् कथञ्चिन्नोपपद्यते । अन्योन्यस्तु प्रवर्तन्ते न च तिष्ठ
न्ति भर्तृषु । अलाभात्पुरुषाणां हि भयात्परिजनस्य च । वधबन्धभयाच्चैव स्वयं गुप्ता भवन्ति ताः । नाग्निस्तृप्यति काष्ठानां नापगा
नां महोदधिः । नान्तकः सर्वभूतानां न पुंसां वामलोचना । कामानामपि दातारं त्रातारं मानसान्त्वयोः । रक्षितारं न मृष्यन्ति भर्ता
रं यत्नतः स्त्रिय इति ॥ श्रीरामायणेऽपि । नैवाङ्गना नान्वयिता नापि द्वेष्योऽस्ति कश्चन । सर्वमेवाक्रमन्त्येता गहनं जाह्नवीति
। अथ रक्षणप्रकारः । तत्र मनुः । न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम् । एतैरुपाययोगैस्तु शक्यास्ताः परिरक्षितुमि
ति ॥ प्रसह्य आक्रम्य । अवरुध्येति यावत् । यद्यप्यवरोधेन शरीरव्यभिचाराद्रक्षणं शक्यं तथापि मानसव्यभिचाराद्रक्षण

मशक्यमित्याशयेन मनुना न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुमित्युक्तम् । न च मानसव्यभिचाराद्रक्षणमनर्थकमन्यज
न्याभावेन प्रजाविशुद्धिविधानाभावादिति वक्तव्यम् । यतस्त्वाह स एव । यादृशम्भजते स्त्री हि सुतं सूते तथाविधम् । तस्मात्प्र
जाविशुद्ध्यर्थं स्त्रियं रक्षेत्प्रयत्नत इति ॥ यादृशम्पुरुषमृतुकाले स्त्री मनसा भजते तत्समानशीलम्पुत्रञ्जनयतीति पूर्वोक्तोऽर्थः
। अत एवाहतुः शङ्खलिखितौ । यस्मिन्भावोऽर्पितः स्त्रीणामार्त्तवे तच्छीलम्पुत्रञ्जनयन्तीति । मानसव्यभिचारादपि स्त्रियं र
क्षेदिति शेषः । तथा च मनुना तस्मादित्यादिभिस्तदर्थं नायमेवार्थो दर्शितः । परिरक्षणोपायानाह मनुरेव । अर्थस्य संग्रहे चै
नां व्यये चैव नियोजयेत् । शौचे धर्मे च पक्त्यां च पारिणाह्यस्य वेक्षण इति । अर्थस्य संग्रहे । स्वेन समानीतार्थसन्निधाने ।
व्यये स्वेनानीतव्यये । शौचे गृहादिशुद्धिकरसंमार्जनोपलेपनादौ । धर्मे अग्निहोत्राद्यानुकूललौकिकव्यापारे । पक्त्यामन्न
व्यापारे । पारिणाह्यपीठादिगृहोपकरणमात्रस्येक्षणे विचारणे । निरन्तरगृहव्यापारनियोजनादिना पुरुषान्तरचिन्ता
रहितेयं यथा भवति भार्यायां तथा कुर्यादिति तात्पर्यार्थः । बृहस्पतिरपि । आयव्ययेऽथ संस्कारे गृहोपस्कररक्षणे । शौचाग्नि
कार्यसंयोज्याः स्त्रीणां शुद्धिरियं स्मृतेति । एवंविधव्यापारासक्तचित्ततया साध्व्य इति व्यपदिश्यन्त इत्याह मनुः । आत्मानमात्मना
यास्तु रक्षेयुस्ताः सुरक्षिता इति । आत्मना गृहव्यापारासक्तेनान्तःकरणेन सुरक्षिताः सुष्ठु रक्षिताः साध्व्याः । आप्तपुरुषरक्षिता
स्तु स्त्रियो न सम्यग्रक्षिता इत्याह स एव । अरक्षिता गृहे रुद्धाः पुरुषैराप्तकारिभिरिति । आप्तकारिभिः पुरुषैः गृहे रुद्धा इ
त्यन्वयः । आप्तास्त्वनेकारिणश्चाप्तकारिणः । अरक्षिताः सम्यग्रक्षाविहीना इत्यर्थः । भर्तुर्धर्मे नियुक्तत्वमपि स्त्रीणां रक्षणोपा
य इति दर्शयितुं स एवाह । यादृग्गुणेन भर्त्रा स्त्री संयुज्येत यथाविधि । तादृग्गुणा सा भवति समुद्रेणेव निम्नगा ॥ अक्षमाला व
सिष्ठेन संयुक्ताऽधमयोनिजा । शारङ्गी मन्दपालेन जगामाभ्यर्हणीयतामिति ॥ भार्याया भरणमप्यावश्यकमित्याह स एव ।
देवदत्तां पतिर्भार्यां विन्दते नेच्छयात्मनः । तां साध्वीं बिभृयान्नित्यं देवानां प्रियमाचरन् । देवैर्दत्तादेवदत्ता दैववशयातेतियाव

र्ति। तामभार्यांस्वयंवरे पतिर्विन्दते। तत्रस्वयापाणिर्देवदत्तामित्यनेनविवाहलक्षणस्यस्त्रीपुंसयोःसम्बन्धस्यनस्वाधीनत्वङ्किन्त
र्हिदैवकृतत्वमितिदर्शितम्। दैवदत्ताश्चस्त्रीणांसोमोददद्गन्धर्वायगन्धर्वोददग्नये। रयिञ्चपुत्रांश्चादादग्निर्मह्यमथोइ
मामित्यादिभ्यःश्रुतिवाक्येभ्योऽवगम्यते। तेनदैवैर्दत्तायाअभरणेनदातॄणान्देवानान्द्रोहआपाद्यतइत्यर्थवादइत्युक्तम्भव
त्यन्ते। नचसाध्वीमित्यस्यपतिव्रतामित्यर्थपरत्वेनव्यभिचारिण्याभरणमनावश्यकमितिवक्तव्यम्। तस्यापिकदन्नादिना
ऽवश्यभरणीयत्वात्। तथाचनारदः। व्यभिचारेस्त्रियामौण्ड्यमधःशयनमेवच। कदन्नञ्चकुवासश्चकर्मचावस्करोज्झ
नमिति। स्त्रियाःरत्यर्थव्यभिचारेजातेमुण्डनमधःशयनञ्चसाधयेत्। कदन्नंकुवासश्चभरणार्थन्दद्यात्। अमेध्यशोधन
रूपञ्चकर्मकारयेदित्यर्थः। दोषरहितायाभार्यायाःपरित्यागेनिन्दमप्याहनारदः। अनुकूलामवाग्दुष्टान्दक्षांसाध्वीम्प्रजावती
म्। त्यजन्भार्यामवस्थाप्योराज्ञादण्डेनभूयसेति। विष्णुरपि। निर्दोषाम्परित्यजन्पत्नीञ्चेतिचौरवच्छास्यइत्यनुषङ्गः।
निर्दोषान्त्यागहेतुभूतदोषरहिताम्। दण्डेमस्थापयितुमशक्यत्वाद्वयोगीश्वरः॥ आज्ञासंपादिनीन्दक्षांवीरसूम्प्रियवादि
नीम्। त्यजन्दाप्यस्तृतीयांशमद्रव्योभरणंस्त्रियाइति। तृतीयांशमन्तद्धनतृतीयांशम्। राज्ञाभार्यायादाप्यः। अल्पधनः
भरणमात्रपर्य्याप्तन्धनंदाप्यइत्यर्थः॥ इतिस्त्रीपुंयोगाख्यव्यवहारपदम्॥*॥ अथविभागाख्यव्यवहारपदम्॥ यत्रमन्वा
दिवचनव्याख्यासुवक्रधावुधाः। विवदन्तेदायभागःसप्रबन्धेनवर्ण्यते॥ तल्लक्षणमाहनारदः। विभागोऽर्थस्यपित्र्यस्यपु
त्रैर्य्यत्रप्रकल्प्यते। दायभागइतिप्रोक्तन्तद्विवादपदंवुधैरिति॥ पित्रोरयम्पित्र्यइति॥ एतेनैकशेषात्पितृशब्दात्। अथेमा
तृधनस्यापिविभागकथनात्। पित्र्यस्यपुत्रैरितिचद्वयमपिसम्बन्धिमात्रोपलक्षणम्। पत्न्यादिनान्येषामपिभर्त्रादिधनेतन्नि
रूपणात्। अतएवोपक्रमेमनुनापित्रादिपदन्नोपात्तम्। एषस्त्रीपुंसयोरुक्तोधर्मोवोरतिसंहितः। आपद्यपत्यप्राप्तिश्च
दायधर्मन्निवोधतेति। दायधर्मोप्यत्रविभागरूपोभिप्रेतस्तस्यैवाग्रेलक्षणकथनपूर्वकन्निरूपणात्। उद्देशावसरेपिस्त्री

एतन्धर्म्मो विभागश्चेतिनस्यैवविवादपदत्वेनोद्देशात् । अतएववार्थेयावत्सम्बन्धिधनविभागमेवप्रदर्शितवान्मनुः । दायशब्द
श्चायंस्वामिसम्बन्धमात्रद्रव्येस्वत्वन्तद्रूपोवदति । तथाचनिघंटुकारः । विभक्तव्यम्पितृद्रव्यंदायमाहुर्मनीषिणइत्याह । अत्रा
पिपितृपदंसम्बन्धिमात्रोपलक्षणमन्यत्रापिदायशब्दप्रयोगात् । विभक्तव्यंविभागार्हमित्यर्थः । अन्यथैकपुत्रादिस्वामिके
विभागाभावाद्दायशब्दवाच्यतानस्यात् । यत्तुजीमूतवाहनेनदीयतइतिव्युत्पत्त्यादायशब्दोददातिप्रयोगश्चगौणः । मृतप्र
व्रजितादिस्वत्वनिवृत्तिपूर्वकपरस्वत्वोत्पत्तिफलसाम्यात् । ननुमृतादीनान्तत्त्यागोस्ति । तत्पूर्वद्रव्यस्वामिसम्बन्धाधीन
न्तत्स्वाम्योपरमेयत्रद्रव्येऽन्यस्वत्वन्तत्रनिरूढोदायशब्दइत्युक्तन्नसुन्दरम् । निरूढत्वाङ्गीकारेदायददातिशब्दयोगौण
त्वोपन्यासानर्थक्यात् । सर्वथाऽवयवार्थराहित्येहिनिरूढत्वंमत्वयोगरूढत्वम् । अवयवार्थबाधस्स्वयमेवोपन्यासात् ।
गौणमवयवार्थम्परिकल्प्यतदङ्गीकारस्यनिःप्रयोजनत्वमन्योन्याश्रयत्वमनुभवविरोधोव्याघातश्च ॥ तत्स्वाम्योपरमइतिच
जन्मनापिस्वत्वस्योपपादयिष्यमाणत्वादव्यापकम् । विभागशब्दस्त्वनेकस्वाम्यानांद्रव्यसमुदायविषयाणान्तमदेकदेशे
व्यवस्थापनेशक्तः । अतएवैकपुत्रादीनाम्पित्रादिधनस्वाम्येविभागशब्दाप्रयोगोदायोऽनेनलब्धइत्येवचप्रयोगः । यत्रा
पिचैकन्दासीगवादिबहुसाधारणन्तत्रापिनत्तत्कालविशेषनियतदास्यदोहनादिनातस्यतस्यादिनाव्यञ्जनादस्त्वेकदेश
स्वाम्यव्यवस्थापनरूपोविभागशब्दार्थः । अतएवएकांस्त्रीकारयेत्कर्म्मयथांशेनगृहेगृहइति । उद्धृत्यकूपवाप्यम्भस्त्वनु
सारेणगृह्यतेइति । युक्त्याविभजनीयन्तदन्यथानर्थकम्भवेदितिचवृहस्पत्यादिवचनेषुवक्ष्यमाणरीत्यातदुपपादयिष्य
ते । सचदायोद्विविधोऽप्रतिबन्धःसप्रतिबन्धश्च । पुत्रादीनाम्पित्रादीधनेपुत्रत्वादिनैवसत्यपिस्वामिनिपित्रादौजन्मनैवस्व
त्वोत्पत्तेःसतेषामप्रतिबन्धोदायः । स्वामिसद्भावस्याप्रतिबन्धकत्वात् । यस्तुविभक्तस्यासंसृष्टिनोपुत्रस्यमृतस्यपितृभ्रात्रादीना
न्तद्धनरूपोदायःससप्रतिबन्धः । स्वामिसद्भावस्यप्रतिबन्धकस्यापगमएवतत्रस्वत्वोत्पत्तेः । ननुसर्वोपिसप्रतिबन्धएवदा

थः। स्वामिसद्भावे पुत्रादीनामपि जन्ममात्रेण स्वत्वस्य वक्तुमशक्यत्वात्। तथाहि। यदि जन्मनैव पुत्रादीनाम्पित्रादीधनेस्व त्वंस्यात्तर्ह्युत्पन्नमात्रस्य पुत्रादेस्तत्साधारण्यमिति तदनुमतिंविनाद्रव्यसाध्येष्वाधानादिषु पित्रादीनामनधिकारापत्तेर्जातपु त्रःकृष्णकेशोऽग्नीनादधीतेति श्रुतिविरोधः। किञ्च। विभागात्प्राक्पित्रादिप्रसादलब्धस्याविभाज्यत्वप्रवचनंव्यर्थं स्यात्। तद्धि पित्रा पुत्रान्तरानुमत्या यदिदत्तं स्वैरेवदत्तमिति विभागप्राप्त्यभावादेव प्रतिषेधोनर्थकः। अननुमत्या तु साधारणद्रव्यस्यदान मेव न संभवतीति पित्रादिप्रीतिदत्तत्वादिवाचोयुक्तिरयुक्ता। एवं पुत्राद्यनुमतिमन्तरेण स्नुषादीनामपि भर्त्रादिभिः प्रीतिदान स्यासम्भवात्तदनुमतेरानुतैरपिदत्तत्वात्। भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेपि तत्। सा यथाकाममश्नीयाद्दद्याद्वा स्थावरादृते इतिवचनेयथाकाममश्नीयाद्दद्याद्वेत्यनेनाविभाज्यत्वंभर्तृप्रीतिलब्धस्य यदभिहितं तदपि व्यर्थं। न चेदमविभागावस्थायां प्रीति दानन्तस्य चाविभाज्यत्वम्प्रतिपादयति किन्तु स्थावरादृतेयद्दत्तमित्यन्वयाद्विभागोत्तरमपि भर्त्रा स्त्रियै स्थावरंप्रीत्या देयमज्ञा नाद्दत्तमपि तेन पुत्रादिभिरपहृत्य विभजनीयमस्थावरन्तु न प्रत्याहर्त्तव्यमित्यनुवादमात्रं। स्थावरस्य स्त्रियै प्रीतिदानप्रतिषेध मात्रन्तात्पर्य्येण बोधयतीति शङ्कनीयं। तथा च यस्य यद्विहितयोजनमा प्रसक्तेनायुक्तत्वात्। स्थावरप्रीतिदानप्रतिषेधमात्रता समर्प्यकत्वेऽन्यांशस्यानुवादमात्रं यथेत्यापरपर्य्यायस्यापत्तेः। अयमर्थोऽपि मुक्ताप्रवालानां सर्वस्यैव पिता प्रभुः। स्थावरस्य तु सर्व स्य न पिता न पितामहः॥ तथास्य पितृप्रसादाद्भुज्यंते वस्त्राण्याभरणानि च। स्थावरन्तु न भुज्येत प्रसादे सति पैतृके इति वचनमवश्यं विभागप्राक्कालीनस्थावरप्रसाददानप्रतिषेधपरं वाच्यं मणिमुक्तादिप्रसाददानानुमतिपुरस्सरन्तत्प्रतिषेधाभिधानात्। अ न्यथा तस्यानुवादमात्रत्वेन वैयर्थ्यापत्तेः। तथा च जन्मना पुत्रादीनां स्वत्वान्मणिमुक्तादिषु तदनुमतिमन्तरेणापि दाने पितुः स्वा तन्त्र्यम्। स्थावरे तु तदनुमत्यैवेति विशेषद्वितिवचनद्वयार्थस्य वाच्यत्वाज्जन्मना स्वत्वमायातीति मैवम्। तस्य पितामहोपात्तस्था वरविषयत्वात्। अतीते पितामहे तत्स्वाम्यनाशात्पितापुत्रयोः साधारणे तदीयद्रव्यस्वत्वेपि स्थावरएव पुत्रानुमत्यपेक्षा मणिमुक्ता

द्वीतुमेतितदर्थोत्। यत्तु गौतमवचनं उत्पत्त्यैवार्थस्वामित्वं लभेतेत्याचार्य्या इति। जन्मनः स्वत्वहेतुत्वेमिताक्षराकृता प्रमाणत्वेनो
पन्यस्तत्वाद्दायभागतत्त्वकृता व्याख्यातमेव। पितृस्वत्वोपरमे तज्जन्यस्वत्वहेतुभूतेनोत्पत्तिमात्रसम्बन्धेनान्यसम्बन्धाधिक्येन जन
कधने पुत्राणां स्वामित्वाभावं नं पुत्रो लभते नान्यः सम्बन्धी त्यार्थ्यमन्यं तदिति। ननु पितृस्वत्वे विद्यमानेपि तत्र पुत्रस्वत्वमिति तदर्थः
। मारं दद्दैव स्ववचनविरोधात्। पितर्यूर्ध्वं गते पुत्रा विभजेयुर्धनं पितुरिति नारदः। पितुर्द्धनमित्याह। अन्यथाधनं विभजे
युरित्येवावक्ष्यत्। पितर्य्युपरमे पुत्रा विभजेयुर्धनं पितुः। अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थितेइति। देवलोऽपि पितुर्द्ध
नमिच्छन्नोपमतर्द्धे नास्वाम्यं हीनिस्पष्टमेव तेषामस्वत्वं तत्र हेतुत्वेनोक्तवान्। निर्दोषे पातित्यादिस्वत्वापगमकदोषरहिते। म
नुरपि। ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समं। भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोरिति। जीवतोर्म्मातापित्रोस्तद्धनेपु
त्राणामस्वाम्यं वक्तमेवाह। यत्तु शङ्खलिखितावाहतुः। न जीवति पितरि पुत्रा रिक्थं भजेरन्। यद्यपि स्वाम्यं पश्चादधिगत
मेरं नहीश्च वपुत्रा धर्मार्थयोरस्वातंत्र्यादिति। स्मृतिचन्द्रिकाकारेणापव्याख्यातम्। यद्यपि तैः पुत्रैः स्वकीयजन्मनः पश्चादन
न्तरमेव पितृधने स्वाम्यमधिगतं प्राप्नन्तथापि जीवति पितरि तद्धनमादित्साभिर्नानविभजेरन् धर्मार्थयोरस्वातंत्र्यात्पितृपारत
न्त्र्यादिह भागकरणोऽनर्हा पुत्रा इति। तेनानेन वचनेन जन्मना पुत्रादीनां पित्रादिस्वामिकधने स्वत्वमिति तदपिन। मन्वादिवच
नानांश्चहूमामस्वाम्यप्रतिपादकानामनुरोधेनास्वाम्यथावर्णनीयत्वात्। वर्णितश्चकल्पतरौ। यद्यपि पश्चादधिगतं पितृधनं त्वा
पार निरपेक्षैः पुत्रैर्वर्ण्यादिभिरुपात्ते धने स्वाम्यं तथापि तत्राप्यस्वाम्यं जीवति पितरि किमुत पितृधने धर्मार्थधर्म्मयोस्तेषां पितरि जीव
त्यस्वातन्त्र्यादिति विशेषः। स्वत्वं शास्त्रैक समधिगम्यं तत्र च रिक्थक्रयादिवज्जन्मनः स्वत्वहेतुत्वेनानुक्तेर्जन्मना स्वत्वमप्रामाणिकमेव
। अन्तरमेव चाभार्य्यादिवचनं। भार्य्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः। यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनमिति। पार
तन्त्र्यमात्रप्रतिपादनपरं तथाऽस्वाम्यवचनान्यपीत्यपास्तं। भार्य्यादिष्वधन्यादिवचनैः कर्म्मनादिनाचार्यकत्वेन स्वामित्वेसि

द्धेयुक्तमस्वातंत्र्यमात्रपरत्वमन्यथा पुत्रादिषु धनसाध्येषु पुरुषार्थादिश्रुतत्वेनैषामधिकारित्वमपि विहन्येत । अत्र तु प्रत्युतजन्मनः स्वत्वहेतुत्वे प्रमाणाभावाद्युक्तमेवान्यथानेकवचनवर्णनम् । किञ्च । यदि स्वत्वं लौकिकं स्यात्तर्हि तदुपायानामपि लौकिकत्वात्स्वामीरिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितम् । निर्विष्टं वैश्यशूद्रयोरिति गौतमवचनं व्यर्थमेव स्यादनुवादमात्रत्वान्नहि पाकाद्दोदनो भवतीत्यादिशास्त्रेण निःप्रयोजनमनुवादमात्रमुच्यते । तस्य हि वचनस्यायमर्थः । रिक्थं दायः । क्रयः प्रसिद्धः । संविभागो दायस्यैवैकदेशनिष्ठस्वामित्वव्यञ्जको विभागः । परिग्रहः पूर्वमपरेणास्वीकृतस्यारण्यादिसाधारणप्रदेशसम्बन्धिनस्तृणजलकाष्ठादेः स्वीकारः । अधिगमोऽज्ञातस्वामिकस्य निध्यादेः प्राप्तिः । एतेषु स्वत्वहेतुषु सत्सु स्वामी भवति । जातेषु च जायते । ब्राह्मणस्य लब्धं प्रतिग्रहादिप्राप्तमधिकमसाधारणं रिक्थादयस्तु सर्वसाधारणाः । अधिकमित्युत्तरत्र सर्वत्र सम्बध्यते । क्षत्रियस्य विजितं युद्धविजयदण्डादिप्राप्तमसाधारणम् । वैश्यस्य निर्विष्टं कृषिगोरक्षादिभृतिलब्धम् । शूद्रस्य द्विजशुश्रूषादिभृतिलब्धम् । निःपूर्वस्य विशेर्भृतिवाचकत्वं । निर्वेशो भृतिभोगयोरिति त्रिकाण्डाभिधानात् । वैश्यशूद्रग्रहणस्योपलक्षणत्वादन्येषामप्यनुलोमजप्रतिलोमजातानां सूतानामश्वसारथ्यमित्याद्यौशनसादिप्रतिपादितं वृत्तिजातं निर्विष्टशब्देन संगृह्यते । सर्वस्य भृतिरूपत्वात् । किञ्च । योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम् । याजनाध्यापनेनापि यथा स्तेनस्तथैव सः इत्यदत्तादायिनश्चौरस्य हस्ताद्याजनादिवृत्त्यापि धनमर्ज्जयतो दण्डविधानमनुपपन्नं स्वत्वस्य लौकिकत्वे । स्ववृत्त्यार्ज्जयतो निरपराधत्वात् । मन्यते तु शास्त्रैकसमधिगम्यत्वात्स्वत्वस्य चौरहस्तात्कृतयाजनादावेतद्वचनादेव स्वत्वानुत्पादकत्वात्तद्विधानमुपपन्नतरम् । अपि च ममस्वमनेनापहृतमिति व्यपदेशो न स्यात्स्वत्वस्य लौकिकत्वे । अपहर्त्तुरेव तत्र स्वत्वात् । मन्यते त्वपहारस्य निषिद्धत्वेन स्वत्वानुत्पादकत्वादुपपन्नोऽयं व्यपदेशः । यदि च सुवर्णत्वादिकमिव तत्स्वत्वमपि प्रत्यक्षप्रमाणकं तर्हि सुवर्णत्वादौ यथा न सन्देहस्तथास्य स्वमिदमस्य वेत्यपि सन्देहो न स्यान्निर्णीतत्वात् । इदमेवोक्तं संग्रह

कारेण। यन्नैतेयस्ययद्द्रव्यंतेनतस्यस्वामीसएवन। अन्यस्वमन्यद्द्रव्यंस्तेयुचौर्य्यादिभिःकिन्नदृश्यते। तस्माच्छास्त्रतएवस्यात्स्वा म्यंनानुभवादपि। अस्यापहृतमेतेननयुक्तंवक्तुमन्यथा। विदितोर्थागमःशास्त्रेतथाऽवर्णिपृथक्पृथगिति। शास्त्रेस्वामीरिक्थक्रयेत्यादौसाधारणासाधारणरूपोऽर्थागमःस्वत्वोपायःपृथक्पृथग्वर्णितस्तथाविदितोलौकिकत्वेतच्छास्त्रानर्थक्यंस्यादिदितइत्यर्थः। अन्यत्स्पष्टम्। यथावर्णमितिस्मृतिचन्द्रिकायांपाठः। पूर्वपाठस्तुमदनरत्नेलिखितः। अथयद्यस्ययथेष्टंविनियोज्यन्तत्तस्यस्वमितिलोकप्रसिद्धेर्य्यथेष्टविनियोज्यत्वंस्वत्वमितिचौर्य्यादुपार्ज्जितेनातिप्रसङ्गस्तत्रचौरादेर्य्यथेष्टविनियोज्यत्वाभावाद्विनियोगकालेत्रासादिदर्शनात्। अतएवसन्देहोप्युपपन्नःसुवर्णत्वादिनितुस्यत्वाभावात्स्वत्वस्यमैवम्। असम्भवात्। शास्त्रेणसर्वस्यकुटुम्बभरणादौविनियोगविशेषनियमाद्वैच्छिकविनियोगविषयत्वस्यकुत्राप्यप्रसिद्धेः। तदप्याहसंग्रहकारःशङ्कोपन्यासपुरःसरम्। नचस्वमुच्यतेतद्यत्स्वेच्छयाविनियुज्यते [illegible] विनियोगोस्यसर्वस्यशास्त्रेणैवनियम्यतेइति। अत्रपूर्वार्द्धंशङ्कोपन्यासस्तदुत्तरार्द्धंतत्परिहारः। नचरिक्थादिवदुत्पत्त्यैवार्थस्वामित्वमितिगौतमवचनउत्पत्तेरपिजन्मापरपर्य्यायत्वात्स्वत्वहेतुत्वोक्तेःसत्यपिस्वत्वस्यतदुपायानांशास्त्रैकसमधिगम्यत्वेजन्मनापुत्रादेःपित्रादिधनेस्वत्वमक्षतमेवेतिवाच्यम्। तस्यानेकटूषणैरन्यथाव्याख्यानस्यप्रागेवोक्तत्वात्। इदमेवाभिसन्धायधारेश्वरेणापिशास्त्रैकसमधिगम्यमेवस्वत्वमितिसिद्धान्तितम्। अपिच। जीवत्यपिपित्रादौपुत्रादेस्तद्धनेजन्मनास्वत्वेतदनिच्छायामपिपुत्रादीच्छयैवविभागःस्यात्। अस्वातन्त्र्यवचनान्नैवमितिचेन्न। तथासतिदृष्टादृष्टविरोधमात्रंभवेद्व्यवहारस्तुसिद्ध्येदेव। यथापित्रादिभिःसहपुत्रादिभिस्तुल्याद्व्यवहारेप्रवर्त्त्यमानेतेषांदृष्टादृष्टयोःश्रेयोविधानमात्रंगुरोःशिष्येपितुःपुत्रइत्यादिवचनार्थइतिप्राक्प्रपञ्चितन्तथात्रापिस्यात्। अस्त्वितिचेन्नसकलनिबन्धविरोधात्। कश्चिज्जन्मनैवेतिप्राचीनग्रन्थलिखनमपिजन्मनिबन्धनत्वात्पितापुत्रादिसम्बन्धस्यपितुमरणस्यचतत्स्वत्वापगमहेतुत्वेनपरम्परयावर्णनीयम्। किञ्च। ऊर्द्ध्वंपितुश्चेत्यादिमनुवचनञ्जन्मनापुत्राणांस्वत्वपक्षेजीवति

पितरि सत्यपि पुत्राणां स्वाम्ये तदिच्छया विना तद्विभाग ऊर्ध्वं पितुः सेच्छये ति विभाग निषेधार्थं प्राग्गतिवचनं तत्त्वान्यार्थ्यं स्वाम्यपर
त्वापत्तेः । न च पितुरुपरमकालविधानार्थं विभागविधानार्थं चेति युक्तम् । दृष्टार्थत्वाद्विभागस्योभयस्याप्यनुपपत्तेः । नापि नि
यमविधिर्विभागस्यैवं सह वसेयुर्वा पृथग्वा धर्मकाम्यया इति मनुना विकल्पाभिधानात् । काल विधौ च पितुरुपरमानन्तरकालस्य
व विभागे नैमित्तिकस्य निमित्तानन्तर्यं व बाधो यं स्यात् । जाते हि बन्धजातप्राणवियोगापत्तिसरूपविशेषविरोधस्यात्राभावात् । अ
तो जीवतोः पित्रोः सत्त्वे स्वाम्यं नास्ति किन्तूपरतयोस्तयोरिति तत्कालीनस्वत्वज्ञापनार्थं मन्वादिवचनं विभागस्तु स्वातन्त्र्यात् तत्का
लीनइच्छाप्राप्तो नूद्यते । तथा चैतद्वचनविरोधात् पितृजन्मना स्वत्वं वक्तुं शक्यम् । उपरमवत्यतितत्वादिकमपि पित्रादिस्व
त्वनाशकारणं वक्ष्यते । तस्मात् पित्रादिस्वत्वनाश एव तज्जनेपुत्रादीनां स्वाम्यं न तत्स्वत्वसमकालीनमिति स्वाम्यादिसद्भावस्य सर्वं
अप्रतिबन्धकत्वात् सर्वोपि सप्रतिबन्ध एव दायइति द्वैविध्यमनुपपन्नमिति । अत्रोच्यते । यदि स्वत्वापगमस्य पुत्रादीनां तज्जने
स्वत्वं तर्हि निर्दोषे पित्रादौ जीवति तेषां धनसाध्यवैदिककर्मस्वनधिकारप्रसङ्गे जातपुत्रः कृष्णकेशोग्नीनादधीतेत्यादि श्रुतिवि
रोधस्तु स्यः स्वकपोलकल्पितहेत्वाभाससमर्थितस्मृत्यर्थानुरोधेन श्रुतिसङ्कोचोऽयुक्तः । आहिताग्नाविष्टप्रथमयज्ञे पित्रादौ जी
वत्यपि पुत्रादीन् प्रतितत्प्रवृत्त्यविशेषात् । सकलयाज्ञिकशिष्टानां तदनुष्ठानदर्शनाच्च । जातपुत्रकृष्णकेशपदाभ्यां वयोवृद्धेः
न तिक्रमस्यैव विवक्षा ननु तयोरव्यवस्थिततयोः स्वरूपेणेति विरोधाधिकरणाभाष्यवार्त्तिकादौ स्थितत्वात् । न च यथा पुत्रानुमत्या
पितुर्भवन्मते तदधिकारस्तथा मन्मते पि पुत्रादीनामपि पित्राद्यनुमत्येति वाच्यम् । यतो द्वयोरपि मते पितुः स्वत्वस्य धने विद्यमान
त्वात् त्यागरूपप्रधाननिष्पत्तिरविहता भवन्मते तु पुत्रादीनां स्वत्वस्यैवाभावादनुमतेश्च स्वत्वाजनकत्वाद्यागादिप्रधाननिष्पत्ति
रेव कथम् । वस्तुतस्तु पितुः पुत्रानुमतिरविनापेक्षिता स्वातन्त्र्यात् । पित्राद्यनुमतिस्तु पुत्रादरपेक्षितापारतन्त्र्यादित्येतावान्विशे
षो यथा स्त्रियाः स्वधनेनापीष्टापूर्त्तादिव्रतादौ भर्त्रादनुमतिस्तत्पारतन्त्र्यवचनात् । अननुमतौ तु स्वतन्त्रः प्रत्यवायो वैगुण्यं वा

अविहितानुप्रधानस्वरूपानिष्पत्तेः । पित्राद्यनुमतेः स्वत्वोत्पादकत्वञ्चेत्तदनुरोधात्कल्प्यमानमलौकिकमशास्त्रीयञ्च । तस्मा च्छास्त्रैकसमधिगम्येऽपि स्वत्वे कथं श्रुत्युक्तम् नोऽपि रिक्थादिवचनादधिगमादिपदेन संग्रह आवश्यकः श्रुतिस्मृतिपुराणशिष्टाचा रसिद्धस्य निर्दोषे जीवत्यपि पित्रादौ पुत्रादियज्ञाद्यनुष्ठानाधिकारस्यानुरोधात् ॥ वस्तुतस्तु लौकिकमेव स्वत्वं लोके चागमप्रमा णामेव पुत्रादीनामपि पित्रादिधने स्वाम्यव्यवहारोऽन्येषामपीति साधयिष्यामः । यच्च पित्रादीनामनुमत्ययोग्यपुत्रादिसाधार णस्वत्वे कथमनुमतिमन्तरेणाधानादिकं स्यादित्युक्तं तदनुमतेर्नियोग्येष्वपि पुत्रादिषु स्वातन्त्र्यात् पित्रादीनां न तदनुमत्यपेक्षा । कि मुतानुमत्ययोग्येष्विति परिहृतप्रायमेव तद्विधिबलादेवाधिकारोऽवगम्यत इति तु विज्ञानेश्वराचार्य्यैः । अतएवास्यैवार्थस्य स्वामि त्वमिति गौतमवचनस्य यज्जीमूतवाहनरघुनन्दनाभ्यामपारम्परिकोत्पत्तिस्वत्वहेतुत्वेन व्याख्यानं कृतं तदपि यथार्थमेव । यत्तु सु वचनं तस्यापि स्मृतिचन्द्रिकोक्तव्याख्यैव साधीयसी । कल्पतरुकृद्व्याख्यायान्तु विभागोपनाध्याहारेऽनुपस्थितभूयःपदाध्या हारः प्रसज्येत । जन्मपदाध्याहारस्तु पुत्रत्वाद्याक्षेपोपस्थितेरल्पाध्याहारसूचनायुक्तः । तेन श्रुत्युपष्टम्भस्मृत्यनुरोधान्मनुना रददेवलादिवचनानामेव स्वातन्त्र्यपरत्ववर्णनमुचिततरम् । यदप्युक्तं प्रीतिदत्तस्याविभाज्यत्ववचनानि जन्मना स्वत्वाभ्युपग मेऽनुपपन्नानीति । तदपि न । अनुमत्यभिप्रायेण स्थावरप्रीतिदानाभावस्थिरीकरणार्थतयोपपत्तेः । स्वातन्त्र्येऽपि पितुरनु मतिमन्तरेणापि तेन दत्तस्थावरव्यतिरिक्तपुत्राणामविभाज्यत्वमुच्यते । अतएव स्थावरे विशेषवचनम् । स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्ज्जितम् । असम्भूय सुतान् सर्वान्न दानं न च विक्रय इति ॥ मणिमुक्ताप्रवालानामित्यादिवचनन्तु जन्मना स्वत्वप क्ष एवोपपन्नतरम् । तच्च पितामहोपात्तस्थावरमात्रविषयत्वमित्युक्तं । नपिता नपितामह इति द्वयग्रहणात् । पितामहस्य हि स्वार्ज्जितमपि पुत्रपौत्रैस्सत्यपि न देयमिति वचनञ्जन्मना स्वत्वं गमयति । यथापरमते मणिमुक्ताप्रवालादीनाम्पितामहानाम पि पितुरेव स्वत्वं तत्राऽपि स्थावरे यथा स्वाम्यं तेऽपि पुत्रादीनान्तत्रापि जन्मना स्वत्वे साधारणेऽपि पितुर्दानाधिकार इत्यविशेषः । तस्मात्पैतृके

पैतामहे च द्रव्ये पुत्रादीनां यद्यपि जन्मनैव स्वत्वं तथापि पितुरवश्यकेषु धर्मकृत्येषु वाचनिकेषु प्रसाददानकुटुम्बभरणाप
द्विमोक्षादिषु च स्थावरव्यतिरिक्तद्रव्यविनियोगे स्वातन्त्र्यमिति ध्येयम्। स्थावरे तु स्वार्जितेऽपि पित्रादिपरम्पराप्राप्ते च पुत्रादि
पारतन्त्र्यमनुमतमेव। स्थावरं द्विपदं चैव यद्यपि स्वयमर्जितम्। असम्भूय सुतान्सर्वान्न दानं न च विक्रयः। ये जाता ये
अजाता ये च ये गर्भे व्यवस्थिताः। वृत्तिं च तेऽभिकाङ्क्षन्ति न दानं न च विक्रयः इत्यादिवचनात्। अस्यापवादो वक्ष्यते। यच्च स्वत्वस्य शा
स्त्रैकसमधिगम्यत्वाच्छास्त्रे च कस्मान्नः क्वापि स्वत्वहेतुतानाभिधानात्कथं जन्मना पुत्रादीनां पित्रादिधने स्वत्वस्वीकार इत्युक्त
म्। तत्तु शास्त्रैकसमधिगम्यत्वमभ्युपेत्यापि गौतमादिवचनस्योपनेऽपि स्वत्वोक्तेः परिहृतमेव प्राक्। वस्तुतस्तु न स्वत्वस्य शास्त्रै
कसमधिगम्यत्वं युक्तियुक्तम्। सर्वथा शास्त्रज्ञानगन्धरहितानां प्रत्यन्तवासिनां म्लेच्छादीनामपि सम्मतमिदं मम स्वमिति व्य
पदेशस्तत्कृतश्च क्रयविक्रयादिव्यवहारो दृश्यते। तेनान्वयव्यतिरेकाभ्यां क्रयाद्युपायकं स्वामित्वमपि तैर्ग्रहीष्टविनियोगार्हत्व
रूपम्पदार्थान्तररूपम्वा प्रत्यक्षादिप्रमाणादेवावगतमित्यवश्यं वाच्यम्। एतमर्थोपष्टम्भोऽनुमानवाक्यप्रयोगोऽपि मिताक्षरायामभि
हितः। स्वत्वं लौकिकं लौकिकार्थक्रियासाधनत्वाद्व्रीह्यादिवदित्यन्वयदृष्टान्तः। आहवनीयादीनां हि शास्त्रैकसमधिगम्यानां
अलौकिकार्थक्रियासाधनत्वमस्तीति व्यतिरेकदृष्टान्तः। तेनान्वयव्यतिरेकी हेतुः। यद्यप्याहवनीयादीनामपि याग्यादिलौ
किकक्रियासाधनत्वमप्यस्ति। तथापि न लोकप्रमाणकाग्न्यादिरूपेणालौकिकाहवनीयादिरूपेणेति न व्यभिचारः। इह
तु सुवर्णादिरूपेण न क्रयादिसाधनत्वमपि तु स्वत्वेनैवेति सुवर्णत्वादिनामरत्वाद्यर्थक्रियासाधनत्वात्तद्वा लौकिकं रूपमेवं स्व
त्वमपि सर्वानुगतं लौकिकमेव न ह्यस्वत्वेन क्रयादिक्रियानिर्वाहो लोके। न चैवं स्वामी रिक्थेत्यादिस्मृतीनां लोकसिद्धार्थानुवादक
त्वेनानर्थक्यापत्तिरिति वाच्यम्। धर्माधर्मोपयोगितया व्याकरणस्मृतावनादिवाचककल्पनतद्भावरूपं साधुत्वासाधुत्वविवेकस्येव
वस्योपपत्तेः। साधुशब्दाधिकारो ह्येतदवस्थितं यत्तदक्षरीत्यवहारिणां लोकानामपि विशिष्टलौकिकमेव साधुत्वं शास्त्रेणाविधि

ष्यते । नन्वलौकिकस्वत्वं साधुभिर्भाव्येन्याद्विधानन्योन्याश्रयप्रसङ्गादित्यादि । एवमग्रापितश्च नयविवेकेभवनाथः ।
लोकसिद्धस्वाम्यमनूद्य न एवानिश्चयमूयमलोकधीविषयव्यवस्थितन्तन्निबन्धनार्थास्मृतिर्ध्याकरणादि स्मृतिवदिति । अ
न्यादीन्यादिपदेन कर्मादिग्रहणम् । आकरणादीन्यादिपदेन सङ्गीतरत्नपरीक्षासामुद्रिकाणां ग्रहणम् । रागादीनामपिहि
लोकसिद्धानामेवानभियुक्तान्प्रतिविवेकार्थमेव तल्लक्षणकथनमित्युक्तं स्मृत्यधिकरणे आचार्य्यचरणैः । स्वामीरिक्थस्येत्यादिवच
नन्तु प्रागेव व्याख्यातम् । रिक्थश्च हस्तुनिःप्रतिबन्धदायपरः संविभागश्च हस्वसप्रतिबन्धदायपर इति मिताक्षरायाम्विज्ञानेश्व
रेण व्याख्यातम् । स्मृतिचन्द्रिकाकृतानु रिक्थं पित्रादिधने पुत्रादीनां स्वामित्वापादकञ्जन्मनैवेति व्याख्याय संविभागः पित्रादि
धने विशेषनिष्ठस्वामित्वसम्पादको विभाग इति संविभागश्च हेत्वा व्याख्यातः । स्वस्यसतो विभागात्स्वत्वहेतुत्वेन तत्प्रतिपादना
नौचित्यात् । एकदेशव्यवस्थापनमात्रं हि स्वविभागेन क्रियते । मुख्यामुख्यहेतुत्वयद्वस्वामिपदे वैरूप्यापत्तेः । अतएवाह
मिताक्षरायाम्विज्ञानेश्वराचार्य्यैः । विभागश्च हस्वानेकस्वामिकधनविषयः प्रसिद्धो नान्यदीयविषयेन प्रहीणविषय इति ।
लोके पुत्रादीनाञ्जन्मनैव स्वत्वम्प्रसिद्धतरमिव । यदपि पत्नीदुहितर इत्यादिवचनन्तदपि स्वामिसम्बन्धनिबन्धनानेकदाय
हरप्राप्तौ लोकप्रसिद्धेपि सम्बन्धव्यामोहनिरासार्थम् । प्रायेणाव्यवहारस्मृतीनां लोकसिद्धार्थानुवादकत्वमिति सकलनिबन्धृभि
रभिधनात् । नियतोपायिकं स्वत्वं लोकसिद्धमेवेति भगवतो गुरोरपिसंमतम् । लिप्सानयेहित्तृणोये वर्णकेद्रव्यार्ज्जननियमानां
क्रत्वर्थत्वे स्वत्वमेव नस्यात्स्वत्वस्यालौकिकत्वादिति पूर्वपक्षासम्भवमाशंक्य द्रव्यार्जनप्रतिग्रहादिमांस्वत्वसाधनत्वं लोकसिद्धमेवेति
पूर्वपक्षः समर्थितस्तेन । नच द्रव्यार्जनस्य क्रत्वर्थत्वे स्वमेव न भवतीति यागएव न संवर्तेत । प्रजल्पितमिदङ्केनापि । अर्जनं स्व
त्वं नापादयतीति विप्रतिषिद्धमिति ग्रन्थेन । अस्यार्थष्टीकाकृता विवृतएवम् । यदाहुर्याजननियमानां क्रत्वर्थत्वन्तदा नियमा
नां स्वत्वोपायतामिदं शास्त्रं नवोधयति । क्रत्वर्थतावोधनेव्यापृतत्वात् । तथासतिप्रतिग्रहादिप्राप्तस्वत्वमित्यत्र प्रमाणाभावा

दृष्टेन चस्वत्यागात्मकयागासम्भवात्कस्येदम्। द्रव्यार्जननियमाभवेयुरितिपूर्वपक्षासम्भवइतिशङ्कार्थः। प्रत्युपितमित्या
द्युत्तरसूत्रार्थः। अर्जनप्रतिग्रहादेःस्वत्वहेतुतायालौकिकसिद्धत्वेनशास्त्रस्यतत्राव्यापारान्नियमानांक्रत्वर्थत्वेनैवतेनगम्यतइतिन
यागासम्भवोनियमानर्थक्यञ्चेति। सिद्धान्तेपितेनस्वत्वस्यलौकिकत्वाभ्युपगमेनैवविचारप्रयोजनमुक्तम्। अतोनियमातिक्र
मःपुरुषस्यनक्रतोरिति। अस्यापार्थएवंविवृतः। यदाद्रव्यार्जननियमानांक्रत्वर्थत्वन्तदानियमार्जितेनैवक्रतुर्न्नियमातिक्र
मार्जितेनद्रव्येण। ननुपुरुषस्यनियमातिक्रमदोषःपूर्वपक्षे। सिद्धान्तेवर्जननियमस्यक्रत्वर्थत्वाभावात्केवलपुरुषार्थत्वात्
तिक्रमार्जितेनापिद्रव्येणक्रतुसिद्धिरप्रत्यूहा। पुरुषस्यैवतुनियमातिक्रमदोषइति। अनेननियमातिक्रमार्जितस्यापिस्वत्व
मभ्युपगतमन्यथाक्रतुसिद्ध्यभिधानविरोधात्। तत्रैवाधिकरणेकुमारीलस्वामिनोप्यत्रभवतःस्वत्वंलौकिकमित्येवाभिमतमिति।
तत्रत्यवार्त्तिकतत्त्वरत्नाभियोगभाजांसुलभमेव। अतएवाहशास्त्रदीपिकायांपार्थसारथिःरागप्राप्तत्वाद्द्रव्यार्जनन्नशास्त्रीयं।
रागतश्चपुरुषार्थतयाप्राप्तिःप्रत्यक्षेणैवार्जितन्द्रव्यम्पुरुषम्प्रीणयत्पुरुषार्थंविज्ञायतेनतदनुमानेकत्वेकश्चेचनयाशक्यंविज्ञातुम्
। तस्मात्पुरुषार्थन्द्रव्यंक्रतुरपिपुरुषकार्य्याणामन्यतमइतिकार्यान्तरवत्क्रतावप्युप्रयुज्यतइत्येतावान्विशेषः। ननुतस्यैवाङ्गत्वा
त्प्रतिजीवनलोपात्क्रतुरेवनसम्पद्येतेतिप्रघट्टकेन। अर्जनस्यशास्त्रीयत्वान्निरस्यतास्वत्वस्यतदुपायताश्रुतेःकश्चिद्व्यंस्पष्ट
तरमेवोक्तम्। अन्यदपितेनैवोक्तम्। तस्मात्पुरुषार्थन्द्रव्यार्जनमेवञ्चदृष्टार्थम्भवति। नियमस्तुदृष्टाभावात्काममदृष्टा
र्थःस्यात्। अदृष्टमपिपुरुषार्थार्जनविषयत्वात्। नियमस्यपुरुषगतमेवकल्प्यते। तेनासावुपायान्तरेणार्जयन्प्रत्यवैतीति
गम्यतइति। तत्रचस्वामीरित्यादिवचसांलौकिकमेवस्वत्वादीनांस्वत्वोपायत्वमनूद्यतद्विशिष्टोपायनिवृत्तितात्पर्य्यंन्नियम
विधयेतिनात्रविवादोस्त्यपि। तृप्तिसाधनभोजनमाश्रित्यदिङ्नियमवत्। द्रव्यार्जनमेवक्रत्वर्थमुत्पुरुषार्थंवाविचारेदाहरणमि
यमस्तुपूर्वपक्षयुक्तित्वेनोपन्यस्तः। सएवतत्रोदाहरणमित्येवभट्टगुरुमतयोर्भेदःस्वत्वस्यलौकिकत्वंनूभयसम्मतमितिनि

च्छर्थः । तत्तद्दूषणाभूषणादितुतत्त्वाभियोगवत्तामाकरे एवव्यक्तंप्रस्तुतानुपयोगादिहनोच्यते । एतेनचैार्य्यादिप्राप्तस्यापि स्वत्वंस्यादितियत्संग्रहकारधारेश्वराभ्यांस्वत्वस्यलैाकिकत्वेदूषणमभिहितन्तदपिपरास्तम् । चैार्य्यादिषुस्वत्वोप्रायत्वस्यले कएवाप्रसिद्धेरन्यस्यस्वमिदन्नास्येत्येवंव्यवहारात् । कयाद्युपायसन्देहादेवस्वत्वसन्देहोपीदमस्यवास्यवेत्याकारकोनानुप पन्नः । ममस्वमनेनापहृतमितिनब्रूयादपहर्तुरेवस्वत्वादितिचयत्स्वत्वस्यलैाकिकत्वेदूषणमभिहितन्तदप्येतेनानूनविशी र्णम् । यच्चोक्तंसंग्रहकृता । शास्त्रेणसर्वस्यमत्वविनियोगनियतत्वाद्यथेष्टवियोगत्यत्वरूपस्वत्वासम्भवः । इच्छयाक्वापिनि योगासम्भवादिति । तदप्यापाततः । नहिवयमैच्छिकविनियोगोपहितत्वंब्रूमोपितुतदर्हत्वमात्रम् । अन्यथाराजादिभया दिच्छाप्रतीघातेपितत्स्याद्विनियोगेच्छानिच्छादशयोस्स्वत्वतदभावैाविरुद्धैाप्रसज्येयाताम् । राजादिनियतत्वादिवशा स्त्रनियतत्वादन्यत्रैच्छिकविनियोगाभावेपितदर्हत्वस्यानपायात् । अतएवदुर्वृत्तेनाशास्त्रीयविनियोगेऽयस्यव्यवहारेनास्ति । प्रत्यवायमात्रपरंशास्त्रातिक्रमात् । तदर्हताचतदर्जितत्वप्रयुक्तास्त्वेव । तथाचनयविवेकेप्युक्तम् । तच्चतस्यतदर्हम्पदर्जेना र्जितमिति । तदर्हंयथेष्टविनियोगार्हमित्यर्थः । प्रतिबन्धादङ्कुरमजनयतोपिकुसूलस्यवीजस्यवीजत्वप्रयुक्तमंकुरोत्पाद नार्हत्वमिव । वस्तुतस्तुवीजत्वाङ्कुरार्हत्वयोरिवस्वत्वयथेष्टविनियोगार्हत्वयोरपिभेदएव । अन्यथार्हतावच्छेदकापरिचये ऽर्हतायादुर्निरूपत्वात् । तेनब्राह्मण्यमिवस्वत्वमपितदुपायज्ञानव्यङ्ग्यंपदार्थान्तरमेवोत्पत्तिविनाशशालि । ब्राह्मण्यन्तुजाति रूपंनित्यमित्येतावान्परभेदः । इदञ्चाकरेव्यक्तंवीत्नावपादोच । अथमिताक्षरायांस्वत्वलैाकिकालैाकिकत्वविचारप्रयोजन मुक्तंशास्त्रैकसमधिगम्येस्वत्वे । मनुः । यद्गर्हितेनार्जयन्तिकर्म्मणाब्राह्मणाधनं । तस्योत्सर्गेणशुद्ध्यन्तिदानेनतपसैवचेत्यादि स्मरणादसत्प्रतिग्रहादियस्ययदर्जनोपायत्वेननिषिद्धन्तदर्जितेतस्यस्वत्वाभावाच्चैार्य्याद्यर्जितवत्तत्पुत्राणामपितदविभाज्य मेव । लैाकिकत्वेतुस्वत्वस्यतदर्जितेपिपितुःस्वत्वात्तत्पुत्राणाम्पितृधनत्वेनतद्विभाज्यम् । अर्जयितुरेवप्रतिषेधातिक्रमनिमित्तप्र

व्यवायात्प्रायश्चित्तम्। तत्पुत्रादीनान्तु दायहरूपधर्म्मोपायतत्त्वमिति न प्रायश्चित्तमपि। सप्तवित्तागमा धर्म्या दायो लाभः क्रयो
जयः। प्रयोगः कर्म्मयोगश्च सत्प्रतिग्रह एव वेति मनुस्मरणात्। प्रयोगो वृद्ध्यर्थं द्रव्यप्रयोगः कर्म्मयोग आर्त्विज्यादिकरणम्
। तत्र दायादीनां त्रयाणां वर्णचतुष्टयसाधारण्येन जयस्य क्षत्रियम्प्रति योगस्य स्वयंकृतस्य वैश्यं शूद्रं च प्रति धर्म्यत्वम्। स्वयंकृ
तस्यापदि च स्वयंकृतस्यापि सर्वान्प्रति। कर्म्मयोगस्य तु विप्रम्प्रत्येवेति विशेष इति। अत्र मदनरत्नकारो दूषणमाह। सत्यम्
शास्त्रैकसमधिगम्यत्वेप्यसत्प्रतिग्रहादिनिषेधो न स्वत्वानुत्पादकतां नेयां वदति। किन्तु प्रत्यवायमात्रहेतुताम्। इतरथा
आपद्गतः सम्प्रगृह्णन्भुञ्जानो वा यतस्ततः। न लिप्येतैनसा विप्रो ज्वलनार्कसमो हि सः। कुसीदं कृषिवाणिज्यं प्रकुर्वीतास्वयंकृत
म्॥ आपत्काले स्वयं कुर्व्वाणेनसा युज्यते द्विज इति वचने रेनसानयुज्यत इत्यभिधानेनापदि प्रत्यवायाभावावगमेनापदि प्रत्य
वायस्यैवावगमात्। प्रतिषेधप्रतिप्रसवयोः समानविषयत्वौचित्यात्। अत एवानापदि तद्द्रव्यपरित्यागपूर्वकं जपतपोरूपं
प्रायश्चित्तमेव विदधाति। न चौर्य्यादिवद्राजदण्डमपि किञ्चिद्वचनमसत्प्रतिग्रहादौ। तेनासत्प्रतिग्रहादेः पूर्वपक्षसिद्धा
न्तयोर्द्वयोरपि तेषां स्वत्वोत्पादकत्वाविशेषात्तदर्जितस्य पुत्रादिविभाज्यत्वमपि तुल्यमिति नैतत्प्रयोजनं विचारस्यास्य युक्तमिति
। अत्र वदामः। शास्त्रैकसमधिगम्यस्वत्ववादिनो मते यथा चौर्य्यादिनिषेधस्य स्वत्वानुत्पादकत्वं तत्प्रयोजनं विचारस्यास्य युक्त
मिति। अत्र कर्त्तुः प्रायश्चित्तार्थं तत्प्रयोजकत्वपरता। तथाऽसत्प्रतिग्रहादिनिषेधस्याप्यस्तु यथा चापदुपाधिना। तथैव सप्तमे
भक्ते भक्तानि षडनश्नता। अश्वस्तनविधानेन हर्त्तव्यं हीनकर्म्मणः। आख्यातव्यं च तत्तस्मै पृच्छते यदि पृच्छतीत्यादि प्रतिप्रस
वबलाच्चौर्य्ये तच्चिन्तयाभावस्तथाऽसत्प्रतिग्रहादेरप्यस्तु। अन्यथोभयत्रापि ततः पञ्चमहायज्ञाद्यनित्यनिप्रसङ्गः शास्त्रीयत्वे
स्वत्वस्याप्रसक्तचौर्य्योपायकत्वनिषेधः कथमिति चेत्। अधिगमान्तर्भावेन कथञ्चित्तत्प्रसक्तेस्तेनावश्यवक्तव्यत्वात्। अपरथाप्र
तिषेधानुपपत्तेः। शास्त्रप्राप्तप्रतिषेधे च विकल्पापत्तिभियादीक्षितो न जुहोतीत्यादिवद्व्याख्याकारमतेन पर्य्युदासत्वं सामान्य

विशेषभावेनविशेषनिषेधसामान्यविध्योर्बाध्यबाधकभावोपिवामनान्तरे सोर्थ्यपिस्वीकार्य्यमेवागत्या । प्रतिग्रहादेस्तुप्रसक्तिर्ग्रा
ह्यत्वादेरस्येवेष्यापत्तद्भावोपाधिकौप्रतिप्रसवप्रतिषेधावप्युपपन्नतरौ । नह्यसत्प्रतिग्रहस्वयंहननवाणिज्यादावनापदि
ब्राह्मणस्यराजदण्डोपिस्यादितिचेन्नइष्टापत्तेः । नहिस्वधर्म्मत्यागिनोराजदण्डाभावःकस्यापिसम्मतः । सचक्वचिन्मात्र
रूपेणोक्तएवगृह्यतेक्वचिद्विशेषाज्ञानाद्यन्यदेव । अतएवालौकिकस्वत्ववादिनइदमप्यपरदूषणम् । चौर्य्यादिनिषेध
स्यचितयप्रयोजकतागौरवम् । पर्य्युदासत्वादिस्वीकारगौरवञ्चलौकिकस्वत्ववादिनस्तुदण्डप्रायश्चित्ताभावमात्रपरत्वम् ॥ तेषां
स्वत्वानुपायत्वस्यलोकसिद्धत्वादितरागप्राप्तनिषेधेपर्य्युदासादिस्वीकारानापत्तेर्लाघवमिति । तस्माच्छास्त्रैकसमधि
गम्येस्वत्वेऽसत्प्रतिग्रहादेस्तदनुपायत्वात्तदर्जितेपितुःस्वत्वाभावःस्यादेवेत्यापाततश्चौर्य्याद्युपार्जितपितृधनाविभागवदसत्प्रतिग
हाद्युपार्जितस्याप्यविभाज्यत्वम् । लौकिकेतुतस्मिन्लोकेतेषामपितदुपायत्वासिद्धत्वाद्विभाज्यमितिमिताक्षरोक्तंसाध्वेवप्रयोज
नम् । इदञ्चोपलक्षणम् । पूर्वपक्षेचौर्य्याद्युपार्जितपितृधनस्वीकारेयथापुत्रादीनामपिदण्डप्रायश्चित्तभावस्तथाऽस
त्प्रतिग्रहाद्युपार्जिततद्द्रव्यस्वीकारेपीत्यपिप्रयोजनमवसेयं अर्जयितुरेवप्रायश्चित्तमित्यभिधानेनोचितत्वात् । इदञ्चात्रविचार्य्यम् ।
स्वत्वस्यलौकिकत्वेचौर्य्यस्यलोकेतदनुपायत्वेसिद्धेपक्वान्नएनाद्यापदियच्चौर्य्यमनुमतन्तेनचौरितेस्वत्वमुत्पद्यतेनवा । ना
द्यः लोकेऽनुपायत्वेनावधारितात्तदुत्पत्तेरभ्युपगन्तुमशक्यत्वात् । नहिप्रत्यक्षविरुद्धंशास्त्रसहस्रेणापिजलादेर्दाहजनकत्वादि
बोध्यते । नद्वितीयः । अस्तेनपञ्चमहायज्ञादिप्रधानानिष्पत्तेः । नचक्षुत्प्रतिघातमात्रमेवतेनक्रियतांनान्यदलौकिकमितिवा
च्यं । शिष्टाचारविरोधात्नहिशिष्टाःपञ्चमहायज्ञाद्युक्तत्वात्तदुपयुञ्जते । यदन्नःपुरुषोलोकेतदन्नास्तस्यदेवताइतिस्मरणाच्च
। अतएवविश्वामित्रस्य । श्वयाजनीश्वपचगृहात्हृत्यैन्द्रादिदेवोद्देशेनयज्ञाभोक्ष्यामीतिमनसिकृत्वयदायथादेवतान्तद्भा
गांस्तत्सम्प्रवृत्तस्तदानुष्टैरिन्द्रादिभिर्वृष्टिःसृष्टा । यस्सस्मृतश्चरणमेवप्रभूतमभूदित्याख्यायिकापुराणेषुसम्मर्य्यते । शास्त्रैकस

मधिगम्येनुस्वत्वेयथाशास्त्रञ्चौर्यादेरपिस्वत्वोत्पादकत्वतदभावौनविरुद्धौ। लौकिकस्वत्वन्तदुपायवादिनस्तूभयतःपाशार
ज्जुरियमिति। अत्रप्रतिविदध्मः। यद्यपिचौर्य्यस्यस्वत्वोत्पादकत्वन्नलोकसिद्धन्तथाप्यनेनैवसमभक्ताशनकालेषड्भक्तानशि
नोपविधानाद्गम्यते। स्वत्वमात्रस्यहिशास्त्रीयत्वंविरुद्धमतज्ज्ञानानांक्रयादिस्वत्वसाध्यव्यवहारानुपपत्तेः। अतश्चौर्य्यनि
षेधोदण्डपापमात्रबोधकएव। चौर्य्यस्यस्वत्वोत्पादकत्वाप्रसक्तेर्न्नतदभावपरः। यथाब्राह्मण्यस्यसर्वत्रप्रत्यक्षत्वेपिजात्युत्क
र्षस्यत्वेशास्त्रीयत्वमेव। पुरुषेयत्ताानियमस्यशास्त्रैकगम्यत्वात्। यथाऽऽहुराचार्य्याः। एतावन्मात्रमन्विहागमिकम्प्रत्येतव्यम्।
नह्ययम्पुरुषेयत्तानियमोलोकप्रमाणगम्यइति। तत्रापितावत्पुरुषपरम्पराजन्यव्यक्तौब्राह्मण्यमभिव्यज्यतइतियद्व्यञ्जक
भावएवपरंशास्त्रीयःव्यञ्जकेज्ञानवतस्तादृशव्यक्तौब्राह्मण्यप्रत्यक्षमेव। व्यक्तिप्रत्यक्षप्रमुखजातिप्रत्यक्षसामग्रीसम्भारादित्य
पिवदन्ति। इहतुचौर्य्यमात्रस्यैवस्वत्वानुत्पादकत्वग्रहात्तादृशस्यतस्यस्वत्वोत्पादकत्वंशास्त्रेणबोध्यते। नचप्रत्यक्षविरोधः
। नहिप्रत्यक्षविरुद्धंशास्त्रसहस्रेणापिबोधयितुंशक्यमितिवाच्यम्। नह्यनुत्पादकत्वमपिलोकात्। तादृशेनव्यवहाराभावाद
न्वयव्यतिरेकगम्यास्वत्वस्यचौर्य्योपायकतानावगम्यतइत्येतावत्। तथाचपुत्रेष्ट्यादीनांलोकानवगतपुत्रादिजनकतायथाशा
स्त्रादवगम्यतेतेषांदृष्टोपायान्तरजन्यतायामपितथेहाप्यस्तु। स्वर्गाहवनीयादीनामलौकिकमात्ररूपाणांदृष्टोपायाभावो
प्यधिकइत्यन्यदेतत्। प्रतिबन्धकप्रतिबद्धदाहादिजनकतायथोत्तेजकमन्त्राणामथर्वादिशास्त्रगम्यालोकप्रमाणगम्यत्वात्
। उत्तेजकतायाश्चप्रतिबन्धकप्रतिबद्धकार्यजनकतातिरिक्तायाश्चानिर्वाच्यत्वात्। शक्तिनाशतदुत्पत्तिकल्पनायामतिगौरवा
त्। यत्तुजन्मनास्वत्वन्निराकुर्वताजीमूतवाहनेनकश्चिज्जन्मनैवेति। जन्मनिबन्धनत्वात्पितापुत्रस्यसम्बन्धस्यपितृमरणस्यच
कारणत्वात्परम्परयावर्णनमितिप्राचीनलिखनाभिप्रायमुक्त्वाकथमुत्पादनरूपेणपितृगतव्यापारेणपुत्रेस्वत्वोत्पत्तिरित्याशङ्क्या
कंअन्यव्यापारेणाप्यन्यस्यस्वत्वमविरुद्धंशास्त्रमूलकत्वादस्य। दृष्टञ्चलोकेपिहानेहिचेतनोद्देश्यकत्यागादेवदानव्यापारान्य

म्प्रदानस्य द्रव्ये स्वामित्वं । न च स्वीकरणात्स्वत्वं स्वीकर्तुरेव दातृत्वापत्तेः । परस्वत्वापत्तिफलेन हि दानरूपता तच्च फलं सम्प्रदानाधीनम् । यथा हि देवतोद्देशेन त्यागं कुर्वन्नपि यजमानो न होता किन्तु तस्यैव यागस्य होमाभिधाननिमित्तभूतम्प्रक्षेपं कुर्वन्नृत्विगेव होतेत्युच्यते तद्वदत्रापि स्यात् । किञ्च । मनसा पात्रमुद्दिश्येत्यादिशास्त्रे स्वीकारात्प्रागेव दानपदं दृष्टं । ननु यद्यगृहीतस्वीकारः । अभूतं तद्भावे च प्रयोगात् स्वं स्वं कुर्वन् व्यापारः स्वीकारो भवति कथन्ततः प्रागेव स्वत्वं । उच्यते । उत्पन्नमपि स्वत्वं सम्प्रदानव्यापारेण ममेदमिति ज्ञानेन यथेष्टव्यवहारार्हं क्रियत इति स्वीकारशब्दार्थः । याजनाध्यापनसाहचर्याच्च प्रतिग्रहस्य स्वत्वमर्जनयतोऽप्यर्जनरूपतानविरुद्धा । याजनादौ दक्षिणादानादेव स्वत्वात् । पितृनिधनकालीनञ्जीवनमेव वा पुत्रस्यार्ज्जनम्भविष्यति । किञ्च । भ्रात्रादिधनेतन्मरणानन्मरणकालीनजीवनाद्वाभ्रात्रन्तरादेः स्वत्वमकामेनापि वाच्यन्तद्वदिहाप्यस्त्विति । तदेतद्गुणानमतिविलसितम् । तथा हि शास्त्रमूलत्वादस्येतिनावत्स्वत्वस्य लौकिकत्वसाधनादेव निराकृतम् । यदपि दृष्टस्वलोके पीत्यादि तदप्यापातसुन्दरम् । न हि प्रतिग्रहीतर्य्यस्वीकुर्वत्यपि तस्य स्वत्वमुत्पद्यते । पात्रविशेषोद्देशेन त्यागे तेनास्वीकृतेपि तत्स्वत्वोत्पत्तौ परस्मै तस्य प्रतिपादनासम्भवप्रसङ्गात् । यदपि स्वीकर्तुरेव दातृत्वापत्तेरिति तदप्ययुक्तम् । परस्वत्वापत्तिफलकव्यापारस्य दानत्वात्सम्प्रदानस्वीकारानुकूलानुमननादिव्यापारस्य दानपदार्थत्वात्तत्फलोपहिततानुत्स्वसंप्रदानस्वीकारमन्तरेणात्तत्सम्भवतीति सम्प्रदानव्यापारसङ्घटकः । ननु स एव दानशब्दार्थः । यदपि यथा हीत्यादि तदपि न । यजमानकर्तृकाग्निहोत्रहोमादौ तद्विरोधात् । यत्रापि दर्शपूर्णमासादौ त्यागमात्रं यजमानेन क्रियते । चरुद्रव्यस्य प्रक्षेपोऽध्वर्य्वादिभिस्तत्रापि विविक्तकर्तृकत्वाद्यथास्वन्तद्व्यवहाराविरोधात् । अन्यकर्तृकस्य प्रक्षेपपरं होमशब्दवाच्यता नास्ति । स तु त्यागः स्वकर्तृकोऽन्यकर्तृको वा वच्छेदकोऽस्तु । न तावता कश्चिद्दोषः । अत एव यागस्य न प्रक्षेपापेक्षत्वात्तल्लाभो होमस्य तु तदपेक्ष एव । दानस्य तु प्रतिग्रहीतव्यापारसापेक्षतैव । तदभावे दानपदार्थानिष्पत्तेः । यच्च किञ्चेत्यादि । तदपि यत्किञ्चित् । उत्सर्गस्यैव तत्र विधानात्तत्तु दा

नस्य। अत एव दाता तत्फलमाप्नोतीत्युक्तमन्यथा तस्यानुवादत्वापत्तेः। दानत्वे हि तस्य तत्फलाभावप्रसक्तेस्तु तत्फलमाप्नो
तीति व्यर्थमेव स्यात्। अतस्तत्र जलप्रक्षेपरूपः पात्रोद्देश्यकमुत्सर्ग एव ददातिना विवक्षितो दानत्वनिष्पत्तिस्तु तस्य सम्प्रदा
नकर्तृकस्वीकारे सत्येवेति परमार्थः। अत एवोक्तं जेड्ड्येवं तत्र सङ्कल्पवाक्यं शिष्टानामनुदास्येऽहमिति सम्प्रददे इति वा। अत
प्रतिग्रहादेव दानस्य फलेऽपि सम्प्रदानस्य स्वत्वमिति प्रतिग्रहस्यार्जनरूपत्वमविरुद्धम्। स्वत्वजनको हि व्यापारोऽर्जनशब्दा
र्थः। अत एवाह प्रभाकरः। प्रजल्पितमिदं केनापि। अर्जनं स्वत्वं नापादयतीति विप्रतिषिद्धमिति। अथास्य ग्रन्थः प्रागेव विवृ
तः। किञ्च। प्रतिग्रहस्य ममेदमिति ज्ञानरूपस्य दातृव्यापारमात्रोत्पन्नस्वत्वव्यवहारार्थतामात्रसम्पादकतायामर्जनशब्दवा
च्यगौणता स्यात्। अन्यस्मै तत्प्रतिपादनानुपपत्तिश्च पूर्वैरुक्ता। तदस्वीकारे प्रागुत्पन्नस्वत्वनाशश्च कल्प्यः स्यात्। न च दा
तृव्यापारात्स्वत्वनाशात्साधारणसम्प्रदानस्वत्वोत्पत्तिरवश्यमभ्युपेयाऽन्यथापि। अपरथैतत्स्वत्वनाशेऽन्यस्य स्वत्वानुत्पत्तावेकस्य
कस्यचनस्य परिग्रहादिनाऽन्यस्य यस्य कस्यापि वनगतास्वामिकतृणकाष्ठादाविव तत्र स्वत्वं स्यादपरिपालनाप्रसक्तिश्च। न चाय
न्मतेऽपि पात्रविशेषोद्देश्यकत्यागे पात्रविशेषस्योत्पन्नमपि स्वत्वं तदस्वीकारे नश्यत्यन्यस्य स्वीकारात्तस्योत्पद्यत इति मतेऽपि विरो
धः साधारणस्वत्वविनाशासाधारणस्वत्वोत्पत्तिरिति वाच्यम्। यतस्तत्र च साधारणस्वत्वव्यवहाराभावेन तदुत्तरं प्रतिग्रहीका
नैव स्वीक्रियते गौरवाच्च। किन्तु दातुरेव यथेष्टविनियोगार्हस्वत्वापगमेऽपि परस्वत्वापत्तिफलाभावे दानस्य शास्त्रार्थनिषेधोऽपि
धिग्रिरस्कफलार्थिनः प्रतिपादनावधिपरिपालनीयत्वरूपं स्वत्वमस्त्येव। यथाकृते हि विविभक्तस्वाहावधिः अग्न्युद्देश्यकत्वा
दिनिषेधाश्रवणनिमित्तदोषश्रवणानुरोधेन तथा चान्यस्वत्वानुत्पत्तावपि नमध्यकत्वपरिग्रहादुनिवारणादिदोषः। शि
ष्टाचारस्तूभयत्र परिपालनरूपस्तन्मूलक एव। न चोत्सर्गमात्रस्य तत्त्वयाविध्यभ्युपगमात्परस्वत्वापादनादर एव ब्रह्मा
दिति वाच्यम्। तादृशोत्सर्गस्यैव विधितात्पर्यविषयत्वात्। होमस्थलेऽप्यन्यथा भस्मसाद्भावनादरापत्तेः। यच्च याज्ञव

ध्यापनसाहचर्य्यात्प्रतिग्रहस्यापि स्वत्वाजनकत्वेपि गौणमेवार्जनत्वमिति। तदप्यबोधात्। तथाहि येये द्विजप्रभृतीनामभ्या
गास्तेषान्तेषान्तेभ्यो भृतिरूपेणैव दक्षिणाकाले प्रतिपादनम्। परिक्रयव्यवहारोप्यत एव स्वामिकर्म्मपरिक्रयइति जैमिनि
सूत्रादौ विस्तरेणानिर्णीतस्तत एव विस्तरन्तु तत्रैव द्रष्टव्यं। कर्म्मकरणनिजनिका भृतिरेव हि परिक्रयः। एवमध्यापनेपि शिष्यो
ध्यापकायाध्यापनभृतिमेव तत्सन्तोषजननीमध्ययनान्तेर्प्पयंति। नियतभृतिकरणेनुभृतत्वमध्यापनमुपपातकम्। अत एव या
जनाध्यापनयोः प्रतिग्रहाद्भृतिग्रहत्वाच्चानिर्वेशस्य पृथगभिधानमुभयमिश्रितत्वात्। तेनानयोरपि मुख्यमेवार्जनत्वं। दक्षिणा
त्वव्यवहारोप्यत एव चर्त्विगध्यापकदेये। यदपि भ्रात्रादिधने भ्रात्रन्तरादिस्वत्वोत्पादकत्वन्तन्निधनस्य तत्कालीनभ्रात्रन्तरादि
जीवनस्यैवाक्लृप्तमिति पुत्रादावपि पित्रादिनिधनन्तत्कालीनतज्जीवनमात्रस्वत्वोत्पादकमस्तु नत्वक्लृप्तं पुत्रादिजन्मनैवेत्युक्तम्। तद
पि जन्मनोपि स्वत्वोत्पादकत्वस्यावश्यकत्वोपपादनादेव परिहृतं। यच्चोक्तमूर्द्ध्वम्पितुश्चेत्यादिमनुवचनमपि जन्मनः स्वत्वापाद
कत्वेन घटते। प्राग्विभागनिषेधार्थत्वेन तस्यास्वार्थपरत्वापत्तेः विभागदृष्टार्थत्वेन तद्विधानकालविधानयोरसम्भवात्। विभागस्य
पक्षप्राप्तस्य नियमार्थत्वसम्भवात्तद्विधिविरोधाद्व्यापत्तेः। तस्मात्पितरि सति मातरि च सत्यान्तत्कर्मसाम्याभावरूपतयोरेव तन
योः पुत्रादेस्तत्क्रन्तसाम्यमिति प्रतिपादनार्थमेव तद्वाच्यमिति। तदप्युक्तानाभिधानम्। अस्वार्थविधानापत्तेस्तुल्यत्वात्। प्रा
गस्वातंत्र्येणाकालविधिपरत्वेवाधकाभावात्। इच्छाप्राप्तकालानुवादेपि व्यवहारशास्त्रत्वेनाविरोधात्। एतेनजातेष्टिवच्छे
षविरोधादिनिमित्तानन्तर्य्यबाधकाभावात्पितुपरमानन्तरक्षण एव विभागः प्रसज्येतेत्यपास्तम्। कालविधानेन पितुपरम
स्यनिमित्तत्वाबोधनाच्च। अन्यथा निमित्ते सति नैमित्तिकस्यावश्यकत्वात्पितोरूर्द्ध्वं विभागकरणे प्रत्यवायोपि प्रसज्येत। पतितत्व
पारिव्राज्ययोः पितृस्वत्वनाशोप्याधिकः जन्मनास्वत्वन्तुल्यमेव। पातित्येतु प्रायश्चित्तानाचरणएव स्वत्वनाशो विभागानर्हताच
। अन्यथा द्रव्यसाध्यं प्रायश्चित्तमपि पित्रोः स्वद्रव्येण न स्यात्। अत एव मातुर्निवृत्ते रजसीत्याद्यपि कालविधिपरमेव। ननुपा

तिष्यादिवन्नत्रस्वत्वाभावः । सनुलोकतएवविभागनिषेधाद्यमनात्वाद्विवेयादिवक्ष्यते । किञ्च । यद्येवंपितृस्वत्वापगमए
कःकालःअपरश्चानपगतएवपितृस्वाम्येपितुरिच्छयेतिकालद्वयमित्युक्त्वा मध्येमिताक्षरोक्तंविभागकालत्रयंदूषयित्वा । त
स्मात्पतितत्वनिस्पृहत्वोपरमैःपितृस्वत्वापगमएकःकालःअपरश्चसतिस्वत्वेतदिच्छातइतिकालद्वयमेवयुक्तमित्युपसंहरता
जिमूतवाहनेनैवपितृस्वत्वानपगमेपिपुत्राणांविभागोहीनहतस्तत्रपुत्राणाम्पितृधनेस्वत्वोत्पादःकथम् । कथञ्चजीवतोःपि
त्रोरस्वाम्यप्रतिपादकवचनैःसहनविरोधः । अस्वस्यविभागासम्भवात्कथन्तेषांविभागः ॥ पितृस्वत्वापगमएवोर्ध्वंपितुश्चेत्य
नेनविवक्षितोऽनएवमृतपदम्परित्यज्योर्ध्वमित्युक्तम् । पितृस्वत्वापगमोर्ध्वमित्यर्थः । पितृस्वत्वापगमश्चतन्निधनादिवन्नस्य
प्रतितत्वनिस्पृहत्वाभ्यामपीत्यादिस्वयंथेपूर्वापरविरोधश्चनकथम् । अत्राप्युपरतस्पृहत्वादिनापुत्राणांस्वत्वम्पितृधनेभव
तीतिज्ञापनाद्यमेकःकालइतिचउक्तम् । तत्राप्युपरतस्पृहत्वादिनेत्यनेनपितृस्वत्वापगमएवयदिविवक्षितस्तर्ह्यनपगते
पितृस्वत्वेतदिच्छाऽपरःकालइत्यभिधानविरुद्धम् । पितृस्वत्वापगमकालीनपुत्रादिजीवनस्यैवार्ज्जनस्यतदीयस्वीकारा
त्पितृस्वत्वेसतिपुत्राणान्तद्धनेस्वत्वस्वीकारःकथम् । नह्युनाश्रमित्वमातृरजोनिवृत्तिमात्रेणपितुःस्वत्वापगमपूर्वंद्रव्यस्वामिस
म्बन्धाधीनत्वात्स्वाम्योपरमेयत्तद्द्रव्येस्वत्वन्तत्रानिरूढोदायशब्दइतिस्वोक्तदायशब्दार्थाभावात्पितृस्वत्वानपगमेयत्रविभागस्त
त्रदायशब्दप्रयोगोपितुःस्वइत्यादिवदुव्याकुलोस्यात् । जन्मनास्वत्वस्वीकारेतुसर्वमनाकुलमित्यादिसुधीभिरुन्नेयं । अत
एवमिताक्षरादौपूर्वस्वामिसम्बन्धाधीनत्वंद्धनन्तत्रस्वत्वमन्यस्यतद्देवदायशब्दवाच्यमित्युक्तन्नतुपूर्वस्वामिस्वाम्योपरमोपितत्र
प्रवेशितः । तत्सिद्धंद्विविधोदायइतिमिताक्षरोक्तविभागकालत्रयसमर्थनन्तुतत्प्रस्तावेप्रपञ्चयिष्यामइत्यलम्प्रसक्तानुप्रसक्त
विचारेणेति । यच्चजीमूतवाहनेनैवमिताक्षरोक्तं । विभागोनामद्रव्यसमुदायविषयाणामनेकस्वाम्यानान्तदेकदेशेषुव्यवस्था
पनमितिविभागशब्दार्थः । नचसम्बन्धाविशेषात्सर्वेषांसर्वधनोत्पन्नस्यस्वत्वस्यद्रव्यविशेषेव्यवस्थापनंविभागइतिवाच्यमित्यत्र

क्यसम्बन्धान्तरसद्भावप्रतिपक्षस्य सम्बन्धस्यावयवेष्वेव विभागव्यञ्जकत्वापादकत्वात्। ज्ञातपितृधनगतस्वत्वोत्पादविनाश
कल्पनागौरवात्। यथेष्टविनियोगफलाभावेनानुपयोगाच्चेति दूषयित्वाऽच्यते। एकदेशोपात्तस्यैव भूहिरण्यादावुत्पन्नस्य
स्वत्वस्य विनिगमनाप्रमाणाभावेन वैशेषिकव्यवहारानर्हतया अव्यवस्थितस्य गुटिकापातादिना व्यञ्जनं विभागः। विशेषेण भज
नं स्वत्वज्ञापनं वा विभाग इति व्युत्पत्त्येत्युक्तम्। तद्दायतत्त्वकृतोपन्यस्य दूषितम्। यत्रास्य स्वत्वन्तत्रैव गुटिकापात इति कथं वचनाभा
वा त्रिस्त्वेन च। यत्र हि पितुर्निधनानन्तरं तृतीयाश्वयोरेकमादाय भ्राता यदर्जितं तत्रार्जकस्य द्वौ भागावपरस्यैकः सर्वसंमतः
। न च यदि प्राचीनधनविभागकाले गुलिकापातादर्जकेन स एवाश्वः पश्चाल्लब्धस्तदा प्रादेशिकस्वत्ववादिमते प्रागर्जकस्यैव स्वो
ऽश्व इति तेनार्जितधनेक यं भ्रात्रन्तरस्य विभागः। तत्रैवास्वत्वेन तदुत्पन्ने सुतरां स्वत्वाभावादश्वस्याविभाज्यत्वात्। यदि वार्जके
न रेणासोऽश्वो लब्धस्तदा तेनार्जितधनस्य समभाग एव युक्तः। एकस्यस्वाऽयासेनापरस्याऽऽयासेनार्जकत्वादिति दूषिते। वस्तुत
स्तु सम्बन्धाविशेषात् सर्वेसम्बन्धिनां सर्वधनोत्पन्नस्वत्वस्य गुटिकापातादिना प्रादेशिकव्यवस्थापनं विभागः। ज्ञातधनगतस्वत्वो
त्पादविनाशावप्यगत्या कल्प्येते। संसृष्टतायां प्रादेशिकस्वत्वध्वंसे तु धनस्वत्वोत्पादविनाशाविव न च विभक्तो यः पुनः पित्रा भ्रात्रा वैक
त्र संस्थितः पितृव्येणाथवा प्रीत्या स तु संसृष्ट उच्यत इति बृहस्पतिवचने येषामेव हि पितृभ्रातृपितृव्यादीनां पितृपितामहोपार्जित
द्रव्येणाविभक्तं स्वत्वमुत्पन्नं तैः सम्भवति। त एव विभक्ताः सन्तः पुनः परस्परप्रीत्या पूर्वकृतविभागं धत्ते। यत्तन्ममापि यन्मम धन
न्तत्तवापीत्येकस्मिन् कार्ये एकरूपतया स्थितास्ते संसृष्टाः। न त्वनेकरूपाणां धनसंसर्गमात्रेण सम्भूयकारिणां वणिजामपि
संसर्गित्वम्। नापि विभक्तानां द्रव्यसंसर्गमात्रेण। प्रीतिपूर्वकतादृगभिसन्धिविनैव भिन्नधनादायभागकल्पनापि स्वहस्तितम्
। साधारणस्वत्वादेव हि बन्धूनामविभक्तानां भोगं नैव प्रदापयेत्। इति कात्यायनवचनं यथाश्रुतमेव सङ्गच्छते। यावद्धि ध
नमात्रे स्वत्वस्यापि सत्वात्। अत एवात्र परस्परस्य चौर्यमपि नायं धत्ते। एवञ्च। साक्षित्वम्प्रातिभाव्यं दानं ग्रहणमेव च।

विभक्ता भ्रातरः कुर्य्युर्नाविभक्ताः परस्परमिति ॥ नारदवचने परस्परनिरूपितदानादिनिषेधोपि न्यायमूलक एव। दा
नादेः पूर्वमपि देयादौ प्रतिग्रहीत्रादेः स्वत्वसत्त्वाद्दानप्रतिग्रहादेरसम्भवात्। अविभक्तत्वादेव चाविभक्तद्रव्येण यत्कृतं दृष्टा
दृष्टार्थं कर्म तत्र सर्वेषां फलभागित्वम्। तथा च नारदः। भ्रातॄणामविभक्तानामेको धर्म्मः प्रवर्त्तते। विभागे सति धर्म्मोऽपि
भवेत्तेषां पृथक् पृथक् ॥ व्यासोपि। स्थावरस्य समस्तस्य गोत्रसाधारणस्य च। नैकः कुर्य्यात्क्रयं दानं परस्परमतं विना ॥
अत्र समस्तस्येति विशेषणोपादानात्कृत्स्नधनगतमेव प्रत्येकस्वत्वं कीयते। तस्मात्तुल्यधनसम्बन्ध्यन्तरसत्त्वेन सम्बन्धिसकाशा
त्स्वं कान्तं धनं तस्यापि ममापीति सम्बन्धिना प्रतीयते तद्विमतौ दानादिकं प्रतिषिद्धं स्वार्थम्। अतो नैकदेशगतं स्वत्वमिति। इ
दञ्च द्रव्यसमुदायविषयाणामनेकस्वाम्यानामेकदेशे व्यवस्थापनं विभाग इति वदतो मिताक्षराकृतोप्यभिमतमिति लक्ष्यते।
इदन्त्विह विचार्यम्। द्रव्यसमुदायनिरूपितं स्वामिगतं स्वाम्यम्। स्वामिनिरूपितञ्च द्रव्यसमुदाये स्वत्वं व्यासज्यवृत्ति प्रत्येक
वृत्ति वा। नाद्यः। एकैकस्वामित्वस्वत्वाश्रयनाशे तन्नाशस्यावशिष्टसमुदायगततद्रूप तेश्च कल्पनायामतिगौरवापत्तेः। प्रत्ये
कस्य प्रत्येकद्रव्ये दानक्रयादि यथेष्टविनियोगानर्हत्वापत्तौ व्यवहारविसंवादापत्तेश्च। न द्वितीयः विभागे सति तावतां नाशोत्पा
दकल्पनापत्तेः। स्वस्य सतो विभागेनानुविभागात्स्वत्वमिति ग्रन्थविरोधाच्च। अत्र ब्रूमः। प्रत्येकवृत्तीनि सम्बन्धविशेषात्स्वाम्यानि च स
न्त्येव। परस्परविभागागते परस्परस्वान्यान्यदीयद्रव्ये तानि नश्यन्ति परमरणपारिव्रज्यादिनेवेति न काप्यनुपपत्तिः। व्यवस्था
पनमपीदमेव अन्यथैकदेश उत्पादनमित्येव वदेत्। अत एव विनाशमात्रकल्पनानन्तु स्वत्वान्तरोत्पादकल्पना। जीमूतवा
हनमते च कुत्रवास्तवं मम स्वत्वमिति विभागात्प्रागनिरूपणात्तदधीनश्रौतस्मार्त्तलौकिककर्म्मोच्छेदः। अनुमत्या विभागोत्त
रकृतया परस्परद्रव्ये परस्परस्वत्वान्तरोत्पत्तिस्वीकारे तदुत्पादविनाशकल्पनागौरवं यत्त्वया मिताक्षराकृते प्रत्यापादितं तत्ततोपि
नवाधिकमापन्नम्। व्यवहारानुपयोगेन समुदायस्वत्वस्य निःप्रयोजनता चयोपन्यस्ता साप्येकदेशगतस्वत्वाभ्युपगमे तुल्यैवेति

हृतमतिदूरंगत्वा ॥ ● ॥ अथ विभागकालकर्तृनिरूपणम्। तत्र मनुः। ऊर्द्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम्। भजेरन्पैतृकं रिक्थमनीशास्ते हि जीवतोः ॥ पैतृकम्पित्रोः सम्बन्धि प्रागुभयोपादानात्। अत एव पितुरूर्द्ध्वमिति पितृधनविभागकालः। मातुरूर्द्ध्वमिति मातृधनविभागकालोऽभिहितः। चशब्दस्तु कालान्तरसमुच्चयार्थः न तु द्वयोरूर्द्ध्वमिति नियमार्थः। पितृधनविभागे मातृजीवनस्याप्रतिबन्धकत्वात्। मातृधनविभागे पितृजीवनस्य। तथा चाह संग्रहकारः। पितृद्रव्यविभागः स्याज्जीवन्त्यामपि मातरि। न स्वतन्त्रतया स्वाम्यं यस्मान्मातुः पतिं विना ॥ मातृद्रव्यविभागोऽपि तथा पितरि जीवति। सत्स्वपत्येषु यस्मान्न स्त्रीधनस्य पतिः पतिरिति ॥ पत्युरभावेऽपि पुत्रेषु सत्सु यतो मातुस्तद्धने स्वातन्त्र्येण स्वाम्यं नास्त्यतस्तस्यां जीवन्त्यामपि पितृधनविभागो युक्तः। यतश्चापत्येषु सत्सु भार्याधने पत्युः स्वाम्याभावस्ततस्तस्मिन् जीवत्यपि पुत्राणां मातृधनविभागाधिकार इति भावः। अनस्वानीशास्ते हि जीवतोरित्यपि तद्धने व्यवस्थायामस्वातन्त्र्यप्रतिपादकत्वेन स्वत्वप्रतिपादकं जन्मना स्वत्वस्य पुत्राणाम्पितृधने व्यवस्थापनात्। याज्ञवल्क्यः ॥ विभागञ्चेत्पिता कुर्य्यात्स्वेच्छया विभजेत्सुतान्। ज्येष्ठम्वा श्रेष्ठभागेन सर्वे वा स्युः समांशिनः ॥ अत्रेच्छया पिता सुतान्विभजेदिति वदन् जीवत्यपि पितरि पितुरिच्छा यदा सोऽपि विभागकाल इति सूचयति। तदा च पितैव विभागकर्ता। अस्वाम्यं हि भवेदेषां निर्द्दोषे पितरि स्थिते इत्यनेन पुत्राणामस्वातन्त्र्यप्रतिपादनात्। निर्द्दोष इति विशेषणात्पादित्यादिनिर्द्दोषवति सत्यपि पितरि पुत्राणान्तत्पारतन्त्र्याभावात्तदिच्छा यदा सोऽपि विभागकालः पुत्राणाञ्च तदा विभागकर्तृत्वमित्युक्तम्भवति। अन्योऽपि पुत्रेच्छया विभागकालः पितरि द्रव्यनिस्पृहे निवृत्तरमणे मातरि च निवृत्तरजस्कायाम्। यथाह नारदः। अत ऊर्द्ध्वम्पितुः पुत्रा विभजेयुर्द्धनं सममिति। पित्रोरूर्द्ध्वम्विभागमुक्त्वा। मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च। निवृत्ते वापि रमणात्पितर्य्युपरतस्पृहे ॥ जीमूतवाहनेन तु विनष्टे वाप्यशरण इति पाठो लिखितः विनष्टे पतिते अशरणे गृहस्थाश्रमरहित इति व्याख्यातञ्च। निवृत्ते वापि रमणादिति पाठान्तरमनाकरमित्यप्युक्तन्तद्युक्तं मिताक्षरादिवह्वनिबन्धलिखितत्वात्पुत्रा धनं विभजेयुरि

त्यनुषङ्गः । गौतमोऽप्यूर्ध्वं पितुः पुत्रा रिक्थं विभजेरन्निवृत्ते रजसि मातुर्जीवति चेच्छतीत्याह । बृहस्पतिरपि । पित्रो
रभावे भ्रातॄणां विभागः सम्प्रदर्शितः । मातुर्निवृत्ते रजसि जीवतोरपि शस्यत इति । तथा सरजस्कायामपि मातर्यनिच्छत्य
पि पितरि दीर्घरोगग्रस्ते ऽधर्मवर्तिनि पुत्रेच्छया विभागः । यथाह शङ्खः । अकामे पितरि रिक्थविभागो वृद्धे विपरीतचेतसि
रोगिणि चेति । नारदोऽपि । व्याधितः कुपितश्चैव विषयासक्तमानसः । अयथाशास्त्रकारी च न विभागे पिता प्रभुरिति ॥ अत्रापि
त्पुपरम एकः कालो निवृत्ते चापि रजसीति द्वितीयो जीवति चेच्छतीति तृतीय इति मिताक्षरायाञ्जीमूतवाहनोक्तं दूषणम् । मातू र
जोनिवृत्तेः पित्रुपरतस्पृहत्वविशेषणत्वे । त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् । त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति
सत्वर इति मनुना विवाहकालविधानात् । वनम्पञ्चाशतो व्रजेदित्याश्रमान्तरगमनकालविधानाच्च । तदा रजोनिवृत्तेर्मातुरस
म्भवे पितरि वोपरतस्पृहे वानप्रस्थे तत्पुत्राणामिच्छया विभागाभावप्रसङ्गात् । निर्विशेषणमुपरतस्पृहत्वमेव पितृधनविभाग
काल इति तूच्यमाने अनुपरतस्पृहे पितरि पतितेऽप्यविभागप्रसङ्गात् । अयमप्यपरः काल इत्यभिधाने कालचतुष्टयापत्तिः पितुरुप
रमः पतितत्वं निस्पृहत्वमिच्छा चेति । तस्मात्पतितत्वनिस्पृहत्वोपरमैः पितुः स्वत्वापगम एकः कालोऽपरश्च सति तत्स्वत्वे तदिच्छा तदिति
कालद्वयमेव युक्तमिति । तन्मिताक्षराकृदाशयापरिज्ञानात् । नहि तेन कालत्रयनियमोऽभिहितः । तथेत्यादिग्रन्थेन कालान्त
रस्यानुपदमेव प्रतिपादनात् । नियमस्य निर्वीजत्वात् । पितृस्वत्वापगम एकः कालोऽपरश्चानपगत एव पितृस्वाम्ये तदिच्छा तद
ति कालद्वयमित्यप्ययुक्तं । निवृत्तरजस्कायां मातरि त्यनन्वयापत्तेः । नहि मातृनिवृत्तरजस्कतामात्रेणापि पितृस्वत्वापगमः । जन्म
नाऽस्वत्वावस्थापनात्पितृस्वत्वापगमस्य कालोपलक्षणत्वासम्भवाच्च । एवं दीर्घरोगग्रस्तत्वेऽपि न स्वत्वापगम इति कालद्वयनियमस्त
वापि दुःसमाधः । इष्टापत्तौ तद्वचनविरोधः । यच्चोक्तं तेनैव । मातुर्निवृत्ते रजसीति पितामहादिधनाभिप्रायम् । निवृत्ते रज
सि पुत्रान्तरसम्भवाभावात्तदानीमपि पितुरिच्छयैव पुत्राणां विभागः । अनिवृत्ते रजसि क्रमागतधनविभागे पश्चाज्जातानां

त्रिलोपापत्तेः । तथाचैायुक्तः । येजातायेप्यजातायेचगर्भेव्यवस्थिताः । वृत्तिंचतेऽभिकांक्षन्तिवृत्तिलोपोनविद्युतइतिवच
नात् । अतएवपितृधनेकालद्वयमतएवमनुगौतमादिभिर्मृतपदम्पारिव्यज्योर्द्ध्वमित्युक्तम् । ऊर्द्ध्वम्पितुःस्वत्वापगमइत्यर्थः ।
यदिचास्यपितृधनविषयतास्यात्तदोर्द्ध्वंविभागाज्जातस्तुपित्र्यमेवहरेद्धनमित्यस्यनिर्विषयताभवेत् । निवृत्तरजसिपुत्रोत्पत्त्य
सम्भवात् । मातृधनगोचरत्वञ्चास्यनाशङ्कनीयमेव । मातुरेवनिर्द्देशतापत्तेः । अतोनिवृत्तेरजसीतिपैतामहधनविषयं । तथे
च्छामनपेक्ष्यरजोनिवृत्तिमात्रन्विभागनिमित्तंसम्भवत्यनिच्छयाविभागाभावाद्रजस्येच्छयेत्यपेक्षायामूर्द्ध्वंपितुःपुत्रारिक्थंविभजे
युर्निवृत्तेरजसिमातुर्जीवतिचेच्छतीतिगौतमवचनात्पितुरेवेच्छातइतिनिर्णीयतइतिपितामहादिधनविभागस्यापिपित्रोरभा
वइत्येकःकालः । मातुर्निवृत्तेरजसिपितुरिच्छातइतिकालद्वयमेवेति । तदप्यनभियुक्तप्रमोदनम् । वृत्तिलोपापत्तेःपितृधनेपि
तुल्यत्वात् । ऊर्द्ध्वंविभागादित्यस्यनिर्विषयत्वापत्तेरपिपितामहादिधनेपितुल्यत्वात् । सस्पृहेपितरिपातित्यादिदुष्टेपितामहध
नेपिपुत्रेच्छयाविभागस्यसकलसम्मतत्वादवश्यवाच्यत्वाच्च । वस्तुतस्तुपितामहादिधनेभूर्य्यापितामहोपात्तेत्यादिनासदृश
स्यपितापुत्रस्वाम्यस्यवक्ष्यमाणत्वात्पुत्रेच्छयापितस्तविभागउचितएव । यत्तत्रव्याख्यानान्तरमनोज्ञत्वस्यतद्धनगोचरत्वादिक
ल्पनंतत्सर्वंतत्रवचनविवेचनेनिराकरिष्यामः । वयन्तुस्वामस्याहेंपितरिजीवतितदिच्छैवविभागनिमित्तं । पातित्यपारिव्रज्यादि
भिस्तदनर्हेपुत्रेच्छापि । तदुपरमेतुस्वेच्छायानिमित्तत्वमर्थसिद्धमितिकालत्रयमेवानेनप्रकारेण । अन्यथावहूनामुपरतस्पृ
हत्वादीनांविकल्पसमुच्चयादिककल्पनानुपपत्तेर्विशेषणविशेष्यभावाद्यव्यवस्थापत्तेर्वाक्यव्याकुलीभावः । अतएवकांच
द्दूषतेकेषांचिद्वोपादनमनुपादानञ्चकेषाञ्चित्सङ्गच्छते । एकमूलकल्पनालाघवेनोपरतस्पृहत्वादिभिःपितुःस्वातन्त्र्याभा
वस्यैकस्यसर्वत्रउपलक्षणात् । अनीशास्तेहिजीवतोःनिर्द्देशोपितरिस्थिते । जीवतोरपिशस्यतेइत्यादिवचनस्वरसोप्येवमेव
। अतएवापित्रोर्जीवतोर्भ्रातॄणांसहवासोमुख्यस्तदनुमत्यादिनाज्येष्ठस्यकार्यक्षमस्यान्यस्यवापुत्रस्यस्वातन्त्र्यमन्येषान्तदनु

रोधवृत्तित्वमितिचपक्षद्वयमुक्तवन्तोव्यासादयः। भ्रातॄणांजीवतोःपित्रोःसहवासोविधीयतइतिव्यासः। जीवतिपितरिपुत्राणा
मर्थादानविसर्गाक्षेपेषुनस्वातन्त्र्यम्। कामन्दीनेप्रोषितेवार्तेज्ञोज्येष्ठोवार्थांश्चिन्तयेदितिहारीतः। शङ्खलिखितावनुस्पष्टत
ममाहतुः। पितर्यशक्तेकुटुम्बव्यवहाराञ्ज्येष्ठःप्रतिकुर्यादनन्तरोवाकार्यज्ञस्तदनुमतोनत्वकामेपितरिरिक्थविभागोवृद्धेविप
रीतचेतसिदीर्घरोगिणिवाज्येष्ठएवपितृवदर्थान्पालयेदितरेषामृक्थमूलंहिकुटुम्बमस्वतन्त्राःपितृमन्तोमातुरप्येवमवस्थिता
याइति। तस्माद्युयोक्तरीत्याविभागस्यकालत्रयमेवेतिब्रूमः। अत्रमनुवचनेसममित्येतेनपाक्षिकांसाहित्यमनूद्यतेबकक्रमवत्
। अन्यथैकेच्छयाद्वयोर्भ्रात्रोर्विभागोनस्यात्सममितितुनियम्यते। तच्चविवक्ष्यामः। यत्तुपित्रोरितिद्विवचननिर्देशात्सोदर
भ्रातॄणांपितृधनविभागोपिमातुरभावएवकार्यः। ननुमातृधनविभागार्थंमातुरभावोपदानं। जीवतोरपीत्यस्यमातृधनगोचर
त्वानुपपत्तेरन्यधनगोचरत्वमवश्यम्वाच्यमतोयत्रैवपित्रोरभावोनिमित्तंतत्रैवजीवतोरपीत्यपिशब्देनजीवनस्यापिप्रशस्तत्वकीर्त
नात्तन्मातुरभावोमातृधनेव्याख्येयइतिजीमूतवाहनग्राहणंतदसम्बद्धम्। पितुश्चमातुश्चेतिमनुवचनेपृथङ्निर्देशादन्यथापि
द्विवचनस्यविभागसम्बन्धविवक्षामात्रेणव्याख्यानंयुक्तम्। इतरथैकतरधनेऽन्यतराभावस्यादृष्टार्थत्वापत्तेः। यच्चोक्तंजीवतो
रित्यादेर्मातृधनगोचरत्वानुपपत्तेरित्यादि। तस्यापिकोभिप्रायः। मातुःपितरिजीवत्यस्वातन्त्र्यात्तद्धनगोचरत्वमितियदि
तर्हिसत्त्वपक्षेषुभार्य्याधनेपिपितुःस्वाम्यन्तदभावस्यापितत्रानुपयोगादन्यविषयत्वापत्तिः। अभिप्रायान्तरन्त्वसम्भवदुक्ति
कमेवेतिवक्ष्यामः। तस्माद्दृष्टार्थत्वात्तद्धनविषयकएवतदभावः। संग्रहकारद्युक्तोयुक्तः। यथाचपित्रोर्जीवतोर्भ्रातॄणां
सहवासोमुख्यस्तथातदूर्ध्वमपि। तथाचशङ्खलिखितौ। कामंसहवसेयुरेकतःसंहतावृद्धिमापद्येरन्निति। संहताःसह
वसन्तोद्रव्योपचयसाहाय्यादिनापरस्परकृतेनवृद्धिमाप्नुयुरित्यर्थः। नारदोपि। बिभृयाद्वैकतःसर्वान्ज्येष्ठोभ्रातायथा
पिता। भ्राताशक्तःकनिष्ठोवाशक्त्यपेक्षाकुलस्थितिः॥ मनुरपि। ज्येष्ठएवतुगृह्णीयात्पित्र्यन्धनमशेषतः। शेषास्तमुपजी

व्रेयुर्य्यथैवपितरन्तथा ॥ ज्येष्ठेनजातमात्रेणपुत्रीभवतिमानवः । पितॄणामनृणश्चैवसतस्मात्सर्वमर्हति ॥ यस्मिन्नृणंसंनय
तियेनचानन्त्यमश्नुते । सएवधर्म्मजःपुत्रःकामजानितरान्विदुः । पितेवपालयेत्पुत्रान्ज्येष्ठोभ्रातॄन्यवीयसः । पुत्रवच्चापिवर्त्तेर
न्ज्येष्ठेभ्रातरिधर्म्मतः । ज्येष्ठःकुलंवर्द्धयतिविनाशयतिवापुनः । ज्येष्ठःपूज्यतमोलोकेज्येष्ठःसद्भिरगर्हितः ॥ योज्येष्ठोज्येष्ठवृत्तिः
स्यान्मातेवसपितेवसः । अज्येष्ठवृत्तिर्यस्तुस्यात्ससम्पूज्यस्तुबन्धुवत् ॥ योलोभाद्विनिकुर्वीतज्येष्ठोभ्रातॄन्यवीयसः । सोज्येष्ठः
स्यादभागश्चनियंतव्यश्चराजभिरित्यादिवचनानिचयद्गुणाज्येष्ठवर्णितानितयासर्वेषांसहवासःप्रशस्तः । धर्म्मवृद्धिकामनया
तुविभागःकार्य्यइत्याहतुर्मनुप्रजापती । एवंसहवसेयुर्वीपृथग्वाधर्म्मकाम्यया । पृथग्विवर्द्धतेधर्म्मस्तस्माद्धर्म्यापृथक्क्रिया
॥ धर्म्मस्त्वदेवाद्यर्च्चनरूपस्तस्यैवसहवासेपृथक्त्वश्रवणात् । तथाचबृहस्पतिः । एकपाकेनवसतांपितृदेवद्विजार्च्चनम् । ए
कम्भवेद्विभक्तानान्तदेवस्याद्गृहेगृहे इति ॥ यत्तुसंग्रहकारेणाग्निहोत्रादिधर्म्मवृद्धिरपिधर्म्मवृद्धिशब्देनगृह्यतइत्युक्तम् । य
दाह । क्रियतेसम्विभागेनपुत्राणाम्पैतृकन्धनम् । स्वत्वेसतिप्रवर्त्तन्तेतस्माद्धर्म्यापृथक्क्रियाइति । प्रवर्त्तन्तेसाध्यन्तेअग्नि
होत्रादिक्रियाइतिशेषइति । तन्नुजन्मनैवपुत्राणाम्पितृधनेस्वत्वाद्विभागात्प्रागपिश्रौतस्मार्त्तकर्म्माधिकारंप्रतिपादयद्भिर
स्माभिःप्रागेवप्रत्याख्यातम् । तस्मात्पञ्चमहायज्ञादिधर्म्मएवधर्म्मशब्देनात्रग्राह्यः । दत्तास्तुभगिनीष्वचेतितुनकालार्थंकिन्तुता
सामवश्यंदानार्थम् । यथायच्चिष्टम्पितृदायेभ्योदत्त्वर्णम्पैतृकन्ततः । भ्रातृभिस्तद्विभक्तव्यमृणीनस्याद्यथापितेतिनारदव
चनमृणादानावश्यकत्वार्थंनविभागकालार्थम् । पिताचयदिस्वेच्छयापुत्रान्विभजतितदापिनिरङ्कुशेच्छानोपादेयाकिन्तुज्ये
ष्ठंवाश्रेष्ठभागेनसर्वैर्वास्युःसमांशिनइतिपक्षयोर्मध्येयःपक्षइष्टःसग्राह्यइतियोगीश्वरवचनार्थः । ज्येष्ठंश्रेष्ठभागेनमध्यमंम
ध्यमभागेन । कनिष्ठङ्कनिष्ठभागेन । सर्वैर्वाज्येष्ठादयःसमांशभाजःकार्य्याइतिविज्ञानेश्वराचार्य्याः । प्राच्यास्तुस्वेच्छयेतिपृ
थक्पक्षान्तरंज्येष्ठादिभागसमभागौचद्वौपक्षाविति पक्षत्रयमतएवज्येष्ठम्वेतिप्रथमोवाशब्दःस्वेच्छयेतिपक्षापेक्षयासमञ्जसोव

ष्यमाणपक्षापेक्षत्वेऽक्लिष्टः स्यादित्याशङ्क्यपपत्तिश्चैतच्चवदन्ति । पितैव वा स्वयं पुत्रान्विभजेद्वयसि स्थितः । ज्येष्ठं वा श्रेष्ठभागे
न यथा वास्य मतिर्भवेदिति नारदवचने । ज्येष्ठत्वेनाद्विनैकन्नियमविभागप्रकारमुपन्यस्य यथा वास्येयुक्तेरन्योपिन्यूनाधिक
भागः पितुरिच्छया स्तीति गम्यते । हारीतोपि । जीवन्नेव वा विभज्य वनमाश्रयेद्वृद्धाश्रमं वा गच्छेत्स्वल्पं वा संविभज्य भूयिष्ठमा
दाय वसेद्यद्युपदस्येत्पुनस्तेभ्यो गृह्णीयादिति । वृद्धाश्रमः पारिव्रज्यम् । उपदस्येद्द्रव्याभावेन क्षीणो भवेत् । अत्रापि स्वल्पमन्ये
न्यादिपक्षान्तरमुक्तम् । तस्मात्तदेकमूलकतानुरोधेन योगीश्वरवचनेपि तत्संग्रहायेच्छयेति पृथक्पक्ष एव युक्त इति । तदसत् ।
वा शब्दस्तावद्द्वेधापिव्युत्पन्नेन्नैासमञ्जसः याचोपपत्तिरुक्ता साप्ययुक्ता । यदि वचनान्तरोपात्तपक्षान्तरसंग्रहार्थत्वमिच्छयेत्यस्य भ
वेदुत्तरार्द्धं व्यर्थमेव स्यादुक्तपक्षद्वयस्यापि वचनान्तरोपात्तत्वादिच्छयेत्यनेन तयोरपि संग्रहसम्भवात् । तदितरपक्षसंग्रहार्थत्वेम
न्दप्रयोजनता स्यादेव । इच्छायानिरंकुशत्वेनानियमवारणाय वचनान्तरालोचनं विना तदर्थानिर्वाहात् । सोपात्तपक्षद्वयेऽव्य
वस्थानिरासार्थं न येच्छयेति व्याख्यायमाने वचनान्तरालोचनानावश्यकत्वात् । न च विकल्पो नौ वैच्छाभेद इच्छयेति निरर्थकमि
ति वाच्यम् । उत्तरार्द्धे वैयर्थ्यापेक्षयाऽव्यवस्थितविकल्पनिरासायस्य वाक्योपात्तपक्षद्वयविषयमयानदनुवादस्यैवोपपन्नतरत्वात्
नारदाद्युक्तमूलकतानुविज्ञानेश्वरव्याख्यानेपि तत्पैति । तदुक्तपक्षद्वयस्य वचनान्तरेऽप्युपादानात् । तच्च निरर्मलेच्छा
मात्रमेव पक्षान्तरं योगीश्वरवचनार्थोऽस्तीति वाच्यम् । अयथाशास्त्रकारी च न विभागे पिता प्रभुरित्यस्य निर्विषयत्वापत्तेः । इ
च्छामात्रस्य शास्त्रीयत्वेऽयथाशास्त्रकारित्वाप्रसक्तेः । जीवद्विभागे तु पिता नैकं पुत्रं विशेषयेत् ॥ निर्भाजयेन्न चैवैकमकस्मात्का
रणं विनेति कात्यायनवचसोपि निर्विषयता स्यात् । इच्छाया एव कारणत्वात् । न विशेषयेच्छास्त्रीयज्येष्ठभागाद्यतिरिक्तेच्छ
विशेषवन्तं न कुर्यात् कारणं शास्त्रोक्तं भक्तिमत्त्वादिकं विनाऽकस्मात्क्रोधात्तु भगापुत्रस्नेहादिना वा न निर्भाजयेत् भागरहितं न
कुर्यादित्यर्थः । यत्तु न्यूनाधिकविभक्तानां धर्म्यः पितृकृतः स्मृत इति योगीश्वरवचनं तदपि धर्म्यो धर्मादनपेत इत्यपि वाक्ता

अत एव स्मृतेन निवर्त्तते। अधर्म्म्यं त्वयथाशास्त्रकृतो निवर्त्तत एवेत्यभिप्राय इति विज्ञानयोगिभिर्व्याख्यातं व्याधितः कुपितश्चै
वेत्यादिवचनानुरोधात्। एवं। समन्यूनाधिका भागाः पित्रा येषां प्रकल्पिताः। तथैव ते पालनीया विनेयास्ते स्युरन्यथा। पित्रै
व तु विभक्ता ये समन्यूनाधिकैर्धनैः। तेषां स एव धर्म्यः स्यात् सर्वस्य हि पिता प्रभुरिति बृहस्पतिनारदवचने अपि व्याख्येये। ज्येष्ठादि
विभागे पित्रा ज्येष्ठादिभ्यो दत्ते ऽन्यैरनुशयो न कार्य्यः। समांशविभागे वा ज्येष्ठादिभिरिति तात्पर्य्यार्थः। अत एव नारदस्तेषां
स एव धर्म्यः स्यादित्याह। ज्येष्ठादिभागश्च मनुनोक्तः। ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम्। ततोऽर्द्धं मध्यमस्य स्यात्तु
रीयन्तु यवीयस इति॥ समांशपक्षमेवाधायन्नाह। पुत्रेभ्यो दायं व्यभजदिति समांशस्तेषामविशेषादिति। मनुः। पुत्रेभ्यो
दायं व्यभजदिति श्रुतौ विशेषाश्रवणात्तेषां पुत्राणां समांशा इत्यर्थः। यदि पिता स्वेच्छया समांशेन पुत्रान् विभजति तदा स्वपत्नी
भ्यः पुत्रसममंशं दद्यादित्याह याज्ञवल्क्यः। यदि कुर्य्यात् समानंशान् पत्न्यः कार्य्याः समांशिकाः। न दत्तं स्त्रीधनं यासां भर्त्रा वा श्व
शुरेण वा॥ यासां भर्त्रा श्वशुरेण वा स्त्रीधनं प्रीत्यादिना न दत्तं। भर्त्रादिग्रहणमुपलक्षणमतश्च स्त्रीधनशून्या इत्यर्थः
। तासाम्पत्नीनां पुत्रसमांशभागमत्र नियम्यते। तथा च यदा ज्येष्ठभागादिवर्ज्जमपि पिता पुत्रान् विभजति तदापि ज्येष्ठभागाद्युद्धृत्येत्य
वशिष्टद्रव्यसमुदायात् पुत्रसमानेवांशान् पत्न्यो लभन्ते न तु ज्येष्ठभागादिकमित्यर्थः पर्य्यवस्यति। यस्तु पत्न्याः सोद्धारः परीभाण्डा
दिस्तमपि पत्नी लभते। तथा चापस्तम्बः। परीभाण्डञ्च गृहे ऽलङ्कारो भार्य्याया इति। परीभाण्डम्भाजनपात्रादि। यद्वा
धारणं यस्या अलङ्कारोऽप्यसाधारणस्तद्विवेचयिष्यते। न च पक्षद्वयेऽप्येतावता पुत्रसमांशित्वम्पत्नीनां विज्ञानेश्वरेणोक्तन्तद्धि
यदि कुर्य्यात् समानंशानिति समांशानुवादो ऽयमर्थः पत्न्यो ज्येष्ठांशादि न लभन्त इत्येतावन्मात्रमेव वाच्यमिति युक्तम्। यतः। एवं स
मुद्धृतोद्धारे समानंशान् प्रकल्पयेत्। उद्धारेऽनुद्धृते त्वेषामियं स्यादंशकल्पना॥ एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्द्धं ततोऽनु
जः। अंशमंशं यवीयांस इति धर्म्मो व्यवस्थित इति मनुना द्व्यंशी वा पूर्वजः स्यादेकैकमितरेषामिति। गौतमेन च यथाश्रुत्यान्दाय

भागो द्व्यंशं हरेज्ज्येष्ठो गवाश्वस्य चानुदशमम् अजावयो गृहं च कनिष्ठस्य कार्ष्णायसं गृहोपकरणानि च मध्यमस्येति । वसिष्ठेन । ज्येष्ठस्यांशोऽधिको देयः कनिष्ठस्यावरः स्मृतः । समांशभाजः शेषाः स्युरप्रत्ता भगिनी तथेति ॥ नारदेन चोद्धारमुक्ते विषमभागमांशमुक्तं तद्यद्यपि यतेतदा पत्नीनामंशाभावप्रतिपादनार्थं स्यात् यदि कुर्य्यात्समानंशान्मिथुक्तमिति न दोषः । अत एव भ्रातॄणामविभक्तानां यद्व्याख्यानमभवेत्सह । न तत्र विषमभागस्य विधानाद्व्याक्षिप्तनेति मनुना सर्वेषां भ्रातॄणां चान्द्रायणेनेति यदि सर्वे समानतो वेत्यानमुद्योगो भवेत्तदा पितुर्विषमविभागदानप्रतिषेधकमनुवचनव्याख्यानेन जीमूतवाहनेनोक्तमुद्धारसुपि भाद्दानचरणं नस्य विभागरूपत्वाभावात् । न्यूनाधिकविभागस्यैव निषेधादिति । तस्माज्ज्येष्ठं वा श्रेष्ठभागेनेति याज्ञवल्क्यवाक्ये उद्धारविधमांशभागितापुत्राणामस्त्येवेति तत्रापि दम्पत्योरनन्तरमेव । इत्थंभादिपक्षेपरं न प्रवर्त्तत इति विज्ञानयोगिनामाशयः । नु स्त्रीधने तदेतनैव सम्प्रकल्पयेदित्यत्रार्द्धदानं वक्ष्यते । यद्यपि तदाधिवेदनिकभर्तृदीयमाने वक्ष्यते न च श्रम न्यायत्वात्तत्रापि योज्यम् । बौधायनः । बहूनामेकधर्म्याणामेकस्यापि यदुच्यते । सर्वेषामेव तत्कुर्यादेकरूपा हि ते स्मृता इति । भ्रातॄणामविभक्तानामित्यादि मनुवाक्यं सह ह्यानं सर्वेषां विभागप्रार्थनायदि भवतीति जीमूतवाहनेन तदनुजायिनां तावद्व्याख्यानम् । यदि पुनः पितरि जीवति पुत्राः स्वविभागमर्थयन्ते तदा विषमविभागः पित्रा न दातव्य इति तदतानवसद्व्यस्थ वैयर्थ्यं तथा न एकस्य चोद्योगवाचिनोऽपि भागप्रार्थनापरत्वमन्याय्यमित्यस्मद्व्याख्यानमेवादर्तव्यम् । तथा च सामान्यार्थे समुने विभागस्तु समः स्मृत इति योगीश्वरवचः सम्भावितोऽपि लभ्यते । तस्मात्सम्यगभिमतार्थे तथैवोपपन्नः । इदं तत्त्वं मिथ्यान्या पर्युदः समप्रविभागवचनेन न भवति अत एव यावता पूर्वं दत्तमिदानीं दीयमानं च समं भवति तावद्देयमिति मिताक्षरायामुक्तं भावमाशयः । यद्यपि नपुंसकस्यार्द्धांशहस्वपुंसवर्गाद्धं समेंशकल्पनिकोपात्मतामाशकाचित्वमस्ति । तथापि कदाचित्तत्संपुत्रार्थिषु धनत्वङ्गदाचित्तदूनधनत्वमव्यवस्थितमतोऽर्द्धं नियमस्य चादृष्टार्थत्वं मा प्रसांक्षीदिति पुत्रसमं विभजाम एव स्यादिति । अथ

मदनरत्नकार आह । पत्न्यंश इति वृद्धवचनात्प्रतिपत्तिसमांशग्रहणप्रसङ्गात् गृह्णीयान्मनुनाप्यःपृथक्कार्या योदातव्यः । जायाप
त्योर्विभागो न विद्यत इति हारीतवचनविरोधापत्तेरिति । तन्न । नास्ति जायापत्योर्विभाग इत्यनेन हारीतवचनविरोधः सा हि
ऽनुपत्यैव पुत्रविभागसमये नाभ्युपगमां धृ दानम्प्रीतिदानवत् । अत एव स्त्रीधनेदत्ते ऽर्धमित्युक्तमिति न को ऽपि दोषः । वस्तु
जीवति पितरि पुत्रेच्छया विभागः स वैषम्याश्रयो ऽपि मातुर्निवृत्ते रजसीति मनुवचने समशब्दानुषङ्गात्सम एव यो ऽपि पितुरूर्ध्वं वि
भागः सो ऽपि सम एव । पूर्वोदाहृतमनुवचने सममित्यभिधानात् । हारीतो ऽपि । समानो मृते ऽपि तरि रिक्थविभागः । पैठीन
सिरपि । पैतृके विभज्यमाने दायाद्यो भ्रातॄणां समो विभागः । याज्ञवल्क्यो ऽपि । विभजेरन्सुताः पित्रोरूर्ध्वं रिक्थमृणं समम् । पि
त्रोरूर्ध्वमिति कालः सुता इति कर्तारः सममिति प्रकारनियम इति मिताक्षरा । ननु मनुनैव पितुरूर्ध्वं विभागमुपक्रम्य ज्येष्ठ ए
व तु गृह्णीयात्पित्र्यं धनमशेषतः । शेषास्तमुपजीवेयुर्यथैव पितरं तथा इति । सहैवायं पक्षमुक्त्वा ज्येष्ठस्य विंश उद्धार इ
त्यादिना विषमविभागो ऽप्युक्तः स कथं समनियम इति चेत् । उच्यते । एषु पूर्वं विषमभागो जीवत्यजीवति च पितरि शास्त्रवृ
ष्टस्तथापि वचनान्तरानुरोधात्कलौ सम एवेति नियमः । अस्वर्ग्यं लोकविद्विष्टं धर्म्यमप्याचरेन्न त्विति योगीश्वरवचनात् । अ
त्र लोकपदेन युगमुच्यते । युगान्तरे धर्म्यमपि युगान्तरे लोकविद्विष्टं प्रतिषिद्धं नाचरेदित्यर्थः । अन्यथा धर्म्यत्वास्वर्ग्यत्वयो
र्व्याघातः । शास्त्रविहिते नरलोकविद्वेषो वार्थित एव । तदनभिज्ञत्वामरकानविद्वेषवस्तुता स्वर्ग्यत्वापादको ऽप्योधामी वादिहिं
सादावतिप्रसङ्गादित्यादि दूषणं स्यात् । अत एव मिताक्षरायां मधुपर्के पशुवधवा गोवधादिकं वन्ध्यमिव लोकविद्विष्टत्वे
नोदाहृतम् । कलिवर्ज्येषु च पुनरुद्वाहादिकमध्यन्तादीनां यत्नो ऽनन्तवज्येष्ठांशाद्युद्धारादिकमपि । तथा चादिपुराणे । ऊढा
याः पुनरुद्वाहो ज्येष्ठांशो गोवधस्तथा । कलौ पञ्च न कुर्वीत भ्रातृजायाकमण्डलुम् । स्मृतिसंग्रहे ऽपि । यथा नियोगधर्मो नो
नानुबन्ध्यावधो ऽपि वा । तथोद्धारविभागो ऽपि नैव संप्रति वर्तते ॥ नियोगधर्मो भ्रातृभार्यायां वाग्दत्तायां मृतपतिकायां गुर्वादिनि

योगेनविधिनागमनम्। मैत्रावरुणयोरिष्ट्या मनूवर्ष्याम्बामालभेतेतिविहितोगोवधः। सम्प्रतिकलौ। अतएवापस्तम्बोऽपीदमनुक्ते
भ्योदायंविभजेत्समिमितिसमत्वमुक्त्वा ज्येष्ठोदायादइत्येकइतिचतस्रधनस्य(?)सांज्येष्ठस्येत्येकीयमतमुपन्यस्य देशविशेषेसुव
र्णंगावःकृष्णंभौमंज्येष्ठस्यरथःपरीभाण्डम्पितुर्गृहेऽलङ्कारोभार्य्यायाज्ञातिधनञ्चेत्येकमतमनुतन्नेवाद्वारस्विभाजन(?)मित्या
च्छास्त्रविप्रतिषिद्धमितिनिरस्तवान्। शास्त्रविप्रतिषेधञ्चस्वयमेवविवृतवान्। मनुः। पुत्रेभ्योदायंव्यभजदित्यविशेषेण
श्रूयतइति। तस्मान्नविषमविभागःशास्त्रदृष्टोऽपिकलावनुष्ठेयः। यत्तुमिताक्षराकृताश्रुतिविरोधेलोकविद्विष्टत्वाद्विषमविभागोनानुष्ठेय इति। तस्माद्विषमविभागःशास्त्रदृष्टोऽपिकलावनुष्ठेयः।
यस्तु मिताक्षराकृता श्रुतिविरोधेनुक्तत्वादित्यर्थम्। श्रुति
विरोधेहसतियुगान्तरेऽपितस्याननुष्ठानेतद्बोधकवचनानांसर्वथाऽप्रामाण्यमेवस्यादितिकलिवर्ज्येतयोपन्यासोविरुद्धः। न
वाच्यन्तंश्रुतिविरोधेऽपि। अविशेषश्रवणेस्मृतिवशमस्यादश्रुतिवाक्यादिनिन्द्यत्वमत्रापितुल्यमेव। स्मृतिचन्द्रिकायान्तुवैधायनो
दाहृतंविषमविभागप्रतिपादकमपिश्रुत्यन्तरविरुद्धम्। अत्रैवकदाचिद्विषमविभाग्यत्रनारमिध्याहसतएव। धनमेकमेकमनुक्तरे
ज्जेष्ठःतस्माज्ज्येष्ठंपुत्रन्धनेननिरवसाययन्तीतिश्रुतेरिति। धनमेकमेकमिमिमिदर्शनश्रुतिवाक्यमतन्त्रमेनैवैकवचनंविवक्षि
तमितिसूचयतिनिरवसाययन्तीतिश्रुतेरिति। धनमेकमेकमितिवदन्त्श्रुतिवाक्यगतंधनेनेत्येकवचनंविवक्षितमितिसूचयति
यति। निरवसाययन्तितोषयन्तीत्यर्थइतिमन्येन। औमूमवासनादवत्सयदामन्वतिन्नयादिनाभ्राह्यशामनुमतिसत्यदोऽक्ष्ठा
शादिविषमविभागोऽनएवाघनतनानाम्भक्त्याद्यभावादुद्धाराद्यर्हज्येष्ठाभावाच्चसमभागएवलोकेदृश्यतइत्यादिनाग्रंथेनानुमत्य
ननुमतिभ्यांविषमसमभागयोर्व्यवस्थामाक्षःतत्तुतथासतिपुत्रेच्छायाएवप्रयोजकत्वापत्तेःपूर्वार्द्धविरोधादनादेयम्। पितृेच्छा
याःस्वतन्त्रपक्षान्तरपरत्वन्तुप्रागेवनिरस्तम्। पित्रापुत्रेभ्यःस्वार्जितधनविभागन्दत्ताखयमंशद्वयंग्राह्यमित्याहनारदः। द्वा
वंशौप्रतिपद्येतविभजन्नात्मनःपितेति। बृहस्पतिरपि। जीवद्विभागेतुपितागृह्णीतांशद्वयंस्वयमिति। पितुरंशद्वयग्रहण
मेकपुत्रविषयमित्याहतुःमदनविलिखितौ। सयद्येकपुत्रःस्याद्द्वौभागावात्मनःकुर्य्यात्। व्यवहारपारिजातकारइदंवचन

मेवंव्याचष्ट । एकशब्दोऽत्र श्रेष्ठवाची । तथाच यदि पुत्रो गुणवत्तया धनार्ज्जनशक्तस्तदा तेन सह विभागेऽपि पित्रांशद्वयं ग्राह्यमि
ति । जीमूतवाहनस्तु । एकस्य पुत्रः एकपुत्र एकपितृक औरस इति यावत् । नपुनः एकः पुत्रो यस्येति बहुव्रीहिस्तस्यान्यपदा
र्थप्राधान्येन षष्ठीतत्पुरुषाद्दुर्बलत्वात् । तथाच क्षेत्रजस्य व्यावृत्तिस्तस्य द्विपितृकत्वात् । तथाचौरसपुत्ररूपः पिता स्वपितृधने भा
गद्वयं गृह्णीयान्नतु क्षेत्रजादिरिति व्याचख्यौ । तदसत् । तथा सति पितामहधनगोचरतास्यस्यात्तत्र च सदृशं स्वाम्यम्पितापुत्रयोरित्यौ
रसस्यापि पितुः पुत्रसमांशतायाव्यवस्थापयिष्यमाणत्वात् । तथाचागत्या बहुव्रीहिरेवास्थेयः । मिताक्षराकृताप्यिदम्वचनमना
दृतमेव । कात्यायनः । द्व्यंशहरोऽर्द्धहरो वा पुत्रवित्तार्ज्जनात्पिता । मातापि पितरि प्रेते पुत्रतुल्यांशभागिनीति । अत्र जीमूतवा
हनः । पुत्रस्य वित्तार्ज्जनात्पुत्रार्ज्जितेऽपि वित्ते स्वार्ज्जित इव पितुरंशद्वयमित्यस्यार्थो न तु पुत्रस्य चित्तस्य तयोरर्जनादिति । अन
र्जितपुत्रस्यापि भ्रातृभिर्विभागे वित्तार्जकतयांशद्वयस्येष्टत्वात् । अतो विभागार्हसम्बन्धिनि विद्यमानेऽर्जकस्य द्व्यंशादिहरत्वमस
ति तु सर्वहरत्वमिति वाच्यन्तथा सति पितृपुत्रपदयोः प्रमत्तगीतता स्यात् । किञ्चार्जनं स्वत्वहेतुभूतो व्यापारः । अर्जनं स्वत्वन्नापादय
तीति विप्रतिषिद्धमित्यभिधानात् । नच पुत्रे षु स्वत्वमस्तीति सर्वस्वदाने दर्शितमतस्तत्र गौणमर्जनपदं वित्ते च मुख्यमिति सकृदु
च्चरिते वैरूप्यमयुक्तम् । नच पुत्रस्यार्जकत्वादेवांशद्वयप्राप्तेः पितुश्चास्माद्वचनादृतेऽपि वचनान्तरादेव भागद्वयसिद्धेर्वचनमि
दमनर्थकमिति वाच्यम् । एतद्वचनमन्तरेणापि पुत्रधने पितुर्भागद्वयाप्राप्तेरस्य सार्थक्यातद्यथाह । तन्न । द्वंद्वापेक्षया षष्ठ्यर्थेव
क्षणावतो भवद्युक्तसमासस्यायुक्तत्वात् । यच्चानर्जितपुत्रस्येत्यादि द्वंद्वदूषणन्तदप्यसम्बन्धम् । भ्रातृभागाद्युविषयकत्वादस्य ।
पितृधनप्रस्तावात् । नचैवम्पुत्रपदं व्यर्थं वित्तार्जनस्यैव द्व्यंशहरत्वे हेतुत्वोपपत्तेरिति वाच्यं स्वस्वातन्त्र्यार्थत्वात् । यतः पुत्रेऽपि वि
भवत्तेनैवार्जितस्तेन परतन्त्रः स्वार्जितधने पितुरंशद्वयग्रहणावग्रहो न भवतीत्यत्र तात्पर्य्यम् । यच्चार्जनपदवैरूप्यन्तदप्यसत्
। पुत्रेऽपि पितृस्वस्येष्टत्वात् । नच सर्वस्वदाननयविरोधः । पित्राद्युस्वत्वे तस्य तात्पर्य्यात् । पुत्राद्यदानस्य तन्नयसिद्धान्तस्य भाष्य

प्रदर्शितचोदकविरोधयुक्तिसिद्धत्वात् । अतएवपुत्रकन्यादानादिविधयोमुख्यार्थाएवनपुत्रादिपरतत्स्वीकारस्वरूपगौणदा
नाद्यर्थः । इदञ्चपितुरंशद्वयोपादानंस्वार्जितविषयन्नपित्रार्जितविषयं । भूर्य्यापितामहोपात्तानिबन्धोद्रव्यमेववा । तत्रस्यात्स
दृशंस्वाम्यंपितुःपुत्रस्यचोभयोरितियाज्ञवल्क्येनतत्रपितापुत्रयोःसमस्वाम्याभिधानात्समांशभागित्वमेव । तस्यचायमर्थः । भूः
शालिक्षेत्रादिका । निबन्धोराज्ञामुकस्यैकस्मिन्पर्णभरकेऽमुकभरकात्पर्णानिदेयानीतिशासनारूढतथायद्भूमिर्वै
नदीयतेतदुच्यते । तथाद्रव्यंसुवर्णादितत्रपितुःपुत्रस्यचस्वाम्यंहिशब्देनप्रसिद्धमित्युच्यते । जन्मनैवस्वत्वात् । तदपिसदृश
मुल्यमतोत्रपुत्राणांनपित्रर्जितइवपितृपारतन्त्र्यमितितदनिच्छयापिविभागांशद्वययनियमश्चपितुर्नास्तीति । बृहस्पतिः । द्रव्ये
पितामहोपात्तेस्थावरेजङ्गमेतथा । सममंशित्वमाख्यातम्पितुःपुत्रस्यचैवहि ॥ पित्रासमएवांशोग्राह्योनतुस्वार्जितवदंशद्वय
म्विषमविभागपक्षाश्रयणंवेत्यर्थइतिमदनरत्नकारः । जीमूतवाहनस्तुयद्द्वयोर्भ्रात्रोज्जीवत्येवपितर्य्येकःपुत्रमुत्पाद्यनष्टोऽ
न्यश्चजीवति । पश्चात्पितापिमृतस्तत्रपितृधनंप्रत्यासत्तेःपुत्रस्यैवप्राप्नोतिनतुप्राङ्मृतपितृकपौत्रस्यविप्रकर्षात्तद्बाधार्थंसदृशंस्वा
म्यमितिवचनं । यथापैतामहधनेपितुःस्वाम्यंतत्पुत्रस्यस्वाम्यन्तथातत्पौत्रस्यापि । ननुसन्निकर्षविप्रकर्षयुक्तोविशेषः । पार्वण
विधिनापिण्डदातृत्वेनद्वयोरविशेषादित्यभिप्रायः । अतएवमृतपितृकःप्रपौत्रोपिप्रपितामहधनेपुत्रपौत्राभ्यांसहतुल्यवदे
वस्वामी । पिण्डदानाद्यविशेषात् । जीवतितुपितरिपुत्राणान्तद्धनस्वाम्येसपुत्रभ्रातृद्वयविभागेतत्पुत्राणामपिविभागःस्वाम्या
मित्वसाम्यात् । तस्मान्मृतपितृकपौत्रविषयकमिदंनपौत्रविषयकन्नचाप्रक्रान्तत्वादतथैकत्वंप्रागतेकापितृकपौत्रामेवप्रक्रमात्
। सादृश्यवचनन्तुस्वार्जितवत्पित्रिच्छयाविभागाभावार्थम् । यथाहविष्णुः । पिताचेत्पुत्रान्विभजेत्तस्यस्वेच्छास्वयमुपात्तेर्थे पै
तामहेतुपितापुत्रयोस्तुल्यंस्वाम्यमिति । अतःस्वोपात्तेपितान्यूनाधिकभागैःपुत्रानिच्छयाविभजन्नपुःपैतामहेतुतुल्यस्वाम्यन्तत्पि
तुःस्वच्छंदवृत्तिता । एतावतैवेतद्वचनोपपत्तौसामान्यप्राप्तम्पित्रिच्छयाविभागकालत्वम्पितुरंशभागद्वयञ्चनिषिध्यते । जीव

त्पितृकपौत्रविषयतापिवाधारेश्वरानुमतस्यास्तान्तथापीच्छाकृतन्यूनाधिकभागनिरासार्थतैव । ननुपुत्रेच्छयाविभागेंऽशद्वया
भावश्चपितुरनेनबोध्यते । किञ्चजन्मविद्यागुणज्येष्ठोद्व्यंशन्दायादवाप्नुयात् । समांशभागिनस्त्वन्येतेषाम्पितृसमस्तुसद्इतिवृ
हस्पतिवचनात्पितापिस्वपितृकृतनरकनिवर्तकोगुणज्येष्ठःस्वभ्रातृभिःसहविभागेपितृसमत्वेनयत्रांशद्वयभाक्तत्रपुत्रैःसहविभा
गेपितैवांशद्वयम्पैतामहधनेनाप्नोतिस्वद्वारकस्यैवपुत्रांशस्यान्तद्धनसम्बन्धस्त्वेतस्ततीतिभवतोमुनोनाश्चवचनमनुचितं । तस्मादि
च्छयाविभजेत्सुतानितिपितृच्छायाविभागकालत्वंद्वावंशौप्रतिपद्येतेत्यादिवचनोक्तम्पितुर्भागद्वयञ्चाविशिष्टम्पितामहधने
पि । न्यूनाधिकभागमात्रंतुपुत्रेषुस्वाच्छन्द्येनभवति । द्रव्येपैतामहेपात्रेस्थावरेजङ्गमेतथा । सममंशित्वमाख्यातम्पितुःपुत्र
स्यचैवहीतिबृहस्पतिनापितापुत्रयोरंशसाम्यस्यैवाभिधानात्कथम्पितुरत्राप्यंशद्वयमितिचेन्न । अंशित्वमंशकर्तृत्वंसमम
तुस्वेच्छयास्वार्जितवन्न्यूनाधिकांशकर्तृत्वमितितदर्थात् । नत्वंशद्वयंसममिति । सयद्येकपुत्रःस्यादित्येकपुत्रपदस्यौरसप
रत्वस्योक्तत्वाद्धिपितृकक्षेत्रजादिरूपपित्रभिप्रायंवासमांशित्वाभिधानमित्याह । तद्दनादेयं । सन्दर्भविरोधात् । तथाहि । अ
नेकपितृकाणाम्पितृद्वारकभागकल्पनामभिधायानन्तरंभूर्य्यापितामहोपात्तेत्युक्तन्त्वास्वाम्यमेवपौत्राणाम्पैतामहेधनेपित
रिजीवतिविभागाभावेवा । नदिच्छयैववास्वार्जितवद्विभागइतिशङ्कावयमेवोत्तिष्ठति । यन्मितात्क्षरायामुक्तन्निराकरणा
र्थमेवेदम्वचनन्द्व्याख्यानरीत्यासङ्गच्छते । प्रमीतपितृकपौत्रविषयकत्वेनसङ्कोचोऽस्यकुतः । नचधारेश्वरावधारितरीत्यापौत्र
मात्रविषयकतायामपिन्यूनाधिकभागमात्रस्यपितृच्छाकृतनिरासायेदंनपितृच्छाकायत्तदीयभागद्वयस्याविशेषप्रवृत्तस्येतिवि
वाच्यम् । विनिगमनाविरहात् । किञ्च । पितृच्छायाहेतुत्वमिच्छयाविभजेदितितृतीयानिर्देशाच्छाब्दमार्थिकन्तुतस्याविभा
गकालोपलक्षणत्वं । तत्रशाब्दहेतुत्वबाधमानेनानेनार्थिकंकालोपलक्षणत्वमबाध्यन्तइतिचित्रं । सतिचस्वाम्यसाम्येपुत्रेच्छ
यानिमित्तत्वमनात्कृतञ्चतस्याःकालोपलक्षणत्वञ्चलेपातिकपायतत्पुंवरम् । ननुपितुरंशद्वयम्पितृत्वप्रयुक्तमस्वाम्याधिक्यप्रयुक्तं

नाप्यर्जकत्वप्रयुक्तं तस्य येनैषां स्वयमुपार्जितं स्वांशद्वयमेव लभेतेति वाच्यं विशिष्टसाधारणवचनादेव सिद्धेर्द्वावंशौ प्रतिपद्येतेति विशेषवचनानर्थक्यप्रसङ्गात्। तस्मात्पित्रार्जितेपि ज्येष्ठपुत्रत्वप्रयुक्तं यथा तस्यांशद्वयमिति विशेषवचनात्तथा पैतामहेपि तुरपि। अत एवास्मन्मते पुत्रार्जितेपि पितुरंशद्वयमिति चेत्। सत्यं। परन्तु निःशङ्कोच प्रवृत्तस्वाम्यसाम्यवचनेन तद्बाध्यते। पुत्रार्जिते तु पितुरंशद्वयाभावो भवत्युदाहृतपुत्रवित्तार्जनादिति वचनस्य भवदुक्तार्थे दूषणात्प्रागेव व्यवस्थापितः। न च तद्वचनादंशद्वयाभावे पि सामान्यवचनादेव पुत्रार्जितेपि पितुरंशद्वयमायातीति वाच्यम्। वित्तार्जनस्य तत्र हेतुत्वोपन्यासवैयर्थ्यप्रसङ्गात्। न च तदर्थवादमात्रमन्यथार्जकत्वप्रयुक्तभागद्वयस्य विशिष्टवचनादेव सिद्धेर्विशेषवचनानर्थक्यापत्तिरिति वाच्यम्। यतस्तत्रार्जकत्वप्रयुक्तपुत्रांशद्वयस्यावारणात्पितृत्वप्रयुक्तपित्रंशद्वयेपि भागसाम्य एव पर्यवसानं भवेन्न तु भवदभिमतं पुत्रापेक्षया पितुरंशाधिक्यं तथाह्यवचनाभावात्। यच्च किञ्चिद्व्याहितमानौचित्यमुक्तं तन्न किञ्चित्। वाचनिकसाम्येऽनौचित्याप्रसक्तेः। ज्येष्ठस्य ज्येष्ठत्वप्रयुक्तमंशद्वयं पितृत्वप्रयुक्तं च पितुरिति ज्येष्ठपुत्रसाम्यापत्तिस्तु यथा पन्नौचित्यस्य दुर्वारत्वात्। मदनरत्नधृतकात्यायनवचनानान्तु सर्वेषां भ्रातॄणां पिता पुत्राणां च समांशग्रहणमेव मुख्यमिति प्रतीयते। सकलं द्रव्यजातं यद्भागैर्गृह्णन्ति तत्समैः। पिता भ्रातरश्चैव विभागो धर्म्य उच्यत इति। अत एव योगीश्वरोपि सर्वे वा स्युः समांशिन इति सर्वपदं प्रायुङ्क्त अन्यथा समांशिनो वा कुर्वीत सुतानिति वदेत्। यस्तु विभागिनां मध्ये स्वव्यवसायेन जीवनसमर्थः पितृधनादिविभागं न जिघृक्षति तं प्रत्याह मनुः। भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्मणा। स निर्भाज्यः स्वकादंशात्किञ्चिद्दत्वोपजीवनम्। याज्ञवल्क्योपि। शक्तस्यानीहमानस्य किञ्चिद्दत्वा पृथक्क्रिया। निर्भाज्यो निःसम्बन्धीकरणीयः। पृथक्क्रियेत्यस्याप्ययमेवार्थः। किञ्चिद्दत्वेति विभागचिह्नत्वेन किञ्चिदसारमपि दद्यादित्यर्थः। तत्पुत्राणां दायजिघृक्षानिवृत्त्यर्थं चेदं। हत्वायुधसुकुटुम्बार्थेषु चोद्युक्तस्तत्काव्यैकुरुतेतुयः। सभ्रातृभिर्वृहणीयो ग्रासाच्छादनवाहनैरिति नारदवचनैकवाक्यतालोभेन मनुवचने स निर्वाप्य इति पाठं प्रकल्प्य सभ्रातृभिर्गृहीतभागैः सम्भा

गाढ्नमाहृष्यपूरणीयइत्यर्थइतिव्याख्यातवान्। ननुनेहेतेत्यादिपदवैयर्थ्यापत्तेरुपेक्षम्। मेधातिथिप्रमुखाचार्य्याणांहृतत्
थापाठकल्पनानौचित्याच्च। पृथक्क्रियेतिस्पष्टवचनसम्वादाच्च। प्रकाशकारस्तुयोभागिषुधनार्थंव्यापृतेषुप्रमादालस्यादिना
नेहेतनव्याप्रियेतसाहाय्यन्नकुर्य्यात्। स्वकर्म्मणास्वव्यापारेणाशक्तःसाहाय्यकक्षमोपिसन्नस्वकाटंशान्वयापारजनितादृनाद्
दिकार्य्यःकिञ्चिदुपजीवनंदत्वामूलधनमात्रभागीकरणीयइतीदमनुवचनन्निर्वाह्येत्याकारपाठमङ्गीकृत्यैवव्याचष्टे। तदपि
नयुक्तम्। अपिशब्दाद्यध्याहारप्रसङ्गात्। योगीश्वरवचनसम्वादिनोऽर्थस्यस्पष्टतरप्रतीतिकत्वाच्च। भवदुक्तार्थस्यवचना
न्तरवशत्वाच्च। कात्यायनः। अविभक्तेनिजेप्रेतेतत्सुतंरिक्थभागिनम्। कुर्वीतजीवनंयेनलब्धन्नैवपितामहात्। लभेतांशंसपि
त्र्यन्तुपितृव्यात्तस्यवासुतात्। सएवांशस्तुसर्वेषांभ्रातॄणांन्यायतोभवेत्। लभतेतत्सुतोवापिनिवृत्तिःपरतोभवेत्। निजेभ्रा
तरि। तत्सुतंभ्रातृपुत्रम्। जीवनम्भागः। सकीदृशम्भागंलभतइत्यपेक्षितेआहपित्र्यमंशमिति। तत्सुतोयस्यधनंविभज्यते
तस्यप्रपौत्रः। पौत्रस्यप्रस्तुतत्वात्। परतस्तत्सुतान्निवृत्तिर्भागनिवृत्तिर्भवेत्प्रपौत्रपुत्रोभागन्नलभेतेत्यर्थः। अतएवदेवलोपि
। अविभक्तविभक्तानांकुल्यानांवसतांसह। भूयोदायविभागःस्यादाचतुर्थादितिस्थितिरिति। बीजिचतुर्थमभिव्याप्यदायभा
गइत्यर्थः। विभक्तानामपिसंसर्गादिनासहवासेसतीयंव्यवस्था। वसतांसहेतिवचनात्। पित्र्यमंशमितिकात्यायनोक्तः। पि
तृद्वारकोभागइतिसूचितम्। अतएवाहयाज्ञवल्क्यः। प्रमीतपितृकाणान्तुपितृतोभागकल्पनेति। पैतामहेधनेजन्मनास्व
त्वम्पौत्राणांपुत्रैःसहाविशिष्टमेवयद्यपितेनपुत्रवत्पौत्राणामपिपुत्रसमएवभागउचितः। तथापितेषाम्पितृद्वारेणभागंप्रत्य
हत्यस्वस्वपितृभागाधिकारेणनतुपैतामहेधनेस्वतोभागित्वमित्यर्थः। एतदुक्तम्भवतिअविभक्ताभ्रातरोयदापुत्रानुत्पाद्यदिष्टङ्गता
स्तत्रैकस्यद्वौपुत्रावन्येषाञ्चिचतुरादयाइतिपौत्राणांवैषम्यन्तदाद्वावेकंस्वपितृभागंद्वेधाविभज्यगृह्णीतस्त्रिचतुरादयाअपिस्वस्व
पितृभागमेकैकंत्रेधादिरूपेणविभज्यगृह्णन्तिनतुपौत्रसंख्ययापैतामहधनभागाः। अनयैवरीत्याकेषुचिद्भ्रातृषुजीवत्सुके

यदुहितृभावेऽन्वयः पुत्रादिर्मातृधनमृणावशिष्टं गृह्णीयादिति व्याख्यायद् दद्युर्विभजेरन्सुताः पित्रोरूर्ध्वमृक्थमृणं समभि
ध्यनेनैव सिद्धमपि स्पष्टार्थमुक्तमित्युक्तम्। न चात्र पित्रोरूर्ध्वमित्येवास्तु सम्बन्धः मातृधनविभागस्योत्तरार्द्धेऽभिधानात्पितु
र्ऋक्थमृणमिति पर्य्यवस्यति। तथा च ताभ्य इत्यादेर्निरर्थकानुवादत्वमपि न प्रसंभवतीति वाच्यम्। ऋक्थऋणपदयोः सम
न्वियकार्य्यत्वात्तदाकांक्षायां स्ववाक्योपात्तपित्रोरिति पदानुषङ्गस्यैव परिशेषावगतार्थिकपितुःपदान्वयापेक्षयाभ्यर्हितत्वात्
तदंशेन तु ताभ्य इत्यस्यानुवादत्वस्याप्यभ्युपगमौचित्यात्। ये त्वन्वयपदं दुहित्रन्वयदौहित्रादिपरत्वेन व्याचक्षते तन्मते तु वैय
र्थ्यशङ्कैव नास्ति। तदेतद्विस्तरेण स्त्रीधनविभागप्रस्तावे प्रपञ्चयिष्यामः। शङ्खलिखितोक्तं मातरि जीवन्त्यामस्वातंत्र्यन्तु मातृव
र्द्धनन्तद्धनगोचरमप्रसङ्गच्छत एव। भ्रातृणामित्यादिव्यासवचनमपि सहवासप्राशस्त्यमात्रमुभयजीवनश्रद्धाहेति जीवतोरि
त्साहित्यविवक्षायामपि न दोषः। वस्तुतस्तु पित्रोरूर्ध्वमपि ज्येष्ठ एव तु गृह्णीयादिति सहवासस्य मुख्यत्वाद्विभागस्य च धर्म
वृद्ध्यर्थत्वान्मातरि जीवन्त्यामपि धर्मस्य पञ्चमहायज्ञादेरवश्यकर्त्तव्यत्वात्तदर्थं विभागः कर्त्तव्य एव। यत्तु पित्रोरभाव इति वृह
स्पतिवचनेनिवृत्तरजस्कायां मातरि जीवन्त्यामित्युक्तं तन्नोपपद्यते। उभयजीवने सहवासः प्रशस्तस्तदभावे विभाग इति पू
र्वार्द्धेनाभिहिते। मातर्य्यनिवृत्तरजस्कायां सुतानसम्भवात्तद्वृत्तिलोपस्य च ये जाता ये ह्यजाता इत्यादिवचनेन गर्हितत्वान्नि
वृत्तरजस्कायान्तु तस्यान्तदप्रसक्तेरुपरतस्पृहे पितरौ वा विभागः प्रशस्त इति तस्यार्थः। तथा सति निवृत्तरजस्कायान्तस्यान्त
दीयरक्थाधिकारिकन्यासन्तानस्यासम्भवात्सुतरान्तदिच्छया तद्धनविभागोऽपि पुत्राणामुचित इति मातृधनगोचरताप्यस्य व
चसः सम्भवतीति न किञ्चिदेतत्। यदपि व्यासवृहस्पतिवचसोर्मातृप्राधान्यं सापत्नविभागस्योक्तन्तन्ममाप्यविरुद्धम्। यथा
हि जीवतोरस्वतन्त्रः स्याज्जरयापि समन्वित इत्यादिवचनवशाद्विभागोत्तरपितृमातृपारतंत्र्यं तथैतद्वचनवशान्मातृभागप
र्य्यायमिति पुत्राणां दायाद्यं वदता यातज्जीवनावधिस्थैर्य्यमित्येतावतापि तद्धनविभागेऽपि तस्यां जीवन्त्यामनधिकारः कुतस्त्य

इत्यलमधिकेन। जीवत्पितृकविभागेपित्रा यथा स्वपुत्रांशसमांशभागिन्यः स्वपत्न्यः कार्य्यास्तथा तदुपरमविभागेपि पुत्रैस्ताः स्वसमांशभागिन्यः कार्य्या इत्याह याज्ञवल्क्यः। पितुरूर्द्ध्वं विभजतां माताप्यंशं समं हरेत्। यदि स्त्रीधनं दत्तं न भवति। दत्ते त्वंशार्द्धहारिणी कार्य्येति वचनादप्यत्रार्द्धशब्दो न समविभागवचनः। किन्तु यावता पुत्रसमांशिता भवति तावदेव विवक्षितम्। अत्र मातृपदस्य जननीवाचकत्वादपुत्रसपत्नमातृपरत्वमपि। सहच्छुतस्य मातृपदस्य मुख्यगौणोभयार्थत्वानुपपत्तेः। यत्त्वसुतास्तु पितुः पत्न्यः समानांशाः प्रकल्पिताः। पितामह्यश्च सर्व्वास्ता मातृतुल्याः प्रकीर्त्तिता इति व्यासवचनाद्योगीश्वरवचने पत्नीग्रहणाच्च जीवत्पितृकविभागे पत्नीमात्रस्य पुत्रसमांशत्वम्। पुत्रपत्नीपदयोः पितृप्रतियोगिकसम्बन्धार्थकतया गौणमुख्यार्थकत्वानापत्तेः। पित्रोरूर्द्ध्वं विभागे तु पुत्रकर्त्तृकतया तत्सम्बन्धमातृप्रतीतेर्वैरूप्यादुभयपरत्वासम्भवात् पुत्रवतीनामेव स्वपुत्रसमांशित्वं अपुत्राणान्तु ग्रासाच्छादनमात्रभाक्त्वमविभक्तसंसृष्टपत्नीनामिव। युक्तञ्चैतज्जीवद्विभागे पितुः स्वातन्त्र्यात्। अजीवद्विभागे पुत्राणां स्वातन्त्र्यात्। मातृपदपत्नीपदस्वरसाच्च। युक्तञ्चापुत्राणां ग्रासाच्छादनमात्रभाक्त्वमिति बहुतरनिबन्धस्वरसः। मिताक्षराकृतस्तु जीवद्विभागे पुत्रसमांशित्वम्पत्नीनामुक्तमिदानीम्पितुरूर्द्ध्वं विभजतामपि पुत्रसमभागित्वम्पत्नीनामाहेत्यवतारणिकम्पितुरूर्द्ध्वं विभजतामित्यस्य योगीश्वरवचसः प्रयच्छतोऽपि सपुत्रापुत्रसकलपितृपत्नीनाम्पुत्रसमांशित्वमभिप्रेतमिति प्रतीयते। मदनरत्नकृताप्येतदेवोक्तम्। जननीग्रहणमपुत्राणामपि मातृसपत्नीनामुपलक्षणम्पितामहीनाञ्च। असुताश्च पितुः पत्न्य इत्यादिव्यासवचनादिति। युक्तञ्चैतत् पितुः पत्न्य इति पुत्रप्रतियोगिकपितृग्रहणस्यान्यथा वैयर्थ्यात्। पुत्रसमांशित्वस्य पितृकृतविभागविषये पत्न्यः कार्य्याः समांशिका इति वदन्नपि मातर इत्येव वदेत्। तस्मात्पितृपत्नीत्वप्रयुक्तमेव जीवद्विभागसाधारणं पुत्रसमांशभाक्त्वमिति मिताक्षरामदनरत्नकृतोरभिप्रायः। पितुरिति कर्म्मणि षष्ठी। तेन पितृकर्त्तृके विभागे पत्न्यः समानांशा इत्युक्तेऽर्थात्तत्प्रतियोगिकस्यैव पत्नीत्वस्य लाभाज्जीवद्विभागविषयतैवास्योचिता।

तत्र तु मातृपदे मुख्यामुख्यमातृपरत्वानौचित्यात् प्रतिसम्बन्धितया च पुत्राणामेव स्ववचनोपात्तानामुपस्थितेर्जननीपरत्वमेव मातृपदस्य मुख्यार्थलाभायोचितम्। शिष्टाचारोऽप्येवम्। यदत्र युक्तं तद्ग्राह्यमित्यलमधिकेन। बृहस्पतिः। तदभावे तु जननी तनया वा समांशिनी। अत्र प्रक्रमात्तच्छब्देन पिता गृह्यते। पितरि प्रेते यदि केऽपि भ्रातरोऽसंस्कृताः सन्ति तदा तत्संस्कारं समुदाय द्रव्येण विधायावशिष्टं यथांशेन विभजनीयमित्याह याज्ञवल्क्यः। असंस्कृतास्तु संस्कार्य्या भ्रातृभिः पूर्वसंस्कृतैः। भ्रातृभिरित्यभिधानादसंस्कृता भ्रातर इति प्रतीयते। संस्कार्य्यत्वमात्रविधानस्य दायभागप्रस्तावसम्बन्धात् समुदायद्रव्यादिति विवक्षितम्। तथा च व्यासः। असंस्कृतास्तु ये तत्र पैतृकादेव तद्धनात्। संस्कार्य्या भ्रातृभिर्ज्येष्ठैः कन्यकाश्च यथाविधि। अविद्यमाने पितृधनेऽसंस्कृतः संस्कारावश्यकतामाह नारदः। अविद्यमाने पित्रर्थे स्वांशादुद्धृत्य वा पुनः। अवश्यकार्य्याः संस्कारा भ्रातृभिः पूर्वसंस्कृतैः। असंस्कृतभगिनीसंस्कारोऽप्यावश्यकः। सति पितृद्रव्ये ताभ्योंऽशदानमपीत्याह याज्ञवल्क्यः। भगिन्यश्च निजादंशाद्दत्वांशं तु तुरीयकमिति। असंस्कृताः संस्कार्य्या इत्यनुषङ्गः। मनुः। स्वेभ्योंऽशेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक्। स्वात्स्वादंशाच्चतुर्भागम्पतिताः स्युरदित्सवः। अत्रोभयत्र प्रत्येकपरिकल्पितान्निजादंशादुद्धृत्य सवैर्भ्रातृभिर्भगिनीभ्यः प्रत्येकञ्च तुरीयांशो देय इत्यर्थो न भवति। तथा सति बहुभ्रातृकाया बहुधनत्वं बहुभगिनीकस्य भ्रातुर्निर्द्धनतापत्तेः। तस्मात्संस्कारोपयुक्तद्रव्यदानमात्रं विवक्षितमिति रत्नाकरचिन्तामण्यादौ व्याख्यातं। अनूढानान्तु कन्यानामित्यनुरूपेण संस्कारं कुर्यादिति विष्णुवचनञ्चात्रोपोद्बलकमुपन्यस्तम्। तदयुक्तं। अंशदानाविवक्षायाः स्मृतिद्वयेऽप्यन्याय्यत्वात्। संस्कारस्य करणाप्रत्यवायात् पृथगदानप्रत्यवायश्रवणाच्च अन्यथा पतिताः स्युरदित्सव इत्यदानप्रत्यवायवचनमप्यसंस्कारप्रत्यवायपरं स्यात्। अतो मेधातिथिमिताक्षराकारादिभिर्व्याख्यातमेवम्। निजादंशात्स्वात्स्वादंशादिति नापादाने पञ्चमी यावत्पितुस्त्यब्लोपे। तथा च तमपेक्ष्येति यावत्। एवञ्च यज्जातीया कन्या तज्जातीयपुत्रभागचतुर्थांशभागिनी सा कार्य्या। तथा चायमर्थो ब्राह्मणजातीया या कन्या वक्ष्यमाणो ब्राह्मणीपु

त्रभागो यावांस्तच्चतुर्थांशस्तस्याः। एवं क्षत्रियादिजातीयकन्यास्वपि। तद्यथा। यदि कस्यचिद्ब्राह्मणस्यैवैका पत्नी तस्याश्चैकः
पुत्रः कन्यका चैका। तत्र पित्र्यं द्रव्यं सर्वमेव द्विधा विभज्य तत्रैकं भागं चतुर्द्धा कृत्वैकं भागं भगिन्यै तेन देयोऽवशिष्टं सर्वं स्व
यं गृह्णीयात्। एवं पुत्रद्वये कन्यैका चेत्त्रेधा विभागं सर्वद्रव्यस्य विधायैकस्य चतुर्द्धा कृतस्य भागस्य चतुर्थं भागं भगिन्यै दत्त्वा शेषं
द्वाभ्यां यथांशं विभज्य ग्राह्यम्। पुत्रैक्ये कन्याद्वित्वे चेद्धा कृतस्य द्रव्यस्यैकं भागं चतुर्द्धा कृत्वा द्वावंशौ द्वाभ्यां कन्याभ्यां दत्त्वाऽव
शिष्टं तेन ग्राह्यम्। एवं समानजातीयेषु साम्येऽपि सर्वथा भगिनीनां भ्रातृजात्युचितभागतुरीयांशभागिता यथा भवति तथोह्यम्।
यदा तु ब्राह्मणीपुत्र एकः क्षत्रिया कन्या चैका। तत्र पितृधनं सप्तधा विभज्य क्षत्रियापुत्रभागांस्त्रींश्चतुर्द्धा विभज्य तुरीयमंशं क्षत्रि
याकन्यायै दत्त्वा शेषं ब्राह्मणीपुत्रो गृह्णीयात्। यदा तु द्वौ ब्राह्मणीपुत्रौ क्षत्रिया कन्या चैका तदा पितृधनमेकादशधा कृत्वा क्षत्रि
यापुत्रभागांस्त्रींश्चतुर्द्धा विभज्यैकमंशं क्षत्रियाकन्यायै दत्त्वा ब्राह्मणीपुत्रावन्यत्सर्वं विभज्य गृह्णीयाताम्। एवं सर्वत्र जातिवै
षम्ये भ्रातृभगिनीसंख्यासाम्यवैषम्ययोरूह्यम्। विष्णुरपि। मातरः पुत्रभागानुसारभागहारिण्योऽनूढाश्च दुहितरः पुत्रभागा
नुसारेण यथावर्णक्रमेण पुत्राणां चतुस्त्रिद्व्येकभागभागिनां तथा तज्जातीयपत्नीनामपि। अनूढाश्च दुहितरः पुत्रभागानुसा
रभागहारिण्य इत्यनेन यद्यपि चतुरस्त्र्यादीनां सर्वेषां दुहितृभ्यो दानं प्रतीयते तथापि तेभ्योऽंशेभ्यः स्वात् स्वादंशादिति मनुयोगीश्व
राभ्यां चतुर्थांशदानस्योक्तेस्तथैव पुत्रभागानुसारेण सजातीयभ्रातृसमभागहारित्वमित्यविरोधः। स्पष्टमाह वृहस्पतिः। समांशा
मातरस्तेषां चतुर्थांशाश्च कन्यका इति। कन्यकानां त्वदत्तानां चतुर्थो भाग इष्यते। पुत्राणां च त्रयो भागाः साम्यं त्वल्पधने स्मृ
तमिति वदतः कात्यायनस्याप्येतदेवाभिमतम्। साम्यमित्यादेस्त्वयमर्थः। यदि संस्कारपर्याप्तमपि पितृधनं नास्ति तदा पुत्रस
मभागितैव दुहितॄणामिति। अनूढानां त्वित्यादि विष्णुवचनमपि मेधातिथ्यादीनामप्रतिकूलम्। वित्तानुसारेण संस्कारमनू
ढानाम्पितुः कन्यानां स्वभगिनीनां कुर्य्यादित्यनेन संस्कारावश्यकतामात्रमवोच्यते न तु भागदानादाने। स्मृतिचन्द्रिकाकारस्तु।

कन्याभ्यश्चपितृद्रव्यन्देयंवैवाहिकञ्चवस्त्विति देवलवचनानुसारेण संस्कारमात्रोपयोगिद्रव्यदानमेवमन्यते। वैवाहिकंवसुदेयमितिवैवाहिकविशेषणस्यान्यथावैयर्थ्यापत्तेरितितदाशयः। अत्रवदामः। कन्याभ्यःपितृद्रव्यन्देयमितिपृथग्विधिः। तच्च मन्वाद्यनुरोधाच्चतुर्थांशरूपमेव। वैवाहिकम्वसुचदेयमित्यपिपृथगेवविधिः। विभज्यमानेदायाद्येकन्याऽलङ्कारम्वैवाहिकञ्चस्त्रीधनंलभेतेतिशङ्खवचनसमानार्थंतयाव्याख्यातञ्चेदंशङ्खवचनंविद्यारण्यश्रीचरणैःपराशरस्मृतिटीकायाम्। पैतृकद्रव्यविभागकालेस्वधृतालङ्कारादिकमपिकन्याप्राप्नोतीत्याहशङ्खइति। यदितुवैवाहिकंविवाहोपयोगिपितृद्रव्यङ्कन्याभ्योदेयमित्यर्थःस्याद्वसुपदम्पुनरुक्तंस्यादितिपृथग्विधिद्वयमेवान्वयुक्तम्। दायतत्त्वकृतातुकन्याभ्यश्चपितृद्रव्याद्देयम्वैवाहिकम्वस्त्वितिपठितन्तत्रापिशङ्खेनसमानार्थकतालाभायास्मदुक्तमेवव्याख्यानमादर्तुमर्हं ननुविवाहोपयुक्तद्रव्यपरतेत्यवधेयम्। अत्रचमन्वादिवचनेषुभगिनीपदंक्वचित्क्वचिच्चकन्यादिपदव्यँद्यपिश्रूयतेतथापिभ्रातृकर्तृकविभागाधिकारान्वितप्रतियोगिकंकन्यात्वन्दुहितृत्वंभ्रातृप्रतियोगिकञ्चभगिनीत्वमादायैकार्थकतावसेया। तस्मादजीवत्पितृकविभागेभगिनीनामपिपितृद्रव्यांशभागित्वन्नतुसंस्कार्य्यंतामात्रम्। एवन्तुयत्किञ्चित्पितादद्यात्तदेवलभतेविशेषवचनाभावादिति। जीमूतवाहनेनतूक्तम्। प्रदद्युर्भ्रातरःस्वांशन्त्विति मनुयोगीश्वराभ्यामभिधानाद्भगिनीभिरधिकारबुद्ध्याचतुर्थांशोग्राह्यः। नह्यधिकारिणएकस्मैभ्रात्रेन्येभ्रातास्वांशाद्दद्यादित्युच्यते। तथाचतुर्थांशदानमपीतितद्दानेभ्रातृणामेवदोषोननुताम्प्रत्यग्राह्यकारित्वेनेति। तदप्ययुक्तम्। उक्तिवैचित्र्यमात्रस्यास्याप्रयोजकत्वात्। इच्छयाविभजेत्सुतान्तूद्धारंज्यायसेदद्याद्वित्। यदपितेनैवोक्तम्। येषान्तुनकृताःपित्रासंस्कारविधयःक्रमात्। कर्त्तव्याभ्रातृभिस्तेषांपैतृकादेवतद्धनादितिनारदवाक्येयेषामितिपुंलिङ्गनिर्देशात्तदनन्तरमेवचाविद्यमानइतिवचनारम्भाच्चभ्रातृसंस्कारार्थमेवेदम्वचनमितिसतिपितृद्रव्येमन्वादिवचनेभ्योभगिनीसंस्कारावश्यकत्वप्रतीतेःसंस्कारोपयोगिद्रव्यदानमेवविवक्षितमितितन्नेयं। वचनान्तरेषुभगिनीसंस्कारस्याव

ह्यकत्वप्रतीतेः। पिता पितामहो भ्राता सकुल्यो जननी तथा। कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः। अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृताविति। भ्रातुरपि योगीश्वरेण भगिनीविवाहसंस्कारकरणे भ्रूणहत्यादोषश्रुतेस्तदेकमूलकतयायेषान्तो षामित्यस्य सामान्यलिङ्गं नपुंसकमिति वचनात्सामान्यविवक्षान्यायाच्च नपुंसकषष्ठ्यन्तत्वं विरूपैकशेषोपि वाभ्युपगन्तुमुचित एवे ति। यवीयस इति नुमद्दीर्घयोरभावश्छान्दसमभिप्रेत्य। असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः। भगिन्यश्च निजादंशाद्दत्त्वांशं तु तुरीयकम्। असंस्कृता भ्रातरस्तु येस्युस्ते च यवीयसः। संस्कार्याः पूर्वजैस्तेवै पै तृकान्मध्यकाद्धनादिति वृहस्पतिवचनम्पठित्वा भ्रातृग्रहणम्भगिनीनामप्युपलक्षणमिति मदनरत्नहृताव्याख्यानम्। अ ष संस्कारसाहचर्य्यादनूढानान्दुहितॄणाम्। कन्यकामान्त्वदत्तानामित्यनूढत्वविशेषणोपादानाच्चापरिणीता एव चतु र्थांशभागिन्यो भगिन्योन्यास्तु यत्किञ्चिदैवाहिकं दत्वा विभजेयुरिति बोध्यम्। मातृधने चेदम्प्रपञ्चनीयम्। स्थावरस्य स्वार्जितस्य पै तामहस्य वा पुत्राननुमत्यैव पिता दानादि कुर्य्यात्। स्थावरं द्विपदञ्चैवेति प्रागुदाहृतवचनात्। यद्यपि स्वयमर्जितमित्यनेन पै तामहे के मुक्तिकन्यायेन पुत्रानुमत्यावश्यकता प्रदर्शिता। कुटुम्बव्यापिन्यामापदि तु यः कश्चिदन्याननुमतावपि कुटुम्बभरणस्या वश्यकत्वात्स्थावरस्यापि दानविक्रयादावधिकारी। एकोपि स्थावरे कुर्य्याद्दानाधमनविक्रयम्। आपत्काले कुटुम्बार्थे धर्म्मा र्थे च विशेषत इति वचनात्। धर्म्मार्थ इत्यनेनाप्यावश्यकः पितृश्राद्धादिरूपो धर्म्मो गृह्यते। यत्तु स्मरणं। विभक्ता अविभक्ता वा सपिण्डाः स्थावरे समाः। एको ह्यनीशः सर्वत्र दानाधमनविक्रये इति॥ तत्राविभक्तानां मध्यकद्रव्ये स्वाम्यसाम्याद नीशत्वमन्या नुमतिं विना सिद्धमपि स्थावरे विशेषतस्तदादरार्थमुच्यते। अविभक्तानान्तु व्यवहारसौकार्य्यार्थम्। कालान्तरे हि विभक्ता विभक्तसंशये विभागभावनावश्यं साक्ष्यादिप्रमाणेन तथा सति कार्य्यं स्यादन्यथा साधारणद्रव्यदानाद्यसम्भवात्। अनुम तौ तु सत्यां तदनपेक्ष एव व्यवहारः सिद्ध्यति। ननु यथाश्रुतं स्थावरे विभक्तानामपि समं स्वाम्यं। विभागस्यादृष्टार्थताप्रसङ्गात् अतस्तस्यान्यानुमतिमन्तरेणापि दानादिस्वरूपं सिद्ध्यत्येव। विभागभावनायां व्यवहारोपि। यथा ग्रामक्षेत्रादिसामन्तदायादानु

मतेनवा। हिरण्योदकदानेनषड्भिर्गच्छतिमेदिनीतिवचनेग्रामानुमतिःसामन्तानुमतिश्च। सामन्तानुमतिस्तुसीमाविप्रतिप
त्तिनिरासायापि। ज्ञातिदायादानुमतेस्तुपूर्ववदेवव्यवस्था। अतएवस्मृत्यन्तरम्। प्रतिग्रहःप्रकाशःस्यात्स्थावरस्यविशेषत
इति। अन्यथात्रापियामसामन्तानुमतिमन्तरेणदानाद्यसिद्धिःप्रसज्येत हिरण्योदकदानेनेतिस्थावरेविक्रयोनास्तिकुर्य्या
दाधिमनुज्ञयेतिस्थावरस्यविक्रयप्रतिषेधात्तुभूमिंयत्प्रतिगृह्णातिभूमिंयश्चप्रयच्छति। तावुभौपुण्यकर्म्माणौनियतंस्वर्गगामि
नाविति दानप्रशंसनाचकुटुम्बभरणाद्यर्थमवश्यकर्त्तव्येपिविक्रयेसहिरण्यमुदकंकेन दत्वादानांशोपिकश्चित्कार्य्यस्तथातत्वभव
तिनयादानरूपेणस्थावरविक्रयंकुर्य्यादितिसूचितम्। जीमूतवाहनमतु। स्थावरस्यसमस्तस्यगोत्रसाधारणस्यच। नैकः
कुर्य्यात्क्रयन्दानम्परस्परमतंविना। विभक्तावाऽविभक्तावेत्यादिव्यासीयवचनद्वयमुपन्यस्यनेदमेकस्यक्रयदानाद्यनधिका
रप्रतिपादनार्थं। यथेष्टविनियोगार्हत्वलक्षणस्यस्वत्वस्यद्रव्यान्तरइवस्थावरेप्यविशेषात्स्वयागात्मकदानाद्युनिष्पत्तेर्वे
चनशतेनापिवस्तुनोऽन्यथाकरणाशक्तेर्वाधयितुमशक्यत्वात्। किन्तुदुर्वृत्तपुरुषम्प्रतिकुटुम्बार्थादिनिमित्ताभावेकुटुम्बवि
रोधाद्धर्म्मभागिताज्ञापनार्थंनिषेधरूपम्। एवंस्थावरंद्विपदञ्चैवेत्यादिकमपिविभक्तविषयम्पूर्ववद्व्याख्येयम्। अत
एवनारदः। यद्येकजाताबहवःपृथग्धर्म्माःपृथक्क्रियाः। पृथक्कर्म्मगुणोपेतानचेत्कार्य्येषुसंमताः। स्वभागान्यदिदद्युस्ते
विक्रीणीयुरथापिवा। कुर्य्युर्यथेष्टंतत्सर्वमीशास्तेस्वधनस्यहीतिसामान्यतएवविक्रयाद्यनुमन्यते। ईशास्तेस्वधनस्येती
तिहेत्वभिधानात्स्थावरगोचरमपीदम्वचनम्। अपरथातद्दानर्थक्यापत्तेरित्याह। तत्रस्वयंत्वेवपरंस्वधर्म्मभागिताज्ञापना
र्थमित्ययुक्तम्। वृथास्थावरविक्रयस्यबहून्प्रत्यपिनिषेधादेकग्रहणापार्थक्यापत्तेः। व्यवहारशास्त्रस्यव्यवहारसौकार्य्यार्थंदि
दृष्टप्रयोजनसम्भवेऽदृष्टकल्पनानुपपत्तेः। अन्यथाऽनुमतावपितदापत्तेः। कुटुम्बविरोधजन्यवचनान्तरप्रतिपादितनाधे
र्म्मप्रयोजकतापरमस्तु। अत्रचपुत्रेच्छयायोजीवद्विभागोयश्चाजीवद्विभागःसएकेच्छयाविभक्तविशेषणम्। अतएवविभा

गम्यकव्ययकात्यायनेनोक्तम्। अप्राप्तव्यवहाराणां धनं व्ययविवर्जितम्। न्यसेयुर्बन्धुमित्रेषु प्रोषितानामथैव चेति। तदपि स
म्मतम्। अन्यथा तदनुमतिमन्तरेणाविभागाभावेन तद्धनस्य बन्धुमित्रेषु न्यासविधानमनुपपन्नं स्यात्। तथा विष्णुरपि। अप्राप्त
व्यवहाराणां धनमाव्यवहारप्राप्तेरिति। अथ पुत्राणां विभागः पुत्रपौत्रप्रपौत्रपर्यन्तानां समानो नोत्पत्तितः प्रत्यासत्तिक्रमेणाधिकार
क्रमः। पुत्रादीनां त्रयाणामेव पार्वणपिण्डदानाधिकारित्वात्। अत एव देवलः। पिता पितामहश्चैव तथैव प्रपितामहः। उपासते सु
तं जातं शकुन्ता इव पिप्पलम्। मधुमांसैश्च शाकैश्च पयसा पायसेन च। एष नो दास्यति श्राद्धं वर्षासु च मघासु चेति। तथा शङ्खलि
खितगौतमाः। पिता पितामहश्चैव तथैव प्रपितामहः। जातम्पुत्रं प्रशंसन्ति पिप्पले शकुना इव। मधुमांसेन खड्ग
मपयसा पायसेन वा। एष दास्यति नस्तद्धि वर्षासु च मघासु चेति। एवन्तुल्याधिकारात् जन्मना स्वत्वस्यापि तुल्यत्वात्तुल्यभा
गभागिता प्रसक्तापि तु नैकपितृकाणामिति वचनेन निवर्त्तते। जीवत्पितृकयोः पौत्रप्रपौत्रयोः पार्वणानधिकारेऽपि पिण्डदातृत्वा
भावात् पितामहप्रपितामहधनेऽनधिकारः। यदा चैकस्य पुत्रस्य पुत्राः सन्त्येकस्य पुत्र एवास्ति। तदा पुत्रस्यैको भागोऽपरस्त्वेकः
सर्वेषां पौत्राणाम्। स्वपित्रधीनजन्मसम्बन्धकत्वात्पितामहधनसम्बन्धस्य यावत्येव धने तत्स्वामित्वाहृत्तावत्येव तेषामपीति जी
मूतवाहनोक्तन्नादेयम्। जन्मना पौत्राणामपि पितामहधने स्वत्वव्यवस्थापनात्। तस्मात्पौत्राणां पितामहधने वाचनिकमे
व भागवैषम्यं न त्वौपपत्तिकम्। यत्तु तैर्नैवोक्तम्। यत्रैकस्य भ्रातुरनेकसंख्याः पुत्रा अन्यस्य च ततोऽल्पसंख्यास्तत्रेदमनेकपितृका
णामिति वचनम्पौत्राणां तेन सर्वेषां समभागनिवृत्त्यर्थं जीवति तु पितरि पौत्राणाम्पितामहधनस्वाम्ये सपुत्रापुत्रभ्रातृद्वयविभागे तत्पु
त्राणामपि विभागः स्यात् स्वाम्याविशेषादिति तत्प्रागेव निरस्तम्। उक्तोऽतिप्रसङ्गोऽप्यनेनैव परास्तः। अत एव पितृभ्रातृपुत्रसमवा
ये पितृव्यपितृधनन्तद्दितिभ्रातृपुत्राणान्तत्र स्वाम्याभावाद्विभाग एव नास्तीति व्यपास्तम्। यच्च जीवत्पितृकयोरित्यादि तदपि
मन्दम्। नहि पिण्डदानाधिकार एव दायग्रहणप्रयोजकः ज्येष्ठे सति कनीयसामनधिकारेऽपि दायग्रहणात्। तदहं तावद्वा

चाप्यनपायात्। गोत्रजादीनान्दायहराणामनेकेषांसमवाये पिण्डदानाद्युपकारित्वं धनस्वामिनो यत्तदनुपकारित्वावर्त्तकम्प्र रन्नतु नदत्र प्रयोजकं। जीवद्विभागेऽजीवद्विभागे वा कस्याञ्चित्पितृपत्न्यां भ्रातृपत्न्यां वास्पष्टगर्भायामाप्रसवम्प्रतीक्ष्य विभागः कार्य्यः ॥७॥ अथ भ्रातॄणान्दायविभागो याश्चानपत्याः स्त्रियस्तासामापुत्रलाभादिति वसिष्ठस्मरणात्। आपुत्रलाभादिति वचनात् स्पष्टगर्भासु प्रतीक्षाऽस्पष्टगर्भासु तु नेत्यवगम्यते। अत एव तत्र पश्चादुत्पन्नस्य विभागप्रकारमाह योगीश्वरः। विभक्तेषु सुतो जातः सवर्णायां विभागभाक्। पित्रिच्छया पुत्रेच्छया वा जीवतोः पित्रोर्विभक्तेषु पुत्रेषु पश्चात्सवर्णायाम्भार्य्यायामुत्पन्नो विभागभाक्। विभज्यत इति विभागः पित्रोर्भागस्तम्भजत इति विभागभाग्भवति ॥ पित्रोरूर्ध्वं स एव तयोरंशं लभत इत्यर्थः। असवर्णायां दुहितरि मातृभागमिति विशेषः। सवर्णायामिति विशेषणादसवर्णायां जातस्तु पित्र्याद्धनात्स्वांशमेव लभते दुहित्रभावे मातृभागं सर्वमेव। अनेनैव न्यायेन जीवद्विभागे पि विभक्तजो सवर्णापुत्रः स्वजात्युचितभागेव। न सकलपित्र्यभागित्यवसेयम्। एतदेवाभिप्रेत्य मनुः। ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनमिति। पित्रोरिदं पित्र्यं धनं यथोक्तव्यवस्थया हरेत्। एवकारेण भ्रातृभिः स्वांशाद्दातव्यस्वभागसमभागभाक्त्वं न कार्य्यः। गौतमोऽपि। विभक्तजः पित्र्यमेवेति। जीवति तु पितरि मातरि तत्सपत्न्यां चाऽविस्पष्टगर्भायां विभक्तैर्विभागानन्तरोत्पन्नाय स्वभागाद्दातव्यस्वभागसमभागभाक्त्वं कार्य्यः। तथा च विष्णुः। पितृविभक्ता विभागानन्तरोत्पन्नाय विभागन्दद्युरिति। तच्च भ्रातृदत्तन्तद्विभागम्पितैव गृहीत्वा तम्परिपालयेत्। तस्यैव तत्राधिकारात्। अप्राप्तव्यवहाराणामित्यादि प्रागुक्तवचनाच्च। यच्च वचनम्। अनीशः पूर्वजः पित्रोर्भ्रातुर्भागे विभक्तज इति तस्याप्ययमेव विषयः। पूर्वजो विभागात्पूर्वमुत्पन्नः प्राप्तपितृधनविभागः पित्रोर्विभागेऽनीशो न स्वामी। विभक्तजश्च पूर्वभक्तस्य भ्रातुर्भागेऽनीश इत्यर्थः। विभागोत्तरञ्च यत्पित्रार्जितन्तदपि विभक्तजस्यैव। पुत्रैः सह विभक्तेन पित्रा यत्स्वयमर्जितम्। विभक्तजस्य तत्सर्वमनीशाः स्वत्र पूर्वजाः। यथा धने तथर्णे च दानाधानक्रयेषु च। परस्परमनीशास्ते मुक्त्वा शौचोदकक्रियामिति बृहस्पतिस्मरणात्। स एव ॥

पित्रासहविभक्तायेसापत्नावासहोदराः । जघन्यजास्तुयेतेषाम्पितृभागहरास्तुते ॥ अत्रहेतुरनीशापूर्वजाःइत्यादितद्वचनो
क्तएव । येतुविभक्ताःपित्रासंसृष्टाःपुत्रास्तैःसहतुतस्यविभागोनसकलपित्र्यधनग्रहणमित्याहमनुः । संसृष्टास्तेनवायेस्यु
र्विभजेतसतैःसह । तेनपित्रापितुरूर्ध्वम्पितृधनेभ्रातृभिर्विभज्यगृहीतेविभागसमयेऽस्पष्टगर्भायाःपितृपत्न्याःपश्चात्पुत्रेजाते
स्वस्वभागादायव्ययविशोधितात्तैःस्वस्वभागसमभागभाक्करणीयइत्याहयाज्ञवल्क्यः । दृश्याद्वातद्विभागःस्यादायव्ययविशो
धितात् । दृश्याद्भ्रातृभिर्गृहीतात् । आयःप्रतिमासम्प्रतिदिनम्प्रत्यब्दंयत्तदुपरिवृद्धम् । व्ययःपितृकृतर्णापाकरणंभ्रातृभगि
नीसंस्कारकरणञ्च । तस्यसर्वसाधारण्येनकर्त्तव्यत्वात् । नतुभ्रातृकर्त्तव्यव्ययस्तस्यैतत्सम्बन्धाभावात् । ताभ्यामायव्ययाभ्यां
विशोधितात्पितृधनात्तस्यविभागोनतूत्पन्नस्यविभागःपूर्वविभक्तसमःस्यादित्यर्थः । एतदुक्तम्भवति । प्रातिस्विकेषुस्वस्वभा
गेषुतदुत्पन्नमायम्प्रवेश्यावश्यकव्ययसाधारणंव्ययञ्चनिष्काश्यावशिष्टंस्वस्वभागेभ्यःकिञ्चित्किञ्चिदुद्धृत्यविभक्तजःस्वभागसमभा
क्कार्य्यइति । कथन्तर्हिविभक्तेषुसुतोजातइतिपूर्वार्द्धंनसहव्यवस्थितविकल्पार्थःव्यवस्थाचोक्तैव । इत्यायुधस्तु । दृश्या
त्प्रत्यक्षान्नतुगुप्तात्पितृधनादित्यर्थमुक्ता । विभक्तभ्रातृत्वपेक्षयायोऽल्पगुणोविभक्तजस्तद्विषयोवम्पक्षइत्याह । तन्निर्वीजत्वात्
गुप्तस्यापिविभागानन्तरेज्ञातस्यसमभागेनविभजनीयत्वादत्रतदप्रवृत्तौप्रमाणाभावान्नियमकल्पनेऽदृष्टार्थतापत्तेर्विज्ञाने
श्वरोक्तार्थकतयाचवचनसामञ्जस्यादुपेक्ष्यम् ॥०॥ असवर्णानांभ्रातृणांविभागप्रकारमाहयोगीश्वरः । चतुस्त्रिद्व्येकभागाःस्यु
र्वर्णशोब्राह्मणात्मजाः । क्षत्रजास्त्रिद्व्येकभागाविड्जास्तुद्व्येकभागिनइति । तिस्रोवर्णानुपूर्व्येणद्वेतथैकायथाक्रमम् । ब्राह्मण
क्षत्रियविशाम्भार्य्याःस्वाशूद्रजन्मनइतियोगीश्वरेणब्राह्मणस्यासवर्णास्तिस्रःक्षत्रियस्यद्वे । विशएकाभार्य्याइति । सवर्णामा
दायतेषांमध्येब्राह्मणस्यचतस्रःक्षत्रियस्यतिस्रोवैश्यस्यद्वेइत्युक्तं । सवर्णासवर्णासर्वभार्य्याभिप्रायेणत्वादिसंख्याव्याख्यानेवै
श्यस्यापिद्वेशूद्रापरिहारेचस्वैवेतिस्वाशूद्रजन्मनइतिवैश्याद्वैलक्षण्यासङ्गतेरेवसवर्णाभिप्रायेणेयंसंख्येतिविज्ञानयोगिभिर्व्या

स्यात्म्। तथा च ब्राह्मण्यां ब्राह्मण्यादिषु स्त्रीषु जाताः पुत्रा यथाक्रमं वर्णशो मातृवर्णानुसारेण। संख्यैकवचनाच्छसन्नीत्सायां
मित्यधिकरणकारकेशस्प्रत्ययः वर्णे वर्णे इत्यर्थः। ब्राह्मण्यादिभ्यः क्षत्रियादिषु जातानां मूर्द्धावसिक्तादिजातिसंज्ञत्वेन तद्वर्णग्रहणेन ग्रहणासम्भवान्मातृवर्णग्रहणमित्यर्थः। चतुस्त्रिद्व्येकभागाः स्युः। एतदुक्तं भवति ब्राह्मणेन ब्राह्मण्यामुत्पन्ना एकैकशश्चतुरश्चतुरो भागाल्लँभन्ते। तेनैव क्षत्रियायामुत्पन्नास्त्रींस्त्रीन्। तेनैव वैश्यायामुत्पन्ना द्वौ द्वौ। तेनैव शूद्रायामुत्पन्ना एकमेकमिति। वर्णश इति सर्वत्रोत्तरत्र सम्बध्यते। तथा च क्षत्रियात् क्षत्रियादिषु जाता यथाक्रमं त्रींस्त्रीन् द्वौ द्वावेकैकं च लभन्ते। विट्वैश्यादिषु जाता यथाक्रमं द्वौ द्वावेकमेकं च लभन्त इति। शूद्रस्य सवर्णा भार्याभावान्न पुत्राणां सजातीयपुत्रभागः पूर्वोक्त एव।
यद्यपि शूद्रापरिणयं द्विजानेर्भूयाक्षेपः पुत्रार्थविवाहस्तु सर्वथा शूद्रायां निषिद्ध एव। तथा च मनुविष्णू। हीनजातिं स्त्रियं मोहादुद्वहन्तो द्विजातयः। कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम्। शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च। शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः। तदपत्यतया शूद्रामात्रजनितापत्यवत्तया ब्राह्मणस्य तु क्षत्रविट्पेक्षयाप्यधिकदोषतामाह तु स्तत्परिणयेनापि च॥ शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम्। जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयत इति। योगीश्वरोऽपि। यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः। नैतन्मम मतं यस्मात्तत्रात्मा जायते स्वयमिति। तेन विप्रादिजातशूद्रापुत्राभावात्कथनं तस्यांशाभिधानमिति प्रतिभाति। तथापि रतिधर्मार्थविवाहयोरनुकल्पत्वेन परिणीतायां शूद्रायामनुपक्लृप्तजातस्य विभागाभिधानमुपपन्नमेव। शूद्रायां जातो निषादो यः पारशवे जातिकथनमिव। आचारमिताक्षरायामेव व्यवस्थापितम्। अत एव मनुना। कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवरा इति कामत इत्यवरा इति। सवर्णापरिणयनमेव मुख्यमित्युक्तं। शङ्खलिखिताभ्यामपि। भार्याः कार्याः सजातीयाः सर्वेषां श्रेयस्यः स्युरिति पूर्वः कल्पस्ततोऽनुकल्पश्चतस्रो ब्राह्मणस्यानुपूर्व्येण। तिस्रो राजन्यस्य। द्वे वैश्यस्य। एका शूद्रस्येति। आनुपूर्व्येणेत्युक्तेरुत्तरोत्तरजघन्यतासूचिता। यत्तु मनुना चातुर्वर्ण्यपुत्रविभागे प्रकारद्वयमुक्तं। अंशान्ताया

हरेद्विप्रो द्वावंशौ क्षत्रियासुतः। वैश्याजोऽध्यर्द्धमेकांशमंशं शूद्रासुतो हरेत्। सर्वं वा रिक्थजातन्तु दशधा परिकल्प्य तत्। ध र्म्यं विभागं कुर्वीत विधिनानेन धर्म्मवित्॥ चतुरोंऽशान् हरेद्विप्रस्त्रीनंशान् क्षत्रियासुतः। वैश्यापुत्रो हरेद्व्यंशमंशं शूद्रासुतो हरे दिति। तत्रोत्तरप्रकारो योगीश्वरसंवादी। सद्गुणवदगुणवत्क्षत्रियादिपुत्रविषयतया व्यवस्थापनीयम्। अत एव ब्राह्मण्यां जातो राजन्यापुत्र एव यदि जन्मज्येष्ठो गुणवांश्च तदा ब्राह्मणीपुत्रसमांशभाक्। ब्राह्मणेन क्षत्रियेण च वैश्यायां जनितस्तु क्षत्रियापुत्रसमांशभागित्याह वृहस्पतिः॥ विप्रेण क्षत्रियाजातो जन्मज्येष्ठो गुणान्वितः। भवेत्समांशी विप्रेण वैश्याजातस्त थैव च। तथा वौधायनः। सवर्णापुत्रानन्तरापुत्रयोरनन्तरापुत्रश्चेद्गुणवान् ज्येष्ठांशं हरेत्। गुणवान् हि शेषाणाम्भर्त्ता भवती ति। एतद्वचनेऽनन्तरोऽप्यसमानस्य गुणवत्त्वज्येष्ठताप्रयुक्तोत्कृष्टपुत्रसमांशभाक्त्वोक्तेर्वैश्याजशूद्रापुत्रस्याप्येवंविधस्य वैश्यापु त्रसमांशितादृष्टव्या वृहस्पत्यनुक्तापि। ज्येष्ठांशं हरेदित्यस्योत्कृष्टसमांशहरणमेवार्थो वृहस्पतिसंवादात् तुल्यजातीयापेक्षया धिकांशानौचित्याच्च। यदा तु शूद्रा एवैकः पुत्रो ब्राह्मणस्य। तदा स तद्धनतृतीयांशहारी भागद्वयं सपिण्डानां तदभावे सकुल्या नान्तेषामप्यभावे श्राद्धकर्त्तुः। यदाह देवलः। निषाद एकः पुत्रस्तु विप्रस्वस्य तृतीयभाक्। द्वौ सपिण्डः सकुल्यो वा स्वधादा ता थवा हरेत्। ब्राह्मणाच्छूद्रायां जातो निषादः स एकश्चासौ पुत्रश्चेति विग्रहः। क्षत्रियवैश्ययोस्तु शूद्र एवैकः पुत्रः स धनार्द्धं हरे पर मर्द्धमपुत्रधनग्रहणाधिकारिणस्तत्क्रमेण गृह्णीयुः। तथा च विष्णुः। द्विजातीनां शूद्रस्त्वेकपुत्रोऽर्द्धहरोऽपुत्रस्य ऋक्थस्य यागतिः साऽर्द्धस्य द्वितीयस्येति। द्विजातिपदेनात्र क्षत्रियवैश्यमात्रग्रहणम्। देवलेन ब्राह्मणे विशेषाभिधानात्। एकपु त्र इति कर्म्मधारयः इदमपि सद्गुणातिगुणवच्छूद्रापुत्रविषयम्। अन्यथा। यद्यपि स्यात्तु सत्पुत्र इत्यादिना। ब्राह्मणक्षत्रिय विशामित्यादिना च वक्ष्यमाणमनुवचनेन विरोधापत्तेः। यद्यपि सामान्यतस्त्र्यंशभागकॢप्तिरुक्ता। तथापि प्रतिग्रहप्राप्तभूमिव्यति रिक्तविषया क्षत्रियादिसुतानान्तत्र भागप्रतिषेधात्। तथा च वृहस्पतिः। न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै। यद्यप्ये

यंपितादद्यान्मृतेविप्रास्सुतोहरेत्। अत्रप्रतिग्रहोपादानान्वयादिप्राप्यायाम्भूमावेवतेषामविभागःस्वजात्यर्हइतिसूचि
तम्। अतएवभूमिमात्रविषयेशूद्रापुत्रस्यपृथक्क्रियेषोदेवलेनोक्तः। शूद्रायांद्विजातिभिर्जातोनभूमेर्भागमर्हति। सजातावाप्नु
यात्सर्वमितिधर्म्मोव्यवस्थितइति। यत्तु। ब्राह्मणक्षत्रियविशांशूद्रापुत्रोनरिक्थभाक्। यदेवास्यपितादद्यात्तदेवास्यधनंस्मृत
मितिमनुवचनम्। तत्पितृप्रीतिदत्तधनसद्भावविषयमितिदाक्षिणात्याः। निर्गुणापरिणीतशूद्रापुत्रविषयमितितुपौरस्त्यास्त
न्मन्दम्। यदेवास्येत्यादिवाक्यशेषोपात्तव्यवस्थामपहाययानुपात्तसगुणनिर्गुणव्यवस्थायाःकल्पयितुमनर्हत्वात्। अपरिणी
तशूद्रापुत्रभागस्यचदासप्रस्तावेऽभिधास्यमानत्वात्प्राच्यैवव्यवस्थासुस्था॥ * ॥ मुख्यामुख्यपुत्राणांविभागव्यवस्थांवक्तुंतत्स्व
रूपंनिरूप्यते। तत्रयाज्ञवल्क्यः। औरसोधर्म्मपत्नीजस्तत्समःपुत्रिकासुतः। क्षेत्रजःक्षेत्रजातस्तुसगोत्रेणेतरेणवा। गृहे
प्रच्छन्नउत्पन्नोगूढजस्तुसुतःस्मृतः। कानीनःकन्यकाजातोमातामहसुतोमतः। अक्षतायांक्षतायांवाजातःपौनर्भवःसुतः।
दद्यान्मातापितावायंसपुत्रोदत्तकःस्मृतः। क्रीतश्चताभ्यांविक्रीतःकृत्रिमःस्यात्स्वयंकृतः॥ दत्तात्मातुस्वयंदत्तोगर्भेविन्नःसहो
ढजः। उत्सृष्टोगृह्यतेयस्तुसोपविद्धोभवेत्सुतः। सवर्णाधर्म्मविवाहोढाधर्म्मपत्नीतस्यांजातऔरसःपुत्रइतिमिताक्षरा। अ
सुतस्तुनेदमेवबोद्धव्यं। अनुलोमजानाम्मूर्द्धावसिक्तादीनामौरसत्वाभावादितिस्ववचनविरोधात्। नहितेसवर्णायामुत्प
न्नाब्राह्मणादिषुयेयायेनधर्म्मविवाहास्तदूढोत्पन्नानामनौरसत्वप्रसङ्गेनपुत्रत्वप्यन्येषान्दायग्रहणप्रसङ्गाच्च। तस्मादुक्त
र्थाभिप्रायंसवर्णाग्रहणन्धर्म्मपत्नीजत्वमात्रंवाक्योपात्तक्षेत्रजादिव्यावर्त्तकंलक्षणं। अतएवमनुः। संस्कृतायांस्वभार्य्यायांस्वय
मुत्पादयेत्तुयम्। औरसन्तंविजानीयात्पुत्रंप्राथमकल्पिकम्। वसिष्ठोपि। द्वादशैवपुत्राःपुराणदृष्टाःस्वयमुत्पादितःस्वक्षेत्रेसं
स्कृतायामौरसःप्रथमइति। विष्णुरपि। अथद्वादशपुत्राभवन्तिस्वक्षेत्रेसंस्कृतायामुत्पादितःस्वयमौरसःप्रथमइति। अत्रव
चनद्वयेपिस्वक्षेत्रेसंस्कृतायामितिव्याख्यानव्याख्येयभावान्ययापौनरुक्त्यापत्तेः। देवलः। संस्कृतायांस्वभार्य्यायांस्वयमुत्पादि

नोह्यः । औरसोनाम पुत्रः सप्रथमः पितृवंशधृक् ॥ आपस्तम्बः । सवर्णायामशास्त्रविहितायां यथर्तु गच्छतः पुत्रास्तेषां कर्मभि
सम्बन्धः दायेनाव्यतिक्रमश्चोभयोर्मातापित्रोः । बौधायनः । सवर्णायां संस्कृतायां स्वयमुत्पादितमौरसं पुत्रं विद्यात् । अथाप्यु
दाहरन्ति । अङ्गादङ्गात्सम्भवसि हृदयादभिजायसे । आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥ आधत्त पितरो गर्भं कु
मारं पुष्करस्रजम् । यथेह पुरुषस्यास्मात्तथा त्वमिह जायसे । आत्मा पुत्र इति प्रोक्तः पितुर्मातुरनुग्रहात् । पुन्नाम्नस्त्रायते
यस्मात्पुत्रस्तेनासि संज्ञितः इति ॥ आपस्तम्बीयबौधायनीययोः सवर्णाग्रहणमुत्कर्षाभिप्रायकमेव । अतएवासवर्णासु ब्राह्मणा
नामप्यौरसपुत्रत्वमस्त्येव विभागप्रकारस्तु ततः सङ्गच्छते । आपस्तम्बवचने सवर्णामपूर्वामिति रत्नाकरे धृतः पाठोऽपूर्वाऽ
नपूर्वः पतिर्यस्याः सा वाग्दत्तापि यान भवतीत्यर्थ इति प्रकाशकार इति व्याख्यानञ्च । पारिजाते तूक्तं । सवर्णा त्रिद्विजस्य द्विजा ।
शूद्रस्य शूद्रा । ननु ब्राह्मणस्य ब्राह्मणी क्षत्रियस्य क्षत्रिया वैश्यस्य वैश्या । अन्यथा ब्राह्मणादिपरिणीतक्षत्रियादिपुत्राणां द्वाद
शपुत्रान्तर्भावेन स्यादिति । पुत्रिकायाः सुतः पुत्रिकासुतः स तत्समः । यथाह वसिष्ठः । अभ्रातृकां प्रदास्यामि तुभ्यं कन्या
मलंकृतां ॥ अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति । मनुरपि । अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् । यदपत्यं भवेद
स्यां तन्मम स्यात्स्वधाकरम् ॥ अनेन तु विधानेन पुरा चक्रेऽथ पुत्रिकाम् । विवृद्ध्यर्थं स्ववंशस्य स्वयं दक्षः प्रजापतिः ॥ ददौ स दश
धर्माय कश्यपाय त्रयोदश । सोमाय राज्ञे सत्कृत्य प्रीतात्मा सप्तविंशतिम् ॥ अत्र परिभाषादत्तायामुत्पन्नः पुत्रिकापुत्रो मातामह
स्यैव पुत्रम् । अपरिभाषितदत्तायामपि सम्भवतीति भ्रातृमतीमिति विशेषणात् पुत्रिकाकरणशङ्कानिवृत्त्यर्थम् । अनेनाप
रिभाषितापि पुत्रिका भवतीत्याचारमिताक्षरायां निरूपितम् । अतएव गौतमोऽपि । पितोत्सृजेत्पुत्रिकामनपत्यो मदर्थमपत्य
मिति सम्वादात् । अभिसन्धिमात्रात्पुत्रिकेत्येकेषामिति । ब्रह्मपुराणेऽपि । अपुत्रेणैव या कन्या मनसा पुत्रवत्कृता । शङ्खलिखितावे
भ्यस्य समक्षं वाथ कुरुचित् ॥ प्रागर्भमथवा मुक्ताप्युक्ता पित्रावरा यदा । मृते पितरि वा दत्ता सा विज्ञेया तु पुत्रिका ॥ पित्र्यात्स्वत्वात्

मम्भागं लभेतेनादृशीसुतेनेति ॥ मनुः । मातुः प्रथमतः पिण्डं निर्वपेत्पुत्रिकासुतः । द्वितीयंतुपितुस्तस्यास्तृतीयन्तुपितुःपितुरिति । अथवापुत्रिकायाः सोसुतस्सपुत्रिकासुतइतिपुत्रिकैवपुत्रस्थानीयेत्यर्थः । तस्याश्चौरसोजातत्वेपिकन्यात्वात्पुत्रसमत्वमिति वयम् । पित्रवयवानामल्पत्वान्मात्रवयवानांवाऽऽधिक्याच्चौरससमत्वमितिमिताक्षरा । यथाहवसिष्ठः । द्वितीयः पुत्रः पुत्रिकैवेति । द्व्यामुष्यायणस्तु । अपुत्रेणपरक्षेत्रेनियोगोत्पादितः सुतः । उभयोरप्यसौरिक्थीपिण्डदाताचधर्मतइति । याज्ञवल्क्योपि । सवीजिनोयद्यप्यौरसस्तथाप्यन्यक्षेत्रोत्पन्नत्वादौरसादपकृष्टएव । अतएवौरसोधर्मपत्नीजइत्यौरसलक्षणन्तेनैवाभिहितम् । अस्माभिरपिक्षेत्रजत्वानपायात्क्षेत्रजपुत्रमध्यएवव्याख्यास्यते । मनुरपि । क्रियाभ्युपगमात्क्षेत्रंबीजार्थेयत्प्रदीयते । तस्येहभागिनौदृष्टौबीजीक्षेत्रिकएवच ॥ यथालोकेक्रियाकर्षणाख्यातदभ्युपगमात् । एकस्यवापार्थेबीजंव्रीह्यादिनास्तिक्षेत्रमस्तिअपरस्यक्षेत्रंनास्तिबीजमस्ति । तत्रतौमदीयंबीजन्त्वदीयंक्षेत्रंतत्रतदावापेनकर्षितंकुर्वस्तत्रोत्पन्नंफलमावयोरस्त्वित्यभ्युपगमंसम्विदंयदिकुरुतस्तथासतिद्वावपितत्फलभागिनौदृष्टौ । तथाद्व्यामुष्यायणस्थलेप्यत्रोत्पन्नमावयोरस्त्विति संविदायद्येकस्यक्षेत्रेऽपरः स्वबीजमावपतितदुत्पन्नमपत्यमुभयोर्भवतीतितस्यक्षेत्रजस्यद्विपितृकत्वेनद्व्यामुष्यायणसंज्ञा । अत्रैयाज्ञवल्क्येननियोगोत्पादितइत्युक्तेर्गुरुनियुक्तस्यैवदेवरसपिण्डादेर्भार्यादिभार्यायांघृताभ्यङ्गादिविधितःपुत्रोत्पादनमितरथाप्रत्यवायउभयोरित्युक्तम्भवति । तथाचमनुः । अपुत्रांगुर्वनुज्ञातोदेवरः पुत्रकाम्यया । सपिण्डोवासगोत्रोवाघृताभ्यक्तऋतावियात् ॥ अनेनविधिनाजातःक्षेत्रजोऽस्यभवेत्सुतः । यदात्वनभिसन्धायद्वयोरपत्यंपरक्षेत्रेदेवरादिनाबीजमुप्यतेतदाक्षेत्रिणएवतदपत्यं । तदप्याहमनुः । फलन्त्वनभिसन्धायबीजिनांक्षेत्रिणान्तथा । प्रत्यक्षंक्षेत्रिणामर्थोबीजाद्योनिर्बलीयसीति । फलमपत्यंसस्यंसम्भिसन्धायात्रपरक्षेत्रेयदपत्यमुत्पाद्यतेतत्क्षेत्रस्वामिनएवभवति । यथालोकेपरक्षेत्रेव्रीह्यादिबीजंक्षेत्रस्वामिनासहसम्विदमकृत्वैवयद्यादौपरकायेऽन्यदीयेनदुदस्वादिवीर्यमावपतितत्रोभयत्रापिक्षेत्रस्वामि

नएवतदुत्पन्नेपत्यस्वाम्यंदृश्यतइतिप्रत्यक्षमित्यर्थः । तत्रहेतुर्बीजाद्योनिर्बलीयसीति । गवाश्वादौतथादर्शनादितिभा
वः । तथाचाभिसन्धौसत्येवक्षेत्रजस्यबीजिस्वाम्येनद्व्यामुष्यायणत्वंक्षेत्रस्वामिस्वाम्यमनुक्षेत्रजस्तूभयत्रापीतिफलितोर्थः । अत
एवयद्यपियाज्ञवल्क्येनापुत्रेयोन्यादिवचनेबीज्यभिसंधिर्नोपात्तस्तथापिमन्वाद्येकमूलकतयानुसन्धेयः । अतएवक्षेत्रजःक्षेत्र
ज्ञातस्तुसगोत्रेणेतरेणवेत्यनभिसन्धिसाधारणंक्षेत्रजलक्षणमुक्तमन्यथापौनर्भवत्वापत्तेः । सगोत्रेणदेवरसपिण्डादिना ।
इतरेणासगोत्रेणान्येनुकल्पः । मनुनासपिण्डोवासगोत्रोवेत्यभिधानात् । नियोगश्चवाग्दत्ताविषयएवेत्याचार्य्याः । यस्यामि
येतकन्यायावाचासत्येकृतेपतिः । तामनेनविधानेननिजोविन्देतदेवरइति । मनुनातत्रैवनियोगविधिनापुत्रोत्पादनस्यनि
यमितत्वात् । विधवानियोगस्यप्रत्युतप्रतिषिद्धत्वाच्च । तथाहि । देवराद्वासपिण्डाद्वास्त्रियासम्यङ्नियुक्तया । प्रजेप्सिताधि
गन्तव्यासन्तानस्यपरिक्षये । विधवायांनियुक्तस्तुघृताक्तोवाग्यतोनिशि । एकमुत्पादयेत्पुत्रंनद्वितीयंकथञ्चनेत्यादिविध
वानियोगमुपन्यस्यनिषेधयतिस्वयमेवमनुः । नान्यस्मिन्विधवानारीनियोक्तव्याद्विजातिभिः । अन्यस्मिन्हिनियुञ्जानाध
र्म्मंहन्युःसनातनम् ॥ नोद्वाहिकेषुमन्त्रेषुनियोगःकीर्त्यतेक्वचित् । नविवाहविधावुक्तंविधवावेदनम्पुनः ॥ अयंद्विजै
र्हिविद्वद्भिःपशुधर्म्मोविगर्हितः । मनुष्याणामपिप्रोक्तोवेणेराज्यंप्रशासति ॥ समहीमखिलाम्भुञ्जन्राजर्षिप्रवरःपुरा ।
वर्णानांसङ्करञ्चक्रेकामोपहतचेतनः ॥ ततःप्रभृतियोमोहात्प्रमीतपतिकांस्त्रियम् । नियोजयत्यपत्यार्थन्तंविगर्हन्तिसाधव
इति । अत्रवाग्दत्ताशब्देनतुभ्यमहंसम्प्रददइत्यादिसङ्कल्पवाक्येनकन्यादानाद्दत्तागृह्यते । विधवाशब्देनतुसप्तपदीपर्य्य
न्तविवाहोढापश्चान्मृतपतिका । ननुविवाहात्प्रागनियतकालप्रतिश्रवरूपवाग्दानदत्तायाः । अव्यङ्गेऽपतितेऽक्लीबेद
शदोषविवर्जिते । इमांकन्यांप्रदास्यामिदेवाग्निगुरुसंनिधावितिवाक्येनप्रतिज्ञायते । अतएवपतिरितिमनुनोक्तम् । प्रा
ग्भाविप्रतिश्रवणस्यविवाहप्रयोगवहिर्भावेनप्रतिश्रावयस्यपतित्वाग्निगुरुसन्निधावितिवाक्येनप्रतिज्ञायते । यद्यपिसङ्कल्पिता

थाऽपि तस्य पतित्वज्ञानः । भार्य्यात्ववत्पतित्वस्यापि लौकिकसंस्कारात्मकत्वेन विवाहमावनाभावे तस्य तत्तत्स्यागनुत्पत्तेः । तथा
पि प्रयोगोपक्रमे तत्फलीभूतव्यवहारसम्भवः । यजमाने स्थितः प्रागप्याहवनीयव्यवहारवत् । प्रतिश्रवमात्रेणैव तदुप
क्रमोऽपीति सर्वथा पतित्वव्यपदेशोऽनुपपन्नः । अत एव पुनर्भूत्वेन दीक्षादीनां विवाहादृष्टत्वे च प्रागुक्तं वाग्दत्तायास्तदुद्देश्ये मृ
तेऽपि पुनरविगीतशिष्टैरन्येन सह विवाहः क्रियते । अन्यथा कलौ नियोगविधेरपि निषिद्धतया पुनरक्षताविवाहस्य दूराप
स्ततया सदूराचार एव स्यात् । तथा चायमर्थः । वाचा सत्ये कृते सङ्कल्पवाक्येन दानेच्छते सति यस्याः पतिः पतित्वमापकविवाहम
वनाविषयीभूतः पुरुषो म्रियेतेति । न च विहितप्रतिषिद्धत्वाद्विकल्प एव विधवानियोगस्यास्त्विति वाच्यम् । वस्तुनि विकल्पासं
भवात् ॥ नहि विधवायां नियोगात्प्रवृत्तस्य प्रत्यवायो भवति न भवति चेति सम्भवति । नियोगविधेर्व्यस्या म्रियेतेत्यादि वचनेन वा
ग्दत्ताविषयत्वेन निर्धारितेऽविधवाविषये प्रवृत्त्यभावाच्च नियोजयितृणां निन्दा अवश्यं स्त्रीधर्म्मेषु व्यभिचारस्य वर्जनीयस्य
अवश्यात्संयमस्याति प्रशंसनाच्च तुल्यबलत्वस्यापि विधिप्रतिषेधयोरभावात् । तथा च मनुरेव । कामन्तु क्षपयेद्देहं पुष्पमूलफलैः
शुभैः । न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु ॥ जीवनार्थं पुत्रवाञ्च्छया यो निषिद्धः । आसीतामरणात्क्षान्ता नियता ब्रह्म
चारिणी ॥ यो धर्म्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् । अनेकानि सहस्राणि कुमारब्रह्मचारिणाम् । दिवङ्गतानि विप्राणाम
कृत्वा कुलसन्ततिम् । मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता । स्वर्गं गच्छत्यपुत्राऽपि यथा ते ब्रह्मचारिणः ॥ अपत्यलोभाद्या
तु स्त्री भर्त्तारमतिवर्त्तते । सेह निन्दामवाप्नोति पतिलोकाच्च हीयते इति । पुत्रार्थमपि पुत्रवान्तरस्य परां निन्दाति शयपुरस्सरम्प्र
तिषिद्धवान् । पश्चात्स्वयमेव यस्या म्रियेतेत्यनेन वाग्दत्ताविषयनियोगस्य च धर्म्मत्वमुक्तवान् । अनेन विधानेन तु युक्तोऽन्यथा । य
थाविध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् । मिथो भजेता प्रसवात्सकृत्सकृदृतावृताविति विधानमपि दर्शितवान् । घृताभ्यक्तो गुरुर्वै कुर्या
दिः पूर्वोक्तः स्मृत्यन्तरेषु यो विधिः सोऽप्यनेनेति सर्वे नाम्नापरामृश्यते । देवरस्य सर्वथा पिण्डादेरुपलक्षणं । अत नाम गुरुस्त्र

म्। पतिपदं वा चासत्यइति च व्याख्यातमेव। यस्मै वाग्दत्ता स प्रतिग्रहमन्तरेणैव तस्याः पतिरित्यस्मादेव श्लोकात् ज्ञायते। अविवाहितस्यैव
पत्यस्मादुक्तार्थाभिप्रायकतयैव नेयः। यथाश्रुते दोषस्योक्तत्वात्। अतएवाग्रे तत्रोत्पन्नः। अथ यत्तु विवाहितायाः अन्यजातादि नियमा
न्नियुक्तागमनाद्गुमेवेति तन्न देवरस्य तस्या आख्यान्वभापादप्रति। अन्यस्तु स्वर्गमपर्यन्ते स्वामिनः एव वा सत्यासमिविदि। यम्वि
दि। यम्विदेवनूभयोरपीति। नारदः। क्षेत्रिकानुमते बीजं यस्य क्षेत्रे प्रसिच्यते। तदपत्यं द्वयोरेव बीजिक्षेत्रिकयोर्मतम्।
शङ्खलिखितौ। मन्त्रसंस्कारकर्तुरपत्यमित्याङ्गिरसो बीजिक्षेत्रिकयोरनुमतेऽयं द्व्यामुष्यायण इति तत् द्विधा सत्यमिथुश्च ना।
कात्यायनः। क्षेत्रिकस्य मतेनापि फलमुत्पादयेत्तुयः। तस्येह भागिनौ तौ तु न फलं हि विनेकतः। हारीतः। जीवति क्षेत्रजमा
कुरस्मात् व्याम्भृते द्व्यामुष्यायणमनुप्रवीजत्वात्। नाबीजं क्षेत्रं फलति। नाक्षेत्रमी बीजं रोहत्युभयदर्शनादुभयोरपत्यमित्यपरे
। तेषामुत्पादयितुः प्रथमः प्रवरो भवति। द्वौ पिण्डौ निर्वपेद्दद्युरेकस्मिन्पिण्डे द्वावनुकीर्त्तयेत्। द्वितीये पुत्रस्य तृतीये योऽन्यो वेपि
तस्य जीवतो चक्षाणां आसन्नमादित्येके। जीवति क्षेत्रपतौ तस्यैव क्षेत्रजमाहुः। अत्र हेतुरस्यापत्यस्य विज्ञायात्पर्थः। मृते तु
क्षेत्रपतौ। अपुत्राः शयनं भर्तुरित्यादि वक्ष्यमाणमनुवचनाद्व्यात्तस्य मविशिष्टं यस्य पितयापितृक्षेत्रिणा एव न च हेतुरनुम्रवी
ज्ञात्वा क्षेत्रिणो बीजिनश्चाप्यनुमत्यवश्यम्भावादित्यर्थः। तथापि पाककर्ताऽपि जमित्यादि निर्वापेन रूप्यते स्मृतिनिर्वापः पि
ण्डपितृयज्ञस्त्व द्व्यामुष्यायणाः पितृद्वयाय द्वौ पिण्डौ पृथग्दद्युः। एकपिण्डे वा द्वौ पितरावनुकीर्त्तयेत्। एकैकस्मिन् द्वौ द्वावि
तिबोध्या बोध्या। यदि द्विपिता स्यादेकैकस्मिन्पिण्डे द्वौ द्वावुपलक्षयेदित्यापस्तम्बस्मरणात्। तयोरामपि द्वित्वादिविभागः।
द्वितीय इत्यादि। द्वितीयं तृतीयं चारभ्येत्यर्थः। लेपिनश्च बीजिनित्यादि। सप्तकीर्त्तने पिण्डो द्वावनुकीर्त्तयेदित्यर्थः। नारदोपि।
द्व्यामुष्यायणका दद्युर्द्वाभ्यां पिण्डोदके पृथक्। षट्कादर्द्धं समादद्युर्बीजिक्षेत्रिकयोस्तथा। षड्मिति यथा विभागो
पलक्षणम्। बौधायनः। अथाप्युदाहरन्ति। द्विपितुः पिण्डदानं स्यात्पिण्डे पिण्डे च नामनी। त्रयश्च पिण्डाः षण्णां स्युरेवं कुर्व

न्नदुह्यतीति। यस्तांपितृपितामहप्रपितामहानाम्। संएव। मृतस्य प्रसूतोयःक्लीवस्यव्याधितस्यवा। तेनानुमतस्यक्षेत्रे स्वक्षे
त्रजःसचद्विपिताद्विगोत्रश्चद्वयोरपिस्वधारिक्थभाग्भवति। मनुः। यस्तल्पजःप्रमीतस्यक्लीबस्यव्याधितस्यवा। स्वधर्मेणनि
युक्तायांसपुत्रःक्षेत्रजःस्मृतः॥ अत्रसर्वत्रजीवतिक्षेत्रिणिव्याध्यादिप्रतिरुद्धपुत्रोत्पादनेयथायोगंगुरूणाम्भर्तुरपिनियोगः
सम्भिन्न॥ मृतेतुगुरूणामेव। तथाचक्षेत्रजोद्विविधोद्विपितृकःक्षेत्रिपितृकश्चः। गृहेप्रच्छन्नउत्पन्नोजारात्सवर्णादित्य
नत्वेननिस्तीतःक्षेत्रस्वामिनोगूढजोनामपुत्रः। मनुः। उत्पद्यतेगृहेयस्यनचज्ञायेतकस्यसः। सगृहेगूढउत्पन्नस्तस्यस्याद्यस्य
तल्पजः। नचेत्यादि। पुरुषविशेषजन्यत्वेनाज्ञातोपिसवर्णजारजन्यत्वेनज्ञातः। सजातीयेष्वयम्प्रोक्तस्तनयेषुमयाविधि
रितियोगीश्वरोक्तेस्तत्रव्याख्यास्यते। कानीनःकन्यकायामपरिणीतायांसवर्णाज्जातःसमातामहस्तुतोयस्यसाकन्यातस्यैवपुत्रइ
त्यर्थः। परिणीतायान्तुजातोवोढुरेवगूढजः। यथाहमनुः। पितृवेश्मनिकन्यातुयम्पुत्रञ्जनयेद्रहः। तंकानीनम्वदेन्ना
म्नावोढुःकन्यासमुद्भवमिति। एतैर्वाक्यैरपरिणीतायाम्पितृगृहावस्थितायांसवर्णजारजःकानीनस्तच्चमातामहस्तुनइत्युक्त
न्तद्विरुद्धम्ब्रह्मपुराणीयङ्कल्पतरुलिखितंवाक्यम्। अदत्तायान्तुयोजातःसवर्णेनपितुर्गृहे। सकानीनःसुतस्तस्ययस्मैसा
दीयतेपुनः॥ नारदवाक्यमपितत्रैव। कानीनश्चसहोढश्चगूढायांयश्चजायते। तेषांवोढापिताज्ञेयस्तेचभागहराःस्मृताइ
ति। अत्रादत्तायांसवर्णात्पितुर्गृहेजातस्यकानीनत्वमविरुद्धम्। यस्मैसापुनर्दीयतेतस्यासौसुतइतितुविरुद्धंनारद
वचनेपिगूढोत्पन्नसहोढकानीनस्यापिवोढैवपितेतिप्रतिपादितम्। मनुनापिवोढुरित्युक्तंनमातामहस्येति। यत्तुमिताक्षरा
कृतायदानूढायामुत्पन्नस्तर्हिमातामहस्तुतोप्यूढायान्तस्यवोढुरेवेतिव्यवस्थाकृता। सापिमनसिनचमत्कारमादधाति। तथा
सतिहिकन्याशब्दवाच्यायामपरिणीतायामजातत्वात्तस्यकानीनत्वन्दुर्वचम्। नचकन्याशब्दःअपत्यमात्रपरोविशेषणवैयर्थ्यात्
। गूढजादीनामपितत्रोत्पन्नत्वेनाव्यावर्तकत्वात्। सर्वाहिकस्यचित्कन्यैव। ब्रह्मपुराणवचनविरोधश्चदुष्परिहरःस्यात्।

न्यायामित्युक्तत्वात्। अत एव मानवविरोधोऽपि दूरसमाधेय एव। कल्पतरुकारेणापि परस्परविरुद्धवचनानि लिखितवता हृदयस्थ-

न्यवस्थानभिधानाद्विरोध एव न प्रतिसंहितः। तेन हि मातामहस्य सुतत्वं कानीनस्य बोधयन्ति बहूनि वचनान्युपन्यस्य तद्विरु-

द्धं ब्रह्मपुराणनारदवचनेन तदनुपदमेव लिखिते। तत्र वसिष्ठस्य वचः। कानीनः पञ्चमः यः पितृगृहेऽसंस्कृतायाः कामादुत्पाद्य-

ते स कानीनो मातामहस्य पुत्रो भवतीत्याह। अथाप्युदाहरन्ति। अपुत्रां दुहितां यस्य पुत्रं विन्देत् तत्सुतः। प्रोञ्चीमातामहस्य-

न दद्यात् पिण्डं हरेद्धनमिति। नारदस्यैवं। अज्ञातपितृको यस्तु कानीनो मूकमातृकः। मातामहस्य दद्यात् पिण्डं रिक्थं हरेत् तु

। बौधायनस्यापि। असंस्कृतामनतिसृष्टां यामुपगच्छेत् तस्यां यो जातः स कानीन इति। अत्र प्रतिविरुद्धः। मातामहसुत-

त्वं कानीनस्य प्रतिपादयतां वचनानां सर्वथा यानदत्तायां सवर्णाज्जातविषयत्वम्। वोढुसुतत्वं प्रतिपादयतां तु सङ्कल्पितायां स-

प्तपदीपर्यन्तं विवाहभावनाभावभार्यात्वमप्राप्तायां यः सवर्णादुत्पन्नस्तद्विषयत्वम्। अदत्तायामिति नारदवचने बौधायनव-

चने चानतिसृष्टामिति यदाभ्यामसमाप्तविवाहभावनोच्यते न तु सर्वथा दत्तायुक्तस्त्वैतत्। सङ्कल्पेन पितृस्वत्वापगमपरिणेतृस्व-

त्वोत्पत्त्युपक्रमात्। पितुः सर्वथा स्वत्वापगमाभावाच्च कानीनत्वव्यपदेशस्य परिणेतृस्वत्वोपक्रमेण तदीयत्वस्य च सम्भवात्। पू-

र्णापितृस्वत्वे तु न तदुत्पन्नस्य मातामहसुतत्वोपपत्तेः। मनुवचनस्याप्ययमर्थः। या सङ्कल्पिताऽसमाप्तविवाहभावनाऽनन्त-

रकन्यापरिणेतृभार्यात्वस्यानिष्पत्तेः। तादृशकन्यासमुद्भवं कानीनं नामानं वोढुर्येन विवाह्यते तस्य च देहीति। अत एव

पितृवेश्मनीत्यपि सङ्गतमनुवादतया। विवाहानन्तरमेव भर्तृगृहप्रवेशात्। मिताक्षरायास्याप्ययमर्थः। अनूढायां वोढु-

मनुपक्रान्तायाम्। ऊढायां वोढुमुपक्रान्तायामिति। आदिकर्मणि क्तः। न तु भूते। समाप्तविवाहभावनायान्तु सवर्णाज्जारजा-

तो गूढजः। अत एव गृहे प्रच्छन्न उत्पन्नो भर्तृगृहे तेनाज्ञातो जात इत्युक्तम्। पुनर्भूर्द्विविधा। विवाहमात्रेणाक्षताप्यन्येन परि-

णीयमानैका। अन्या तु विवाहात्प्रागेव पुरुषसम्भोगदूषिता। तस्यां जातः पौनर्भवः। अत एवाक्षतायां क्षतायां वा जात इत्यु

क्रम् । मनुः । या पत्या वा परित्यक्ता विधवा वा स्वयेच्छया । उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते । कात्यायनः । क्लीवं विहाय पतितं या पुनर्लभते पतिम् । तस्यां पौनर्भवो जातो व्यक्तमुत्पादकस्य सः । वशिष्ठविष्णू । पौनर्भवश्चतुर्थ इति । चतुर्थत्वन्तदनुक्रमापेक्षया । माता भर्त्राज्ञया पिता वा यमन्यस्मै दद्यात्स तस्य दत्तकः पुत्रः । तथा च मनुः । माता पिता वा दद्यातां यमद्भिः पुत्रमापदि । सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुतः ॥ आपदीत्युक्तेरनापदि दातुः प्रत्यवायः । मातापितरौ पृथगेकं मिलितौ वा । अद्भिरिति दानप्रतिग्रहप्रकारोपलक्षणम् । सदृशं सवर्णम् । प्रीतिसंयुक्तमिति क्रियाविशेषणम् । एकः पुत्रस्तु न देयो न प्रतिग्राह्यः । तथा च वशिष्ठः । शुक्रशोणितसम्भवः पुरुषो मातापितृनिमित्तकस्तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतः । न त्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा । स हि सन्तानाय पूर्वेषाम् । न तु स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्तुरिति । अत्र भर्त्रनुज्ञां विना स्त्रिया पुत्रप्रतिग्रहनिषेधाद्दत्तानुज्ञे भर्तरि मृते विधवया कृतः पुत्रो दत्तको न भवतीत्याहुस्तन्न । अपुत्रस्य गत्यभावात्पुत्रकरणस्यावश्यकर्तव्यतायाः स्वीकृततया भर्तुरनुज्ञाया वा प्राप्तेः । न चैवमनुज्ञानाद्भर्तुश्चेति व्यर्थम् । वाचनिकाभावाच्च स्त्रीयानुमतेः सर्वत्रावश्यकत्वादिति वाच्यम् । मुमूर्षोः पत्युरन्तरे पुत्रवतो वानुज्ञासम्भवाद्भार्याया यदि स्वपुत्रार्थमेव तत्प्रतिषेधस्य । सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत् । सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुरिति । पुत्रकार्यं श्राद्धादिः सपत्नीपुत्रेण सिद्धमेवेत्यनुज्ञां विना नाद्यस्याः पुत्रो न कार्यः । उभयोरपि तत्कार्यं स्यात्तेनाभिध्यानेः । भर्तुर्हि सत्त्वे स एव मुख्यस्तस्याश्च पितृवद्दत्तकग्रहणे इति वृद्धस्याप्यनुमतिमन्तरेण न प्रतिग्राह्य इति तात्पर्य्यार्थो । वस्तुतस्तु भ्रातृणामेकजातानामेकश्चेत्पुत्रवान्भवेत् । सर्वास्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीदिति वचनवदेतद्वचनमपि भ्रातृपुत्रस्य गौणदत्तकपुत्रत्वादिसम्भवेऽन्यः पुत्रप्रतिनिधिर्न कार्य इत्यर्थकं न त्वमिताक्षरास्मृतिचन्द्रिकादौ व्याख्यातं तथा भर्तरि जीवति भार्य्या या स्यात्तच्चेत्तदनुमता न पुत्रीकरणे इति मनुरप्युक्तमनुमतमेव [illegible] । [illegible]

णु तस्मिन्पारतन्त्र्यात्तदनुमतिरेवापेक्षिता । एवं सति दृष्टार्थता भवति प्रतिषेधस्य । तस्माद्दत्तानुज्ञेन मृतेनापि भर्त्रा भार्य्यायाद
त्तकादिकरणमविरुद्धम् । मनुवचनद्वयस्य पूर्वार्थकार्थकत्वेनोपपत्तिरपि मिताक्षरादावेवोक्ता । यद्यपि पुत्रैरिक्थग्रहणाधिकारि
क्रमपरे पत्नीदुहितरश्चेत्यत्र चापुत्रस्त्रीधनमित्यत्र च भ्रातृपुत्रसपत्नीपुत्रयोः पत्न्यादिभर्त्राद्यभावेऽधिकारप्रतिपादनमविरोधाप
त्तेरिति । तच्चात्रैव प्रपञ्चयिष्यते । अनेकपुत्रसद्भावेऽपि ज्येष्ठः पुत्रो न देयः । ज्येष्ठेन जातमात्रेण पुत्री भवति मानव इति पु
त्रकार्यकरत्वेनास्यैव मुख्यत्वाभिधानात् । क्रीतस्वयंदत्तकृत्रिमेष्वपि समानन्यायत्वादेकपुत्रज्येष्ठपुत्रयोर्निषेधः । अत एव बह्वृच
ब्राह्मणे हरिश्चन्द्रोपाख्याने क्रीतेऽपि ज्येष्ठपुत्रप्रतिषेधलिङ्गदर्शनं स ज्येष्ठं पुत्रं निगृह्णीत उवाचेति । पुत्रप्रतिग्रहप्रकारश्च । पुत्र
प्रतिग्रहीष्यन्बन्धूनाहूय राजनि चावेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वाऽदूरबान्धवं बन्धुसन्निकृष्ट एव प्रतिगृह्णीयादिति वसि
ष्ठोक्तः । अदूरबान्धवमित्यत्र देशभाषाविप्रकृष्टस्य प्रतिषेधः । एवं क्रीतादिष्वपि । समानन्यायत्वात् । कस्यचित्त्वदूरबा
न्धवमसन्निकृष्टमेवेति पाठं लिखित्वाऽदूरबान्धवं सन्निहितमातुलादिकम् । असंनिकृष्टमेव । अविज्ञातगुणदोषमपि । अ
प्यर्थे एवकार इति व्याख्यानम् । सन्देहे चोत्पन्ने दूरेबान्धवे शूद्रमिव स्थापयेद्धि ज्ञायते ह्येकेन च बहूंस्त्रायतामितीति वसिष्ठ
वचनमधिकं लिखित्वैवं विवृतम् । सन्देहे बान्धवानामसन्निधानाज्ज्ञातिसन्देह उत्पन्ने शूद्रमिव संस्कारहीनमेव स्थापयेत् । शू
द्रोऽपि हि जातपुत्रो भवतीत्यभिप्राय इति । क्रीतस्तु पुत्रस्ताभ्यां विक्रीत इति । ताभ्यां मातापितृभ्यां मात्रा वा भर्त्रनुज्ञया पित्रा वा मूल्य
मत्तुपरस्य दत्तः । एकपुत्रः ज्येष्ठपुत्रं वर्ज्जयित्वा आपद्यप्येव । सजातीयेष्वयमुपसंहारात्सवर्ण एव । यत्तु मनुनोक्तम् । क्रीणी
याद्यस्त्वपत्यार्थे मातापित्रोर्यमन्तिकात् । स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वेति । तद्गुणैः सदृशोऽसदृशो वेति व्याख्येय
मनुज्ञायाः सवर्ण इति सजातीयेष्वित्यनेन विरोधापत्तेः । बौधायनोऽपि । मातापित्रोर्हस्तात्क्रीतोऽन्यतरस्य वा योऽपत्यार्थे गृह्यते
स क्रीतक इति । कृत्रिमस्तु पुत्रार्थिना स्वयं धनक्षेत्रादिप्रदर्शनादिना प्रलोभ्य तन्मे पुत्रो भवेति यः सवर्णः पुत्रीकृतः स उच्यते ।

मातापितृविहीनश्चेत् । तत्सद्भावेतत्परतन्त्रतयातेनपुत्रीभवितुमशक्यत्वात् । मनुर्विष्णुश्चापि । सदृशंयम्प्रकुर्य्यात्तंगुणदोषविचक्षणम् । पुत्रंपुत्रगुणैर्य्युक्तंसविज्ञेयस्तुकृत्रिमइति ॥ सदृशंसवर्णम् । प्रकुर्य्यात्तंमातापितरौमिलितौप्रत्येकम्वा । दत्तात्मातुस्वयन्दत्तःस्वयमेवस्वात्मानमन्यस्मैदत्तवांस्तवाहम्पुत्रोभवामीतिस्वयमुपगतोमातापितृविहीनस्ताभ्यान्त्यक्तोवासवर्णोपतिमःसउच्यते । तथाचमनुः । मातापितृविहीनोयस्त्यक्तोवास्यादकारणात् । आत्मानंस्पर्शयेद्यस्मैस्वयन्दत्तस्तुसस्मृतइति अकारणात्पातित्यादिकारणमन्तरेणैवदुर्भिक्षादौपोषणाद्यसामर्थ्यादिनामातापितृभ्यान्त्यक्तःस्वतंत्रइत्यर्थः । यस्तुगर्भेस्थितोऽपरिणीतावस्थायांसवर्णाज्जाराज्जातोगर्भिण्यान्तस्याम्परिणीयमानायांविन्नःप्राप्नः । विदृलाभइत्यस्यनिष्ठान्तंरूपम् । नुदविदेत्यादिसूत्रेणनिष्ठासम्बन्धितकारस्यनकारः । ससहोढजउच्यते । सवोढुःपुत्रः । तथाचमनुः । यागर्भिणीसंस्क्रियतेज्ञाताऽज्ञातापिवासती । वोढुःसगर्भोभवतिसहोढइतिचोच्यते ॥ विष्णुरपि । सहोढःसप्तमः । गर्भिणीयासंस्क्रियतेतस्याःपुत्रःसतुपाणियहस्येति । सप्तमइतितदीयपाठक्रमापेक्षया । उत्सृष्टोमातापितृभ्यान्त्यक्तोयोहृतेपुत्रार्थिनासोऽपविद्धोनामग्रहीतुःपुत्रः । एतावपिसवर्णावेव । तथाविष्णुरपि । अपविद्धस्त्वेकादशःपित्रामात्राचपरित्यक्तःसयेनगृहीतः । वसिष्ठः । अपविद्धःपञ्चमोयंमातापितृभ्यामपास्तंगृह्णीयात् । एकादशत्वम्पञ्चमत्वंतत्तत्पाठक्रमापेक्षया । यस्तुमनुनागौणपुत्रमध्येपारशवाख्यःशूद्रापुत्रःपरिगणितःसयोगीश्वरेणसजातीयेष्वयंप्रोक्तस्तनयेषुमयाविधिरित्युक्तोपसंहारव्याजेननियमकरणात्तस्यचकथञ्चिदपिसजातीयत्वासम्भवान्नोक्तः । अतएवजातोपीत्यादिनाग्रन्थेनसउक्तः । द्विजातस्यशूद्रापुत्रस्यान्याभावेपिपित्र्यचतुर्थ्यरणाभावाच्च । तच्चवक्ष्यते । तथाचमनुः । यंब्राह्मणस्तुशूद्रायांकामादुत्पादयेत्सुतम् । सपारयन्नेवशवस्तस्मात्पारशवःस्मृतइति । वैधायनोपि । द्विजातिप्रवराच्छूद्रायांजातःकामात्पारशवइति । तच्चौरसादयोगौणाःपुत्रामुख्यस्त्वौरसएव । तथाचमनुः । क्षेत्रजादीन्सुतानेतानेकादशयथोदितान् । पुत्रप्रतिनिधीनाहुःक्रियालोपान्मनीषि

णः ॥ क्रियालोपात्परिक्षयादिक्रियालोपादिति प्रतिनिधित्वे हेतुः । स्मृतिचन्द्रिकायान्तु । औरसाभावे तत्क
र्त्तृकश्राद्धादिक्रियालोपाद्बिभ्यतो मनीषिणश्चत्वय एकादशपुत्रप्रतिनिधीकर्त्तव्येनाङ्गरितिव्याख्यातम् । बृहस्पतिः ॥ पुत्रास्त्र
योदश प्रोक्ता मनुनायेऽनुपूर्वशः । सन्तानकारणन्तेषामौरसः पुत्रिका दश ॥ पुत्रप्रतिनिधीकर्त्तव्येनाङ्गरितिव्याख्यातम् । बृ
हस्पतिः । आज्यं विना यथा तैलं सद्भिः प्रतिनिधिः स्मृतः । तथैकादश पुत्रास्तु पुत्रिकौरसयोर्विना । ब्रह्मपुराणे । दत्तकः स्वय
न्दत्तः कृत्रिमः क्रीत एव च । अपविद्धश्च ये पुत्रा भरणीयाः सदैव हि ॥ भिन्नगोत्राः पृथक्पिण्डाः पृथग्वंशकरास्तथा । सूतके मृ
तके वापि त्र्यहाशौचस्य भागिनः । अपि वस्त्रान्नदातृणां क्षेत्रबीजवतान्तथा । शूद्रो दासः पारशवो विप्राणां विद्यते क्वचित् ॥
शह्वानुशापदग्धानान्नियंक्षयवतान्तथा । अयसंग्रामशीलानां कदाचिद्वा भवन्ति ते । औरसो यदि वा पुत्रस्त्वथवा पुत्रिकासु
तः । न विद्यते तत्र तेषां विज्ञेयाः क्षेत्रजादयः । एकादश पृथग्भावा वंशमात्रकरास्तु ते । श्राद्धादि दानवन्त्वेते तेषां कुर्वन्ति नि
त्यशः । गूढोत्पन्नश्च कानीनः सहोढः क्षेत्रजस्तथा । पौनर्भवश्च वैश्यानां राजदण्डभयादपि । वर्जिताः पञ्च धनिनां शेषाः स
र्वे भवन्त्यपि । शूद्राणान्दासवृत्तीनां परपिण्डोपजीविनाम् । पराय तन्नशरीराणां न कश्चित्पुत्र इष्यपि । तस्माद्दासस्य दासा
श्च जायते दास एव हीति । एवमेतेषां पुत्राणां स्वरूपं निरूप्य तेषां दायग्रहणं निरूप्यते । तत्र योगीश्वरः । पिण्डदोंऽशह
रश्चैषां पूर्वाभावे परः परः ॥ पर इति वीप्सा दर्शनात्पूर्वपूर्वाभाव इत्यपि वीप्सावसेया । औरसपौत्रिकेयसमवाये त्वेवमौरसे
सति पुत्रिकासुतस्य दायग्रहणाभावे प्रसक्ते मनुरपवदति । पुत्रिकायां कृतायान्तु यदि पुत्रोऽनुजायते । समस्तत्र विभागः स्या
ज्ज्येष्ठता नास्ति हि स्त्रिया इति ॥ बृहस्पतिरपि । एक एवौरसः पित्र्ये धने स्वामी प्रकीर्त्तितः ॥ तत्तुल्या पुत्रिका प्रोक्ता भर्त्तव्यास्त्व
परे सुताः । न च पुत्रिकाया एव प्रथमपुत्रे जाते पश्चादौरसोत्पत्तौ पुत्रिकापुत्रस्य ज्येष्ठत्वात्स्त्रीत्वाच्च ज्येष्ठांशभागिता भवेदिति
युक्तम् । तस्य पौत्रत्वात् । तदाह मनुः । अकृता वा कृता वापि यं विन्देत्सदृशात्सुतम् । पौत्री मातामहस्तेन दद्यात्पिण्डं हरे

क्तमिति ॥ पुत्रिकाहि पुत्रस्तत्पुत्रो दौहित्रोऽपि पौत्रस्तद्वान्पौत्री भवति । पौत्रस्य च ज्येष्ठत्वेनांशातिरेको नैवश्रुतः । नच यस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति पुत्रिकापुत्रस्यापि पुत्रत्वाभिधानात्तद्विरोध इति वाच्यम् । मनुविरोधेन तस्य गौणत्वपरत्वात् दानृत्वनिमित्तपुत्रत्वाभिप्रायकत्वात् । पुत्रिकायाः पुमपत्यत्वाभावाद्युवयोगो बांपुत्रपदप्रतिपाद्यत्वं नाथ स्वजन्य पुत्रिकाजन्य पुत्रस्यापि । पुंस्त्वे सत्यपि जन्यत्वाभावात् । जन्यपुंस्त्वस्यैव पुत्रपदशक्यत्वात् । तथान्येषामपि पुत्राणां पूर्वपूर्वसत्त्वे सर्वभागानर्हत्वमनेन प्रसक्तमपवदति । वसिष्ठः । तस्मिंश्चेत्प्रतिगृहीत औरस उत्पद्येत चतुर्थभागभागी स्याद्दत्तक इति । दत्तकग्रहणं क्रीतादीनामुपलक्षणम्पुत्रीकरणाविशेषात् । उत्पन्ने त्वौरसे पुत्रे चतुर्थांशहराः सुताः ॥ सवर्णा असवर्णास्तु ग्रासाच्छादनभाजस्तादृशिकात्यायनवचनाच्च । सवर्णाः क्षेत्रजदत्तकादयस्ते सत्यौरसे चतुर्थांशहराः । असवर्णाः कानीनगूढोत्पन्नसहोढपौनर्भवास्ते तु सत्यौरसे न चतुर्थांशहरा अपि । किन्तु ग्रासाच्छादनमात्रभागिन इत्यर्थः कात्यायनवचनस्य । अत एव विष्णुः । अप्रशस्तास्तु कानीनगूढोत्पन्नसहोढजाः । पौनर्भवश्चनैवैते पिण्डरिक्थांशभागिन इत्यौरसे सति कानीनादीनाञ्चतुर्थांशभागित्वं प्रतिषेधति । कानीनादीनामप्यौरसाद्यभावे त्वेषपित्र्यसकलधनग्रहणम् । पूर्वाभावे परः पर इति वचनात् । यच्चमनुवचनम् । एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः । शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनमिति । तदपि दत्तकादीनामौरसप्रतिकूलत्वोत्पन्ननिर्गुणत्वे च चतुर्थांशादिनिषेधपरं कानीनादिपरञ्च । तेषां सत्यौरसे ग्रासाच्छादनमात्रभागित्वस्योक्तत्वात्तदेकमूलकत्वकल्पनात् । क्षेत्रजस्य तु सत्यौरसे पञ्चमषष्ठांशौ मनुनैवोक्तौ । षष्ठं तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात् । औरसो विभजन्दायम्पित्र्यं पञ्चममेव वेति । प्रतिकूलत्वनिर्गुणत्वसमवाये षष्ठमेकतरसद्भावे पञ्चममिति व्यवस्था । वस्तु समग्रधनभोक्तास्यादौरसोपि जघन्यजः ॥ त्रिभागं क्षेत्रजो भुङ्क्ते चतुर्थाम्पुत्रिकासुत इत्यादि ब्रह्मपुराणादिवचनैः समभागाईं तयामन्वादिभिरुक्तस्य पुत्रिकापुत्रस्य चतुर्थांश उक्तः पञ्चमषष्ठांशार्हतयोक्तस्य क्षेत्रजस्य तु तृतीयांश उक्तः स पुत्रिकापुत्रस्यात्यन्तनि

र्गुणत्वे सवर्णत्वे च । क्षेत्रजस्य चात्यन्तसगुणत्वानुकूल्ययोर्व्यवस्थापनीयः औरसाभावे दत्तकस्याखिलधनग्रहणार्थं पृथगारब्धम्मनुना । उपपन्नो गुणैः सर्वैः पुत्रो यस्य तु दत्त्रिमः । स हरेतैव तद्रिक्थं सम्प्राप्तोऽप्यन्यगोत्रतः ॥ स्वगोत्रसम्प्राप्तः किमुतेति किमुत्यन्त्यार्थोऽपिशब्दः । जनकधनग्रहणन्तु तस्य प्रतिषिद्धन्तेनैव । गोत्ररिक्थे जनयितुर्न्न भजेद्दत्त्रिमः सुतः । गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधेति ॥ ददतः सम्बन्धी पिण्डस्ततो व्यपैति । स्वधा पितॄतृप्तिहेतुरिति पिण्डविशेषणम् । गोत्ररिक्थानुगइति हेतुगर्भम् । दत्तकमात्रविषयकमपि सत्यौरसे चतुर्थांशहरत्वप्रतिपादकं पृथगारब्धं वसिष्ठेन । तस्मिंश्चेत्प्रतिगृहीते औरस उत्पद्येत चतुर्थभागभागी स्याद्दत्तक इति । क्रीतादिसाधारणन्तु कात्यायनीयम्प्रागेव पठितम् । तत्र तृतीयांशहरइति कल्पतरुलिखितः पाठो यदि साकरस्तर्हि दत्तकादीनामौरसापेक्षया सगुणत्वे तृतीयांशहरत्वमिति व्याख्येयः । मनुनैव क्षेत्रजस्यौरससमभागभागित्वमप्युक्तम् । यवीयान् ज्येष्ठभार्य्यायाम्पुत्रमुत्पादयेद्यदि । समस्तत्र विभागः स्यादिति धर्म्मो व्यवस्थितः ॥ उपसर्ज्जनं प्रधानस्य धर्म्मतो नोपपद्यते । पिता प्रधानम्प्रजने तस्माद्धर्म्मेण तम्भजेत् । धनं यो बिभृयाद्भ्रातुर्मृतस्य स्त्रियमेव वा । सोऽपत्यं भ्रातुरुत्पाद्य दद्यात्तस्यैव तद्धनम् ॥ यद्येकरिक्थिनौ स्यातामौरसक्षेत्रजौ सुतौ । यस्य यत्पैतृकं रिक्थं स तद्गृह्णीत नेतरः ॥ यद्यप्यौरसप्रक्रमात् समभागभागित्वं क्षेत्रजस्य तन्निरूपितमेवोक्तमिव भाति । तथापि वाक्यविरोधे प्रक्रमस्य बाध्यत्वाद्बीजिसमभागित्वपरन्तदिति बोध्यम् । अत एवोत्तरवचने पितुर्बीजिनः प्राधान्यमुपन्यस्यति । सोऽपत्यं भ्रातुरुत्पाद्येत्यनेनापि यस्य क्षेत्रजस्य दीयन्धनन्तस्मै दद्यादिति भ्रातृस्थानीयत्वात्तस्य स समभागितां प्रतिपादयति । एवमन्यान्यप्युच्चावचभागान् क्षेत्रजादीनां प्रतिपादयन्ति बृहस्पत्यादिवचनानि कथञ्चिद्व्यवस्थापनीयानि । तत्र बृहस्पतिः । क्षेत्रजाद्याः सुतास्त्वन्ये पञ्चषट्सप्तभागिनः । हारीतः । विभजिष्यमाण एकविंशकांनीनाय दद्यात् । विंशम्पौनर्भवाय । एकोनविंशं द्व्यामुष्यायणाय । अष्टादशं क्षेत्रजाय । सप्तदशं पुत्रिकापुत्राय । इतरानौरसाय पुत्राय दद्युः । ब्रह्मपुराणे ॥ समग्रधनभोक्ता स्यादौरसेऽपि जघन्यजः ॥

त्रिभागंक्षेत्रजोभुङ्क्तेचतुर्थंपुत्रिकासुतः । कृत्रिमःपञ्चमम्भागंषड्भागंगूढसम्भवः । सप्तांशस्यापविद्धस्तुकानीनश्चाष्टमां
शकः । नवभागंसहोढश्चक्रीतोदशममश्नुते । पौनर्भवस्तुपरतोद्वादशंस्वयमागतः । त्रयोदशमभागन्तुशौद्रोभुङ्क्तेपितुर्द्ध
नात् । तद्गोत्रजोवाधर्मिष्ठोब्रह्मचार्य्यथवापुनः । अत्रौरसेसतीतिसर्वत्रज्ञेयः । पूर्वाभावेपरःपरइतिवचनात् । ब्रह्मपु
राणीयस्यसमयेत्यादिप्रथमश्लोकस्यपूर्वमेवविषयव्यवस्थोक्ता । अन्येषामपिगुणतारतम्येनदेशाचारानुसारेणवायथायथंव्य
वस्थाद्रष्टव्या । षड्भागंषष्ठम्भागं । नवभागंनवमंभागमित्यर्थः । अन्यथार्थासङ्गतेःप्रक्रमभङ्गप्रसङ्गाच्च । परतोदशमात्परमे
कादशम् । त्रयोदशमेत्यार्षं । शौद्रःशूद्रापुत्रः । यदपिमनुनापुत्राणांषट्कद्वयमुक्त्वापूर्वषट्कस्यदायादबान्धवत्वमुत्तरषट्कस्यचा
दायादबान्धवत्वमुक्तम् । औरसःक्षेत्रजश्चैवदत्तःकृत्रिमएवच । गूढोत्पन्नोपविद्धश्चदायादाबान्धवाश्चषट् ॥ कानीनश्चसहो
ढश्चक्रीतःपौनर्भवस्तथा । स्वयंदत्तश्चशौद्रश्चषडदायादबान्धवाइति । तदपिस्वपितृसपिण्डसमानोदकानांसन्निहितरि
क्थहरसंतत्यभावेपूर्वषट्कस्यतद्रिक्थहरत्वमुत्तरषट्कस्यतुतन्नास्ति । पितृरिक्थहरत्वन्तुसर्वेषामपिपूर्वपूर्वाभावेसमानमेवेतितद्दाया
दादायादत्वविभागोनोपपद्यते । पूर्वाभावेपरःपरइतिवचनात् । एकएवौरसःपुत्रःपित्र्यस्यवसुनःप्रभुरित्युक्त्वा । तस्मात्ते
नपितरःपुत्रारिक्थहराःपितुरितिवचनस्यगौणपुत्राणामेवसर्वेषाम्पितृरिक्थहारित्वप्रतिपादनपरत्वाच्च । दायादशब्दस्यदाया
दानपिदापयेदित्यादौपुत्रव्यतिरिक्तेरिक्थहारिष्वेवप्रचुरप्रयोगाच्च । बान्धवत्वंसपिण्डत्वसमानगोत्रत्वाभ्यामुदकदानादिका
र्य्यकरत्वंषट्कद्वयस्यापिसमानमेवेत्येतदर्थकम् । यत्तुहारीतवचनम् । षड्बन्धुदायादाःसाध्व्यांस्वयमुत्पादितःक्षेत्रजःपौनर्भ
वःकानीनः । पुत्रिकापुत्रोगूढोत्पन्नोगृहइति । बन्धुदायादाः । दत्तःक्रीतोपविद्धःसहोढःस्वयमुपगतःसहसादृष्टश्चेत्यबन्धु
दायादाइति ॥ साध्व्यांस्वयमुत्पादितऔरसइत्यर्थः । सहसादृष्टोयोमातापित्रादिविहीनोकस्माद्दृष्टःकेनचित्पारितोथमम
त्वंपुत्रोभवेत्युक्तस्तथातिप्रतिपद्यते । कृत्रिमइतियावत् । तत्रमनुविरोधःस्पष्टः । तेनकानीनपौनर्भवयोरबन्धुदायादमध्येपरि

गणनात्। हारीतेनबन्धुदायादमध्ये दत्तकृत्रिमापविद्धपुत्रव्यवच्छेदाभावात्। तस्मादेवंसवर्णादिभेदेनदेशाचारभेदेनवाविरो
धःपरिहरणीयः। बौधायनस्तुमन्वनुसारेणैवाह। औरसम्पुत्रिकापुत्रंक्षेत्रजन्दत्तकृत्रिमौ। गूढजमपविद्धञ्चरिक्थ
भाजःप्रचक्षते। कानीनञ्चसहोढञ्चक्रीतम्पौनर्भवन्तथा। स्वयन्दत्तन्निषादञ्चगोत्रभाजःप्रचक्षतइति। औरसपुत्रिकापु
त्रक्षेत्रजकानीनगूढोत्पन्नापविद्धसहोढपौनर्भवदत्तकस्वयमुपगतकृतकक्रीतानभिधायाहदेवलः। एतेद्वादशपुत्रास्तु
सन्तत्यर्थमुदाहृताः। आत्मजाःपरजाश्चैवलब्धायादृच्छिकास्तथा। तेषांषड्बन्धुदायादाःपूर्वेऽन्येपितुरेवषट्॥ विशेषश्चापि
पुत्राणामानुपूर्व्याद्विशिष्यते॥ सर्वेह्यनौरसस्यैतेपुत्रादायहराःस्मृताः। औरसेपुनरुत्पन्नेतेषुज्येष्ठ्यन्नविद्यते। तेषांसवर्णा
येपुत्रास्तेतृतीयांशभागिनः। हीनास्तमुपजीवेयुर्ग्रासाच्छादनसंभृताः। आत्मजत्वादिकम्परिगणितेपुत्रयथायथंस्पष्टमेव।
अनौरसस्य। नविद्यतेऔरसोयस्यतस्येतिबहुव्रीहिः। नारदोपि। औरसःक्षेत्रजश्चैवपुत्रिकापुत्रएवच। कानीनश्चसहो
ढश्चगूढोत्पन्नस्तथैवच। पौनर्भवोपविद्धश्चदत्तःक्रीतःकृतस्तथा। स्वयञ्चोपगताःपुत्राद्वादशैतेप्रकीर्त्तिताः॥ एषांषड्बन्धु
दायादाःषडदायादबान्धवाः। पूर्वःपूर्वःस्मृतःश्रेष्ठोजघन्योयोऽनुत्तरः। क्रमाद्यातेप्रवर्त्तन्तेमृतेपितरितद्धने। ज्यायसो
ज्यायसोऽभावेजघन्यस्तदवाप्नुयात्। मनुः। श्रेयसःश्रेयसोऽलाभेपापीयान्रिक्थमर्हति। बहवश्चेत्तुसदृशाःसर्वेरिक्थस्यभा
गिनः। बृहस्पतिः। दत्तोपविद्धःक्रीतश्चकृतःशौद्रस्तथैवच। जातिशुद्धामध्यमास्तेसर्वेरिक्थसुताःस्मृताः॥ क्षेत्रजोगर्हितः
सद्भिस्तथापौनर्भवःसुतः। कानीनश्चसहोढश्चगूढोत्पन्नस्तथैवच। हारीतः। शूद्रापुत्राःस्वयंदत्तायेचैतेक्रीतकाःसुताः। स
र्वेतेगोत्रिणःप्रोक्ताःकाण्डपृष्ठानसंशयः। स्वकुलंपृष्ठतःकृत्वायोवैपरकुलंव्रजेत्। तेनदुश्चरितेनासौकाण्डपृष्ठोनसंशयः
। यमः। आपद्यपिह्युपगतोयश्चस्याद्दैत्यजोवीसुतः। सर्वेतेमनुनाप्रोक्ताःकाण्डपृष्ठास्तथा। कुलंकाण्डमितिख्यातंयस्मा
त्पूर्वाश्रितेजकः। तत्रज्येष्ठतरोयःस्यात्समन्वेकाण्डेविनिर्दिशेत्। स्वकुलंपृष्ठतःकृत्वायोवैपरकुलंव्रजेत्। तेनदुश्चरितेनासौ

काण्डपृष्ठइतिस्मृतः । वैश्यवीशूद्रेतिकस्यचित् । उक्तोपसंहारमुखेननियममाहात्रयोगीश्वरः । सजातीयेष्वयम्प्रोक्तस्त
नयेषुमयाविधिः । अयंपूर्वाभावेपरःपरोधनभागित्युक्तोयोमयाविधिःससजातीयेषूत्पादकसजातीयेष्वेवक्षेत्रजादिषुज्ञे
योनविजातीयेषुतत्रकानीनगूढोत्पन्नसहोढपौनर्भवानांसवर्णत्वज्ञानकद्वारेणस्वरूपेणतेषुवर्णजातिलक्षणाभावात् वर्ण
जातिविवेकमभिधायविन्नास्वेषविधिःस्मृतइतियोगीश्वरेणैवाभिधानात् । अनुलोमजानांमूर्द्धावसिक्तादीनामौरसेष्वेवा
न्तर्भावाच्चतुस्त्रिद्व्येकभागाइत्यादिनाभागक्लृप्तिरुक्ता । तेनतेषामप्यभावेक्षेत्रजादयःपित्र्यरिक्थहारिणः । शूद्रापुत्रस्यत्वौर
सत्वेपिनक्षात्त्रपित्र्यधनभागित्वमन्याभावेप्यस्ति । यथाहमनुः । यद्यपिस्यात्तुसत्पुत्रोयद्यपुत्रोपिवाभवेत् । नाधिकन्दशमाद्द
द्याच्छूद्रापुत्रायधर्मतः । यदिसत्पुत्रोविद्यमानस्सवर्णापुत्रोयदिवाऽपुत्रोऽविद्यमानस्सवर्णापुत्रोभवेत्तस्मिन्मृतेक्षेत्रजादिः
पुत्रोन्योवारिक्थहारीशूद्रापुत्रायतद्धनाद्दशमांशादधिकंनदद्यात् । अस्मादेववचनात्सवर्णापुत्राभावेक्षत्रियावैश्यापुत्रयोः
सकलविप्रपितृधनग्रहणंगम्यते । यत्तुप्राक्तनंत्रिद्व्येकभागाइत्यादिवाशूद्रापुत्रस्यैकभागभागित्वंयोगीश्वरादिभिरुक्तन्तदिति
सद्वृत्तशूद्रापुत्रविषयंवेदितव्यमन्यथामानवविरोधात् । ब्राह्मणक्षत्रियविशामितिमनुवचनन्तुप्रागेवव्याख्यातम् । शूद्रधनवि
भागेविशेषमाहयाज्ञवल्क्यः । जातोपिदास्यांशूद्रेणकामतोंशहरोभवेत् । मृतेपितरिकुर्युस्तंभ्रातरस्त्वर्द्धभागिकम् । अभ्रातृ
कोहरेत्सर्वंदुहितॄणांसुतादृतेति । शूद्रेणदास्यामुत्पन्नःपुत्रःकामतःपितुरिच्छयाभागंलभते । पितुरूर्ध्वन्तुभ्रातरःपरिणीताः
शूद्रापुत्रास्तन्दासीपुत्रंस्वभागार्द्धभागिनंकुर्युः । अत्रबहुवचनात्सर्वैस्स्वस्वभागादर्द्धन्दद्युरितिनभ्रमितव्यम् । तथासतिबहु
भ्रातृकस्यमतोप्यतिवहुधनत्वापत्तेरव्यवस्थास्यात् । किन्त्वेकपुत्रस्ययावान्भागस्तत्तदर्द्धभागंशूद्रापुत्रालभन्तेव्यक्त्यभिप्रायेण
जात्यभिप्रायेणचबहुवचनैकवचने । परिणीतशूद्रापुत्रस्तत्पुत्राद्यभावेतुदासीपुत्रोपिकृत्स्नंशूद्रस्यपितुर्द्धनंलभतइत्यर्थाद्गम्य
ते । शूद्रग्रहणाद्द्विजातिभ्योदास्यामुत्पन्नःपित्रिच्छयाप्यंशमर्द्धभागंवातदूर्ध्वमलभतेकृत्स्नन्तद्धनग्रहणंदूरापास्तमेवकिन्त्वनु

तिकुलस्यैवोज्जीवनमात्रमितिप्रतीयते। मुख्यगौणपुत्राभावेमृतपतितपरिव्राजकादिधनग्रहणाधिकारिण उच्यन्ते। तत्रयोगी
श्वरः॥ पत्नीदुहितरश्चैवपितरौभ्रातरस्तथा। तत्सुतोगोत्रजोबन्धुःशिष्यःसब्रह्मचारिणः॥ एषामभावेपूर्वस्यधनभागुत्तरोत्तरः
। स्वर्यातस्यह्यपुत्रस्यसर्ववर्णेष्वयंविधिरिति। अपुत्रस्यपूर्वोक्तद्वादशविधपुत्ररहितस्यस्वर्यातस्यमृतस्यपत्न्यादयःपूर्वपू
र्वाभावेपाठक्रमेणोत्तरोत्तरश्चधनंगृह्णीयुरित्यर्थः। अयंविधिःसर्वेषुमूर्द्धावसिक्ताद्यनुलोमजप्रतिलोमजादिषुवर्णेषुचब्राह्म
णादिषुवेदितव्यमित्यर्थः। तत्रप्रथमम्पत्नीधनहारिणी॥ पत्नीशब्देनैवविवाहसंस्कृता। पत्युर्नोयज्ञसंयोगे इतिपाणिनिस्म
रणात्। जात्यभिप्रायेणचैकवचनंतेनबह्व्यश्चेत्पत्न्यएकस्यतदासर्वाःसजातीयाविजातीयाःक्रमेणयथायथंभर्तृधनंविभज्यगृह्णी
युः। पत्नीशब्दाद्दासुरादिविवाहोढायाधनग्रहणंधर्म्यविवाहोढपत्न्यन्तरसद्भावेनास्तीतिगम्यते॥ तथाचस्मृतिः। क्रयक्रीतातु
यानारीनसापत्नीविधीयते। नसादैवेनसापित्र्येदासींतांकश्यपोविदुरिति॥ अत्रचदासीत्वकथनमदृष्टार्थकर्मसुसहाधि
काराभावाभिप्रायेणनतुदासीवदगम्यत्वाभिप्रायेण। विवाहितात्वेनपरदारत्वाबाधात्। अतएवमनुर्धर्म्याधर्म्यविवाहान
नुक्रम्यसन्तानगतावेवगुणदोषावाह। अनिन्दितैःस्त्रीविवाहैरनिन्द्याभवतिप्रजा। निन्दितैर्निन्दितान्नृणान्तस्मान्निन्द्यान्वि
वर्जयेदिति। प्रजायानिन्दितत्वमपिसङ्करत्वभयाभावेनतुवर्णजात्यभावः। परिणेतुःपरिणीतायामुत्पन्नत्वमात्रस्यवर्णजा
तिव्यञ्जकत्वात्। विन्नास्वेषविधिःस्मृतइत्युक्तेः। अतएवनसादैवेनसापित्र्यइतिसहाधिकारएवप्रतिषिद्धः। तथाचापि
व्यादिकर्मार्हतापिपतिदायहरत्वप्रयोजिकेतिपत्नीपदेनज्ञापितम्। अतएवश्रौतस्मार्त्तसहाधिकारिण्योपतिव्रतेवभर्तृधन
भागिनीत्याह प्रजापतिः। पूर्वंमृतात्वग्निहोत्रंमृतेभर्त्तरितद्धनम्। लभेत्पतिव्रतानारीधर्म्मएषसनातनः॥ वृद्धमनुरपि।
अपुत्राशयनम्भर्त्तुःपालयन्तीव्रतेस्थिता। पत्न्येवदद्यात्तत्पिण्डंकृत्स्नमंशंलभेतचेति। अत्रोत्तरार्द्धेऽपाठक्रमस्यार्थक्रमेण
बाधात्प्रथमंकृत्स्नमंशंलभेत। पश्चात्पिण्डंदद्यादितिस्मृतिचन्द्रिकाकारेणोक्तन्तद्धेयम्। क्रमेतात्पर्य्याभावात्। क्रमयावि

कारप्रतिपादनमात्रपरत्वाद्वचनस्य । अन्यथा यावद्धनलाभमग्नेर्न्त्येष्टिविलम्बोपि प्रसज्येत । सचानेकस्मृतिनिषिद्धः । अ
दृष्टकल्पनापत्तिश्च । पत्न्यैवेत्येवकारेणापुत्रस्यान्यकर्म्मण्यपि पुत्रापुत्रवत्पत्नीत्यादि वचनाच्छ्राद्धादिसर्वेपि सैवाधिकारिणी
निर्द्दिष्टं । अयमेवार्थः प्रपञ्चितः प्रजापतिना । जङ्गमंस्थावरंहेमंकुप्यन्धान्यंरसाम्बरं । आदायदापयेच्छ्राद्धंमासषाण्मा
सिकादिकम् । पितृव्यगुरुदौहित्रान्भर्तुःस्वस्रीयमातुलान् ॥ पूजयेत्कव्यपूर्त्ताभ्यांवृद्धानाथानतिथीन्स्त्रियः । कुप्यन्त्रपुसी
सादि । कव्यम्पित्रर्थं सङ्कल्पितमन्नादि । पूर्त्तं स्नानादिकर्म्माङ्गदक्षिणादि । एतदुक्तम्भवति । स्थावरेणापि सहितं सर्वंभ
र्तृधनमधिगम्य धनसाध्यं स्वाधिकारिकम्पत्युरात्मनश्च श्रेयःसाधनकर्म्म पतिपक्षीयपुरस्कारेण पत्न्या कार्य्यमिति । एवंवर्त्तमा
नायायेपीडाकारिणस्तेसज्ञाचोरवद्दण्ड्याइत्याहसएव । सपिण्डावान्धवायेतु तस्याःस्युःपरिपन्थिनः । हिंस्युर्द्धनानितान्रा
जाचौरदण्डेनशासयेत् ॥ स्मृतिचन्द्रिकायांवाऽर्हे स्वात्वेनपत्न्याःस्थावरग्रहणनिषेधकं । यद्विभक्तेधनङ्किञ्चिदाध्यादि विविधं
स्मृतम् । तज्जायास्थावरमुक्त्वालभतेमृतभर्तृकेति वचनंलिखितं । जङ्गमंस्थावरमित्यादिप्रजापतिवचनविरोधपरिहाराय
वृत्तविहीनपत्नीपरत्वमविभक्तपत्न्यंशविषयत्वम्वान्योक्तं । वृत्तस्थायिकृतेप्यंशेनस्वोस्थावरमर्हतीतितच्छेषविरोधेनापास्यदुहि
तृरहितपत्नीविषयत्वेनव्यवस्थापितञ्च । तत्रमदनरत्नकारेणमिताक्षराकल्पतरुहलायुधादिसर्वग्रन्थान्तरेष्वलिखनान्नि
र्म्मूलत्वमस्य । जङ्गमंस्थावरमितिप्रजापत्यस्यचसर्वत्रलिखनात्समूलत्वमितिदूषणमुक्त्वातदुक्तव्यवस्थायाश्चस्वोत्प्रेक्षामात्रक
ल्पितत्वेनायुक्तत्वमभिधायसमूलत्वेपिस्थावरादिसमयधनग्रहणम्ब्राह्म्यादिविवाहोढाविषयन्तद्वचनेषुपत्नीशब्दप्रयोगात् ।
स्थावरग्रहणप्रतिषेधकवृहस्पतिवचनन्तुजायास्त्रीशब्दमात्रप्रयोगादासुरादिविवाहोढाविषयमितिस्वयंव्यवस्थाकृता । आ
सुरादिविवाहोढायाःपत्नीशब्देनाग्रहणाज्जायादिशब्दोपेतवचनानामपितदेकमूलकतयातत्परत्वात्स्मृतिचन्द्रिकायामेवनि
रस्ता । यत्तुतदुक्तव्यवस्थायामौत्प्रेक्षिकत्वमुक्तन्तदपिन । दुहितृसत्वेतत्सन्तानद्वारेणस्थावरस्योपभोगधनस्वाम्युपकारयो॰

सम्भवाद्दुहितृमपिग्राह्यत्वाद्दुहितायास्तुतदभावान्नतद्ग्रहणमितितत्रापिवीजसम्भवात्। अतएवपितुरपिस्थावरेस्वार्जिते
पिपुत्रानुमतिमन्तरेणानधिकारःप्रागुक्तः॥ यत्तुगृहीतधनायाःपत्न्यास्तद्धनेनजीवनमात्रन्दानाधीकरणविक्रयेषुतुनाधि
कारइतिमृतेभर्त्तरिभर्त्तुरंशंलभेतकुलपालिका। यावज्जीवन्नहिस्वाम्यन्दानाधमनविक्रयइतिकात्यायनवचनात्प्रतीयते। तद
पिदृष्टार्थनटनर्त्तकादिदानात्वातत्परम्। अदृष्टार्थदानेतदुपयोगिनोराधीकारणविक्रययोश्चतेनैवाधिकाराभिधानात्
। व्रतोपवासनिरताब्रह्मचर्य्येव्यवस्थिता। दमदानरतानित्यमपुत्रापिदिवंव्रजेदिति॥ दिवंव्रजेदित्यनेनकाम्येपिदानादौत
स्याअधिकारःप्रतीयतेकिमुतनित्येनैमित्तिकेच। जङ्गमंस्थावरंहेमेत्यादिपूर्वोदाहृतप्रजापतिवचनाच्च। तत्रापिपूर्त्तयह
णात्काम्येष्वप्यधिकारआयातीतिस्मृतिचन्द्रिकाकारादयः। यच्चापरमपिकात्यायनवचनमेव। अपुत्राशयनम्भर्त्तुःपालयन्ती
गुरौस्थिता। भुञ्जीतामरणात्क्षान्तादायादाऊर्ध्वमाप्नुयुरिति। तत्रस्मृतिचन्द्रिकाकारआह। क्षान्ता। दायादकारितधन
विनियोगप्रतिवन्धंसहमानासत्यामरणाद्भुञ्जीतेत्यर्थः। इदञ्चरक्षणभरणाद्यसमर्थेषुकार्य्यान्तरव्ययेषुवाश्वश्रुरादिषुपत्न्या
यत्स्वयमेवस्वजीवनार्थमुपात्तमविभक्तन्तद्विषयम्। विभक्तद्रव्यविषयत्वेमन्वादिपरिनिष्ठितार्थवाधापत्तेरिति। पौरस्त्यास्तु
गुरौश्वश्रुरादिसमीपेस्थिताभर्त्तृधनम्भुञ्जीतैव। नतुस्त्रीधनवद्यथेच्छन्दानाधानविक्रयादिकुर्वीततस्याऊर्ध्वंदायादादुहित्रा
दयस्तद्धनाधिकारिणोगृह्णीयुर्नतुज्ञातयः। तेषांदुहित्रादिभ्योजघन्यत्वात्तद्बाधकत्वानुपपत्तेः। पत्नीहितेषांवाधिका।
तदधिकारप्रागभावप्रध्वंसयोरविशेषाद्बाधकाभावस्यतद्बाधानुपपत्तेः। नापिस्त्रीधनाधिकारिणोगृह्णीयुः। कात्यायनेनैव
स्त्रीधनाधिकारिणांवचनान्तरैरुक्तत्वात्तेनरुक्त्यापत्तेः। अतःपत्नीदुहितरश्चेत्यादिनायेपूर्वपूर्वस्याभावेपरभूताअपुत्रासंसृ
ष्टिविभक्तमृतधनाधिकारिणोनिर्दिष्टास्तेयथापत्न्यधिकारप्रागभावंगृह्णीयुस्तथापत्न्याजाताधिकारायाःप्रध्वंसेपिभोगावशिष्टं
गृह्णीयुः। तदानींदुहित्रादीनामेवान्यापेक्षयामृतोपकारकत्वात्। दानधर्म्मेषुमहाभारतवचनमप्येतदुपोद्बलकम्। स्त्री

णां स्वपतिदायस्तु उपभोगफलः स्मृतः । नापहारं स्त्रियः कुर्य्युः पतिवित्तात्कथञ्चनेति । उपभोगोपि न सूक्ष्मवस्त्रादिना । कि
न्तु पत्युरुपकाराय देहधारणमात्रोपयोग्युपभोगानुज्ञानम् । एवञ्च वृहस्पतिनापि तृव्यगुरुदौहित्रानित्यादिना पितृव्यपदेन
भर्तृसपिण्डोपलक्षणा दौहित्रपदेन तद्दुहितृसन्तानोपलक्षणान्मातुलस्वस्रीयपदाभ्यान्तन्मातृकुलोपलक्षणात्तेभ्य एवार्थानु
रूपम्भर्तुः श्राद्धाद्यौर्ध्वदेहिकोपकारकं दद्यात् । न तु स्वपितृकुलसम्बन्धिभ्यस्तदनुमत्या तु तेभ्योपि । तथा च नारदः । मृते भर्त
र्य्यपुत्रायाः पतिपक्षः प्रभुः स्त्रियाः । विनियोगेषु रक्षासु भरणेषु च ईश्वरः । परिक्षीणे पतिकुले निर्म्मनुष्ये निराश्रये ॥ तत्सपि
ण्डेषु चासत्सु पितृपक्षः प्रभुः स्त्रियाइति । संमुखमेव वचनार्थमादाय नास्त्येव स्त्रिया भर्तृरिक्थे दानविक्रयाद्यधिकार इत्याहुः ।
तच्चेदमाच्यं । किन्तस्य तयाऽवनेपि दानादौ तत्स्वरूपानिष्पत्तिरेव । न तावदेवं युक्तं । मन्वादिवचनैः सकलभर्तृधनग्रहणेन तस्या
उक्ते सति तस्यास्तु स्वत्वे दानादिस्वरूपानिष्पत्तेर्बाधितत्वात् । अत एव जीमूतवाहनेनैव स्थावरस्य समस्तस्य । विभक्तावाऽविभ
क्ता वा स्थावरं द्विपदञ्चैवेत्यादीनि स्थावरविषयाणि दानादिनिषेधवचनान्युपन्यस्याधर्म्मभागिताज्ञापनार्थमेतानि दुर्वृत्तं पुरु
षं प्रतिकुटुम्बदुःखदानार्थमेव दानविक्रयादिप्रवृत्तं प्रतिषेधकानि न तु दानादिस्वरूपानिष्पत्तिप्रतिपादकानि । यथेष्टविनियो
गार्हत्वलक्षणस्वत्वस्य द्रव्यान्तर इव स्थावरेप्यविशेषाद्वचनशतेनापि वस्तुनोऽन्यथाकरणाशक्यात्तत्प्रतिपादनानुपपत्तेरिति निरू
पितम् । तदुक्तरीत्या त्वापि दुर्वृत्ततया दायादःदुःखदानार्थमेव भर्तृरिक्थदानादिप्रवृत्तायास्तु प्रतिषेधातिक्रमादधर्मः । धर्मा
र्थन्दानप्रवृत्तायाः स्वजीवनाद्यर्थं विक्रयाधाने कुर्वन्त्यास्त्वनास्त्येवाधर्म्मोपि । न च भुञ्जीतैवेति नियमाद्दायादाऽर्थमाप्नुयुरि
त्यभिधानाच्च दानाद्यनधिकार एव तस्याश्च विभक्तधन इव तत्रेति वाच्यम् । साधारणस्वत्वाश्रयाविभक्तधनेनासाधारणस्वत्वाश्र
यस्यास्य वैषम्यात् । न च स्वभोगस्य प्राप्तत्वेनाविधेयत्वाद्दानादिपरिसङ्ख्यार्थ एव विधिस्तथा चानधिकारस्तत्रागत एवेति वाच्य
म् । वस्तुन्यथाकरणाशक्तेर्नियमस्य पृथादानादिना द्रव्यनाशनिवृत्त्यर्थतयैवोपपत्तेरवश्यवाच्यत्वात् । अन्यथाऽनधिकारेद

मदानरताप्रजयेत्क्रयपूर्त्ताभ्यामित्यनेनदानविधिनाविरोधोऽपरिहार्य्यः । यच्चदायादाःपत्न्यनन्तराधिकारिणः पत्नीदुहित
रइत्यत्रनिर्द्दिष्टास्तेगृह्णीयुःप्रागभावप्रध्वंसयोःप्रतिवन्धकपत्न्यभावत्वस्याविशेषात्तदधिकारोद्भवादित्युक्तमदन्तिस्थवीयः ।
दायादपदेनस्त्रीधनाधिकारिग्रहणेयथावचनान्तरोक्तत्वात्पौनरुक्त्यःतथातेषामपिकात्यायनेनवचनान्तरोक्तत्वात्पौनरुक्त्याविशे
षात् । वस्तुतस्तुजातस्वत्वेस्वामिनिमृतेतत्प्रत्यासन्नानामेवतद्धनग्रहणमुचितम् । पत्न्यादिशब्दानांसम्बन्धशब्दत्वेनद्रव्यस्वामित्वे
पत्न्याद्युपजातेपूर्वस्वामिदुहित्रादीनाञ्चःप्रसङ्गः । तेनयद्यपिपूर्वाभावःप्रागभावःप्रध्वंसश्चात्यन्ताभावश्चप्रतिवन्धकसंसर्गाभा
वउभयाभावस्तुल्यस्तथापियोद्रव्यस्वामीतस्मिन्मृतेतत्सम्बन्धिपत्न्यादिकमपुत्रस्यतस्यधनंलभेतेत्येववाक्यार्थः । अन्यथादुहि
त्रादिभिरपुत्रपितृधनेलब्धेतन्मरणेतत्सन्तत्यतिलङ्घनेनतद्धनंपूर्वस्वामिनःपितुर्यैपित्रादयस्तएवलभेरन्नितिमहत्यव्यवस्थाप्रस
ज्येत । तस्माद्भर्तृरिक्थम्पत्न्यालब्धन्तस्यांमृतायांतद्भोगावशिष्टमातुर्दुहितरइत्यादिवचनाद्दुहित्रादिग्राह्यत्वेनप्रसक्तंदायादा
ऊर्ध्वमाप्नुयुरित्यनेनापोद्यते । अयञ्चवचनार्थः । दायादाइत्यत्रकस्येत्यपेक्षायांशयनान्वितम्भर्तुरित्येवोपस्थितत्वादनुषज्यते
। तथाचैवंवचनव्यक्तिःतस्याऊर्ध्वम्भर्तुर्दायादाअविभक्तास्तद्धनाधिकारिणोविभक्तभ्रातृधनमपितत्पत्नीभोग्यावशिष्टंगृह्णीयुर्न
पत्नीरिक्थहरादुहित्रादयइतिएवञ्चापूर्वार्थत्वाच्चतुर्थचरणस्यार्थवत्त्वंभवतिअन्यथातेवचनान्तरोक्तार्थानुवादमात्रमनर्थकंस्या
त्तस्माददृष्टार्थेदानेदृष्टादृष्टावश्यककार्यार्थमाधौविक्रयेचास्याएवपत्न्याःसकलभर्तृधनविषयोधिकारःनियमस्तुनटनर्त्तका
दिदानानावश्यकाधिविक्रयनिवृत्त्यर्थइतिसिद्धम् । अतएववक्ष्यतेत्युक्तम् । द्रव्यप्राप्तुंविनावृथाद्रव्यव्ययकारिणीनभवेदि
त्यर्थः । दानधर्मस्थंमहाभारतवचनन्तुसुतरामस्मदुक्तमेवार्थमुपोद्बलयति । तथाहिस्त्रीणांस्वपतिदायःस्वभर्तृरिक्थमु
पभोगफलः । उपभोगोधर्म्मप्रत्यासन्नोभोगोनत्वसद्भोगःफलम्प्रयोजनंयस्यतादृशःस्मृतउक्तोमन्वादिभिः । उपरार्द्धं
तदेवव्यनक्ति । स्त्रियःपतिवित्तादपहारंवृथाव्ययंनकुर्युः । कथञ्चनेत्यनेनापहारस्यसर्वथैवाश्रेयस्करतामाह । अपहारो

हि चौर्य्यम्। नटनर्त्तकादौ वृथादानम्। स्नुषावस्त्रादिपरिधिनामृष्टभक्ष्यादिभुक्तेरेवमादपि सर्व्वथैतायाः पतौ चिव्यायो
र्य्यंतुल्यमित्यपहारशब्देनोक्ताः। धर्म्मार्थ्यदानादिकन्तु ननयेतिनापहारशब्देन वोधयितुं शक्यते। तस्मात्सर्व्वं सुस्थम्। प
त्न्याश्च पुत्रविभक्तासंसृष्टिपतिस्थापनेयय इहपथमाधिकारप्रतिपादकान्यपराण्यपि भूयांसि स्मृतिवचनानि तत्र वृहस्पतिः।
आम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः। शरीरार्द्धं स्मृता जाया पुण्यापुण्यफले समा॥ यस्य नोपरता भार्य्या देहार्द्धं तस्य
जीवति। जीवत्यर्द्धशरीरेऽर्थं कथमन्यः समाप्नुयात्॥ सकुल्यैर्विद्यमानैस्तु पितृमातृसनाभिभिः। अपुत्रस्य प्रमीतस्य पत्नी
तद्भागहारिणीति। योगीश्वरेणापि पूर्व्वाभावे पत्न्यधिकारं वदताऽर्थं प्राथम्येन पत्न्या एवाधिकारमभिधत्ते। विष्णुरपि। अपुत्रस्य
धनं पत्न्यभिगामि तदभावे दुहितृगामि तदभावे पितृगामि तदभावे मातृगामि तदभावे भ्रातृगामि तदभावे भ्रातृपुत्रगामि तदभावे
बंधुगामि तदभावे सकुल्यगामि तदभावे शिष्यगामि तदभावे सहाध्यायिगामि तदभावे ब्राह्मणधनवर्ज्जं राजगामीति। बंधुश्च स
पिण्डः सकुल्यः सगोत्रः। बंधुपदेन बहुत्वमापि पितृवंधादि यह बन्धे योगीश्वरेणैकवाक्यविरोधापत्तेः। कात्यायनोपि। पत्नी पत्युर्द्धन
हरी या स्यादव्यभिचारिणी। तदभावे तु दुहिता यद्यनूढा भवेत्तदा। स्मृत्यन्तरमपि। अपुत्रस्याथ कुलजा पत्नी दुहितरोपि वा
। तदभावे पिता माता भ्राता पुत्राश्च कीर्त्तिताइति॥ एतैर्वचनैः सर्व्वतः पूर्व्वं पत्नी पतिधनभागिनीति प्रतिपादितम्। एतद्विरुद्धा
न्यपि वचनानि लक्ष्यन्ते। तथा च नारदः। भ्रातृणामप्रजाः प्रेयात्कश्चिच्चेत्प्रव्रजेन्नवा। विभजेरन्धनं तस्य शेषास्ते स्त्रीधनं वि
ना॥ भरणं चास्य कुर्वीरन्स्त्रीणामाजीवनक्षयात्। रक्षन्ति शय्यां भर्त्तुश्चेदाच्छिंद्युरितरासु चेति। पत्नीसद्भावेपि भ्रातॄणा
धनयहणं भरणं च स्त्रीणामाह। मनुरपि। पिता हरेदपुत्रस्य रिक्थं भ्रातर एव चेति। पितृभ्रात्रोर्विकल्पेनापुत्रधनग्रहण
स्याधिकारं वदन्निन तु पत्न्याः॥ अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्। मातर्य्यपि च वृत्तायां पितुर्माता हरेद्धनमिति च स्मृ
तिर्मातृपितामह्योरपुत्रधनाधिकारमभिदधाति। शङ्खलिखितपैठीनसियमोपि। अपुत्रस्य स्वर्य्यातस्य भ्रातृगामि द्रव्यं तदभा

वेपितरौहरेयातांज्येष्ठावापत्नीतिभ्रातुःपित्रोश्चाभावेपत्न्यधिकारंसूचयन्ति। देवलोपि। ततोदायमपुत्रस्यविभजेयुःसहोद
राः। तुल्यादुहितरोवापिध्रियमाणःपितापिवा॥ सवर्णाभ्रातरोमाताभार्य्याचेतियथाक्रममिति। सर्वपूर्वाभावेनयोगीश्वरेणाभि
हितायाःपत्न्याभ्रात्राद्यभावेऽधिकारमाचष्टेभ्रातृग्रहणेनात्रभिन्नोदराः। सहोदराणांपृथगुपादानात्। कात्यायनोपि। विभक्ते
संस्थितेद्रव्यंपुत्राभावेपिताहरेत्। भ्राताबाजननीवाथमाताबातत्पितुःक्रमादिति। पित्रादिषुयाहकेषुपत्न्यानिर्दिश्यमपितकल्पे
ति। एतेषामन्योन्यविरुद्धानांवचनानांधारेश्वरइत्थंव्यवस्थामाह। विभक्तासंसृष्टभ्रातुरपुत्रस्यपत्नीयदिनियोगमङ्गी
कुरुतेतदैवपतिधनंलभते। अनियोगार्थिन्यान्तुतस्यामविभक्तसंसृष्टपत्नीवद्भरणमात्रमेवनियोगद्वारैवापुत्रपत्न्याःपति
स्वापतेयस्वामित्वन्नचवीजमनेकस्मृतिष्वपत्यद्वारैवतस्याधनसम्बन्धबोधनम्। तथाचगौतमः। पिण्डगोत्रर्षिसम्बद्धा
रिक्थम्भजेरन्स्त्रीवानपत्यस्यबीजंवालिप्सेतेति। अनपत्यस्यरिक्थम्पिण्डगोत्रर्षिसम्बद्धाभजेरन्तस्यस्त्रीवारिक्थम्भजेत्। य
दिवीजंचिप्सेत॥ वाशब्दोयदिशब्दार्थोऽन्यथारिक्थग्रहणबीजलिप्सयोरतुल्यत्वेनविकल्पार्थकत्वानुपपत्तेः। तथामनु
रपि। धनंयोविभृयाद्भ्रातुर्मृतस्यस्त्रियमेववा। सोपत्यंभ्रातुरुत्पाद्यदद्यात्तस्यैवतद्धनमिति। विभक्तधनसम्बन्धमपत्यद्वा
रेणैवपत्न्यादर्शयति। तथाविभागाभावेपि। कनीयान्ज्येष्ठभार्य्यायाम्पुत्रमुत्पादयेद्यदि। समस्तत्रविभागःस्यादितिधर्म्मो
व्यवस्थितइतिबदन्नपत्यद्वारधनसम्बन्धोस्त्रीयाह। तेनान्वयव्यतिरेकाभ्यामपत्यद्वारकएवपत्न्याधनसम्बन्धोनान्यथेतिसि
द्धम्। वसिष्ठोपि। रिक्थलोभान्नास्तिनियोगइतिरिक्थलोभप्रयुक्तंनियोगंप्रतिषेधन्नङ्गीकृतनियोगायाएवधनसम्बन्धेनेत
रस्याइतिस्पष्टमेवाचष्टे। तथाचभ्रातृणामप्रजाइत्यादीनिनारदादिवचनान्यनियोगार्थिनीविषयाणिपर्यवस्यन्ति। अ
पुत्रायोषितस्त्वेषाम्भर्त्तव्याःसाधुवृत्तयः। निर्वास्याव्यभिचारिण्यःप्रतिकूलास्तथैवचेतियोगीश्वरोप्यपुत्राणामन्त्यादियोषिताम्भ
रणमात्रमाहममाप्तपुत्रस्यैवधनसम्बन्धप्राधान्यात्तत्कुतएवतन्नास्तीयाश्चनसम्बन्धइतिसूचयन्न्यायसाम्यात्सर्वेत्वापत्यमूलकमेवस्त्री

णां रिक्थग्रहणं ज्ञापयति। यज्ञार्थं द्रव्यमुत्पन्नं तत्रानधिकृतास्तु ये। अरिक्थभाजस्ते सर्वे ग्रासाच्छादनभाजना इति स्मृतिः। पुरु‑
षाणामपि पुत्रादीनां यज्ञानधिकृतानां रिक्थानधिकारं वदन्तो दण्डापूपन्यायेन सुतरामभर्तृकाणां तदनधिकारिणीनां धनस
म्बन्धं निरस्यति। तथा स्मृत्यन्तरमपि। यज्ञार्थं विहितं वित्तं तस्मात्तद्विनियोजयेत्। स्थानेषु धर्म्ययुक्तेषु न स्त्रीमूर्खविधर्मि
ष्विति। स्त्र्यादिषु धनविनियोगमपि प्रतिषेधत्साक्षात्तस्या एव कृत्स्नधनग्रहणं सुदूरं दूषयतीति। तदिदं विज्ञानेश्वरादयो नानु
मन्यन्ते पत्नी दुहितर इत्यादिषु साक्षान्नियोगानुपादानात्। प्रस्तावाभावाच्च। किञ्च नियोग एव पत्न्या रिक्थसम्बन्धप्रयोजकस्त
दुत्पन्नमपत्यं वा। प्रथमे नुत्पादितपुत्राया अपि स्वीकृतनियोगाया धनाधिकारः स्यान्नियोगोत्पन्नपुत्रस्य च न स्यान्नियोगमात्रेणैव
भर्तृधनस्वाम्यात्। द्वितीये वचनान्तरैरेवापत्यस्य धनसम्बन्धसिद्धेः पत्नीवचनमनर्थकम्। अथ स्त्रीणां पतिमात्रद्वारको धनसम्ब
न्धो न प्रकारान्तरेण जीवति पत्यौ तद्द्वारको मृते त्वपत्यद्वारक इति बोधनार्थं नियोगार्थिनी पत्नी परम्पत्नीवचनमिति मतम्। तदस
त्। अध्यग्न्यध्यावाहनिकमित्यादिवक्ष्यमाणवचनैरन्यथापि तासां धनसम्बन्धबोधनात्। भर्तृधने द्वैधेव सम्बन्धो नियम्यत इति
चेत्। तर्हि जीवति पत्यौ तद्धनसम्बन्धस्य पाणिग्रहणाद्धि सहत्वमित्यादि गौतमवचनेनैव सिद्धेर्मृते तु तस्मिन्नियोगनिमित्तत
द्धनसम्बंधउच्यमानः क्षेत्रज पुत्रस्यैवोक्तो भवति सोपि प्रायुक्त इत्यपुत्रप्रकरणे पत्नीत्यनारभ्यमेव। यच्च गौतमवचनं वीजं वा लि
प्सेतेति यदि वीजं लिप्सेत तदर्थकतया नियोगद्वारक एव धनसम्बन्धोऽपुत्रपत्न्या इत्यत्र प्रमाणमित्युक्तं तदप्ययुक्तम्। वाशब्दस्य
पक्षान्तरवाचित्वेन यद्यर्थाप्रतीतेः। धनग्रहणवीजलिप्सयोरतुल्यार्थतया विकल्पार्थकत्वासम्भवे निपातानामनेकार्थत्वात्प्रकृता
न्वयोपयोगी यद्यर्थ एव कल्प्यत इति चेत्। न वीजम्वा लिप्सेतेत्यस्य तावाभवेदिति प्रासङ्गिकधर्मान्तरोपदेशरूपतया विकल्पार्थ
कतायां एव सम्भवात्। तथा च गौतमवचनापि नियोगनिरपेक्षमेव भर्तृरिक्थग्रहणमुक्तम्भवति। किञ्च विधवानियोगस्य निषिद्ध
त्वाद पुत्रा शयनं भर्तुः पालयन्तीत्यादि मन्वादिवचनैः संयताया एव धनाधिकारप्रतिपादनान्निर्वीजस्याव्यभिचारिण्या इत्यादिना भ

र ग्रासमात्रस्याप्यसंयतानामभावात् । स्त्रीभर्तृरिक्थग्रहणन्तु स्वरूपार्थमेव । यच्चाभिहितमनयोर्विमृश्याह्नातुः कनीयान् ज्येष्ठभार्य्या
यां रिक्थलोभान्नास्ति नियोग इति मन्वादिवचनैर्विभक्ताविभक्तधनसम्बन्धोऽन्वयव्यतिरेकाभ्यामपत्यद्वारक एव पत्न्याः श्वा यावतीति
। तदपि वाङ्गम् । अविभक्तसंसृष्टिनिवाभर्त्तरि प्रेते पुत्रद्वारक एव तस्याः स्वधनसम्बन्ध इति । धनलोभेन नियोगो नाभ्युपेय इति
तन्नाव्यर्थ्यात् । अत एव संसृष्टानामनुयोभागः सतस्यानेषु स्वेतेषु वैरिश्यमभिधाय तत्स्त्रीणामनपत्यानाम्भरणमात्रं तादृदेन प्रति
पादितम् । नचैवं भ्रातृसुतामपुत्राः प्रेयादिवस्तापि संसृष्टाविभक्तविषयत्वे संसृष्टं । असंसृष्टानामनुभागद्वयनेन पत्नीनां कथं
स्यादिति वाच्यम् । तदंशविवरणपूर्वकं स्त्रीधनाविभाज्यत्वकत्वहरणयोर पूर्वयोर्विधानात् । यत्तु कात्यायनेन स्त्रैणामिति योगीश्व
रवचनन्तु क्लीबादीनां प्रक्रान्तानामेवामिति सर्वनाम्नापि समर्थाऽमङ्गलीविषयमिति विभागानधिकारिनिरूपणप्रस्तावे वह्य
ते । यदपि शिष्टानिधनस्य यज्ञार्थत्वात् तदनधिकारिण्या प्रमीतपतिकया न ग्रहणमनर्हमित्युक्तं तदप्ययुक्तं यज्ञशब्दस्य दाना
द्युपलक्षकत्वात् तत्र च तस्या अप्यधिकारात् । यथाश्रुते यज्ञभिन्नदानहोमादिष्वपि विनियोगाप्रसङ्गः । वस्तुतस्तु केवलधर्मार्थ
त्वमपि धनस्य नास्ति । धर्ममर्थञ्च कामञ्च यथाशक्ति न हापयेत् । तथा पूर्वाह्णमध्यन्दिनापराह्णानफलान् कुर्य्याद्धर्मार्थकामेभ्य
इत्यादिभिरर्थकामयोरपि तत्साध्ययोरावश्यकत्वात् । यज्ञार्थत्वञ्च द्रव्यस्य यदि स्यात्तदिरस्य धारणस्य काव्यभिचारि द्विरसयव
सम्बन्धेन कात्यर्थनैव स्यादिति पुरुषार्थत्वं यत्तस्य स्यात् तन्नैतद्विरुध्येत । न स्त्री स्वातन्त्र्यमर्हतीत्यादिवचनमपारतन्त्र्यमात्रमस्तु
स्त्रियाः तत्तु धनग्रहणेऽकोऽपि विरोधः ॥ यज्ञार्थं द्रव्यमुत्पन्नमिति तु धर्म्मविनियोगप्राशंसार्थम् । अत एव स्थानेषु धर्म्मयुक्तेषु न
स्त्री मूर्खविधर्म्मिष्विति वाक्यशेषः । मिताक्षराकृतस्तु यज्ञार्थं न्यमदद्द्यात्सः काकोऽपि वा भवेदिति दोषश्रवणस्य पुत्रादिष्वप्यवि
शेषेणापि त्याग यज्ञार्थमर्जितन्तत्पुत्रादिभिरपि तत्रैव विनियोज्यं नान्यत्रेत्येवं परमेतदित्याहुः ॥ श्रीकरादयस्तु । भार्य्याभरणा
मात्रपर्य्याप्तं वदि भर्तृधनन्तदा सर्वमेव गृह्णाति । अतिरिक्तत्वेऽन्या वाद यद् इति विषयव्यवस्थामाहुः । कृत्स्नमंशं लभेतचेत्यत्तद

पितत्परमेव । वर्त्तनदानस्यावश्यकत्वात् । तेन सर्व्ववाक्यानामविरोध इति यत्तत्रोपपत्तिं कल्पयन्ति । वार्त्तमेतत् । यदप्युक्तं तथ
नपदस्य पत्न्यपेक्षया जीवनपर्य्याप्तिधनपरत्वम्भ्रात्रपेक्षया धनमात्रपरत्वमिति तात्पर्य्यभेदस्य सति सारूप्ये सम्भवेऽन्याय्यत्वात्
। मनुवचने तत्पदवैयर्थ्यापाताच्च । यच्चाप्यौरसेषु पुत्रेषु तत्समांशं यद्दद्याज्जीवद्विभागे पत्नीभ्यो यदि कुर्य्यात्समा
नंशान्पत्न्यः कार्याः समांशिकाः । पितुरूर्द्ध्वं विभजतां माताप्यंशं समं हरेदित्याभ्यां वचनाभ्याम् । असत्सु पुत्रेषु पत्नी भरणमा
त्रं लभत इति महान्व्यामोहः । तत्रापि जीवनपर्य्याप्तमेवांशशब्देन विवक्षितमिति चेन्न ॥ अंशशब्दसमशब्दयोरानर्थक्यप्र
सङ्गात् । दत्तेऽत्वर्द्धं प्रकल्पयेदित्यत्रापि जीवनोपयुक्तपरत्वावश्यम्भावे सर्व्वथार्द्धपदार्थत्यागापत्तेश्च । अल्पधने पुत्रसमांशं
बहुधने जीवनोपयुक्तमात्रं विवक्षितमिति तु विधिवैषम्यापत्तेरप्ययुक्तम् । तथाहि । तावेव समांशशब्दौ वाक्यान्तरमपेक्ष्य बहुधने
जीवनमात्रपर्य्याप्तधनपरौ कदाचित् । अल्पधने तु यथाश्रुतार्थकाविति एकस्मिन्विधौ वाक्यार्थभेदेन वाक्यभेदापत्तेरयुक्तम् ॥ युग
पच्छक्तिलक्षणावृत्तिद्वयापातश्च । यथा चातुर्मास्यप्रकरणे द्वयोः प्रणयन्तीति वाक्येन पूर्वपक्षिणा सौमिकप्रणयनातिदेशादुत्तरवे
दिमुपकिरन्तीति तस्य तु नासौमिकीयत्युत्तरवेदिप्रतिषेधेऽप्राप्तस्य प्रतिषेधायोगाद्द्वे तु वचनेनोक्तेऽत्मानैकदेशिनानातिदेशप्राप्तायाः
सौमिकोत्तरवेदेरयम्प्रतिषेधः किन्तूपावपन्तीति प्राकरणिकवचनप्राप्ताया इत्युपन्यस्ते प्राकरणिकवचनम्प्रथमोत्तमयोः पर्वणोः
प्रतिषेधमपेक्ष्य पाक्षिकीं प्रापयति मध्यमयोस्तु निःप्रतिपक्षमेव पाक्षिकामुत्तरवेदेः प्राप्तिं करोतीति विधिवैषम्यप्रसङ्गेन पूर्वपक्षिणा
मन्मते दूषिते परमसिद्धान्तिना पूर्वपक्ष्युक्तविधिवैषम्यभयादेव प्रथमोत्तमयोः पर्वणोरप्राप्तप्रतिषेधायोगान्नवेम्वदेव इत्यस्य वि
ध्यनुवादः उपावपन्तीति तु द्वयोः प्रणयन्तीत्यस्यार्थवादः सह कृतं मध्यमयोरेव वरुणप्रघासशाकमेधपर्वणोरुत्तरवेदिं विधत्ते
न तु वचनातिदेशोऽयमिति प्रतिपादितम् । अत्र कश्चिदाह । भ्रातॄणामपुत्रधनयाहित्वम्भरणमात्रस्य कुर्वीरन् स्त्रीणामाजीवन
क्षयादिति भरणोपयुक्तधनदानस्य तत्स्त्रीणामुक्तत्वाद्भरणमात्रोपयुक्तमेवापुत्रधनं तत्तोपि न्यूनं वा । तदापि किं भ्रातर ए

षगृह्णन्ति पत्नी वेति विरोधे पत्न्याएव धनग्रहणम्पत्नी दुहितरइत्यादिनापूर्वं पत्नीयस्तद्वापनायोच्यतइति। तदपिमन्दम्।
पूर्वोक्तविधिवैषम्यस्यात्रापिताद्वस्थ्यात्। धनभागिनिपदंवाक्यान्तरमपेक्ष्याल्पधने जीवनमात्रपर्य्याप्तधनभाक्त्वम्पत्नीविष
येवदतिपित्रादिषुतुसकलधनभाक्त्वमिति। कथन्तर्हिविरोधपरिहारइतिचेत्। शृणु। पिताहरेदित्यादिषुक्रमाप्रतीतेरपु
त्रधनग्रहणाधिकारमात्रप्रदर्शकानितानि। योगीश्वरवचसित्वेषामभावेपर्वस्यधनभागुत्तरोत्तरइतिक्रमपरत्वात्पत्न्यादिग
णस्यनिबद्धक्रमस्याभावेपितेषामर्थाविरोधात्पत्न्याद्यभावेपित्रादयोपुत्रधनग्राहिणइति। शङ्कितव्यभिचारायास्तुपत्न्याःहा
रीतेनधनग्रहणंनिषिद्धम्। विधवायौवनस्थाचेन्नारीभवतिकर्कशा। आयुषःक्षपणार्थेतुदातव्यञ्जीवनन्तदेति। अस्मा
देववचनाद्नाशङ्कितव्यभिचारायाःसकलभर्तृधनग्रहणङ्गम्यते। अतएवशङ्खवचनेज्येष्ठावापत्नीत्युक्तंज्येष्ठागुणैःप्रशंस्या।
नतुवयोज्येष्ठा। मनुनापिवर्णक्रमेणज्यैष्ठ्यङ्कथितम्। यदाह। यदिस्वाश्चपराश्चैवविन्देरन्योषितोद्विजाः। तासांवर्णक्र
मेणैवज्यैष्ठ्यम्पूजाचवेश्मचेति। अतःपरिणयनवयोभ्यांकनिष्ठापिसवर्णावासवर्णातोज्येष्ठासवर्णास्वपिगुणवती। तथाच
मनुः। भर्तुःशरीरशुश्रूषान्धर्म्मकार्य्यञ्चनैत्यकम्। स्वाचैवकुर्य्यात्सर्वेषान्नास्वजातिःकथंचन॥ यस्तुतत्कारयेन्मोहात्सजात्या
स्थितयान्यया। यथाब्राह्मणचाण्डालःपूर्वदृष्टस्तथैवसः। योगीश्वरोपि। सवर्णासुविधौधर्म्येज्येष्ठयानविनेतरा। तथाचव
हुसंयोगात्पत्नीशब्देनापिसैवोच्यते। सवर्णायाश्चभावेत्वनन्तरवर्णासैव। तथाचविष्णुः। सवर्णाभावेत्वनन्तरैवापदिनत्वेव
द्विजःशूद्रयाधर्म्मकार्य्यमिति। अत्रकुर्य्यादित्यनुवर्त्तते। तथाचब्राह्मणस्यब्राह्मण्यभावेक्षत्रियैवापदिनतुवैश्यशूद्रेपरिणी
तेष्वपि। क्षत्रियस्यक्षत्रियायाश्चभावेवैश्यैव। वैश्यस्यानन्तरापिशूद्रानकिन्तुस्वैव। शूद्रायाःसर्वथानिषेधात्। तथाचानाश
ङ्कितव्यभिचारसवर्णाक्रमेणभर्तृधनंगृहीत्वान्याःसपत्नीःपरिपालयेत्। वपुःसादृश्यस्तुयथास्वम्विभज्यगृह्णीयुः। अतःपत्नीत्ये
कवचनञ्जात्यभिप्रायेण। तस्मादपुत्रस्यासंसृष्टिनोविभक्तस्यप्रमीतस्यसाध्वीभार्य्यातत्तद्धनाधिकारिणीविभक्तसंसृष्टिनोर

पुत्रयोः साध्व्यपि भरणमात्रं भ्रातृणामप्रजाः स्युरित्यादिनारदादिवचनाल्लभते । व्यभिचारिणीतु भरणमपि न । आच्छिद्युरित
रास्त्वित्यभिधानात् । यत्तु व्यभिचारिणीनामप्यन्नवसनदानमुक्तम् । एवमेवं विधिं कुर्य्याद्योषित्सु पतितास्वपि । वस्त्रान्नमात्रं
देयन्तु वसेयुश्च गृहान्तिके इति । तत्तु । हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् । परिभूतामधःशय्यां वासयेद्व्यभिचारि
णीमिति । भर्त्तारम्प्रत्युपयोगी अभिरक्षणाभिधानात्तद्विसंवादेन भर्त्तृविषयकम् । तदपि प्रायश्चित्तावधि । अयोद्धर्त्यागन्तद
कुर्वन्तीनां त्वनेनापि निष्कासनमित्यादि प्रायश्चित्तप्रकाशे विवेचयामः । पत्नी दुहितरश्चेत्यस्य विभक्तासंसृष्टिविषयत्वं विभाग
स्य पूर्वमुक्तत्वात्संसृष्टिविभागस्य च सर्वापवादेनाग्रे वक्ष्यमाणत्वात् । यौक्तु वनितेत्यत्र इति विज्ञानेश्वरलक्ष्मीधरस्मृतिचन्द्रिकाकार
विश्वरूपमेधातिथिमदनरत्नकारादीनाम्भूयसां सम्मतम् ॥ अपुत्रपदम्पत्न्यादिशुश्रूषमाणामपौत्राप्रपौत्राभावोपलक्षणम् ।
प्रपौत्रपर्य्यन्ताभाव एव पत्न्याधनग्रहणौचित्यात् । पुत्रपौत्रैर्ऋणं देयमिति वचने पौत्रस्यापि ऋणदानेऽधिकाराभिधानात्क्रिय
याहकान्तरसत्वे च श्रय्यादत्ताप्यत्र इति वचनान्महर्ष्यर्णदानाधिकारे सर्व्वपि पौत्रे तत्प्रतितद्विधानासम्भवात् गोत्रजत्वादिना
च श्रय्यग्रहणे रिक्थग्राह इत्यनेनैव तस्यापि तत्सिद्धेर्वैयर्थ्यं पौत्रविधेरतः पौत्रस्यापि तामहरणग्रहणेपि पुत्रवद्दृष्टान्ते यमित्युक्ते द
ण्डापूपिकया सति तद्विकर्थन्यस्य तत्पूरणाधिकारो दूरनिरस्तः । एवं च एव प्रपौत्रेपि न्यायः । अत एव प्रपौत्रसंग्रहार्थम्पुत्रपौत्र
रिति बहुवचनमितरथा द्विवचनत्वत्राभिप्रायकं बहुवचनमिति वा कल्प्यं स्यात् । एवञ्चायमर्थः । पुत्रश्च पौत्रश्च पुत्रस्य पौत्रः
पुत्रपौत्रः स चेत्येकशेषो तत्पुरुषो वारमावृत्तपुत्रपौत्रपदे पुत्रश्च पौत्रश्च पुनाविति द्वन्द्वे पुत्रपौत्रौ च पुत्रपौत्र इति द्वन्द्वे तत्पुरुषरूपपुत्र
पौत्रपदे सरूपैकशेषे बहुवचनोपपत्तिः । पुत्रपौत्रप्रपौत्रैरित्यायाबत् । पौत्रपदं प्रपौत्रोपलक्षणम्वा । पुत्रापेक्षया पौत्रस्य तद
पेक्षया प्रपौत्रस्य ऋणदाने । विशेषप्रकारविधिरप्यत एव सङ्गच्छते । अन्यथा प्रपौत्रे विशिष्टविधिकल्पनापत्तिः । त्रयाणामनु
द्योपकारित्वञ्च पार्वणविधिना पिण्डदानेनास्पष्टम् । तथा च मनुः । त्रयाणामुदकं कार्य्यं त्रिषु पिण्डः प्रवर्त्तते । चतुर्थः सम्प्रदा

तेषाम्पञ्चमेनोपपद्यते । बौधायनोपि । पुत्रपौत्रप्रपौत्रानानुक्रम्याह प्रपितामहः पितामहः पिता स्वयं सौदर्य्या भ्रातरः सवर्णा याः पुत्रः पौत्रः प्रपौत्र एतानविभक्तदायादान्सपिण्डानाचक्षते । विभक्तदायादांश्च सकुल्यानाचक्षते । सत्स्वङ्गजेषु तद्गामी ह्यर्थो भवतीति । अस्यार्थः । पित्रादिपिण्डत्रयेषु सपिण्डनेन भोक्तृत्वात्पुत्रादिभिस्तत्पिण्डस्यैव दानात् । यो हि जीवन्पिण्डदाता स मृतः सन्सपिण्डनेन तत्पिण्डभोक्ता । एवं मध्यस्थितः पुरुषो जीवन्पूर्वेषां पिण्डदाता मृतश्च तत्पिण्डभोक्ता परेषां जीवतां पिण्डसंप्रदानं मृतैश्च तैः सह दौहित्रादिदेयपिण्डभोक्ता च ते येषामयं पिण्डदाता ये वा तद्दत्तपिण्डभोक्तारस्तेऽविभक्तपिण्डरूपन्दायमश्नन्तीत्यविभक्तदायादाः सपिण्डा एकपिण्डसम्बन्धात्पञ्चमस्य तु पूर्वस्य मध्यमः पञ्चमो न पिण्डदाता न च तत्पिण्डभोक्ता एवमधस्तनोपि पञ्चमो न मध्यमस्य न पिण्डदाता नापि तद्भोक्ता । एतेन वृद्धप्रपितामहात्प्रभृति पूर्वपुरुषास्त्रयः प्रतिप्रपौत्रप्रभृत्यधस्तनपुरुषास्त्रय एकपिण्डभोक्तृत्वाभावाद्विभक्तदायादाः पञ्चमप्रभृतय उभयतः सकुल्या इत्याचक्षते मुनिः कुलमात्रसम्बन्धात् । इदं सपिण्डत्वं सकुल्यत्वं दायग्रहणोपयोगित्वेनोक्तं तत्प्रकरणपाठात् । अशौचविवाहाद्यर्थं तु पिण्डलेपभुजामपि ॥ लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषमिति स्मरणात् । सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते इति च । पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथेति योगीश्वरवाक्यैकवाक्यया सप्तमे पुरुषे स्थित्वाष्टमे विनिवर्त्तत इति व्याख्येयम् । तेन यथा प्रत्तानान्तु स्त्रीणां त्रिपुरुषं विज्ञाय तद्वचनाशौचप्रकरणपठितं तन्मात्रोपयोगि त्रिपुरुषं सापिण्ड्यं तथेदं विभागमात्रोपयोगीति ध्येयं । कात्यायनस्तु स्पष्टमेव । पुत्रपौत्रप्रपौत्राणां धनग्रहणमाह । अविभक्ते मृते पुत्रे तत्सुतं रिक्थभागिनम् । कुर्वीत जीवनं येन लब्धं नैव पितामहात् । लभेतांशं स पित्र्यं तु पितृव्यात्तस्य वा सुतात् । स एवांशस्तु सर्वेषां भ्रातॄणां न्यायतो भवेत् । लभेत तत्सुतो वापि निवृत्तिः परतो भवेत् । इति प्रपौत्रानन्तरमुक्तो यः प्रणप्तृप्रभृत्यनधिकारः स सपिण्डत्वेन ध्येयः । सकुल्यत्वेन त्वस्त्येव यथाप्रत्यासत्तिः । भ्रातॄणामेकजातानामित्यादि तु दायातिरिक्तश्राद्धादिपुत्रकार्य्यकारित्वपरं भ्रातृपुत्रस्य पुत्रीकर

णासम्भवेनान्यः पुत्रीकरणीय इति नियमार्थम् ॥ अन्यथा भ्रातृपुत्रस्य भ्रात्रनन्तरमभिधानमपुत्ररिक्थहार्य्यभिधायकेवाक्ये क्रमपरेन सङ्गच्छेत । पुत्रादीनाञ्चयास्वामित्वादिविकमहोपकारकारित्वात्पुत्रादिभिर्गृहीतन्धनं स्वामिन एवोपकारकमुपकारप्रत्यासत्त्या तदीयमेव । उपकारप्रत्यासत्तिश्चाभ्यर्हिता । यथाह । ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः । पितॄणामनृणश्चैव स तस्मात्सर्वमर्हति ॥ तस्मादितिहेतुत्वेनोपकारकत्वस्योपन्यासाद्दायभागप्रकरणे धनस्वाम्युपकारकत्वातिशयोऽत्र वक्ष्यि तस्य तद्धनस्य भवति स एव तद्धनग्राहीति प्रत्यासत्तिः सा च गौण्यभ्यर्हिता चेति विद्भूचितम् । पुत्रादीनां महोपकारकत्वञ्चानेकश्रुतिस्मृतिपुराणादिप्रसिद्धम् । तत्र श्रुतिर्हरिश्चन्द्रोपाख्याने बह्वृचब्राह्मणे । यं त्विमम्पुत्रमिच्छन्ति ये विजानन्ति ये च न । किं स्वित्पुत्रेण विन्दते तन्म आचक्ष्व नारदेति गाथया हरिश्चन्द्रेण पृष्टो नारदो दशभिर्गाथाभिः पुत्रमाहात्म्यपराभिः प्रत्युवाचेति त्युक्तम् । स एकया पृष्टो दशभिः प्रत्युवाच ऋणमस्मिन्सन्नयत्यमृतत्वञ्च गच्छति । पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखमित्यादिना स्मृतयश्च । मनुविष्णू । पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः । तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा । शङ्खलिखितौ । पितॄणामनृणो जीवन्दृष्ट्वा पुत्रमुखम्पिता । स्वर्गी स तेन जातेन तस्मिन्संन्यस्य दृणम् । अग्निहोत्रञ्च वेदाश्च यज्ञाश्चैव सदक्षिणाः । ज्येष्ठपुत्रप्रसूतस्य कलां नार्हन्ति षोडशीम् । मनुर्विष्णुखितवसिष्ठहारीताः । पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते । अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥ याज्ञवल्क्यः । लोकानन्त्यन्दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः । यस्मात्तस्मात्स्त्रियः सेव्याः कर्त्तव्याश्च सुरक्षिता इति । पुराणादिषु तूपाख्यानानि पुत्रादिप्रशंसापराणि बहूनि । तस्मात्प्रपौत्रपर्य्यन्ताभावे विभक्तासंसृष्टपत्नी रिक्थहारिणी पत्नीति सिद्धम् । अत्र जीमूतवाहनः । बृहस्पतिविरोधान्नैतद्युक्तं स्याद्यदाह । विभक्ता भ्रातरो ये च सम्प्रीत्यैकत्र संस्थिताः । पुनर्विभागकरणे तेषां ज्यैष्ठ्यं न विद्यते । यदा कश्चित्प्रमीयेत प्रव्रजेद्वा कथञ्चन । न लुप्यते तस्य भागः सोदर्य्यस्य विधीयते । या तस्य भगिनी सा तु ततोंऽशं लब्धुमर्हति । अनपत्यस्य धर्म्मोऽयमभार्य्यपितृकस्य च । संसृष्टा

नान्नुयःकश्चिद्दिद्याशौर्य्यादिनाधनम्। प्राप्नोतितस्यदातव्योह्यंशश्शेषाःसमांशिनइति। अत्रोपक्रमोपसंहारयोःसंसृष्ट
त्वकीर्त्तनात्तन्मध्ये पठितमनुष्यतेतस्यभागःसोदर्य्यस्यविधीयतइतिवचनंसंसृष्टिविषयमवश्यमभ्युपगन्तव्यंचानपत्यस्यधर्म्मा
र्यमभार्य्यापितृकस्यचेत्यभिधानात्पुत्रदुहितृपत्नीपित्रादीनामभावेसंसृष्टसोदराधिकारःप्रतीयतइतिकथमस्यपत्नीबाधकत्वम्।
किञ्चनन्तुप्यमइतिसंसृष्टाविभक्तभ्रात्रन्तरीयद्रव्यस्यमिश्रीभूतस्यलोपाशङ्कायामुपपद्यते। अविभक्तासंसृष्टधनेतुविभक्तेका
लोपशङ्कातस्मात्संसृष्टविषयत्वमेवामीषांलिङ्गादपि। किञ्च। पत्नीतःपूर्वंभ्रात्रधिकारबोधकशङ्खादिवचनानांसंसृष्टाविभ
क्तविषयत्वंविस्पष्टवचनान्तरन्यायाद्वाप्रवक्तव्यादुच्यते। नाद्यःविस्पष्टविशेषवचनाभावात्। संसृष्टिनस्तुसंसृष्टीत्यादिवक्ष्य
माणवचनन्तुभ्रात्रधिकारावसरेविशेषकथकंनामुमर्थमवगमयति। बृहस्पतिवचनन्तुपुत्रादिपितृपर्य्यन्ताभावेसंसृष्टसोद
राधिकारबोधकंप्रत्युतासंसृष्टविषयकतामेवावगमयति। नद्वितीयः। न्यायोह्ययमभ्युच्यः। अविभागसंसर्गयोर्व्व्यैकस्यधन
न्तदेवापरस्यापीतिमृतस्यतत्रस्वत्वेपगतेपिजीवतस्तत्त्वानद्गामितायुक्तानस्वाम्यन्तरकल्पनेति। नचासौयुक्तः। अविभागसं
सर्गवतामप्यविज्ञातैकदेशव्यवस्थितप्रतिनियताश्रयमेवस्वत्वंनत्वेकैकत्रसर्वेषांनापिसमग्रेअनेकस्वत्वोत्पादविनाशकल्पना
प्रसङ्गात्। किञ्च। पाणिग्रहणाद्धिसहत्वमित्यादिप्राग्लिखितगौतमादिवचनेभ्यःपत्न्याःपरिणयादुत्पन्नम्पतिधनेस्वत्वमविभ
क्तसंसृष्टभर्त्तृमरणेनश्यत्यन्यत्रचननश्यतीतिकल्पनायाम्प्रमाणाभावः। पुत्रादिषुसत्सुतदधिकारशास्त्रबलादेवपत्नीस्वत्वना
शःकल्प्यते। अत्रापिसंसृष्टाविभक्तभ्रात्रधिकारशास्त्रात्तन्नाशःकल्प्यतइतिचेत्। अन्यस्यतादृशशास्त्रस्यादर्शनात्। अस्य
चेतरथाअन्योन्याश्रयप्रसङ्गादसिद्धेः। सिद्धेहिसंसृष्टाविभक्तभर्त्तृमरणेपत्नीस्वामित्वनाशेभ्रात्रधिकारशास्त्रस्यतद्विष
यकत्वम्। सिद्धेचतस्मिन्पत्नीस्वत्वनाशकल्पनेति। अतएवयोगीश्वरविष्ण्वादिवचनेपुत्रादिघ्यमेवोपात्तंननुविभक्तत्वासं
सृष्टत्वे। विभागस्योक्तत्वात्संसृष्टिनाञ्चवक्ष्यमाणत्वाद्यौदुपात्तेएवेतिचेत्। तर्हिमुख्यगौणपुत्रेषुरिक्थग्राहित्वयोक्तेषुतद

ष्टित्वविषयत्वमप्यर्थान्सिद्धमित्यपुत्रत्वमपिनोपादेयम् । अपुत्रस्येतरएवानेनैवक्रमेणेतिनियमार्थंतयातन्मात्रार्थक्यमन्ययोरपितु ल्यम् । विभागोक्तपर्यवसानन्तुनजानीमएव । संसृष्टिवचनंभ्रात्रधिकारावसरेविधानार्थंन्नपत्न्याद्यपवादार्थमित्युक्तमेवकिञ्च । शङ्खलिखितादिवचनानामविभक्तसंसृष्टभ्रातृपरत्वेनाव्यवस्थापुत्रस्यधनन्तद्विधभ्रातृगामितदभावेपित्रोर्हरेतामित्यस्यचो र्थःतदाचविकल्पनीयम् । किन्विभक्तासंसृष्टौपितरौगृह्णीयातामिति । उताविभक्तसंसृष्टाविति । तत्रप्रथमःकल्पः । तादृशयोःपित्रोःपत्नीबाध्यत्वात्कथंभ्रात्रभावेपत्नीतःपूर्वन्तयोरधिकारबोधः । नापिद्वितीयः । अविभक्तसंसृष्टपितृयाह्या त्मसर्वेषामविवादाद्वचनवैयर्थ्यात् । अपिच । यथापित्राभ्रात्राचविभक्तासंसृष्टधनेशरीरदानृतयाआत्मावैजायतेपुत्रःय थैवात्मातथासुतइत्येकत्वस्मृतेर्ध्वनदेहयोअपौत्रयोःपितुःप्रभुत्वान्नपितृदेयपितामहप्रपितामहपिण्डयोर्द्वयोःसपिण्डनेनमृ तस्यपुत्रस्यभोक्तृत्वाज्जीवतिचपितरिपुत्राणांपार्वणपिण्डदानाभावाद्भ्रातृभ्यःपूर्वम्पित्रोरधिकारस्तथेतरत्रापियुक्तः । अविभा गसंसर्गयोरविशेषाद्भ्रातुस्त्वाधिकारोयुक्तोनतुमात्रभावेपितुरिति । किञ्चपित्रोरविभक्तसंसृष्टत्वविशेषणमनुपपन्नंमात्रास हविभागाभावेनाविभक्तविशेषणानर्थक्यात् । अतएवसंसर्गाभावोऽपि । विभागपूर्वकत्वात्तस्य । यथाहबृहस्पतिः । विभक्तो यःपुनःपित्राभ्रात्राचैकत्रसंस्थितः । पितृव्येणाथवाप्रीत्यासतत्संसृष्टउच्यतइति । एतेनयेषामेवहिपितृभ्रातृपितृव्याणांपितृपि तामहार्ज्जितद्रव्येणाविभक्तत्वमुत्पत्तितःसम्भवतितएवविभक्ताःसन्तःपरस्परप्रीत्यापूर्वविभागध्वंसेनयत्तवधनन्तन्ममयच ममतत्तवेत्यभिप्नतयैकपाकेनपूर्ववदेकगृहितयास्थिताःसंसृज्यन्ते । नपुनरनेवम्भूताद्रव्यसंसर्गमात्रेणावणिजामपिसम्भूय समुत्थानेसंसृष्टत्वव्यवहारापत्तेः । प्रीतिपूर्वकाभिसन्धिरहितानांसौकर्य्यादिवशाद्द्रव्यमिश्रणेनव्यवहारादिकुर्वतांभ्रात्रा दीनामप्यतएवनसंसृष्टव्यवहारः । तस्मान्मातृगतोभ्रातृसद्भावाधिकारविरोधोदुःसमाधः । अतःप्रपौत्रपर्यन्ताभावएवावि शेषेणापुत्रप्रमीतभर्तृधनेसमस्तेधिकारिणीपत्न्येवरमणीयम् । नत्वश्रुतासंसृष्टविभक्तगोचरत्वकल्पना । जितेन्द्रिया

द्वयोः पैवमाहुः । प्रपौत्रपर्यन्ताभावे तस्या अपि भर्त्तुः श्राद्धादिनोपकारकत्वातिशयात् । पत्न्येव दद्यात्तत्पिण्डं तत्सुमंशं हरेत्त्वेति मनुवचनादिभ्यः । व्यासोऽपि । मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता । स्नाता प्रतिदिनं भर्त्रे भर्त्रे दद्याज्जलाञ्जलीन् । कुर्य्याच्चानुदिनं भक्त्या देवतातिथिपूजनम् । विष्णोराराधनञ्चैव कुर्य्यान्नियमनुव्रता ॥ दानानि विप्रमुख्येभ्यो दद्यात्पुण्यविवृद्धये । उपवासांश्च विविधान् कुर्य्याच्छास्त्रोदितान् शुभे ॥ लोकान्तरस्थं भर्त्तारमात्मानञ्च वरानने । तारयत्युभयं नारीं नित्यं धर्म्मपरायणेत्यादि । तस्मात्पत्न्या अपि पतितनरकनिस्तारकत्वाद्धनग्रहणं तया वाऽकार्य्यं कुर्वन्ती स्त्री या पुरुषेनार्द्धं शरीरं संस्मृत्यार्द्धं शरीरस्य यस्मात्सुराम्पिवेदित्यादिलिङ्गदर्शनात् पतिमपि पातयेदिति तया गृहीतं स्वाम्यर्थमेव तद्धनं भवतीत्यर्थं सर्वेभ्योऽन्येभ्यः पूर्वं पत्न्या एव पतिधनग्रहणं युक्तम् ॥ शङ्खादिवचने तु व्यवहितयोजना कार्य्या । अपुत्रस्य पुत्रपौत्रप्रपौत्ररहितस्य स्वर्य्यातस्य धनं ज्येष्ठाप्रशस्यतमा पत्नी लभते । तदभावे दुहितृदौहित्रयोस्तदभावे पितरौ लभेयातां तदभावे भ्रातृगामीति । तदाभाव इति मध्यपठितम्पूर्वोत्तराभ्यामविरोधात्सर्वस्य पूर्वमुक्तत्वाच्च सम्बध्यते । भ्रातृस्वामप्रजाः प्रेयादित्यादीनि नारदादिवचनान्यपत्नीरूपपरिणीतस्त्रीविषयाणि । स्त्रीशब्दमात्रोपादानात् । अत्र च पत्नीशब्दोपादानात् । परिणीतानामपि पत्नीत्वम्प्राक्प्रपञ्चितम् । अत एव नारदस्यैव वचनान्तरे । अन्यत्र ब्राह्मणात्किन्तु राजा धर्म्मपरायणः । तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृत इति ॥ स्त्रीशब्दश्रवणादपत्नीनामब्राह्मणस्त्रीणां वर्त्तनदानमाह । पत्नीनान्तु ब्राह्मणस्त्रीणामपि कृत्स्नभर्तृधनाधिकारमाह बृहस्पतिः । येऽपुत्राः क्षत्रविट्शूद्राः पत्नीभ्रातृविवर्जिताः । तेषां धनं हरेद्राजा सर्वस्याधिपतिर्हि सः । पत्नीभ्रातृविवर्जिता इति सब्रह्मचारिपर्य्यन्ताभावोपलक्षकम् । तेषां वक्ष्यमाणानाम्मध्ये राज्ञोऽननुप्रवेशात् । प्रदर्शितविष्णुवचने सहाध्यायिपर्य्यन्तानभिधाय तदभावे ब्राह्मणधनवर्ज्जं राजगामीति कथनाच्चेति तत्त्वं विविनक्तिस्म । तत्रेदमालोचनीयं । नारदशङ्खादिवचनानामविभक्तसंसृष्टिविषयत्वेन या व्यवस्था तत्र न्यायविरोधो वाद्वषां वचनविरोधो वा । न तावन्न्यायविरोधः ।

बाधकन्यायस्याभावात्। प्रत्युत साधकोन्यायोस्ति। तथाहि। अविभक्तप्रमीते तावत्तस्यांशस्तवनाभूत्किमियं गृह्णातु संसृष्टे जा
तांशः पुनः साधारणस्वत्वात्पत्न्यापगतः। नच साधारणस्वत्वाश्रयोप्यविभक्तस्तद्भागोस्त्येवेतिवाच्यम्। अस्तु तावत्तापियत्प्रति
योगिकं साधारणं स्वत्वं तदपगमे विद्यमानस्वत्वकः संक्रमएवोचितो नत्वन्यस्वत्वोत्पत्तिकल्पना। पाणिग्रहणाद्धि सहत्वं कर्मसु
तत्फलेषु द्रव्यपरिग्रहेषु चेति गौतमवचनात्तत्पत्न्या अपि तद्भागेऽविविक्तेपि स्वत्वमुत्पन्नं तन्नाशः किमिति तत्स्वत्वे कल्प्यत इति चेत्
। औपपत्तिकोस्विन्न तु तात्त्विकः। पत्न्याः पतिद्रव्ये स्वत्वं क्षीरनीरवदेकलोलीभावापन्नं सहाधिकारिककर्मोपयोगि न तु भ्रातॄणा
मिव परस्परं। तत एव तेषां विभागो न तु जायापत्योः। एतन्न्यायमूलकमेव जायापत्योर्न विभागो विद्यत इति वचनम्। तथाच प
त्युः स्वत्वापगमे तस्याः स्वत्वापगमस्तत्रावश्यकः। एवञ्चाविभक्तसंसृष्टिपतिस्वापत्तेयपत्न्याः स्वत्वोत्पत्तिः कल्प्यतामविभक्तसंसृष्टि
स्वत्वस्य सतोः बाधस्तु एवं वेति वीक्षायामुत्तरपक्षकक्षीकरणमेवोचितं लाघवात्। नच पत्न्येव विभागप्रतियोगिनी॥ प्रापकप्रमा
णाभावात्। न चैतान्येव वचनानि प्रापकाणि। तेषां विषयविवादाद्विभक्तासंसृष्टिविषयत्वेनाप्युपपत्तेः। अत एवान्योन्याश्र
योपि दवीयान्। विमर्शदशायां तदप्रसङ्गात्। सति विमर्शे तद्विषयत्वनिश्चयादेव। अविभागसंसर्गवतामपीत्यादिवचस्तु
कन्तन्नास्मत्पक्षक्षतिक्षमम्। प्रतिनियतविविक्तस्वत्वस्वीकारेपि संसृष्टविषयतायान्यायान्तरसिद्धत्वात्। नचाश्रुतविभक्ता
संसृष्टविषयत्वम्पत्नीत्यादिवाक्यानामप्रमाणकम्। विरुद्धनारदादिवचनानां व्यवस्थान्तरासम्भवे पूर्वोपपादितन्यायोपष्टु
ब्धार्थापत्तेरेव प्रमाणत्वात्। व्यवस्थान्तरसम्भवस्तु वक्ष्यामः। नच यथा विभागस्योक्तत्वात्संसृष्टिना त्वक्ष्यमाणत्वाद्यद्विभक्ता
संसृष्टिधनपरत्वम्पत्नीत्यादेरयातीति तदनुपादानन्तथा मुख्यगौणपुत्रविभागमुक्त्वा पत्नीत्यादिवचनारम्भात्पुत्रधनविषयत्व
त्वमपि सिद्ध्यति तेषामिव पुत्रस्येत्यपि न वाच्यमिति वाच्यं। एक एवौरसः पुत्रः न भ्रातरो न पितरो पुत्रा रिक्थहराः पितुरित्यस्यार्थस्य स्मृ
त्यन्तरोक्तस्य योगीश्वरेण वचनान्तरेणानुक्तेस्तद्बोधनार्थत्वात्। अन्यथा जीवज्जीविभागयोः सत्स्वपि पुत्रेषु पितृपत्नीतां स्वयं

प्रभात्क्रान्तथात्रापीति शङ्कास्यात् । पूर्वविभागपर्यवसानत्वज्ञानात्तत्त्वङ्कावसर इति यदि तर्हि स्मृत्यन्तरेऽप्येकस्यैवौरसेत
भ्रातरोऽनपि नर इति सूत्रं तत्र स्यमुख्यगौणपुत्रसत्वेऽपि व्याधनाधिकारप्रतिपादकत्वात्तस्यान्तरमानर्थक्यं स्यात्तस्य दीकरणा
र्थेऽर्थन्यायसिद्धमपि निबध्यते व्यवहारशास्त्रे इति समाधिः पदमात्रेऽस्तु नरसंस्तुवदः । सक्थार्थे विभक्तासंसृष्टत्वेऽपि प्र
तोनोपान्तरेति चेत् । स्वतन्त्रेच्छत्वान्मुनीनाम् । आक्षेपे सति विनिगमनानुसरणमिति न्यायेन यद्यवच्छेद्यार्थसिद्धेर्निवर्तनम
स्ति । तत्र सिद्धस्य गतिश्चिन्तनीयेति रीत्यास्पष्टीकरणार्थं तयावे यथेम्परिहियते ननु तदभिधानमपादनं सर्वे चोचितम्
। यत्र संसृष्टिनस्तु संसृष्टीत्यस्य भ्रात्रधिकारावसरे विशेषविधानमात्रार्थतया पश्चादपवादकत्वमित्युक्तमन्तदति वार्तम् ।
तुशब्दविरोधात् । अनन्तरं पूर्वापवादसन्दर्भाच्च । अत एव प्रतिवाक्यं तुशब्दोपादानम् । ज्ञीवादिवाक्यमुच्यादिसकल
दायग्रहणाधिकारिसंज्ञीवत्वादिनाधिकारापवादकमिति । अत एवमिताक्षरायां विज्ञानेश्वरेणाचार्य्येण तत्तथैव तानि वच
नान्यवतारितानि व्याख्यातानि च । यत्तु किञ्चेत्यादिना यदुक्तं लिखितवचने भ्रातृभावेऽपि चोरधिकारोविकल्पस्य खण्डितमस्य द
प्रतिफल्गु । सवर्णत्वमथापि व्युत्क्रमेण विभक्तसंसृष्टपितृपरत्वेन तस्य व्याख्यातुं शक्यत्वेनैकापर्यपनुयोगात् । यच्चापि चे
त्यादि । तदपि तुल्ययोगक्षेममित्युपेक्ष्यम् । यदपि किञ्चेत्यादि । तदपि मातंशे विशेषणासम्बन्धेऽपि योग्यतया प्रति
योसम्बन्धादयोग्यम् । वस्तुतस्तु साक्षान्मात्रा विभागाभावेऽपि जीवद्विभागेऽपि विच्छयातस्या अपि भागसम्भवाद्जीवद्विभा
गे तु साक्षादेव विभागोक्तेः प्रीत्याऽभिसन्धिविशेषपूर्वकमुक्तैः सह संसर्गासम्भावात् । न चैवं विभक्तो यदित्यादि बृहस्पतिवचन
विरोधः । अत एवमिताक्षराकृतापुक्तम् । संसर्गेऽन्नयेनकेनापि । किन्तु पित्रापितृव्येण वेत्यत्र सम्प्रतिमेनतद्वचनमुपन्यस्य
ते निवाच्यम् । यतस्तथासतिसमत्वलोकव्यवहारविरुद्धे दौहित्रादिसंसर्गोऽप्यन्याय्यः स्यात् । तस्माद्धेषां परस्परविभागस्ते
षामेव तत्पूर्वकः परस्परसंसर्गोऽप्यभिसन्धिविशेषपूर्वको न परस्परद्रव्यमिश्रीकरणमात्रेणावगाह्यादीनामिवेत्यत्र बृहस्पतिवच

ननान्दृव्यत्वेन्नमात्रादिनिवृत्तौ । त्रिदोषपरिसंख्यापत्तेः । अतएवभ्रात्रावापितृव्येणाथवेत्यनास्थायांवादिशब्दस्तत्रोपात्तः ।
रत्नाकरेचण्डेश्वरेणाप्युक्तम् । अनास्थायांवाकारः । तेनपितृव्यजेनांशिनाकृतविभागएकत्रस्थितःसंसृष्टःसर्वलोकगृहीतो
लभ्यतइति । वाचस्पतिरप्येवमेवाह । यत्तुतेनोक्तंपृथग्धनानामेकत्रमेलनमेवसंसर्गोलाघवात् । ननुविभागपूर्वकत्वन्तत्रवि
शेषणम्परस्परानुमतिश्चतत्रहेतुरिति । तन्न । पुनःशब्दविरोधात्विभागेपिसंसर्गशब्दप्रयोगापत्तेः । जन्मनास्वत्वानङ्गीका
रेणतत्रापिधनसम्बन्धाभावेनपुत्रद्वारैवतत्सम्बन्धात्प्रसक्तोरिक्थलोभेननियोगस्वीकारःप्रतिषिध्यते । नचात्रापिपत्नीभिन्नाया
भार्य्यायाभर्तुधनानधिकारात्तस्याएवरिक्थलोभेनप्रसक्तोनिषिध्यतेनियोगस्वीकारइतिनभवदुक्तप्रसक्तिप्रतीक्षेतिवाच्यम् ।
पत्न्याएवतत्रप्रस्तुतत्वात्तद्भिन्नभार्य्यापरत्वानुपपत्तेः । अतएवधारेश्वरादिभिर्नियोगार्थिपत्नीपरत्वेपत्नीत्यादिवाक्यस्येदमेवव
सिष्ठवचनम्प्रमाणतयोपन्यस्तम् । तस्मान्नारदवसिष्ठवाक्यबलात्संसृष्टिभर्तृधनग्रहणप्रतिषेधःपत्न्याबृहस्पतिवचनेचानपत्य
स्यधर्म्मोयमभार्य्यापितृकस्यचेतिकथनात्पत्न्यांसत्यांसोदरस्यापिसंसृष्टिभ्रातृधनग्रहणप्रतिषेधइतिविरोधस्यावश्यकःकथ
ञ्चिद्विषयव्यवस्थयापरिहर्त्तव्योपरिहृतोन्यैःपरिह्रियते । सन्दंशोत्थितप्रकरणवलात्प्रसक्तमप्यभार्य्यापितृकस्यसंसृष्टिवि
शेषणत्वमन्यथासिद्धनारदादिवाक्यानुरोधादसंसृष्टिपरत्वावश्यकतयाबाध्यते । वाक्यविरोधेप्रकरणस्याप्रयोजकत्वात् । न
चायमितिसर्वनाम्नासंसृष्टिधनग्रहणरूपधर्म्मस्यप्रक्रान्तस्यानेनविशेषाभिधानादनपत्यस्येतिवदभार्य्यापितृकस्येत्यस्यापिसं
सृष्टिप्रमीतविशेषणत्वमितिवाक्ययोरैक्यंविरोधःनवाक्यप्रकरणयोरितिवाच्यम् । सर्वनाम्नःसंसृष्टिधनग्रहणपरामर्श
कत्वेपिसोयमनपत्यसंसृष्टिस्वामिकधनग्रहणरूपोधर्म्मोभार्य्यापितृरहितस्यासंसृष्टिनोप्यनपत्यस्यप्रमीतस्य । असंसृ
ष्टिविभक्तप्रमीतस्यधनन्तुभार्य्यापितृसहितस्यैवानपत्यस्यसोदरोगृह्णीयान्नभार्य्यापित्रन्यतरवदितिवाक्यार्थोपपत्तेः । चका
रोप्येवमनुक्तासंसृष्टिसमुच्चयार्थोव्याख्येयःअतश्चासंसृष्टविषयेणानेनप्रकरणविच्छेदेजातेसंसृष्टानान्तुयःकश्चिदित्यधिम

वाक्ये संसृष्टपदोपादानमपि सार्थकं भवति ॥ अन्यथा प्रक्रमादेवात्रापि तल्लाभे तन्मन्दप्रयोजनं स्यात्। अत एव तार्तीये निवि
ष्टाधिकरणेऽसम्बद्धनिविद्विच्छिन्नसामिधेन्यवान्तरप्रकरणाद्यद्युपवीतं तन्न सामिधेन्यङ्गमपि तु महाप्रकरणाद्दर्शपूर्णमासाङ्ग
म्। ये तु पञ्चाम्नानागुणास्ते पुनर्वचनादेव दूरस्थानुवादेनैव द्वादशोपसान्त्ववत्सामिधेन्यनुवादेन विधीयत इति भट्टमतेन सिद्धा
न्तितम्। वस्तुतस्तु यातस्य भगिनीत्यनेन सोदराभावे भगिन्यधिकारः संसृष्टिधने प्रतीयते। तस्यैवाव्यवहितस्यानपत्यस्येति
वाक्यशेषस्थेनायमिति सर्वनाम्ना परामर्षस्तत्र वचनकोपि विरोधः। चन्द्रिकायामप्येवमेवोक्तम्। अविभक्तापुत्रपतिस्वामिकस
कलधनग्रहणन्तु पत्न्याः कात्यायनवचनविरुद्धम्। यदाह। स्वर्याते स्वामिनि स्त्री तु ग्रासाच्छादनभागिनी। अविभक्ते धनांशे
तु प्राप्नोत्यामरणान्तिकम्॥ तुशब्दो वाशब्दार्थे न था चायमर्थः। या साच्छादनमेव साक्षाल्लभते आमरणान्तिकं यावज्जीवं यया
वता धनेन जीवनं स्यधिकारिकमावश्यकञ्च कर्मसिद्ध्यति तावन्तं धनांशम्वा प्राप्नोति। धनांशमामरणान्तिकमित्युक्तेः कृत्स्नधन
मविभक्तस्य पत्युर्लभत इति निरस्तम्। न च स्त्रीशब्दश्रवणात्पत्नीव्यतिरिक्तस्त्रीपरमिदमणीति वाच्यम्। अविभक्त इति विशे
षणानर्थक्यापत्तेः। विभक्तेपि भर्त्तरि पत्नीभिन्नाया अपुत्राया भरणमात्रोक्तेः। अत एव कृतेप्यंश इत्यनुवृत्तौ बृहस्पतिः। प्रदद्या
न्वेव पिण्डस्तु क्षेत्रांशं वा यदीच्छति। अस्य व्याख्यानं स्मृतिचन्द्रिकायां। पिण्डग्रहणमशनाच्छादनोपलक्षणार्थं तात्पर्य्यान्नन्धन
न्त्यसाम्यादेकं क्षेत्रांशम्वा स्वरुच्याभर्त्रार्ह्यपत्नीतिविधवायै भ्रात्रादिसन्नधयाज्ञो प्रदद्यात्॥ एवकारः प्रदानस्यावश्यक
र्त्तव्यार्थ इति। एतद्विषयकमेव नारदवचनम्। यावन्तो विधवाः साध्व्यो ज्येष्ठेन श्वशुरेण वा। गोत्रजेनापि वान्येन भर्त्तव्यास्त्वा
च्छादनाशनैरिति॥ भर्त्तृधनग्राहिणी नित्यं सर्वत्र शेषः। धनग्रहणनिमित्तत्वाद्भरणं स्यात्। साध्व्य इत्यनेन सर्वत्र साध्वीनामेव भरण
मसाध्वीनां त्वनुपत्नीनामपत्नीनां च न तदपि। आच्छिंद्युरितरास्त्विति प्रागुक्तनारदवचनवाक्यशेषादिभ्यः॥ अत एव साध्वीनां
जीवनार्थं श्वश्रुरादिभिर्दत्तमन्यैरपि दायादैर्नापहरणीयमित्यप्याह बृहस्पतिः। स्थावरादि धनं स्त्रीभ्यो यद्दत्तं श्वशुरेण तु। न

त्वच्छक्यमपाहर्तुंम्दायादैरिहर्काहिं चिदिति ॥ अन्यादृशीनान्तुदत्तमप्यपहर्त्तव्यमित्याह कात्यायनः। भोक्तुमर्हति कृप्तांशं गुरुशुश्रूषणेरता। नकुर्य्याद्यदिशुश्रूषां शैलपिण्डेनियोजयेत्। अपकारक्रियायुक्ता निर्लज्जाचार्थनाशिका। व्यभिचाररतायाचस्त्रीधनन्नचसार्हति ॥ नार्हतीत्यनेननदेयञ्जीवनपर्य्याप्तमपि। दत्तमपिचतादृश्याः सकाशादपहरणीयमितिद्वयमप्युक्तम्भवति। यत्तुतस्मात्स्त्रियोनिरिन्द्रियाअदायाइतिश्रुतिवचनन्तन्मूलकञ्चअनिन्द्रियाह्यदायादाः स्त्रियोनित्यमितिस्थितिरितिमनुवचनन्तद्द्वयमपियासांसृङ्ग्याह्निकयाधनग्रहणंनोक्तन्तद्विषयमवसेयं। गौतममिताक्षरयांहरदत्तोप्येवमेवाह। केचित्तुनिरिन्द्रीयपदसमभिव्याहाराद्विन्द्रामात्रपरन्तदित्याक्षुस्तन्न। दायादत्वांशेनिन्द्रायानिषेधकल्पनावश्यम्भावात्। सगाह्यायबद्ध प्राप्तेर्न्नित्यानुवादासम्भवात्। अनिन्द्रियत्वन्तुपुम्पारतन्त्र्याद्वकश्चिदनुवादः। वस्तुस्वभावविपरीतनिषेधकल्पनस्यबाधात्। तस्मात्पूर्वोक्तएवसमाधिः। पराशरस्मृतिटीकायांविद्यारण्योर्य्यादिनायद्धनम्प्राप्तन्तदविभाज्यमितिव्याचख्युःपत्नीवतग्रहेपत्न्याअयोनास्तीत्यदायादपदस्यार्थः। तत्रहेतुरनिन्द्रियाइतिइन्द्रियम्वैसोमपीथइतसोमेपीन्द्रियशब्दप्रयोगात्ततोनिर्गतात्इतिसोमयानानधिकृताइतिपत्नीवतग्रहप्रशंसेति। इतिपत्न्यधिकारविचारः ॥०॥ पत्न्यभावेदुहितरोऽपुत्रविभक्तासंसृष्टिधनभाजः। तथाचमनुः। यथैवात्मातथापुत्रःपुत्रेणदुहितासमा। तस्यामात्मनितिष्ठन्त्याङ्कथमन्योधनंहरेत्। बृहस्पतिरपि। अङ्गादङ्गात्सम्भवतिपुत्रवद्दुहितान्टणाम्। तस्मात्पितृधनन्त्वन्यःकथंगृह्णीतमानवइति। अत्रपुत्रेणसमापुत्रवदितिचसाध्याजनकत्वेपिपुत्रेपित्रवयवानाम्भाकुल्येनसंक्रान्तेर्दुहितरिचपत्नीनांपुमान्पुंसोधिकेशुक्रेस्त्रीभवत्यधिकेस्त्रियेत्यादिवचनैःस्मृतिष्वायुर्वेदेचप्रतिपादनात्पुत्रतुल्यत्वन्दुहितुरुक्तमितिद्रष्टव्यम्। आत्मनि। आत्मावैजायतेपुत्रइत्यात्मभूतपुत्रतुल्यायामित्यर्थः। तिष्ठन्त्यामित्यनादरेसप्तमीतामनादृत्येत्यर्थः। यद्यप्यनेनौरसपुत्राभावेदुहितुर्द्धनग्रहणमित्यवन्यायउक्तस्तथापिगोणपुत्रपत्न्योरभावेदुहितुर्द्धनग्रहणमितिकोन्यायः। उच्यते। नारदेनमन्दानुग्रहायसोपिस्पष्टीकृतः। यदाह। पुत्राभावेतुदु

हितातुल्यसन्तानदर्शनादिति। विवृतञ्चेदन्तेनैव। पुत्रश्च दुहिता चोभोपि सन्तानकारकाविति। अयमाशयः। पुत्रदुहितरावुभोपि तुः पौत्रदौहित्राख्यसन्तानकारकावतः सन्तानप्रवर्त्तकत्वस्य तुल्यत्वात् दुहितुरपि पुत्रवदधिकारः। पौत्रदौहित्राख्यसन्तानयोश्च स्वरूपतस्तुल्यत्वाभावात्कार्य्येन तुल्यत्वमभिप्रेतम्। कार्य्यमपि नर्णापाकरणादि किन्तु यह पालक्षणम् पुत्रपौत्रैश्चर्द्धं गांदेयम्। पितामहद्रव्यमधिकृत्य च तत्रस्यात्सदृशं स्वाम्यम्पितुः पुत्रस्य चोभयोरिति वचनाभ्याम्पौत्रे सति दौहित्रस्य तदनधिकारात्। तेनादृष्टमत्र कार्य्यं श्राद्धकर्तृत्वम्। पूर्व्वेषान्तु स्वधाकारे पौत्रदौहित्रकामताइति विज्ञूनेः। एवञ्च दृष्टादृष्टोपकारकस्य सन्तानमुखेनोपकारक पुत्रात्केवलादृष्टोपकारकस्य सन्तानमुखेनोपकारिकादुहितान्यूना। नचैवमप्यपेक्षयाप्रत्यासन्नाऽजन्या दुहितेति पत्नीतः पूर्वं सैव धनमर्हतीति वाच्यम्। यतः सहाधिकारेणाग्निहोत्रादिवैदिककर्म्मोपकारिकाकामाख्यपुरुषार्थसाधनतया सन्तानसाधनतया च दृष्टादृष्टोपकारकर्त्री देहार्द्धसंस्तुता पत्न्येव ततोधिकातत्स्त्रपुत्राभावइति पत्न्यभावस्याप्युपलक्षकम्प्राग्लिखितविष्णुवचनाद स्माच्च योगीश्वरवचनात्। यद्यपि पुत्रकर्तृकश्राद्धे सम्प्रदानतया स्वयमेवादृष्टोपकारकः पिता दुहित्रपेक्षया प्रत्यासन्नइति पिता हरेदपुत्रस्य रिक्थमिति वचनस्यावसरस्तूचितो दुहितुः प्राक्। तथापि तस्यामात्मनि तिष्ठन्त्यामित्यनेन शारीरप्रत्यासत्त्यासैवायेसरीति तदभावे तद्वचनस्यावसरः। बाधदोपादानेन तस्य क्रमपरत्वाभावात्। ओमूतवाहनस्तु दुहितुरधिकारे सन्तानकारकत्वस्य हेतोर्निर्द्देशात्सन्तानस्य च पिण्डदस्यैवोपकारकत्वात् पिण्डदस्यानुपकारकत्वेनान्यसन्तानादसन्तानाच्चाविशेषात् पुत्रवती सम्भावितपुत्रा वा दुहिता धनाधिकारिणी। विधवात्ववंध्यात्वदुहितृप्रसूत्वादिना विपर्य्यस्तु पुत्रा पुनर्नाधिकारिण्येवेति दीक्षितमतमादरणीयमित्याह। तदपि चिन्त्यम्। प्राथमिककन्याधिकारस्य। अपुत्रमृतस्य कुमारी च कथं गृह्णीयात्तदभावे चोढा। हेतुनिर्द्देशस्य प्रत्यासत्त्यतिशयमात्रप्रदर्शकतयाप्युपपत्तेः। किञ्च। स्वयमेव कन्यायाश्च सम्भवे सम्भावितपुत्रायाः पुत्रवत्याश्चाधिकार इति वदन्हेतोर्व्यभिचारितान्दर्शयति। तस्माद स्मद्गुरूणां व्येवप्रत्या

सन्यर्थतया हेतुर्व्याख्येयः। धारेश्वरदेवस्वामिदेवरातप्रभृतयस्तु। पिताहरेदपुत्रस्येत्यादिवचनविरोधपरिहाराय दुहि-
त्रधिकारप्रतिपादकवचसां पुत्रिकाविषयत्वं तदभावे तु पित्रादय एव यथोक्तक्रमेणाधिकारिण इत्याहुः तदतिपेलवम्।
पुत्रिकायाश्चौरसो धर्मपत्नीजः समस्तस्मः पुत्रिकासुतः तृतीयः पुत्रः पुत्रिका विज्ञायत इति योगीश्वरवसिष्ठादिवचनैर्गौणपुत्र-
कोटिनिविष्टायाः क्षेत्रजादिपुत्रवन्मृतभ्रातरेण पितरः पुत्रा रिक्थहराः पितुरित्यत्र गौणपुत्रविषयेण मानवेन वचनेन पत्न्यां सत्याम-
पि रिक्थग्राहिण्यास्तदभावे रिक्थग्राहित्वं दण्डापूपिकयैव सिद्धमिति वचनारम्भानर्थक्यापत्तेः। दुहितृमात्रवाचकानां वचना-
नां विनाकारणं विशेषपरत्वकल्पनानुपपत्तेश्च। किञ्च। भवन्मते अङ्गादङ्गात्सम्भवतीत्यादिना पुत्रिकाविषयेणैव अपु-
त्रिकाया धनग्रहणे उक्ते पुनः। सदृशी सदृशेनोढा साध्वी शुश्रूषणे रता॥ कृताऽकृता वापुत्रस्य पितुर्धनहरी तु सेत्यनेन पुन-
र्धनहरत्वप्रतिपादनं तेनैव मुनिनाक्रियमाणं विवरणमात्रतयाऽपुनरुक्तं नैव स्यात्। सामान्यविशेषविषयतया तु स्पष्ट-
मेवापौनरुक्त्यं। सदृशोपि तु सवर्णा। सदृशेन सवर्णेनोढेति प्रकृष्टापकृष्टवर्णसम्बन्धनिरासाय। तज्जातस्योत्तमवर्णमातामह-
श्राद्धादिनिषेधादिति जीमूतवाहनोक्तमनादेयं। ऊढापदेनैवाधमवर्णसम्बन्धनिरासात्। नह्यधमवर्णोढत्वमुत्तमव-
र्णायाः सम्भवति। तस्मादुत्तमवर्णनिरासार्थमेव सदृशग्रहणम्। ननु नारदेन कन्यारूपाणाम्पितृभ्रातृरहितानां सर्वासामे-
व दुहितॄणाम्पितृधनप्राप्तिरुत्सर्गतोभिहिता। यथाह। स्यात्तु चेत्तद्दुहिता तस्याः पित्र्योंऽशो भरणे मतः। आसंस्काराद्भरेद्भा-
गम्परतो बिभृयात्पतिरिति। तस्या इति पतिपुत्रविहीनपत्नीर्मधिकृत्याह। तेन नादृश्या यदि दुहिता विद्यते तेन तस्या भरणनिमि-
त्तमात्रपित्र्योंऽशः तस्मात् विवाहसंस्कारात्भरणार्थमेव सा पितृधनभागं हरेत् परतो विवाहादूर्ध्वं पतिस्तां बिभृयात्। तेन तावत्का-
लभरणावशिष्टमपि ततो गृह्णीयात्। यथेष्टविनियोगार्थं तु कन्यायाः पितृधनग्रहणं दूरापास्तमेव। ततश्चास्यापवादकानि दु-
हितुः पितृधनप्राप्तिप्रतिपादकानि वचनानि सर्वाणि पुत्रिकाविषयाण्येव वाच्यानि। अन्यथा द्वयोरपि दुहितृसामान्यविषतयो

त्सर्गापवादत्वानुपपत्तेः। तस्माद्धारेश्वरादिमतमनुमन्तव्यमितिचेन्न। स्यादेवंयदिनारदवचनम्विभक्तविषयंस्यात्। पौर्वा
पर्य्यपर्य्यालोचनयासंसृष्टाविभक्तविषयन्तत्स्फुटमवगम्यते। ततश्चविभक्तविषयेदुहितृमात्रस्यपत्न्यभावेपितृधनेग्रहणप्र
तिपादकानिप्रापकाण्येवनापवादकानीतिनपुत्रिकामात्रविषयत्वेतेषांकिमपिबीजम्पश्यामः। यत्तुसकलपितृधनग्रहणाधिका
रप्रतिपादकतयाकन्याभ्यरित्यादिदेवलवचनञ्जीमूतवाहनेनोपन्यस्तन्तत्पूर्वापरविरुद्धं। जीवद्विभागेकन्याभ्यःविवाहमा
त्रोपयुक्तधनेनतस्यप्रमाणतयोपन्यासात्। तदपिचास्माभिःप्राङ्निरस्तम्। दुहितृष्वपिप्रथममप्रत्ताःपितृधनंगृह्णीयुस्तदभा
वेप्रत्ताः। तासामपिमध्येप्रागभावप्रतिष्ठितास्तदभावेप्रतिष्ठिताः। सर्वाःसमानरूपास्तुसमंविभज्यगृह्णीयुरित्यर्थःसिद्धम्॥
तथाचकात्यायनः। पत्नीपत्युर्धनहरीयास्यादव्यभिचारिणी। तदभावेतदेति। गौतमःस्त्रीधनन्दुहितृणामप्रत्तानामप्रतिष्ठि
तानाञ्चेति। अप्रतिष्ठितानिर्द्धनाः। यद्यपिस्त्रीधनमित्युक्तन्तथापितुल्यन्यायतयापितृधनविषयमप्येतत्। वंध्यत्वादिनासन्ता
नरहिताप्रतिष्ठितेतितुनयुक्तम्। तस्याःसन्तानमुखेनादृष्टोपकाराभावेनधनहारित्वायोगात्। सदृशीसदृशेनोढेतिप्राक्प
ठितंवृहस्पतिवचनंस्मृतिचन्द्रिकाकारइत्थंव्याचख्यौ। अत्राद्यानिचत्वारिविशेषणानिपत्न्याऊर्ध्वमर्थग्राहिणीदुहितृविषयाणि
। ततःप्राग्धनग्राहिणीदुहितृविशेषणेद्वेअवशिष्टे। कृताकृतावेत्यत्रपुत्रिकेतिविशेष्याध्याहारः। इतरत्रदुहितेतिविशेष्या
ध्याहारः। वाशब्दश्चव्यवस्थितविकल्पार्थः। एवञ्चायमर्थः। औरसपुत्रविहीनस्यपितुर्द्धनंद्विविधापिपुत्रिकापत्न्याःपूर्वंगृ
ह्णीयात्। सवर्णादिविशेषणोपेतातुदुहितानतऊर्ध्वमिति। एवञ्चपत्न्याऊर्ध्वंसवर्णादिविशेषणोपेतप्रतिष्ठिताप्रतिष्ठितो
ढानूढानांदुहितृणांसमवायेप्रागनूढैवगृह्णातिपित्राभर्त्तव्यत्वात्। तदभावेऊढाऽप्रतिष्ठिता। भर्त्राभर्त्तव्यत्वेपिभर्त्तुर्भरणासा
मर्थ्येनाप्रतिष्ठितत्वात्। तदभावेप्रागुक्तयापत्न्यासवर्णादिविशेषणोपेताप्रतिष्ठितापिधनंगृह्णाति। अन्यैस्तुकृतेतिपुत्रिका
परमकृतेतिदुहितृमात्रपरमभ्युपेत्यवाशब्दश्चनास्थापरमास्थायाखिलंदुहितृमात्रविषयंविशेष्याध्याहारमन्तरेणैवव्याख्यातं।

सेयनेनदुहितृमात्रपरामर्शात्। दुहितरइतिबहुवचनंसजातीयानांसमांशोसमानजातीयानांवर्णक्रमेणविशेषांशइतिप्रतिपादनाय ॥●॥ इतिदुहितुरधिकारः ॥ दुहितुरभावेदौहित्रः। चशब्दादनुक्तसमुच्चयार्थात्। तथाचविष्णुः। अपुत्रपौत्रसन्तानेदौहित्राधनमाप्नुयुः। पूर्वेषान्तुस्वधाकारेपौत्रदौहित्रकास्समाः। अपुत्रपौत्रेतिदुहितृपर्य्यन्ताभावोपलक्षणम् ॥ मनुरपि। अकृतावाकृतावापियंविन्देत्सदृशात्सुतम्। पौत्रीमातामहस्तेनदद्यात्पिण्डंहरेद्धनमिति। पौत्रीत्यनेनयथापुत्राभावेपौत्रःपितामहधनाधिकारीतथादुहित्रभावेदौहित्रइत्युक्तम्। वृहस्पतिरपि। यथापितृधनेस्वाम्यन्तस्याःसत्स्वपिबन्धुषु। तथैवतत्सुतोपीष्टेमातृमातामहेधने ॥ यथायेनदौहित्रदेयपिण्डेनदुहितापितृधनाधिकारिणीतथैवतेनैवपिण्डदानेनदुहितृसुतोपिमातामहधनेस्वामीसत्स्वपिबन्धुषुपित्रादिष्वित्यर्थः। नचपुत्रिकापुत्रविषयमिदम्वचनम् ॥ तस्याइतितत्सुतइतिचसर्वनामभ्याम्प्रकृतदुहितृमात्रपरामर्शात्। अतएवमनुरपिदौहित्रमात्रस्यैवमातामहधनाधिकारंदर्शयति। दौहित्रोह्यखिलंरिक्थमपुत्रस्यपितुर्हरेत्। सएवदद्याद्द्वौपिण्डौपित्रेमातामहायच। पौत्रदौहित्रयोर्लोकेनविशेषोस्तिधर्म्मतः। तयोर्हिमातापितरौसम्भूतौतस्यदेहतइति। पितुरितिमातुःपितुरितिव्याख्येयम्। अतएवायेमातामहायचेत्याह। अथवायथासस्वपितुरखिलंरिक्थंगृह्णातितथाऽपुत्रस्यमातामहस्यापि। स्वयमेवतत्पुत्रकार्य्यकारित्वात्। तदेवाहसएवेति। स्वपित्रेमातामहायचेत्यर्थः। मातापितरावितिचनयथाक्रममन्वयः। किन्तु। पौत्रस्यपितादौहित्रस्यमाताधनस्वामिनोदेहतःसम्भूताविति यथायोग्यम्। केचिदपुत्रपौत्रेतियथाश्रुतविष्णुवचनात्पत्नीदुहितृतःप्राग्दौहित्रस्यधनाधिकारमाहुस्तद्योगीश्वरविरोधात्तथैवतत्सुतोपीतिवृहस्पतिवचनेपिदुहितृनन्तरस्यजघन्यभावावगमेहेयम् ॥●॥ इतिदौहित्राधिकारः ॥ दौहित्राभावेपितरौधनभाजौ। अत्रमिताक्षरा। यद्यपियुगपदधिकरणवचनतायांद्वंद्वस्मरणात्तदपवादत्वाच्चैकशेषस्यमातापित्रोर्द्धनग्रहणेक्रमोनप्रतीयते। तथापिविग्रहवाक्येमातृशब्दस्यपूर्वनिपातादेकशेषाभावपक्षेचमातापितराविग्रहमातृशब्दस्यपूर्वंश्रवणात्पाठ

क्रमादेवार्थक्रमो ऽवगम्यमानः क्रमाकांक्षायां समर्थनपरिग्रहं कुमर्हति इति प्रथमं माता ऽपुत्रपुत्रधनभाक् तदभावे पिता। किञ्च पितापुत्रा न्तरेष्वपि साधारणो माता त्वस्यैवासाधारणीति प्रत्यासत्त्यतिशयात् तदनंतरः सपिण्डाद्युस्तस्य तस्य धनं भवेदिति मनुना प्रत्यासत्त्यति शयेन धनग्रहणाधिकारस्य विनिगमितत्वात् सपिण्डसमानोदकादिष्वेव विनिगमनाकांक्षायामेतद्वचनप्रवृत्तेरप्यदण्डवारितत्वादिति। अत्र स्मृतिचन्द्रिकाकारः प्रगल्भते। सारस्वतो भवतदुत्पत्तिवाक्ये ऽक्रमावगम्यभावेन याज्यक्रमेण प्रधानानुष्ठानक्रमः पञ्चमे निरूपितो नत्वेकशेषतस्त एव काचित् क्रमानुगतिरूपपादिता। तद्वदत्रापि क्रमार्थमन्यत्प्रमाणमन्वेषणीयं न्तद भावइतरेतरयोगस्य द्वंद्ववदेकशेषेप्यवगतेर्विभज्यैवापित्रोस्तुल्यतया धनग्रहणं युक्तम्। यत्तु पितास पत्नीपुत्रेष्वपि साधारणो मातात्वसाधारणीति प्रत्यासत्त्यतिशयात् तस्या एव पितृतः प्राग्धनग्रहणं न्याय्यमित्युक्तं तदप्यन्याय्यम्। नहि जननीजनकयोर्जन्यं प्रति प्रत्यासत्तितारतम्यमस्ति। पुत्रान्तरजनकस्यापि तज्जनकतायामातृतुल्यत्वात्। नहि जनकतापि व्यासज्यवर्त्तिनी॥ नच पितृगृहीतं धनं भिन्नोदरेष्वपि संक्रामति। मातृगृहीतत्वे तत्सहोदरेष्वेवेति मातुरेव धनग्रहणमिति वाच्यम्। तस्याः प्रत्यासत्तेर्भ्रातृभगिनीधनाधिकारविनिगमकतया जनकाज्जनन्या धनग्रहणविनिगमकत्वासम्भवात्। द्वंद्वस्थानीयैकशेषावगतौ प्रत्यासत्तेरप्रयोजकत्वाच्च। सत्यां हि क्रमाकांक्षायां सा क्रमनियामिका न त्वसत्यामपि। तस्मात् पित्रोस्तुल्यत्वान्मात्रा द्विभज्यैवानपविधुरपुत्रधनग्रहणमिति। श्रीकरस्तदयुक्तं। पिताहरेदपुत्रस्य रिक्थं सर्व्वमिति तस्य ह्यपुत्रस्य मातादायमवाप्नुयादित्यादिवचनेषु पितुर्मातुश्च निरपेक्षसाम्यप्रतीतेर्युगपद्ग्रहणायोगात्। व्रीहियवयोर्निरपेक्षसाधनत्वप्रतीतौ मिश्रत्वायोगवत्। केचित्तु मातुर्गर्भधारणपोषणादिनात्यन्तोपकारित्वात् सहस्रन्तु पितुर्म्माता गौरवेणातिरिच्यत इत्यादिस्मरणाच्च प्रथमं मातुर्द्धनाधिकारमाऊस्तदपि तुच्छम्। पितुरपि संस्कारवृत्तिसम्पादनादिना वक्तृधार्यसंविधातृत्वात्तयोरपि पिता श्रेयान् बीजप्रधान्यदर्शनादित्यादिस्मरणेन सत्प्रतिपक्षत्वाच्च गौरवमात्रस्य धनग्रहणप्रयोजकत्वे। उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिते

ण्यादिस्मरणाच्च पितृतोऽपि पूर्वं मातुस्तस्याधिकारापत्तेर्भ्रातृभ्रातृपुत्रयोश्च सतोः पितामहपितृव्यादीनामेव प्रागधिकारप्रसक्तेः ।
जीमूतवाहनमते । पितरावित्यत्रापि पितृक्रम एवावगम्यते । तथाहि । पितृप्रातिपदिकात्प्रथमम्पितुरवगतौ द्विवचनाच्च तेनै
कशेषकल्पनायां सरूपैकशेषासम्भवे विष्णुमन्वादिवचनसम्बादाच्च विरूपैकशेषकल्पने स्वयमेव मातुरवगमात् । अतः क्रमज्ञानं
क्रमाभिधानव्याप्यं क्रमाभिधाने व्यापके निवर्त्तमाने निवर्त्तत इति श्रीकरोक्तो विपरीतक्रमो निरस्तः विज्ञानेश्वरायानुक्तेत्याह । तस्मा
न्नैयायिकक्रमस्याव्यवस्थितत्वाद्बृहद्विष्णुवचनोक्तः क्रम एवादरणीयः । तत्र च दुहितृगामीत्युक्त्वा तदभावे पितृगामी त
दभावे मातृगामीत्युक्तम् । मिताक्षराकारस्य तु प्रथमं तत एव तादृशपाठेनैव बृहद्विष्णुवचनं लिखितं तस्त्विह हेतुन्यायमात्रावलम्बने
न पितरावित्यत्र पितृतः प्राङ्मातुः पुत्रधनाधिकारं सिद्धान्तयतो महत्येव हृदयशून्यता प्रतिभाति । दौहित्रस्यापि दुहित्रस्यापि
दुहितृकोटिनिविष्टत्वाद्बृहद्विष्णुना पृथगनभिधानेनैतद्दौहित्राभावेऽपि दुहितृभावेनोपलक्ष्यत इति मन्तव्यम् । तस्मात्स्मृ
तिचन्द्रिकामदनरत्नकारकल्पतरुरत्नाकरपारिजातकारप्रभृतीनाम्बहूनाम्पितुरभावे मातुः पुत्रधनाधिकार इत्येव सिद्धान्तः ।
वाचस्पतिना तु तदभावे मातृगामिनी तदभावे पितृगामीति बृहद्विष्णुवचनम्पठित्वा यथा मिताक्षरामेव सिद्धान्तितं तन्न तत्कृतापि तदति
रिक्तग्रन्थे तथा पाठस्यालिखनाद्भ्रान्तिविलसितमेव । विग्रहवाक्ये मातृशब्दस्य पूर्वनिपातादित्यपि मिताक्षराग्रन्थो दुष्टः विग्रह
वाक्ये पूर्वनिपातनियमाभावात् । समासे हि तन्नियमः शाब्दिकैः स्मर्यते न तु विग्रहवाक्य इत्यादि विज्ञानेश्वरोक्तन्यायेऽयं दूषणमन्यै
रुक्तं तत्परिहाराय पराक्रम्यते । युगपदधिकरणवचनता तावद्द्वन्द्वस्य वचनाधिकरणे वार्त्तिके तन्त्ररत्ने च महता प्रबन्धेन निरस्ता
। इतरेतरयोगोऽपि पदान्तरान्वये द्वन्द्वाच्छाब्दरीत्या प्रतीयते तेन पितरौ धनभाजावित्यनेन युगपदन्वयोऽपि वस्तुगत्या तयोः क्रमेऽपि
न वाक्यदोषः । सर्वैश्च श्रीकरभिन्नैस्तदभ्युपगमात्सर्वैः समाधेयमिदम् । एकशेषाभावपक्षे च मातापितरौ मातरपितरावित्यत्र मा
तृशब्दस्य पूर्वश्रवणात् समासैकशेषयोश्च तुल्यप्रतीतिजनकत्वाभावे विकल्पायोगाद् मातापितराविति प्रतीतेरभ्युपेया विग्रहवाक्येष्वपि पू

वैनिपातनियमो नानुशासनसिद्धस्तथापि व्याख्यातृसम्प्रदायसिद्धोऽस्त्येव । नहि कोऽपि पिता च माता च पितराविति विग्रहं दृश्यते किन्तु माता पिता च पितराविति वेत्यणुरपि विशेषो व्यवसायकर इति न्यायेन तस्यापि विनिगमकता सम्भवतीत्यनेनाशयेन तथोक्तः सम्भवः । पितुः पुत्रं नरसाधारण्यं मातुस्तु साधारण्यमिति प्रत्याख्यानिरपि जनकतया अथासज्यवृत्तित्वेपि तदभिप्रायेणैवोक्ता । साधारण्यासाधारण्ये हि सम्बन्धहतेऽव्यपदेशप्रतीतिविलम्बाविलम्बनेभवत एव तथानुभवात् । वाक्यार्थबोधेऽक्रमाभावे किमिति वस्तुक्रमआश्रीयत इति श्रीकरेण किन्तु वचनान्तरे निरपेक्षस्वाम्यावगत्याक्रमापेक्षया स्मृतिचन्द्रिकाकारादिभिरप्यवश्यमिष्टस्त्येव । वृद्धिह्रिस्तु वचनविरोधः परन्तु गुरुतरो बाधिष्यते तत्रापि यथाशक्ति प्रतिविधीयते । गौरवप्रतिपादकानि वचनानि तावन्मातापितृविषयाणि विरुद्धानि दृश्यन्ते । तानि विषयव्यवस्थयावश्यमविरोधन्नेयानि । तथाहि । उपाध्यायादृशाचार्य्य आचार्य्याणां शतम्पिता । सहस्रन्तु पितुर्म्माता गौरवेणातिरिच्यते । गर्भधारणपोषाभ्यान्तेन माता गरीयसीत्यादीनि मातुरभ्यर्हितत्वप्रतिपादकानि । तयोरपि पिताश्रेयान्बीजप्राधान्यदर्शनादित्यादिस्मृतिवचनानि पित्राज्ञया परशुरामेण मातुः शिरश्छिन्नं । रघुनाथेन कौशल्यया निवारितेनापि पित्राज्ञया राज्यम्विहाय वनवास आदृत इत्यादिपौराणिकान्यार्थदर्शनानि च पितृपूज्यताप्रत्यायकानि । तेषाञ्चायमविरोधप्रकारो यः पिता महागुरुलक्षणोपेतः स गुरुर्य्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छतीत्यादियोगीश्वरादिवचोभिः प्रतिपादितो माता च तदाज्ञावशवर्त्तित्वादिपतिव्रतात्वप्रयोजकसमस्तलक्षणरहिता । तयोर्म्मध्ये मातुरपेक्षयापितैवाधिकाभ्यर्हितः । यत्र तु माता रेणुकाद्यादिवत्समस्तपतिव्रतागुणोपेता पिता तु जन्ममात्रप्रदः स तत्र मातैव पितुरपेक्षयाभ्यधिकमान्या । चिरकारिकोपाख्यानादौ महाभारतादप्येवमुपाख्यानस्वरसादयमर्थ उन्नीयते न तदत्रापि मन्वादिवचनेषु पुत्रपुत्रधनग्रहणाधिकारः क्वचिन्मातुः प्रथमम् । क्वचित्पितुः प्रतीयमान एवमेव व्यवस्थापयितुमर्हः ॥ तथाहि । अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात् । मातर्य्यपि च वृत्तायाम्पितुर्म्माता हरेद्धनमिति मनुः । भार्य्यासुतविहीनस्य तनयस्यामृतस्य च ।

मातारिक्थहरी ज्ञेया भ्राता वा तदनुज्ञयेति वृहस्पतिः । पुनर्मातुरेव । पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वेति । तदभावे पिता
तदभावे मातेति प्राग्दर्शितम्वृहद्विष्णुवचनानि । योगीश्वरवचने तु पितरावित्यत्र विज्ञानेश्वरो मरीच्या प्राङ्मातानन्तरं पिता । अ
न्यमनेन सम्भूय विभागः पितुर्वा प्राधान्यमिति विप्रतिपन्नो पितुरधिकमान्याया माता सा पितुरपेक्षया प्रथमाधिकारिणी । या तु पितु
रपेक्षयान्यूनमानभाक् सा पितुः पश्चात् । युक्तञ्चैतत् । वृत्त्यादिसन्निधानमकुर्वतः पितुरपेक्षया मातुरेवाधिकोपकारकत्वाद्ध
नग्रहणम् । वृत्त्यादिसन्निधानकर्तुस्तु तस्य यावज्जीवम्भरणपोषणादिनातिशयितोपकारकस्य धनग्रहणमिति सर्वस्मृती
नां सर्वनिबन्धानाञ्चादुस्थाता भवतीत्यादि सुधीभिर्विभाव्यम् ॥ * ॥ पित्रोरभावे भ्रातरो धनभाजः ॥ यद्यप्यपुत्रधनं भ्रातृगामि
अपुत्रस्य स्वर्य्यातस्य भ्रातृगामि द्रव्यं तदभावे पितरावित्यादिशङ्खपैठीनसिवचनयोः भ्रातर एवेति । मनुश्च । पितृतः प्राक् भ्रातृ
णान्धनग्रहणम्प्रतीयते । मातर्य्यपि च वृत्तायां पितुर्माता हरेद्धनमिति च मनुवचने भ्रातृतः प्राक्पितामह्यास्तथापि क्रमपरयोगी
श्वरवृहद्विष्णुवचनाविरोधाय तेषान्धनाधिकारमात्रपरत्वमेतत्क्रमाविरोधस्तु वचनार्थमेव मनुना भ्रातर एव वेति पैठीनसिनापि ज्येष्ठा
वा पत्नीति वा शब्दः प्रयुक्तोऽन्यथा तुल्यकक्ष्याधिकारिषु तत्प्रयोगोऽत्यन्तमयुक्तः स्यादिति निमिताक्षराकारदयो बहवः । कल्पतरुका
रस्तु पत्नी भ्रातृस्थले भ्राह्यादयुधिकारिणी साध्वी पत्नी प्रथमाधिकारिणी तदन्या तु भ्रातृपितृतो नानन्तरम् । पितृभ्रातृस्थले तु पितृ
पितामहाद्युपार्ज्जितं यद्विभागेन पुत्रे संक्रान्तधनं तस्मिन्न पुत्रे प्रमीते पित्रोः पितृद्रव्याविरोधेन यत्नेनोपार्ज्जितं तत्र पित्रोः स्वत्वे
रपि भ्रातॄणामेवेत्याह मम मनुप्रतिभाति मातर्य्यपि च वृत्तायामिति मनुवाक्ये । तदभावे मातापितराविति शङ्खपैठीनसिवचनयोस्त
तो दायमपुत्रस्य विभजेरन्सहोदराः । तुल्या दुहितरो वापि ध्रियमाणः पितापि वा । सवर्णा भ्रातरो माता भार्य्या चेति यथाक्रमम् ।
तेषामभावे गृह्णीयुः कुल्यानां सहवासिन इति देवलवचने । सर्वत्रापि वृत्तायान्तदभावे । यथाक्रममित्यादिपदैः क्रमप्रतीते
र्योगीश्वरवृहद्विष्णुवचनयोरेव क्रमपरत्वमितरेषान्त्वधिकारमात्रपरत्वेन तदविरोधेन तत्तत्स्थाननिवेशे न पक्षतिरिति समाधि

नैवसाधुः किन्तुक्षेत्रजादिपुत्रस्यवयथास्मृतिवचनक्रमविपर्य्यासश्चोरसानुकूल्यप्रातिकूल्यगुणवत्त्वागुणवत्त्वादिभिर्य्यवस्था
पितस्तथात्रापिदायभागप्रकरणेपुत्रादीनाम्पित्राद्युपकारकत्वकीर्त्तनस्यगुणवत्त्वादिकीर्त्तनस्यवानन्यप्रयोजनत्वात्प्रत्यास
त्तितारतम्यवत्। धनस्वाम्युपकारातिशयानतिशयगुणवत्त्वागुणवत्त्वादिभिर्यथावचनंससर्वोपिक्रमविपर्य्यासःसमाधेयोन्येतु
समाधयःकुशकाशवलम्बनमात्रतुल्याअनुपादेयाइति। एवमग्रेपीतिसर्वंसुस्थम्। भ्रातृष्वपिप्रथमंसहोदराः। अनन्त
रःसपिण्डाद्यस्तस्यतस्यधनम्भवेदितिमनुनाबहवोज्ञातयोयस्यसकुल्याबान्धवास्तथा॥ यस्त्वासन्नतरस्तेषांसोनपत्यधनंह
रेदितिवृहस्पतिनाचप्रत्यासत्त्यतिशयस्यैवासतिविशेषवचनेविनिगमकत्वेनोक्तेः। भिन्नोदराणांमातृक्रमविप्रकर्षात्। भ्रातर
इतिसामान्यग्रहणात्सोदरभावेभिन्नोदराः। इदमेवव्यक्तमुक्तंसंग्रहकारेण। सोदर्य्याःसन्त्यसोदर्य्याभ्रातरोह्विविधायदि।
विद्यमानेप्यसोदर्य्येसोदर्य्याधनभागिनइति॥ इतिभ्रात्रधिकारः॥●॥ भ्रात्रभावेतत्सुताःभ्रातृसुताधनभाजः। नचतथान
त्सुताइतितथाशब्देनभ्रातृपुत्रयोःसादृश्यप्रतिपादनात्। अनेकपितृकाणान्तुपितृतोभागकल्पनेतिवचनाच्चानयोःपित्रभावेवि
भज्यधनग्रहणमस्त्वितिवाच्यम्। विष्णुवचनाविरोधस्तथाशब्दस्यचशब्दार्थत्वात्। अन्यथातथापदस्यपूर्वत्राप्यन्वयसम्भवेन
पित्रोर्भ्रातृणाञ्चविभज्यग्रहणमित्यपिकुतोनस्यात्। तर्ह्वोद्विष्णुवचनविरोधात्ते(न्ये?)गुच्यतेसोत्रापितुल्यः। अनेकपितृकाणान्त्विति
वचनेभ्रात्रभावेतेषामधिकारेसम्पन्नेकस्मिंश्चिदप्यपुत्रेभ्रातरिप्रमीतेविद्यमानानांभ्रातृणांसर्वेषान्तद्धनसम्बन्धेजातेतद्विभा
गात्प्रागेवतन्मध्येपियदिकश्चिन्मृतस्तदातत्पुत्राणाम्पितृव्यैःसहसमविभागेप्रसक्तेस्वपितृविभागमेवतेविभज्यगृह्णीयुर्नसर्वेपि
तृव्यसममित्येतदर्थम्॥ भ्रातृसत्त्वेतत्पुत्राणाम्पितृव्यधनेऽनधिकारात्। पूर्वाभावेपरःपरइतियोगीश्वरवचनात्तदभावेभ्रा
तृपुत्रगामीतिविष्णुवचनेभ्रातृपरामर्षकतत्पदेनभ्रात्रभावाभिधानाच्च। भ्रातृपुत्रेष्वपिप्रत्यासत्त्यतिशयात्पूर्वंसोदरभ्रातृजास्त
दभावेभिन्नोदरजाःयुक्तञ्चैतत्। असोदरभ्रातृपुत्रोहिधनिनोमातरम्विहायस्वपितामहीविशिष्टस्यधनिपितुःपिण्डन्ददाती

निसोदरभ्रातृपुत्राज्जघन्यस्तदनन्तरमेवाधिकारीति । नचसपत्नीकत्वेनत्र्याणांश्राद्धदेवतात्वात्सपत्नमात्रादीनामप्यस्ति
तत्रानुप्रवेशइतिवाच्यम् । मात्रादिश्राद्धानांस्वजननीपितृजननीपितामहजननीष्वेवमुख्यत्वात्तेनैवचरूपेणश्राद्धानुप्रवेश
स्मरणात् । यथास्मरन्ति । स्वेनभर्त्रासहश्राद्धंमातामुंक्तेस्वधाकरं । पितामहीचस्वेनैवस्वेनैवप्रपितामहीति । सपत्नमात्रादी
नामनुप्रवेशःप्रत्युत । अपुत्रायेमृताःकेचित्पुरुषावास्त्रियोपिवा । तेषामपिचदेयंस्यादेकोद्दिष्टन्नपार्वणमितिस्मरणाद्दायाति
। किञ्च । सपत्नीकदेवताकश्राद्धविधेःपुत्रादिसर्वजनाधिकारिकत्वात्सपत्नमात्रादीनाञ्च नित्यत्वान्नित्यानित्यसंयोगाविरोधान्मा
त्रादिसापेक्षमेवसपत्नीकत्वविधायकत्वंयुक्तं ॥ इतिभ्रातृपुत्राधिकारः ॥●॥ भ्रातृपुत्राभावेगोत्रजाः । पूर्वोक्तपितृभ्रातृतत्सुत
भिन्नागृह्यन्तेगोवलीवर्दन्यायात् । तेचपितामही । सपिण्डाःसमानोदकाश्च । तत्रप्रथमम्पितामहीधनभाक् ॥ मातर्य्यपिच
वृत्तायांपितुर्म्माताहरेद्धनमितिमानवान्मात्रनन्तरम्पितामह्याधनग्रहणेप्रसक्तेपित्रादीनांभ्रातृसुतपर्य्यन्तानामव्यवधानक्रमाणाम
न्तस्तदनुप्रवेशासम्भवादुत्कर्षेपर्य्यन्तदुक्तालनकारणाभावात्तदनन्तरम्पितामहादयोन्येगोत्रजाइतिविज्ञानेश्वरः ॥ अत्रस्मृ
तिचन्द्रिकायांगोत्रजाइत्यत्रसरूपैकशेषेणपुमांसएवगोत्रजानतुस्त्रीरूपाः । विरूपैकशेषोहिकुक्कुटावानरमिथुनङ्करिष्या
मइत्यादिवाक्यशेषादिसमभिव्याहारादिप्रमाणान्तरावगततात्पर्यग्रहनिबन्धनीनचात्रप्रमाणमस्ति । प्रत्युतभ्रातृस्तुतादिग्रह
णर्य्येपुङ्गोत्रजग्रहणस्यैवसाधकमस्ति । किञ्चपत्नीदुहित्रादीनाम्पृङ्ग्याहीकयाधनग्रहणाधिकारोक्तेस्तस्मात्स्त्रियोनिरिन्द्रि
याअदायादाइतिश्रुतेरस्तुतच्छ्रुतिरिक्तविषयतागोत्रजादिस्थलेतद्विरोधादिरूपैकशेषकल्पनैवहातुमर्हा । अतएवजीव
त्पुत्रेभ्यःपितादायंविभजेदित्यापस्तम्बसूत्रव्याख्यानेतद्भाष्यकारेणपुत्रेभ्यएवदायंविभजेतनस्त्रीभ्योदुहितृभ्यइत्युक्तोक्तं
यद्यपिभ्रातृपुत्रैःसहदुहितृभ्यामितिपाणिनिस्मरणात्पुत्रेभ्यइत्यत्रपुत्राश्चदुहितरश्चेतिविगृह्यविरूपैकशेषेणदुहितृणाम
प्यत्रपुत्रेनुप्रवेशःशक्यतेकर्त्तुन्तथापियुमांसोदायादानस्त्रियः । तस्मात्स्त्रियोनिरिन्द्रियाअदायादाइतिश्रुतेरिति । श्रुति

विरोधात्तात्पर्य्यग्राहकमानाभावाच्चविरूपैकशेषोऽनुशिष्टोऽयत्नग्राह्यइतिभाष्यकाराभिप्रायः। जीमूतवाहनेऽपियाज्ञव
ल्क्येनचपित्रादिदौहित्रस्यापितद्गोत्रजातस्यपिण्डदानानन्तर्य्यक्रमेणाधिकारप्रतिपत्त्यर्थंगोत्रजपदग्रहणंकृतं। सपिण्ड
स्त्रीणाञ्चयुद्दासार्थंञ्चतासामतद्गोत्रजातत्वात। अतएवअर्हन्तिस्त्रीत्यनुवृत्तौबौधायनः॥नदायन्निरिन्द्रियाअदायादाश्चस्त्रि
योमताइतिश्रुतेरिति। नायमर्हन्तिस्त्रीत्यन्वयः। पत्न्यादीनान्त्वधिकारोविशेषवचनादविरुद्धइति। तत्रसाधुः। मन्वादि
वचनेषुप्राग्लिखितेषुपितामह्याधनाधिकारस्यशृङ्गग्राहिकयैवविधानात्तदेकवाक्यतयायोगीश्वरवचनस्यापिविरूपैकशेषेणा
तत्संग्रहेऽपिश्रुतेस्तदन्यपरत्वेनाविरोधात्। जीमूतवाहनस्यतुमात्रधिकारविचारप्रस्तावेपितामहसन्तानात्पूर्वम्पितामह्याश्च
परतःपितामह्याधनाधिकारः। पितृतःपरतोमात्रधिकारवत्। याज्ञवल्क्येनमाचधिकारप्रदर्शनेनैवपितृव्यादिभ्यःपूर्वम्पि
तामह्याअधिकारस्यसूचितत्वात्पृथङ्नोक्तइतिवदतोनचसपिण्डस्त्रीणुदासार्थंगोत्रजग्रहणमवदतःपूर्वापरविरोधानुसन्धान
मपिनास्ति। शृङ्गग्राहिकयायोगीश्वरवचनेपितामह्याःपितृव्यादिपत्नीवदनभिधानस्यतुल्यत्वात्तद्ददेवादायादश्रुतिप्रवृत्तेर
विरोधात्। विद्यारण्यश्रीचरणोक्तप्राग्लिखिततस्मान्निरिन्द्रियाइत्यादिश्रुतिव्याख्यानेनतुस्त्रीणान्दायग्रहणप्रतिषेधकत्वमेवा
स्याःश्रुतेर्न्नास्तीतिनवाशङ्कानवोत्तरं। परन्तुबौधायनमुनिवचनविरोधेतद्व्याख्यानङ्कथमुपपद्यतां। अस्तुवाइन्द्रियपदस्यवा
क्यशेषात्सामान्यपरतातथापिदायादत्वाभावाभिधानावलम्बनस्यान्यस्यासत्वान्निरालम्बनश्रुतेश्चासम्भवान्निरुक्तवाक्यैर्न्नानुपप
त्तिप्रसूतप्रतिषेधकल्पनावश्यम्भावात्। तस्माद्दुर्भैणाविज्ञानेनहतेनब्रह्महेत्यत्रेवेतिध्येयं। पितामह्याअभावेपितामहादयः
सगोत्राःसपिण्डाधनभाजः। भिन्नगोत्राणांसपिण्डानाम्बन्धुशब्देनग्रहणात्। तत्रापिपितृसन्तानाभावेपितामहीपितामहःपि
तृव्यास्तत्पुत्राश्चक्रमेणधनभाजः। पितामहसन्तानाभावेप्रपितामहीप्रपितामहस्तत्सन्तानान्मूनवञ्चेत्येवमासप्तमात्समानगो
त्राणांसपिण्डानामपुत्रधनभाक्त्वं॥ सपिण्डाभावेसमानोदकानाम्। तेचसपिण्डानामुपरिसप्त। जन्मनामज्ञानावधिकावा।

यथाह मनुः । सपिण्डतातु पुरुषे सप्तमे विनिवर्त्तते । समानोदकभावस्तु निवर्त्तेता चतुर्द्दशात् । जन्मनाम्नोः स्मृतेरेके तत्परं गोत्रमुच्यत इति । विष्णुवचने बन्धुसकुल्यपदाभ्यां सपिण्डसगोत्रौ गृह्येते इति प्रागेव प्रतिपादितं । समानोदकाश्च पिप्रत्यासत्तिक्रमेण धनभाजः । समानोदकाभावे बन्धवो धनभाजः । बन्धवश्च त्रिविधा आत्मबन्धवः पितृबन्धवो मातृबन्धवश्च । तथा च स्मृतिः । आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः । आत्ममातुलपुत्राश्च विज्ञेया ह्यात्मबान्धवाः । पितुः पितृष्वसुः पुत्राः पितुर्म्मातृष्वसुः सुताः । पितुर्म्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः । मातुः पितृष्वसुः पुत्रा मातुर्म्मातृष्वसुः सुताः । मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवा इति । तत्रापि प्रत्यासन्नत्वात्प्रथमं आत्मबन्धवस्तदनन्तरम्पितृबन्धवस्तदनु मातृबन्धव इति क्रमः ॥ मनुस्मृतौ तदभावे सकुल्यः स्यादाचार्य्यः शिष्य एव वेत्यत्र सकुल्यशब्देन सगोत्रसमानोदकानां मातुलादीनां बन्धुत्वयस्य च ग्रहणं योगीश्वरवचने पि बन्धुपदेन मातुललक्षणमन्यथा मातुलादीनामग्रहणमेव प्रसज्येतेति तत्पुत्राणाम्धनाधिकारस्ततः प्रत्यासन्नानान्तेषामेव सन्ते निमहदनौचित्यमापद्येत । बन्धूनामभावे आचार्य्यो धनभाग्यद्यपि योगीश्वरवचस्याचार्य्येनोपात्तस्तथापि शिष्यस्तपात्तस्ततः प्रधानतमः प्रत्यासन्नतमश्चाचार्य्यश्चौचित्यादुपलक्षणीयः । आचार्य्यः शिष्य एव वेति मनुना । पुत्राभावे प्रत्यासन्नः सपिण्डस्तदभावे आचार्य्यस्तदभावेऽन्तेवासी त्यापस्तम्बेन च स्पष्टमेवाचार्य्याभावे शिष्यस्याधिकारबोधनाच्च । शिष्याभावे सब्रह्मचारी सहाध्यायी धनभाक् । यस्यैकस्मादाचार्य्यादुपनयनाध्ययने । सब्रह्मचारिणोऽभावे ब्राह्मणद्रव्यव्यतिरिक्तं राजा गृह्णीयात् । सहाध्यायिपर्य्यन्तमधिकारमुक्त्वा तदभावे ब्राह्मणधनवर्ज्जं राजगामीति प्रागुदाहृतवशिष्ठवचनात् । सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः । त्रैविद्याः शुचयो दान्तास्तथा धर्म्मो न हीयते । अहार्य्यं ब्राह्मणधनं राज्ञा नित्यमिति स्थितिः । इतरेषान्तु वर्णानां सर्वाभावे हरेन्नृप इति मनुवचनाच्च । ब्राह्मणद्रव्यं सब्रह्मचारिपर्य्यन्ताभावे श्रोत्रियो ब्राह्मणाः प्रथमं गृह्णन्ति । तदभावे ब्राह्मणमात्रम् । यथाह गौतमः । श्रोत्रिया ब्राह्मणस्यानपत्यस्य रिक्थम्भजेरन्निति । ब्राह्मणमात्रन्तु मनुवचने ब्राह्मणमात्रग्रह

ष्यात् । नारदोऽपि । ब्राह्मणार्थस्य तन्नाशे दायादश्चेन्न कश्चन । ब्राह्मणस्यैव दातव्यमेनस्वी स्यान्नृपोऽन्यथेति । पुत्रादीनामपत्नी
पर्य्यन्तानामन्वायहरत्वं वानप्रस्थादिविषयेऽपवादमाह योगीश्वरः । वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः । क्रमेणाचा
र्य्यसच्छिष्यधर्म्मभ्रात्रेकतीर्थिन इति । ब्रह्मचार्य्यत्र नैष्ठिको यतिसाहचर्य्यात् । तेनोपकुर्वाणस्य धनं पुत्रादिदौहित्रान्ताना
मसम्भवात् पित्रादयः क्रमेण गृह्णीयुः । क्रमश्चात्र प्रतिलोमो ज्ञेयः । तथा च नैष्ठिकस्य मृतस्य धनमाचार्य्यस्य यतेः सच्छिष्य
स्य वानप्रस्थस्य धर्म्मभ्रात्रेकतीर्थिनः । धर्म्मभ्राता प्रतिपन्नो भ्राता । तीर्थशब्दस्याश्रमवाचित्वादेकतीर्थ्येकाश्रमी । धर्म्मभ्राता
चासावेकतीर्थी चेत्यर्थः । शिष्यस्य सत्त्वं सद्वृत्तत्वम् । दुर्वृत्तपुत्रादीनामपि धनानधिकारस्य प्रमाणान्तरेणैव प्राप्तत्वात् ।
तच्च वक्ष्यते । किञ्चान्नमग्न्याश्रयं वा धारयतस्तदर्थानुष्ठानक्षमत्वं ग्राह्यम् ॥ मदनरत्नकारस्तु । वानप्रस्थधनमाचार्य्यो गृ
ह्णीयाच्छिष्यो वेति विकल्पं वर्णयित्वानुलोमक्रमेणैव क्रमं मत्वा वानप्रस्थधनमाचार्य्याभावे शिष्यो गृह्णीयादित्याह । तन्न । तस्या
श्रमान्तरगतादिति वसिष्ठोक्तेर्नैष्ठिकादीनां धनसम्बन्धाभावस्य वक्ष्यमाणत्वात् तद्धनग्रहणाधिकारिकथनमप्यनुप
पन्नं चारित्रग्रहणस्य तेषां वसिष्ठादिभिर्निषेधेऽपि प्रसक्तस्य धर्मार्जिततदीयधनाधिकारप्रतिपादकमिदं वचनमिति वाच्यम् ।
ब्रह्मचारी यतिश्चैव पक्षान्तरे स्वामिमानुभावि निस्पृहा ... प्रतिग्रहादिनिषेधात् । धनार्जनं निषेधात् स्वाधनमिति चेत् । नवान
प्रस्थस्य तावत् । अह्नो मासस्य षण्णां वा तथा संवत्सरस्य वा । अर्थस्य निचयं कुर्य्यात्कृतमाश्वयुजे त्यजेदिति नवसमाहृतान्नादिधर्म्म
स्य किञ्चिद्धनसंग्रहोऽस्त्येव । यतेरपि । कौपीनाच्छादनार्थं च वासोऽपि बिभृयाद्यतिः । योगसम्भारभेदांश्च गृह्णीयात्पादुके
तथेति वचनात् पुस्तकादि किञ्चिद्द्रव्यमस्त्येव । नैष्ठिकस्यापि शरीरयात्रार्थं वस्त्रादि धनमस्त्येवावश्यकः । तेन मुक्तानामेषां
तत्केन ग्राह्यमित्यपेक्षायामन्वायादानस्यापवादेनैतेऽधिकारिणो दर्शिता इति ॥ अथ संसृष्टिधनविभागः । तत्र मनुः । विभक्ताः
सह जीवन्तो विभजेरन्पुनर्यदि । समस्तत्र विभागः स्याज्ज्यैष्ठ्यं तत्र न विद्यत इति ॥ अत्र समविभागनियमादेव विषमविभाग

प्रकार निरासेसिद्धे ज्येष्ठान्तवनविद्यात इतिपुनर्वचनं ज्येष्ठादिहृतत एवविषम विभागोऽनभवति । बह्वल्पधनसंसर्गानुरोधेनापि विषमविभागोभवत्येवेतिसूचनार्थम् । केचित्तुसंसृष्टद्रव्यापचये ज्येष्ठादिहृतेविषमविभागोभवत्येव । संसृष्टद्रव्यविभागस्तुसमएवेत्येतज्ज्ञापनाय ज्येष्ठामितिवाक्यशेषइत्याहुः । तन्नवचनाभावेतत्स्यार्थस्यास्मात्प्रतीतेः । समस्तत्रविभागस्यादित्युक्त्याद्रव्योपचयेपिसाम्यनियमप्रतीतेः । संसृष्टिविभागेप्यविभक्तविभागवत्संसृष्टद्रव्याविरोधेनविद्यादिलब्धस्याविभाज्यत्वन्तुस्यमेवप्राप्तमपवदतिबृहस्पतिः । संसृष्टिमान्तुयःकश्चिद्विद्याशौर्य्यादिनाधिकम् । प्राप्नोतितस्यदातव्योद्द्यंशःशेषाःसमांशिनः ॥ संसृष्टिनाचपित्रादिनेवकर्तव्यानान्येनविभक्तोयःपुनःपित्रेत्यादिप्राक्लिखितबृहस्पतिवचनादितिवह्वयन्तूपलक्षणम्पित्रादिग्रहणमित्यादिप्रागेवप्रायश्चित्तम् । अविभक्तविभागात्संसृष्टिष्वपिमिथोविभागकरणात्प्राग्येमृतस्यपुत्राःप्रमीतपितृकारणान्तुपितृनैभागकल्पनेतिवचनात्स्वपित्रंशमविभज्यगृह्णीयुः । यस्यतुसंसृष्टिनोमृतस्यपुत्रादयोनसन्तितद्धनग्रहणोपपत्नीत्यादिवचनात्पत्न्यादीनांप्राप्तेतदपवादत्वेनसर्व्यानस्यह्यपुत्रस्येत्यनुवृत्तावाहयोगीश्वरः । संसृष्टिनस्तुसंसृष्टीति । तुशब्दात्पूर्वापवादः । अपुत्रस्यसंसृष्टिनोमृतस्यधनंसंसृष्ट्येवगृह्णीयान्नपत्न्यादिरित्यर्थः । एतेनपत्न्यादीनांपुत्रधनग्रहणाधिकारिगणेभ्रातृअधिकारावसरेवचनमिदंसर्ववर्तेतइतिव्याचक्षाणोजीमूतवाहनोभ्रान्तएवेत्यवसेयम् । अस्याप्यपवादःसोदरस्यतुसोदरः । दद्याच्चापहरेच्चांशञ्जातस्यचमृतस्यचेति । संसृष्टिनःसंसृष्टीत्यस्याअपिसम्बन्धः । तथाचायमर्थः । सोदरःसंसृष्टीसंसृष्टिनःसोदरस्यजातस्यपुत्ररूपेणोत्पन्नस्यांशन्दद्यात्तत्पुत्रायदद्यादितियावत् । मृतस्यपुत्रादिरूपेणाप्यजीवनोरंशमपहरेदात्मसात्कुर्य्यात्स्वयमेवगृह्णीयादित्यर्थः । पदद्वयानुषङ्गंविनैवव्याख्यानेतुप्राप्तत्वाद्यातमस्यपूर्वापवादत्वंभज्येत । एवञ्चसोदरासोदरसंसृष्टिसद्भावेसोदरएवसंसृष्टीसोदरसंसृष्टिधनग्रहणाधिकारीनभिन्नोदरइतिपूर्वांशापवादः । यत्रतुभिन्नोदरएवसंसृष्टीसोदरस्त्व । तत्रद्वयोर्विभज्यपुत्रादिरहितभ्रातृधनग्रहणमित्याह

। अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्यो धनं हरेत्। असंसृष्ट्यपि चादद्यात्संसृष्टो नान्यमातृज इति। अत्रासंसृष्टिपदद्वयं काकाक्षिवत्पूर्वोत्तरार्द्धयोरपि संबध्यते। तथा संसृष्ट इत्यपि। तत्र पूर्वार्द्धे एकोदरसंसृष्टः सोदर इत्यर्थकः॥ उत्तरार्द्धे तु संसृष्टित्वार्थकं अन्यमातृज इत्यनन्तरञ्चैवकारोऽध्याहार्य्यः। ततश्चायमर्थः। अन्योदर्य्यो सोदरोऽपि संसृष्टी चेद्धनं हरेत्। असंसृष्टी चेद्धनं हरेत्। असंसृष्टी चेदन्योदर्य्यो न हरेत्। तथा चान्वयव्यतिरेकप्रदर्शनेन भिन्नोदरस्य संसृष्टित्वमेवैकधनग्रहणकारणं न भ्रातृत्वमात्रमित्युक्तम्भवति। तथा संसृष्टः सोदरो संसृष्टस्यापि चेद्धनं हरेत्किमुत संसृष्टी। संसृष्टः संसृष्टस्यान्यमातृज एवैको धनन्न हरेत्। किन्तु सोदरेणासंसृष्टिनापि सह विभज्य गृह्णीयात्। अत्रायम्पर्य्यवसितोऽर्थः। असंसृष्टि सोदरे संसृष्टि भिन्नोदरे च सत्यपुत्रभ्रातुर्द्धनं सोदरत्वसंसृष्टित्वरूपैकैकधनग्रहणकारणयोगात्सम विभज्य गृह्णीयाताम्। सोदरोऽपि चेत्संसृष्टी कारणद्वययोगेन बलवत्त्वात्सर्वं स एव गृह्णीयादिति। अत्र चैकैकनियमेनार्थद्वयपरकारणानिरासः सिद्धावपि दृढीकरणाय पुनस्तन्निरासः। उभयथापि वाक्यव्युत्पत्तेः। पुल्लिङ्गस्य संसृष्टीत्यादावविवक्षितमत एवमनुना सोदरभगिनीनामपि तद्धनग्रहणमुक्तम्। यथाह। विभक्ताः सह जीवन्तो विभजेरन्पुनर्य्यदीति संसृष्टि विभागम्प्रक्रम्य। येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः। म्रियेतान्यतरो वापि तस्य भागो न लुप्यते। सोदर्य्या विभजेयुस्तं समेत्य सहिताः समम्। भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभय इति। येषां संसृष्टिनां मध्येऽन्यतरः संसृष्टी ज्येष्ठः कनिष्ठोपि मध्यमो वांशप्रदानतो हीयेतानधिकार्य्यंशप्रदाने स्यात्। सार्वविभक्तिकत्वात्सप्तम्यर्थे तसिः। विभागकाले पतित्वेनाश्रमान्तरपरिग्रहेण वा म्रियेत वाऽगृहीतभाग एव। तर्हि तस्य भागो न लुप्यते पृथगुद्धरणीयः। स च प्रथमन्तत्पुत्रादिभ्यो देयः। तदभावे सोदर्य्या भ्रातरो संसृष्टा अपि। समेत्य देशान्तरगतास्तत्रागत्य सहिता मिलिताः। ये च भ्रातरो भिन्नोदरा अपि संसृष्टाः संसृष्टिनः सनाभयो मृतस्य सोदरा भगिन्यश्च समम वैषम्येण विभजेयुर्विभज्य गृह्णीयुरित्यर्थः। अत्र सोदरभ्रातरभगिनीनामसंसर्गेपि संसर्गे च भिन्नोदरा

त्वामपिधनाधिकारमभिदधता मनुनायोगीश्वरोक्त एवार्थः स्पष्टमुक्तोभवति। अत्रश्रीकरः। संसृष्टिनस्तु संसृष्टीत्यस्यासो
दरसंसृष्टिमात्रविषयत्वेऽन्यानपेक्षत्वात्सोदरस्यतुसोदर इत्यस्याप्यसंसृष्टसोदरमात्रविषयत्वेतथात्वात्सोदरेसंसृष्टिनि
सोदरेचासंसृष्टिन्युभयोःप्राप्तौयदिद्वयमेवप्रवर्त्तेततदान्योन्यसापेक्षयोरुभयोर्विधायकत्वंस्यात्। नचैकस्यसापेक्षनिरपे
क्षोभयरूपतयाविधायकत्वम्विधिवैषम्यादापादकमुचितं। पर्वद्वयेविकल्पसापेक्षंविधानं। पर्वद्वयेचनिरपेक्षमितिज्जत्तरवे
दिविधिवैषम्यापत्तेःयथाद्वयोःप्रणायन्तीयस्यनवैश्वदेवज्जत्तरवेदिमित्यादिनिषेधकृतविकल्पसापेक्षंपर्वद्वयम्विधानमन्य
पर्वद्वयेतुनिरपेक्षमितिसप्तमाधिकरणेविधिवैषम्यभयादन्यथासिद्धान्तितं। तथासिद्धान्तितम्। तथा चासोदरेसंसृष्टिन्य
संसृष्टिनिचसोदरेउभयोरप्रवृत्तौनकोपितद्धनंगृह्णीयादित्यापतेत्। अतःसंसृष्टिनस्त्वित्यनेनसंसृष्टिधनेसंसृष्टिनोधि
कारउक्तोतदपवादोयंसोदरस्यत्विति। तथाचसंसृष्टिनोप्यसोदरस्यसोदरेसंसृष्टित्वरहितेपिसतिनाधिकारइत्याह। तन्मी
मांसानयतत्वानालोचननिबन्धनमभिधानेहिद्वयोःक्वचिन्निरपेक्षयोःप्रवृत्तयोःशास्त्रयोःक्वचिदुभयविषयसमावेशवशादेकत्रप्र
वृत्तिमात्रेणवैरूप्यम्भवतितथासतिकेवलोद्गातृप्रतिस्थात्रपच्छेदेनिरपेक्षयोःसर्वस्वदाक्षिण्यशास्त्रयोर्युगपदुभयापच्छेदेप्रवृ
त्त्यभावाद्विरोधाभावेनकिङ्केनवाध्यतइतिविचारोनिर्मूलःस्यादपच्छेदनये। तस्मात्क्वचिद्विध्यन्तरबाधनिरपेक्षविधानंक्वचित्त
द्बाधसापेक्षञ्चेत्तदावैरूप्यंयथोपात्रवपन्तीयत्वप्राङ्निरूपितं। अन्यथाचतुर्होत्रापौर्णमासीमभिमृशेत्पञ्चहोत्रामावास्यामि
त्यनयोरूपांश्वयागाग्नीषोमीयविषयऐन्द्रदध्यैन्द्रपयोविषयेचैकैकशःप्रवृत्तयोरुभयसाधारणयोर्हविर्विषयसमावेशेप्येक
मपिनप्रवर्त्तेत। यदपिस्वयमुपवर्णितंसंसृष्टिनस्त्वित्यस्यापवादः। सोदरस्यत्वित्यादिरिति। तदप्यसम्बद्धम्। विनिगम
काभावेनवैपरीत्यस्यापिसम्भवात्। पौर्वापर्य्यमात्रस्याप्रयोजकत्वात्॥ यच्चान्योदर्य्यवचनंसंसृष्टिनस्त्वित्यस्यैवविवरणार्थ
मित्युक्तन्तेनवचोभङ्ग्यानर्थक्यमेवतस्योक्तं। किञ्चसोदरेऽसंसृष्टिनिसंसृष्टासोदरापवादार्थेसोदरवचनस्यवर्णनात्सोदरासोद

रयोरुभयोरप्यसंसृष्टित्वे प्रवृत्त्यभावात्तु स्याधिकारो वाद्वयोरपि स्यात्। अथात्रापि सोदरवचनमेव प्रवर्त्तेत तर्ह्येकत्र संसृष्टिवचनबाधसापेक्षमन्यत्र तु स्थिरपक्षमिति प्रत्युत तत्रैव विधिवैरूप्यम्॥ यथा सौमिकी वेदिपादिदीक्षणीयादिष्वतिदेशप्राप्तदर्शपौर्णमासिकवेदिबाधेन विधीयेत तर्हि तत्रातिदेशबाधसापेक्षस्तद्विधिरन्यत्र तन्निरपेक्ष इति वैरूप्यात् वेदिमद्विषयकत्वमेव तस्य व्यवस्थापितं तद्वत्। अस्मन्मते तु व्याख्यातरीत्या द्वयोर्भिन्नविषयत्वेनानर्थक्यवैरूप्ययोर्न प्रसक्तिरिति कृतं विस्तरेण। स्मृतिचन्द्रिकाकारस्त्वाहुर्ये षां ज्येष्ठः कनिष्ठो वेत्यादिमनुवचने च शब्देन सोदरभ्रातृभगिन्यः सोदरसंसृष्टभ्रातृणामितरेतरयुक्तानां विभागकर्तृतायाः समेत्य सहितशब्दाभ्यामवगतेर्य्योगीश्वरवचः संसृष्टिसोदरसद्भावे भिन्नोदरस्यानधिकारावगतेरस्ति तावदनयोर्विरोधः तद्विरोधपरिहारार्थं केचिदेवं मानवं व्याचक्षते। तमनुप्रभागं सोदरा यदि संसृष्टास्तदा त एव गृह्णीयुर्नासंसृष्टिनः सोदरा अपि। संसृष्टसोदराभावे सर्वे सोदराः समेत्य मिलित्वा सहिताः समप्रधानभावेन सममन्यूनाधिकं विभजेरन्। सोदराणामभावे सनाभयो भगिन्यस्तासामप्यभावेऽन्योदर्य्या इति। तदेतदनेकाध्याहारदोषादतिक्लिष्टत्वाच्चोपेक्षणीयं। विज्ञानेश्वरेणापि मानवसंवादाय अन्योदर्य्यस्तु संसृष्टी नान्योदर्यो धनं हरेदिति पाठेन योगीश्वरवचनस्य यत्तदप्यावृत्त्यध्याहारादिनाक्लिष्टमत्यन्ताप्रतीयमानार्थकं स्वप्रज्ञाविलसितमात्रम्। तस्माद्यथाप्रतीयमानार्थकयोरेवमनुयोगीश्वरवाक्ययोर्विषयव्यवस्थयैवाविरोधो वाच्यो नातिक्लिष्टे कार्थ्येनेति सेवोच्यते स्थावरजङ्गमात्मकोभयविधधनसद्भावे मनुवचनं संसृष्टासंसृष्टानां भ्रातृणां भगिनीनाञ्च विभज्य ग्रहणं बोधयति। योगीश्वरवचस्तु केवलस्थावरसद्भावे केवलतदितरद्रव्यसद्भावे वा तद्विषयम्। अन्तर्द्धनं तु यद्द्रव्यं संसृष्टानां तु तद्भवेत्। भूमिं गृह्णन्त्वसंसृष्टाः प्रगृह्णीयुर्य्यथांशत इति प्रजापतिस्मृतेः। द्रव्यमिति गोवलीवर्द्दन्यायेन प्रकटस्य द्विपदचतुष्पदादिरूपस्य जङ्गमद्रव्यस्य ग्रहणम्। संसृष्टानां भिन्नोदराणामिति शेषः। योगीश्वरवचसि नान्योदर्यादि निपाठः। तस्मात्केवलस्थावरसद्भावे केवलजङ्गमसद्भावे च योगीश्वरवचनादसंसृष्टोऽपि सोदर

सद्गृह्णीयान्नतुसंसृष्टोपिभिन्नोदरः। उभयविधधनसद्भावेतुप्रजापतिवचनोक्तव्यवस्थायाःसंसृष्टाःसोदरभ्रातृभगिन्यः संसृष्टाभिन्नोदराश्चविभज्यगृह्णीयुः। मनुवचनस्याप्येतदर्थकत्वैवेति। तदसत्। अध्याहारक्लिष्टतादिदोषस्यनवाप्यनपायात्। प्रजापतिवचनोक्तव्यवस्थायाविज्ञानेश्वरीयव्याख्यानेप्यविरोधात्। अतएवमदनरत्नकृतानद्व्याख्यानमभ्युपेत्यैवप्रजापतिवचनमपिव्यवस्थापकतयापठित्वाप्युतभवद्व्याख्यानेयोगीश्वरवचनेपौनरुक्त्यंदुष्परिहरमापद्यते। अन्योदर्य्यस्तुसंसृष्टीनान्योदर्य्याधनंहरेदित्यनेनोक्तस्यैवार्थस्यसंसृष्टोनान्यमातृजइत्यनेनान्यूनानतिरिक्तस्यप्रतिपादनात्। मानवसंवादिनोपुनरुक्तस्यार्थस्यक्लेशेनापिवक्तुंशक्यत्वेमूलभूतश्रुत्यन्तरकल्पनागौरवापादकस्यार्थान्तरस्यकल्पयितुमनुचितत्वाच्च। याज्ञवल्क्यस्मृतिटीकायांशूलपाणिः। अन्योदर्य्यःसंसृष्टीनान्योदर्य्यधनंगृह्णीयात्। असंसृष्ट्यपिसोदरएवगृह्णीयात्। ननुसंसृष्टःसापत्नभ्राता॥ नान्योदर्य्याधनंहरेदितिपाठेअन्योदर्य्यःसन्संसृष्ट्यपिधनंनगृह्णीयादितिव्याख्या। असंसृष्टिसोदरस्याधिकारार्थमिदंवचनमतोनपुनरुक्ततेत्याहतन्नुश्रीकरमतसमानयोगक्षेमं। रत्नाकरकृत्त्वाहयस्तुकल्पतरौनान्योदर्य्यधनंहरेदितिपाठोदृश्यतेसमूलभूतयाज्ञवल्क्यमिताक्षरापारिजातहलायुधग्रन्थेषुनान्योदर्याधनंहरेदितिपाठदर्शनात्तदनुसारिव्याख्यानदर्शनाच्चलिपिप्रमादएवेति। दायतत्त्वकारस्तुसोदरेसंसृष्टिनिसंसृष्टिन्यसोदरेचकतरस्तद्वद्गृह्णीयात्। एवंसोदरासोदरयोःसंसृष्टिनोःसद्भावेकतरइत्यत्रप्रथमआह अन्योदर्य्यस्त्विति। अन्योदर्य्यःपुनःसंसृष्टीसनगृह्णीयान्नान्योदर्य्यमात्रः। किन्त्वसंसृष्ट्यपिपूर्ववचनस्थसोदरपदानुषङ्गात्सोदरोगृह्णीयात्। तेनैकत्रविषयेपूर्ववचनोक्तसोदरत्वसंसृष्टित्वयोरेकशःसम्बन्धेनतुल्यत्वाद्विभज्यग्रहणमेतदुभयसत्त्वेवासोदरस्यासंसृष्टिनोनुस्यरूपत्वान्नेति। द्वितीयश्चाहसंसृष्टोनान्यमातृजइति। सोदरेसंसृष्टेसत्यन्यमातृजःसंसृष्टोपिनगृह्णीयात्। अर्थात्तत्रसंसृष्टीसोदरएवगृह्णीयात्। संसृष्टत्वाविशेषेपिसोदरत्वेनतस्यैवबलवत्त्वादित्याहतदपिमिताक्षरादिसम्मतव्याख्यानात्कौशलन्त्वधिकं। यदातुसंसृष्टःपितापितृ

थोवा नास्ति तदाऽसंसृष्टभिन्नोदरो गृह्णीयात्। तदभावेऽसंसृष्टः पिता। तदभावे तत्पत्नी। तथा च शङ्खः। स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेयातां ज्येष्ठा वा पत्नीति। स्वर्यातस्यापुत्रस्य संसृष्टस्य संसृष्ट्यभावे भिन्नोदरसंसृष्टभ्रातृगामि द्रव्यमित्यर्थः। तेन संसृष्टधनविषये यथास्थितमेवेदम्वचनमिति स्मृतिचन्द्रिकामदनरत्नकारावाहतुः। संसृष्टभ्रातृविषयमेवैतन्नेन पितृपत्न्योस्तदभाव इति न विरुद्धमिति मिताक्षराकारादयः॥ स्मृतिचन्द्रिकायां शङ्खवचने ज्येष्ठयहणं तु संयतत्वादिगुणावबोधकथनार्थं न तु मध्यमादिनिवृत्त्यर्थम्। पुनरपि तदभाव इति वक्तव्ये वा शब्दः प्रयुक्तफलसाम्यात्। तथाहि। वाशब्दाद्विकल्पः प्रतीयते। न चात्र साम्यरूपे वस्तुनि तुल्यावगतेः फलसाम्यमस्त्येव। एवं चायं क्रमः भ्रात्रभावे पिता। तदभावे माता। तदभावे ज्येष्ठा पत्नीति। मदनरत्ने तु मातापित्रोर्विपरीतः क्रमः। मिताक्षरोक्तन्यायाद्विभक्तासंसृष्टविषयविष्णुवचनवदत्र न्यायबाधकवचनाभावादिति तदाशयः। अत एव पत्नी दुहितर इति वचने विष्णुवचनानुरोधेन स्मृतिचन्द्रिकावत्पितरावित्यत्राक्षिप्ततात तदभावे मातेत्येवं तत्रोक्तम्। प्रपञ्चितं चैतद्विस्तरेणास्माभिः प्रागेव। ततश्च मदनरत्ने दुहित्रादिक्रमविशेषादविशेषाद्वा यैतत्संसृष्टभामविषयमिति कल्प्यते॥ विभक्तोक्तनैयायिकपत्नीदुहित्रादिक्रमो न वाचनिकक्रमेण बाध्यते। अस्मिन्क्रमेऽत्र चिन्त्यायथाभावाद्वाचनिक एवायं क्रमः। नारदोऽपि। मृते पत्यौ तु भार्य्यास्तु अभ्रातृपितृमातृकाः। सर्वे सपिण्डास्तु धनं विभजेयुर्यथांशत इति। अस्यार्थः। भार्य्याः पत्न्यः। अभ्रातृपितृमातृकाः। याः पत्युर्भ्रातृपितृमातरस्तद्रहिता विशिष्टा इत्यर्थः। अत्र द्वन्द्वसमासे भ्रात्रपेक्षयाभ्यर्हितत्वेऽपि पित्रादिपदपूर्वनिपातं परित्यज्य वैपरीत्येन समासरचनां कुर्वता नारदेन संसृष्टापुत्रद्रव्यं प्रथमं भ्रातृगामि तदभावे पितृगामि तदभावे मातृगामि तदभावे पुत्रस्य पत्न्यभिगामीति दर्शितम्। एवञ्च संसृष्टपत्नीनां मुख्यगौणापुत्राभावेन प्रथमं दायहरत्वं किन्तु संसृष्टिसोदरभिन्नोदरभ्रातृपितृमातॄणामप्यभाव इति द्रष्टव्यम्। सर्वे सपिण्डास्त्वित्यादेश्चायमर्थः। संसृष्टापुत्रस्य ये भ्रातृपितृमातृव्यतिरिक्ताः सपिण्डा भ्रातृपुत्रादयस्ते स्वधनम्पूर्वमपुत्रधनेन संसृष्टं स्वपित्रादिनांशं

संसृष्टस्तदूर्ध्वं तत्पत्नीभिः सह प्रथमांशतो भ्रातृपुत्राणां भ्रात्रंशो भार्य्यायाश्च भर्त्रंश इत्येवमंशानतिक्रमेण विभजेयुरिति । पत्न्य
भावे संसृष्टा पुत्रांशान्तद्भगिनी लभते । तथा च बृहस्पतिः । या तस्य भगिनी सा तु ततोंऽशं लब्धुमर्हति । अनपत्यस्य धर्मोऽयम
भार्य्यापितृकस्य च । अमातृकस्य चेति च शब्दार्थः । भगिन्यभावे तु केवलाः सपिण्डा अनन्तराः सपिण्डास्तद्दायं विभजेरन्यथांशतः । तदा प्रत्यासन्नस्य धर्मः ... इति मनूक्तप्रत्यासत्तिक्रमेण लभेरन् । प्रतिपदोक्तानामभावात् । तथा च स एव । मृतोनपत्यो
ऽभार्य्यश्चेदभ्रातृपितृमातृकः । सर्वे सपिण्डास्तद्दायं विभजेरन्यथांशतः । तद्दायं संसृष्टिदायम् । मृतोऽनपत्य इत्यादेः
प्रतिपदोक्तसंसृष्टधनग्राहिरहितश्चेदित्यर्थः । सपिण्डाभावे तु विभक्तमृतधनवदेव संसृष्टः स्वर्य्यातद्रव्यमपि प्रागुक्तक्रमेण
प्रत्यासन्नतारतम्येन समानोदकादिगामीति द्रष्टव्यम् । संसृष्टे द्रव्यमधिकृत्य सपिण्डेभ्य ऊर्ध्वं विशेषास्मृतिरिति । ननु संस
पिमन्वादौ वचनान्मृतसंसृष्टिधनस्य संसृष्टिभ्रात्रादिग्राह्यत्ववत्संसृष्टासंसृष्टपुत्रसद्भावेपि पितृधनस्याप्येतद्वचनबलात्सं
सृष्टिपुत्रमात्रग्राह्यत्वमस्त्विति चेन्न । अपुत्रस्येति पूर्ववचनस्थस्यानुषङ्गाद पुत्रसंसृष्टिमरणस्य धनग्रहणकारणत्वात्सं
सृष्टिनस्तु पुत्रेणापुत्रत्वाभावात्संसृष्टिनस्त्वित्यस्याप्रवृत्तेर्विभजेरन्सुताः पित्रोरिति वचनात्पित्रंशे पुत्रयोर्द्वयोरप्पि समभा
गभागित्वम् । प्राक्तनः स्वांशः परं संसृष्टपुत्रेणाभुक्तावशिष्टः पृथगुद्धरणीयः । पितुर्य्यो वांशस्तदानीम्विद्यमानोंऽशः स संसृष्टा
संसृष्टाभ्यां विभज्य ग्राह्यः । न च संसृष्टिनस्त्वित्यत्रापुत्रपदानुषङ्गो मास्त्विति वाच्यम् । सपुत्रसंसृष्टिभ्रात्रादिधनेपि पुत्रा
दिबाधेन तदंशस्य भ्रात्रादिग्राह्यतापत्तौ सकलदेशीयानादिव्यवहारविरोधाय । अन्यथा पुत्रवदपुत्रसाधारणस्यापुत्रमा
त्रविषयपत्नीत्यादिवाक्यापादकत्वानुपपत्तेस्तद्बाधकतुल्यविरोधापत्तेश्च ॥ न च भ्रात्रादिसंसृष्टिन एवायं विशेषणांच्यावर्त्तकं
त्वापुत्रसंसृष्टिनस्तु नव्यावर्त्याभावात् । असम्भवाच सम्भवे व्यभिचारे च स्याद्विशेषणमर्थवदित्यभियुक्तोक्तेरिति वाच्यम् । पृ
थग्वाक्यद्वयाभावादेकत्र च वाक्ये क्वचिद्विशेषणपुरस्कारेण क्वचिच्च तदपुरस्कारेण विधिप्रवृत्तौ विशेषणघटिताघटितवा

क्यार्थद्वयनिबन्धनविधिवैषम्यरूपवाक्यभेदापत्तेः । किञ्च पित्रादिद्रव्यस्वाम्ये पुत्रत्वादिकमेवापतितत्वादि विशिष्टम्प्रयोजक न्तु संसृष्टत्वविशिष्टमपि गौरवात् । नचसर्वेषां संसृष्टानामसंसृष्टानाञ्च तुल्यमिति सर्वेषामेव पुत्रादीनां विशेषेणात्र न य इत्यमुचितम् । निचविभागेन पित्रादिद्रव्यार्हत्वापगमः । सर्वेषु पुत्रेषु विभक्तासंसृष्टिष्वपुत्रवज्ञार्थ्यादीनामेव तत्र धनाधिका रप्रसक्तेः । प्रत्युत पत्न्या नहारीतेन च विभागोत्तरमपि पितापुत्रयोः परस्परधनाधिकारप्रतिपादनाच्च । यथाहतुस्तौ । जीवन्ने ववाविभज्यधनमाश्रयेत् वृद्धाश्रमं वागच्छेत्स्वल्पेन वा संविभज्य भूयिष्ठमादाय वसेत् यद्युपदृश्येत् । पुनस्तेभ्यो गृह्णीयात् यद्यांश्च विभजेदिति । वृद्धाश्रमं पारिव्राज्यम् । उपदृश्येद्दृष्ट्याभावेन क्षीयेत् । विभक्तजे तु सति पूर्वं विभक्तानाम्पुत्राणाम्प्राप्नोति पि तृधनाधिकारो वृहस्पतिवचनेनापोद्यते । यथाहसः । अनीशाः पूर्वजाः पित्रोर्भ्रातुर्भागे विभक्ततः । पुत्रैः सह विभक्तेन पित्रा यत्स्व यमर्जितम् । विभक्तजस्य तत्सर्वमनीशाः पूर्वजाः स्मृताः । यथाधने तथार्णेषु दानाधानक्रयेषु च । परस्परमनीशास्ते मुक्त्वाशौ चोदकक्रियामिति । संसृष्टी धनहारकेण तत्स्त्रियः परिपालनीयास्तत्कन्याश्च विवाहपर्य्यन्तं पोषणीयाः संस्कर्त्तव्याश्च यथाह तुः शङ्खनारदौ । संसृष्टिनम्प्रकम्यभ्रातृणामप्रजाः प्रेयात्कश्चिच्चेत्प्रव्रजेत वा । विभजेरन्धनन्तस्य शेषास्ते स्त्रीधनं विना ॥ भ रणञ्चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात् । रक्षन्ति शय्याम्भर्तुश्चेदाच्छिंद्युरितरासु च ॥ या तस्य दुहिता तस्याः पित्र्योंऽशो भ रणे मतः । आसंस्काराद्धरेद्भागम्परतो बिभृयात्पतिरिति । इतरास्तु भर्तृशय्यामरक्षन्तीषु दुवृत्तास्वितियावत् । आसंस्कारादि त्यभिविधावाङ् तेन विवाहकरणमपि लभ्यते । इति संसृष्टविभागः ॥ ◉ ॥ अथ स्त्रीधनविभागम्वक्तुं तत्स्वरूपं तावन्निरूप्यते तत्र मनुः । अध्यग्न्यध्यावहनिकन्दत्तञ्च प्रीतिकर्म्मणि । भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतमिति ॥ षड्विधमिति न्यूनसंख्या व्यवच्छेदपरं नाधिक्यनिरासाय । अतएव योगीश्वरेण । पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् । आधिवेदनिकाद्यञ्च स्त्रीध नम्परिकीर्त्तितमित्याद्यशब्देनोपात्तः । विष्णुनापि षडधिकानि स्त्रीधनान्युक्तानि स यथाह । पितृमातृसुतभ्रातृदत्तमध्यग्न्युपाग

तं। आधिवेदनिकमन्वाधेयकमितिस्त्रीधनमिति। नारदः। अध्यग्न्यध्यावहनिकम्भर्तृदायस्तथैव च। भ्रातृ
दत्तंपितृभ्याञ्च षड्विधंस्त्रीधनंस्मृतमिति। षड्विधत्वम्मानववदेवव्याख्येयम्। स्त्रीधनशब्दश्चायंयौगिकः। स्त्रीस्वामिकंधनमिति
ननुपारिभाषिकः। योगसम्भवेपरिभाषाया अन्याय्यत्वात्। अतएवयोगीश्वरेणारिक्थक्रयादिसाधारणस्वत्वोपायसंग्रहायाद्युपदम्प्रयुक्तम्। ननुचक्वचित्स्त्रीधनत्वनिषेधोनुपपन्नएवंसतिस्यात्। नहिस्त्रीस्वामिकत्वंतत्रनिषेद्धुंशक्यते। बाधात्। य
थाहकात्यायनः। तत्रसोपधियद्दत्तंयच्चयोगवशेनवा। पित्राभ्रात्राथवापत्यानतत्स्त्रीधनमुच्यतइति॥ उपधिस्तस्यावादावेवेद
मस्यदत्तंत्वयाधार्य्यमलङ्कारादिनान्यदेतिनियमस्तत्पूर्वकदत्तंसोपधि। योगोबन्धञ्चमन्दायादानं। कन्यायैदत्तमिदन्तडुनञ्च
यन्विभाज्यमिति। शिल्पप्राप्तंसख्यादिभ्यःप्रीत्याप्राप्तन्तदपिनस्त्रीधनमित्यप्याहसएव। प्राप्तंशिल्पैस्तुयत्किञ्चित्प्रीत्याचैवय
दन्यतः। भर्तुःस्वाम्यंतदातत्रशेषन्तुस्त्रीधनंस्मृतमिति। पारिभाषिकत्वेभ्रात्रादिदत्तत्वेनप्राप्तंस्त्रीधनम्प्रतिषिध्यते। तेनैतस्मा
द्भिन्नमेवपित्रादिदत्तंशिल्पादिप्राप्तभिन्नंवास्त्रीधनमितिपरिभाष्यतइतिचेत्। उच्यते। नात्रस्त्रीधनत्वनिषेधः। किन्तुतत्का
र्य्यविभागादिनिषेधः। अतएवोत्तरश्लोकेतत्रभर्तुःस्वाम्यमित्युक्तम्। भर्तुस्तद्विनियोगेस्वातन्त्र्यन्नस्त्रियाइत्यर्थः। प्रथमश्लो
केतुस्त्रीस्वत्वनिषेधोपिसम्भवति॥ उपधियोगपदयोरूपादानात्। तादृशदानेचस्वत्वाभावस्यप्रसिद्धत्वात्। योगाधम
नविक्रीतयोगदानप्रतिग्रहम्। यत्रचाप्युपधिम्पश्येत्तत्सर्वंविनिवर्त्तयेदितिमनुवचनात्। भार्य्यापुत्रश्चदासश्चत्रयएवाधनाः
स्मृताः। यत्तेसमधिगच्छन्तियस्यतेतस्यतद्धनमित्यपिवचनम्भार्य्याविषयेशिल्पादिप्राप्तपरमेव। एकमूलकल्पनालाघवात्
। अध्यग्न्यादिस्वरूपन्निरूपितङ्कात्यायनेन। विवाहकालेयत्स्त्रीभ्योदीयतेह्यग्निसन्निधौ। तदध्यग्निकृतंसद्भिःस्त्रीधनंपरि
कीर्त्तितम्। यत्पुनर्लभतेनारीनीयमानापितुर्गृहात्। अध्यावहनिकन्नामस्त्रीधनन्तदुदाहृतम्। प्रीत्यादत्तंतुयत्किञ्चित्श्व
श्र्वावाश्वशुरेणवा। पादवन्दनिकञ्चैवप्रीतिदत्तन्तदुच्यते। विवाहात्परतोयत्तुलब्धंभर्तृकुलात्स्त्रिया। अन्वाधेयन्तुतत्प्रोक्तं

लब्धं स्वकुलात्तथा । गृहोपस्कारवाह्यानां दोह्याभरणकर्म्मिणाम् । मूल्यं लब्धन्तु यत्किञ्चित्तच्छुल्कं परिकीर्त्तितम् । ऊढया
कन्यया वापि पत्युः पितृगृहेऽपि वा । भ्रातुः सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम् । भर्त्तुः सकाशादिति कल्पतरौ दीपाठः । अध्य
ग्न्यादिशब्दानां योगरूढत्वाद्दृष्टस्त्रीधनादावप्रयोगात् । गृहोपस्करणादीनाम्यन्मूल्यं कन्यार्पणोपाधित्वेन वरादिभ्यः कन्या
भरणरूपेण गृह्यते तच्छुल्कमिति मदनरत्ने व्याख्यातम् । मिताक्षरायान्तु यद्गृहीत्वा कन्या दीयते तच्छुल्कमित्युक्तम् । उभय
त्रापि पित्रादीनां कन्यायाश्च इदमित्युद्देशो विवक्षितः । अन्यथा तत्स्वत्वाभावेन स्त्रीधनत्वव्यपदेशस्यानुपपत्तेः जीमूतवाहनेन तु क
र्म्मिणामिति पठित्वा गृहादिकर्म्मिभिः शिल्पिभिस्तत्कर्म्मकरणे भर्त्रादिप्रेरणार्थं स्त्रियै यदुत्कोचदानं तच्छुल्कं तदेव मूल्यम्प्रत्यय
र्थत्वादिति व्याख्यातम् । पुनश्चोक्तं । यद्दानेन तु भर्त्तृगृहे भुक्तन्तत्परिकीर्त्तितमिति व्यासोक्तं वा । भर्त्तृगृहगमनार्थमुत्कोचादि
यद्दत्तं तच्छुल्कमित्यर्थ इति । नह्युभयमपि स्त्रीस्वामिकम्भवत्येव तस्या एव दत्तत्वादिति तत्र स्त्रीधनत्वव्यपदेशोऽन्यस्त्रीधनवदनुग
मएव । आधिवेदनिकं त्वन्तरविवाहकाले पूर्वभार्य्यायै यद्दीयते । यदाह याज्ञवल्क्यः । अधिविन्नस्त्रियै दद्यादाधिवेदनि
कं समम् । न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्द्धं प्रकल्पयेदिति । पित्रादिभिर्जीवनाद्यर्थं स्त्रीभ्यो धनदाने विशेषमाह कात्यायनः ।
पितृमातृपतिभ्रातृज्ञातिभिः स्त्रीधनं स्त्रियै । यथाशक्त्या द्विसाहस्राद्दातव्यं स्थावरादृते ॥ स्थावरे त्वद्धनं यथाशक्ति कार्षापणसह
स्रद्वयपर्य्यन्तं देयमित्यर्थः । व्यासोऽपि । द्विसहस्रः परो दायः स्त्रियै देयो धनस्य तु । आद्विसहस्रादिति कात्यायनेन परइति च
व्यासेनोक्तेरितोऽधिकमिति धनिनापि न स्त्रीभ्यो देयमिति दर्शितम् । अयञ्च नियमः प्रतिवत्सरमसकृद्देयो ज्ञेयस्तेनानेकवत्सरेषु
जीवनार्थं दीयमानमितोऽधिकमपि भवति चेन्न दोषः । जीवनाद्यर्थत्वाद्दानस्य यावज्जीवञ्च द्विसाहस्रमात्रेण तन्निर्वाहासम्भवा
त् । स्त्रीधनेऽपि भर्त्तानुमतिमन्तरेण स्त्रीणां न स्वातन्त्र्यमित्याह मनुः । न निर्हारं स्त्रियः कुर्य्युः कुटुम्बाद्बहुमध्यकात् । स्वकादपि च
वित्ताद्धि स्वस्य भर्त्तुरनाज्ञया इति । निर्हारो व्ययः । क्वचित्तु स्त्रीधने तासां स्वातन्त्र्यमस्ति । यदाह सौदायिकस्वरूपमुक्त्वा कात्याय

नः । सौदायिकन्धनम्प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते । यस्मात्तदानृशंस्यार्थं तैर्दत्तमुपजीवनम् ॥ सौदायिके सदा स्त्रीणां स्वातन्त्र्यम्परिकीर्त्तितम् । विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि । भर्त्तृदत्ते तु स्थावरेतर एव स्वातन्त्र्यमित्याह नारदः । भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेपि तत् । सा यथाकामम्मश्नीयाद्दद्याद्वा स्थावरादृते । स्थावरे भर्त्तृदत्ते स्त्रिया निवासाद्युपभोगमात्रं न दानविक्रयादिकमित्यर्थः । अपुत्रा शयनम्भर्त्तुरित्यादिकात्यायनवचोपि भर्त्तृदत्तस्थावरविषयमेव नारदैकवाक्यत्वायेति केचित् । अस्माभिस्तु पत्नी दुहितर इति व्याख्यानावसरेऽस्य विषयम्प्रपञ्चितं । पुरुषाणामपि कस्मिन्नपि स्त्रीधने न स्वातंत्र्यं स्वाम्याभावादित्याह कात्यायनः । न भर्त्ता नैव च सुतो न पिता भ्रातरो न च । आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः । यदि त्वेकतरोप्येषां स्त्रीधनम्भक्षयेद्बलात् । सवृद्धिकं स दाप्यः स्याद्दण्डञ्चैव समाप्नुयात् । तदेव यद्यनुज्ञाप्य भक्षयेत्प्रीतिपूर्वकम् । मूलमेव तदा दाप्यो यदा सधनवान्भवेत् । अथ चेत्स द्विभार्य्यः स्यान्न च तां भजते पुनः । प्रीत्या विसृष्टमपि चेत्प्रतिदाप्यः स तद्बलात् । ग्रासाच्छादनवासानामुच्छेदो यत्र योषितः । तत्र स्वमाददीत स्त्री विभागं रीक्थिनान्तथा । स्त्रिया धनं गृहीत्वा यद्यपरभार्य्यया सह वसत्येनाद्या वमानी तेन तदा गृहीतन्तद्धनं राज्ञा बलाद्दाप्यः । भक्ताच्छादननिवासान्यदि भर्त्ता न ददाति तदा तेपि स्त्रिया बलाद्ग्राह्या स्वत्वर्थ्यां प्रत्यन्धनम्वा ग्राह्यमिति श्लोकद्वयस्यायं चेदित्यस्यार्थः । इदमपि तस्याः दोषराहित्ये बोध्यं दुष्टा पुनः किमपि स्त्री धनं न लभत इत्याह स एव ॥ अपकारक्रियायुक्ता निर्लज्जा चार्थनाशिका । व्यभिचाररता या च स्त्रीधनं न तु सार्हति । नार्हतीत्यनेन तया लब्धमप्याच्छिद्य ग्राह्यमिति सूचितम् । अपकारक्रियायुक्ता सदा भर्त्तुः प्रतिकूलाचरणपरा । निर्म्मर्य्यादार्थनाशिकेत्यपि पाठः देवलः । वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत् । भोक्त्री तत्स्वयमेवेदम्पतिर्नार्हत्यनापदि । वृथामोक्षे च भोगे च स्त्रियै दद्यात्सवृद्धिकमिति । वृद्धिर्वर्द्धनार्थं पित्रादिना दत्तमिति स्मृतिचन्द्रिकायाम् । मदनरत्ने तु वृत्तिरिति पठितम् । वृत्तिर्जीवनार्थम्पित्रादिभिर्दत्तमिति व्याख्यातञ्च । वा भोगे गोर्व्यादि प्रीत्यर्थं य्यँल्लभ्यते कुतश्चित् । वृथा आपदमन्तरेण । मोक्षस्त्यागो दा

नमितियावत्। अननुज्ञातत्यागभोगविषयमेतत्। तदनुज्ञयात्वनापद्यपि न दोषः। स्वयमेवेत्येवकारः स्वापत्यानां व्युदासार्थः। भर्तृव्युदासस्य पतिर्नार्हतीत्यनेनाभिधानात्। भर्तृव्युदासेनैतेनो बहिरंगानां भ्रात्रादीनां व्युदासस्यापि दण्डापूपिकयासिद्धत्वात्। अनापदीत्यभिधानादापदि न दोषः। अत एव पुत्रार्त्तिहरणे चापि स्त्रीधनं भोक्तुमर्हतीति तत्रैव वाक्यशेषः। पतिरित्युनुषङ्गः। पुत्रग्रहणं कुटुम्बोपलक्षकं तस्यार्त्तिर्भक्ष्याद्यभावनिमित्ता पीडा तस्या हरणे। कण्टकादन्यस्मिन्नपि धनाभावनिमित्ते संकटे स्त्रीधनमननुज्ञातमपि पतिस्त्यक्तुं भोक्तुञ्चार्हतीत्यर्थः। ननु परधने त्यागभोगयोः स्वाम्यनुज्ञया विना कथमर्हता बाधितानेन वोच्यते। अनुज्ञायां त्वनापद्यपि न विरोधः। उच्यते। वचनबलात् दृष्टविषये व्यये स्वत्वमेव तस्य तत्रेत्यदोषः। अत एव योगीश्वरेपि॥ दुर्भिक्षे धर्म्मकार्य्ये च व्याधौ सम्प्रतिरोधके। गृहीतं स्त्रीधनं भर्त्ता नाकामो दातुमर्हति। धर्म्मकार्य्ये आवश्यके नित्ये नैमित्तिके च। सम्प्रतिरोधके दण्डाद्यर्थं राज्ञावरोधे कृते। वाचस्पतिस्तु सम्प्रतिरोधक इति व्याधिविशेषणात् कार्य्यानुष्ठानबाधक इति च तदर्थ इत्याह। नाकामो दातुमर्हतीत्यपि दारिद्र्यादिकृतदानासामर्थ्ये बोध्यं सति तु सामर्थ्ये दुर्भिक्षादिगृहीतमप्यवश्यं देयमेतावनैव वचनोपपत्तौ सामर्थ्येप्यदानमिच्छयेत्यस्य कल्पयितुमनर्हत्वात्। पतिग्रहणादापद्यपि पत्युरेव पत्नीधनग्रहणाधिकारो प्रतिदानञ्चेच्छया नान्यस्येति ज्ञेयम्। भर्त्रा दातुम्प्रतिश्रुतं भार्य्यायै तस्मिन्मृते पुत्रादिभिस्तस्यै देयमित्यप्याह स एव। भर्त्रा प्रतिश्रुतं देयमृणवत् स्त्रीधनं सुतैरिति। सुतग्रहणं पौत्रप्रपौत्रयोरुपलक्षणमृणवदित्यभिधानात्। अनेन स्त्रीधने जीवन्त्यां तस्यां सुतानामन्नमनास्वत्वेपि नास्ति विभाग इति गम्यते। एवं स्त्रीधनमुक्तम्॥०॥ अथ तद्विभागो निरूप्यते। तत्र मनुः। जनन्यां संस्थितायान्तु समं सर्वे सहोदराः। भजेरन् मातृकं रिक्थं भगिन्यश्च सनाभयः॥ अत्र द्वन्द्वसमानार्थकचशब्दोपादानात् सोदरभ्रातृभगिनीनां मिलितानां मातृधनाधिकारो गम्यते। सोदरग्रहणं भिन्नोदरव्यावृत्त्यर्थं। देवलः। सामान्यम्पुत्रकन्यानां मृतायां स्त्रीधनं स्त्रियाम्। अप्रजायां हरेद्भर्त्ता माता भ्राता पिता पि वा॥ अत्रानु द्वन्द्वस्यैव अवयवानुचारां कन्यानां स्वसहाधिकारः

प्रतीयते। इदञ्चान्वाधेयपतिप्रीतिदत्तद्विविधस्त्रीधनविषयम्। यथाह मनुरेव। अन्वाधेयञ्च यद्दत्तम्पत्या प्रीतेन चैव यत्। पत्यौ जीवति वृत्तायाः प्रजायास्तद्धनम्भवेत्। अन्वाधेयम्पूर्वं लक्षितं यच्च पत्या प्रीत्या दत्तं तत्स्त्रीधनं वृत्तायाः मृतायाः स्त्रियाः प्रजापुत्रदुहितृरूपा तस्याः स्वम्भवति। पत्यौ जीवतीत्यनादरे सप्तमी। जीवन्तमपि पतिमनादृत्येत्यर्थः। तस्यानधिकारस्तत्रेति यावत्। अत्र च प्रजायाइति सामान्याभिधानात्स्त्रीपुंसप्रजायाः समसाम्यावगतेस्तुल्यवद्विभज्यमातृधनग्रहणं पुनः पूर्वम्भगिनीनान्तदभावे भ्रातृणामिति। भगिन्यश्च मनुवचनेऽनूढायाह्याः। तथा च वृहस्पतिः। स्त्रीधनं स्यादपत्यानां दुहिता च तदंशिनी। अप्रत्ता चेत्समूढा तु लभते मानमात्रकम्। अपत्यानां पुत्राणाम्। दुहितुः पृथगुपादानात्। तदंशिनी पुत्रसमांशिनी। मानमात्रकमिति गौरवार्थं तदनुसारेण किमपि लभते न तु पुत्रसमांशमित्यर्थः। अप्रत्तानामभावे प्रत्तानामपि सभर्तृकाणां भ्रातृसमभागित्वमित्याह कात्यायनः। भगिन्यो बान्धवैः सार्द्धं विभजेरन्सभर्तृकाः। विभागकाले दौहित्रेभ्योऽपि किञ्चिद्देयम्। तथा च मनुः। यास्तासां स्युर्दुहितरस्तासामपि यथार्हतः। मातामह्या धनात्किञ्चित्प्रदेयम्प्रीतिपूर्वकम्। यथार्हत इत्युपयोगदारिद्र्याद्यपेक्षयेत्यर्थः। न च दौहित्रीणान्तदा धनस्वाम्याभावात्किमिति दानमिति वाच्यम्। यथा पैतृके पुत्रसत्त्वे कन्यानां दायार्हत्वेऽपि वचनवलात्तुरीयांशदानमेवमत्राप्युपपत्तेः। अत एव प्रीतिपूर्वकमित्युक्तम्। प्रीतिपूर्वकत्ववचनादेवानावश्यकत्वमपि सूचितमत्र। तत्र तु पतितास्तु रहितत्ववद्गुनिर्दोषकीर्तनादावश्यकत्वमिति भेदः। यौतकन्तु कुमारीणामेव मातृधनम्। न पुत्राणां नापि प्रत्तदुहितॄणामित्याह मनुरेव। मातुस्तु यौतकं यत्स्यात्कुमारीभाग एव सइति। युमिश्रणइति धात्वनुसाराद्विवाहकाले एकासनोपविष्टयोर्वधूवरयोर्यद्दीयते तद्युतयोरिदं यौतकमिति व्युत्पत्त्या यौतकमित्युच्यते। केचित्तु विवाहे स्त्रीपुंसयोरेकशरीरतया मिश्रता भवति। अस्थिभिरस्थीनि मांसैर्मांसं त्वचा त्वचमिति श्रुतेः। भर्तुर्वेध्वस्यादिभिरस्थ्यादीन्येकीभवन्तीत्यर्थ इत्याहुः। यदेतद्धृदयन्तव तदस्तु हृदयं मम तदस्तु हृदयन्तवेति मन्त्रलिङ्गाद्विवाहे मिश्रतेत्यन्ये

। युतयोर्यौतकमिति निघण्टौ । यौतकं यौतुकञ्चेत्यादि कोशाद्यौतुकमित्यपि पाठः । भर्तृगृहलब्धात्पृथग्धनं तथा पितृगृहलब्धं
मातृधनं यौतुकम् । यौतशब्दस्यामिश्रणमपर्यायः । युमिश्रणामिश्रणयोरिति धातुपाठात् । युतसिद्धावितिप्रयोगाच्चेति देव
स्वाम्याह मदस्तत्पितृगृहलब्धात्पृथग्धनं तथा भर्तृगृहलब्धं यौतकमित्यास्यापि विनिगमकाभावेनाशक्यत्वे नास्य कल्पनामात्रत्वात्
। कुमारीणामनेकत्वे समं स्यादसुतत्वादि तिन्यायेन स एव विभागो विशेषाश्रवणात् । एतत्त्रिविधमपि मातृधनं दुहितॄणाम् । त
त्रापि प्रथममप्रत्तानां तदभावे प्रत्तानां तत्रापि प्रथममप्रतिष्ठितानां तदभावे प्रतिष्ठितानां सधवानां तदभावे विधवानाम् । त
थाच गौतमः । स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानाञ्चेति । अप्रतिष्ठिता अनपत्या निर्द्धना दुर्भगा विधवा वेत्यपरार्के व्या
ख्यानरत्नकारेण च व्याख्यातम् । प्राक्तनं द्वयमेव विज्ञानेश्वरादिभिः । अत्र च स्त्रीधनमिति सामान्योक्तिरपि त्रिविधप्रागुक्तस्त्रीधन
भिन्नविषया । स्मृतिचन्द्रिकामदनरत्नयोरेवमुक्तम् । जीमूतवाहनस्मार्त्तभट्टाचार्य्याभ्यान्तु प्रागुक्तगौतमवचनं मातुर्दुहि
तुरभावे दुहितॄणां तदन्वय इति नारदवचनम् । दुहितॄणामभावे तु रिक्थं पुत्रस्य तद्भवेत् । इति कात्यायनवचनम् । मातु
र्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वय इति योगीश्वरवचनम् । एवमन्यान्यपि स्त्रीधनस्य दुहितृगामित्वपराणि स्मृतिवचनानि
प्रागुक्तमन्वादिवचनविरोधान्मातुस्तु यौतुकमिति प्रागुक्तमनुवचनानुरोधान्मातुः पारिणाय्यं स्त्रियो विभजेरन्निति वासिष्ठानुसा
राच्च यौतकमात्रविषयाण्युक्तम् । पारिणाय्यं परिणयनलब्धं यौतकमिति यावदिति ताभ्यां व्याकृतम् । कल्पतरौ विवादचिन्ता
मणौ च पारिणाय्यमिति पठित्वा स्त्रीपरिच्छददर्पणकङ्कतिकादीति व्याख्यातम् । विज्ञानेश्वरस्तु सर्वमेव स्त्रीधनं पुत्रादिसत्त्वेऽपि प्र
थमं दुहितृदौहित्रीदौहित्रगामि । तदभावे पुत्रादिगामि । अप्रजःस्त्रीधनन्तु व्यवस्थापयिष्यते । मातुर्दुहितरः शेषमृणा
भ्य ऋतेऽन्वय इति योगीश्वरवचने दुहितॄणामाचक्ताभ्य इत्यनेन न परामृश्यते किन्तु दौहित्री दौहित्रावपि । मातुर्दुहितरोऽभावे दु
हितॄणां तदन्वय इति नारदवचनात् । अत्र तदन्वय इत्यनेन न स्वच्छन्देन दुहितरोऽनन्तराः परामृश्यते । तथाच दुहित्रन्वयो दौहि

त्रीदौहित्ररूपः । तत्रापि प्रथमन्दौहित्री तदभावे दौहित्रः । दुहितॄणाम्प्रसूतानां चेदिति वक्ष्यमाणयोगीश्वरवाक्ये दुहितृश
ब्देन दुहितरो गृह्यन्ते । साक्षाद्दुहितॄणां मातुर्दुहितरइत्यत्र तेनैवोक्तत्वात्पुनरुक्त्यापत्तेः । दुहितॄणामन्वयइति सामा
न्योक्तेर्दौहित्राधिकारेपि । पुत्राधिकारस्तु विभजेरन्सुताः पित्रोरूर्ध्वमृक्थमृणं समम् इत्यत्र पित्रोरित्येकशेषाल्लभ्यते तत्र च प्रागेव
प्रपञ्चितम् । नाभ्यनुज्ञातेन्वयइत्यत्राप्यन्वयपदेन योग्यतया षष्ठ्यन्तमातृपदान्वयात् दुहितॄणां च पृथगुपादानात्पुत्रादिरेव गृ
ह्यते । दुहित्रभावे तदधिकारप्रतिपादनार्थत्वाच्च न पौनरुक्त्यम् । जनन्यां संस्थितायान्त्विति मनुवचनस्याप्ययमर्थः । सर्वे स
होदरा मातृकं रिक्थं स्वाधिकारावसरे समम्भजेरन् सनाभयः सोदरा भगिन्यश्च स्वस्वाधिकारावसरे । ननु द्वयेपि सम्भूय विभजेरन्नि
त्यर्थः । इतरेतरयोगस्य द्वंद्वैकशेषयोरभावादप्रतीतेः । चशब्दस्य तु विभागकर्तृत्वान्वयमात्रेणाप्युपपत्तेः । यथा देवदत्तः कृषिं
कुर्य्याद्यज्ञदत्तश्चेत्युक्तेनेतरेतरयोगप्रतीतिः । वाक्यान्तरेण च द्वयोरपि मातृधनाधिकारे प्राप्तेपि सममित्यनेनात्रोद्धारादिवि
षमविभागनिवृत्त्यर्थं वचनम् । सोदरसनाभिग्रहणं असोदरभ्रातृभगिनीनिवृत्त्यर्थम् । अत एवाधमजातिस्त्रीधनं भिन्नो
दरापि प्रकृष्टजातीयसपत्नीपुत्री तदभावे च तदपत्यं गृह्णातीत्युक्तं मनुना । स्त्रियास्तु यद्भवेद्वित्तम्पित्रा दत्तङ्कथञ्चन । ब्रा
ह्मणी तद्धरेत्कन्या तदपत्यस्य वा भवेदिति । अत्रानपत्यक्षत्रियादिजातीयस्त्रिया इति विवक्षितं ब्राह्मणीपदञ्चोत्तमजात्युप
लक्षणम् । अप्रजस्त्रीधनं भर्तुरित्यस्य चायमपवादः । अनपत्यवैश्याधनं क्षत्रियादुहितानपत्यशूद्राधनञ्च वैश्यादुहि
ता गृह्णाति । तदभावे तदपत्यानि । तदभावेऽप्रजस्त्रीधनमित्यस्य तत्र प्रवृत्तिः । तस्मात्स्त्रीधने सापत्न्यप्राग्दुहित्राद्यधिका
रस्तदनु पुत्रादीनामित्याहुः । अत्र जीमूतवाहनः । मनुबृहस्पतिशंखलिखितवचनेषु द्वंद्वाश्रवणेपि समुच्चयवाचिचशब्देन
तदर्थलाभाद्देवलवचने तु पुत्रकन्यानामिति द्वंद्वस्यापि श्रवणात्तत्संवादेन तत्रापि चशब्दस्येतरेतरयोगार्थकत्वौचित्याद्भ्रातृभगिनी
नां सोदराणां विभज्य सहैव धनग्रहणं युक्तम् । किञ्च । केवलदुहितॄणामेव सकलमातृधनाधिकारे यौतके विशेषवचनमनर्थ

कं । नचकुमारीपदोपादानात्प्रत्तदुहितृव्यावृत्त्यर्थन्तदितियुक्तम् । तद्व्यावृत्तेः सर्वं स्त्रीधनएवगौतमादिवचनेषूक्तत्वात् । कुमा
र्य्यभावे प्रत्तायामधिकारस्यावाप्यवर्ज्जनीयत्वात् । तस्मात्पुत्रपन्योस्तुल्यवदधिकार एवमन्वाद्यभिप्रेतोऽध्यग्न्यादि स्त्रीधनविष
ये । यौतकविषयस्तु पुत्रीमात्राधिकार इत्येवव्यवस्था । अन्वाधेयपतिप्रीतिदत्तमात्रग्रहणानुमनुवचनान्तरेऽध्यग्न्याद्युपलक्ष
णमितरथायौतकेपृथगारम्भस्यानर्थक्यापत्तेरित्याह । दायतत्त्वकृदादीनामप्येतदेवमतं । अत्रेदम्प्रतिभाति । अन्वाधेयादि
ग्रहणस्योपलक्षणत्वे प्रमाणाभावात्तदुभयव्यतिरिक्तसर्वमातृधनेदुहित्राधिकारः प्रथमन्तदनुपुत्राधिकारः । यौतकेविशेषव
चनन्तुप्रत्तादिनिवृत्त्यर्थम् । अन्यथापिसाम्यमेवेतिचेत्सत्यम् । किन्तु । ननियतायौतकेतुनियता । तेनयौतकंकुमार्य्यभा
वेविवाहभेदेनस्त्रीधनम्भर्त्रादीनामेवभवतिनपुत्रादीनामितिस्मृतिचन्द्रिकाकारादीनामाशयः । विज्ञानेश्वराचार्य्याणान्त्वय
मभिप्रायः । सामान्यतः स्त्रीधनमात्रस्यदुहितृयाह्यतावोधकमनन्यथासिद्धवचनानुरोधेनसङ्कोचः कर्त्तव्योनचमन्वादिवचन
मनन्यथासिद्धपुत्रकन्यानांसहाधिकारप्रतिपादकम् । पुत्राधिकारमात्रप्रतिपादनमात्रपरत्वात् । नचचशब्दद्वंद्वाभ्यांस
हाधिकारः । विभागकर्तृत्वान्वयेनापितदुपपत्तेः । अन्यथापिनराविन्यादौमातापित्रोस्तादिग्यमइत्यादौचद्वंद्वैकशेषश्रवणे
सकलनिबन्धसम्मतःक्रमोमातापित्रोर्न्नस्यात् । विष्णुवचनाद्यनुरोधात्तत्रशाब्दान्वयसाहित्यमात्रेणतदुपपत्तिरर्थक्रमस्त्वन्यथा
प्यविरुद्धइत्युच्यते । तर्ह्यत्रापिताभ्यच्चतेन्वयःदुहितृणामभावेतुरिक्थंपुत्रेषुतद्भवेदित्यादियोगीश्वरकात्यायनवचनाथग
तार्थक्रमान्यथाभावेद्वंद्वचशब्दादीनांशाब्दान्वयःसाहित्यमात्रेणोपपत्तिरस्तुनतुतदनुरोधेनतेषामेवान्यविषयत्वम् । सिद्धेस
हाधिकारेतेषांसङ्कोचस्तत्सङ्कोचेचैषांसहाधिकारपरत्वनिश्चयइतीतरेतराश्रयत्वञ्चेति । अन्वाधेयादौविशेषवचनमनर्थक
मितिचेत् । नायौतकेचन्द्रिकाकारादिमतवदेवसार्थकत्वात् । अन्वाधेयग्रहणस्योपलक्षणतयाप्रजामात्राधिकारेतेनप्रतिपा
दितेजनन्यांसंस्थितायामित्यादिवचनैःसाम्यादिविधानमित्येवंसर्वेषांसार्थकत्वात् । तस्मात्सर्वंसुस्थमिति । श्रीविद्यारण्य

श्रीचरणैस्तु स्मृतिचन्द्रिकामिताक्षरयोर्द्वयोर्द्वयोरप्यनुसारेण द्वयमपि लिखितमन्तर्विविक्तम् । पुत्रादिभ्यः प्राग्दुहितृदुहितुस्तदनु दौहित्रस्याधिकार इति तु मिताक्षराचन्द्रिकामदनरत्नकारस्वामिविद्यारण्यश्रीचरणानां च विसम्वादेन सम्मतः । जीमूतवाहनदायतत्त्वकारौ तु दुहित्रभावे पुत्राणामेवाधिकारेण तु दौहित्र्याद्यधिकारानन्तरम् । तथाहि नारदवचने दुहितृशब्दान्तदन्वयइत्यत्र दुहितुरन्वयपदेनान्वयपुत्रादिवाचकेन नान्वयः सम्भवति । दुहितृपदस्य जन्यविशेषवचनस्य जन्यान्तरे समन्वे नानिराकांक्षतयान्वयासम्भवात् । तच्छब्दस्यापि दुहितृत्वरूपेणैव तदुपस्थापकस्य नैराकांक्ष्याविशेषात् । किञ्च । याज्ञवल्क्यवचने तावत् । दुहितर इति प्रथमान्तस्य तान्यइ इति च पञ्चम्यन्तस्य च षष्ठ्यन्तान्वययोग्येनान्वयपदेनान्वयात्तु वहित्वस्यापि मातुरित्यस्यैवान्वयस्तदेकवाक्यतया मातुरन्वयएव पुत्रादिर्गृह्यते न दुहित्रन्वयः । किञ्च । सत्त्वङ्गजेषु तद्गामी ह्यर्थो भवतीति बौधायनवचनात् अनन्तराङ्गजपुत्राधिकार एव प्रत्यासन्नेह चितो न तु व्यवहिताङ्गजदौहित्रादेरित्याहनुसन्नन्दम् । जन्यवाचकस्य जन्यान्तरेणान्वये पुत्रइत्यादावप्यन्वयो न स्यात् । तज्जन्यप्रतिसम्बन्धितयान्वयाविरोधस्तत्रापि तुल्यः । अन्यथा दुहितुः पुत्र इत्यत्राप्यन्वयो न स्यात् । तस्मात्काष्टकल्पनमयज्ञानमेवेदम् । याज्ञवल्क्यवचने च यद्यपि मातुरन्वयः पुत्रादिरेवोक्तस्तथापि विभजेरन्सुताः पित्रोरित्यनेन प्राप्ताधिकाराणामेव चरणादानदुहित्रमावोपाधिकत्वज्ञापनार्थानुवादस्य च दौहित्रानन्तरमप्यविरुद्धः । सत्त्वङ्गजेष्विति बौधायनवचनन्तु मातृसाधारण्येन पुत्राणामनधिकारमात्रमङ्गजपदस्यापाद्यमात्रवाचकत्वात्पुत्रदुहितृसाधारणमधिकारम्प्रतिपादयद्वचनान्तराविरुद्धप्रत्यासत्त्यैव व्याख्यातं युक्तमिति न किञ्चिदेतत् ॥ सन्तानाभावे च हयोगीश्वरः । अतीतायामप्रजसि बान्धवास्तदवाप्नुयुः । अप्रजसि दुहित्रादिप्रपौत्रपर्य्यन्तरहितायामतीतायां मृतायां बान्धवावक्ष्यमाणास्त्रीकीमात्तस्त्रीधनमवाप्नुयुः । विवाहभेदेन व्यवस्थया बान्धवानामधिकारमाह स एव ॥ अप्रजः स्त्रीधनम्भर्तुर्ब्राह्म्यादिषु चतुर्ष्वपि । दुहितृ यामप्रसूता चेच्छेषेषु पितृगामितदिति । चतुर्षु ब्राह्मदैवार्षप्राजापत्येषु । अपिशब्दाद्गान्धर्वे

परिग्रहः । यद्वाऽनन्तरोक्ता संविज्ञानवकृद्वीहिरण्याब्राह्मभिन्नाद्दैवार्षप्राजापत्यगान्धर्वा अश्वत्वारः । तेन ब्राह्मदैवार्षगान्धर्वप्राजाप
त्येषु यद्धनम् । अप्रजायामतीतायाम्भर्तुरेव तदिष्यत इति मनुवचनाविसंवादः । ब्राह्मादिविवाहोढायाधनमनपत्यायाभर्तुमेव
ति । तदभावे भर्तुः प्रत्यासन्नानाम् । स्वामिप्रत्यासत्तेर्भर्त्रैवान्तरायेभर्तृप्रत्यासत्तेरेव पुरस्करणीयत्वात् । शेषेष्वासुरादिषुप
रिणीतायास्तु पितृगामि । एकशेषेणमातापितृगामि । तत्रापि प्राङ्मातृगामि तदनु पितृगामि । पितराविष्यत्रोक्तान्न्यायात् ।
विरुद्धवचनान्तराभावाच्च । अत एव मनुना । यत्त्वस्याः स्याद्धनन्दत्तं विवाहेष्वासुरादिषु । अतीतायामप्रजसि मातापित्रोस्तदि
ष्यत इति द्वन्द्वे मातृशब्दपूर्वनिपातेन मातुः प्राथम्यमवगमितम् । कन्याधने च मातुरभावे पितुरधिकारश्रवणात्तत्रापि तथैवौ
चित्यात् । यथाह बौधायनः । रिक्थम्मृतायाः कन्याया गृह्णीयुः सोदराः स्वयम् । तदभावे भवेन्मातुस्तदभावे भवेत्पितुरिति ।
मातापित्रोरभावे तत्प्रत्यासन्नगामि । पूर्वोक्तेषु सर्वेष्वेव विवाहेषु प्रसूतापत्यवती चेत्तद्दुहितृगामि तद्धनम् । दुहितृशब्देन चा
त्र दुहितृदुहितरो लक्ष्यन्त इति प्रागेवोक्तम् । तत्राप्यनूढादिक्रमो गौतमादितो दुहितृधनग्रहणकाले दौहित्रीभ्योऽपि प्रीत्या
किंचिद्दानमिति च प्रागेव निरूपितम् । दौहित्रीणाञ्च मातामहीधनग्रहणमभिन्नमातृकाणामविषममातृद्वारेण । पौत्राणा
म्पितृद्वारेणैव । प्रतिमातृवा स्ववर्गे भागइति गौतमस्मरणात् । जीमूतवाहनस्तु ॥ ब्राह्मादिविवाहेषु यद्धनन्तद्देवानेनव्य
वस्थाप्यते न तु तत्तद्विवाहोढायाः सर्वं धनम् । ब्राह्मादिषु यद्धनमिति सम्बन्धे वर्त्तमानसम्बन्धे कृतकाललक्षणानस्तदूढस्त्री
परत्वेऽतीतविवाहक्रियाद्वारकसम्बन्धे कृतलक्षणाया जघन्यत्वादित्याह । तदनुगामी दायतत्त्वकृदप्येवम् । तदपेशलम् ।
पूर्ववचने अप्रजः स्त्रीधनम्बान्धवा गृह्णीयुरिति सामान्यतउक्तेः कीदृश्या अप्रजसः केवान्धवा गृह्णीयुरित्येवाकाङ्क्षोदयाद्ब्राह्मा
दिपदानान्तद्विशेषणत्वस्यौचित्यात् । यच्च वर्त्तमानभूतसम्बन्धकृतं विनिगमकमुक्तन्तदपि तुच्छम् । विभागकालेऽतीतत्व
स्योभयत्राविशेषात् ॥ धनलाभकाले वर्त्तमानत्वस्य चाप्रयोजकत्वात् । विवाहजन्यभार्य्यात्वसम्बन्धस्यान्तरङ्गत्वाच्च । यत्तु

सर्वेष्वपि विवाहेषु पित्रोः सकाशात्तया प्राप्तं विवाहोत्तरन्तद्भ्रातृणामेव । यदाह कात्यायनः । पितृभ्यां चैव यद्दत्तं दुहितुः स्थावरं धनम् । अप्रजातायामप्रजसि भ्रातृगामि तु सर्वदा । विश्वरूपजीमूतवाहनौ तु कन्यादशायां यत्पितृभ्यां दत्तं तद्भ्रातृगामि । विवाहात्परतो लब्धस्यान्वाधेयत्वात् । विवाहकाललब्धस्य च विवाहभेदेन भर्तृगामित्वान्मातापितृगामित्वाच्चेत्याहतुः । तन्न । स्थावरविषयत्वादस्याविरोधात् । न च दण्डापूपिकया स्थावरग्रहणेन जङ्गमग्रहणं भ्रातृणामायात्येवेति वाच्यम् । अपवादे तन्न्यायाप्रवृत्तेः । शुल्कन्तु सोदराणामेव । भगिनीशुल्कं सोदर्य्याणामिति गौतमवचनात्सोदराभावे मातुः । ऊर्द्ध्वं मातुरिति तद्वचनादेव । पूर्वे चैक इति तु परमतम् । बन्धुदत्तं प्रथममप्रजसो मृतायाबन्धूनान्तदभावे भर्तुः । बन्धुदत्तन्तु बन्धूनामभावे भर्तृगामि तदिति कात्यायनवचनात् । पूर्वोक्ताप्रजःस्त्रीधनाधिकार्य्यभावे त्वाह बृहस्पतिः । मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा । श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्त्तिताः । यदासामौरसो न स्यात्सुतो दौहित्र एव वा । तत्सुतो वा धनन्तासां स्वस्त्रीयाद्याः समाप्नुयुः । औरसपदेन पुत्रपुत्र्योरुपादानन्तयोः सर्वापवादकत्वात् । अपवादकमप्राप्तगुरुकमेव । सुतपदेन च सपत्नीपुत्रस्य । सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत् । सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुरिति मनुवचनात् । न तु सुतपदमौरसविशेषणमानर्थक्यात् । सपत्नीपुत्रसद्भावेपि स्वस्त्रीयाद्यधिकारापत्तेरनादिव्यवहारविरोधाच्च । तथा च दौहित्राभावे औरसपुत्राद्यभावे सपत्नीपुत्रः । तत्सुत इति तच्छब्देनाव्यवहितयोरौरससपत्नीपुत्रयोरुपादानन्तनन्तरस्यापि दौहित्रस्य दौहित्रपुत्रस्य तस्य पिण्डदानेवहिर्भावात् । तथा च दौहित्रपर्य्यन्ताभावे प्रथममौरससुतसुतपुत्रपौत्रा । पुत्रपौत्रैर्ऋणं देयमिति ऋणापाकरणाधिकारिणाम्पिण्डदानाधिकारिणाञ्च तेषामेव रिक्थग्रहणौचित्यात् । तदभावे सपत्नीपुत्रतत्पुत्रतत्पुत्राणाम् । तेषामेव तदा पिण्डदातृत्वादृणापाकर्तृत्वाच्च । प्रागुक्तमनुवचनाच्च । तदेषामभावे स्वस्त्रीयश्वशुरादिषु सपिण्डेष्वनन्यगतिकैतद्वचनबलाद्भगिनीपुत्राद्यानामेव मातृष्वस्रादिधने प्रत्यासत्तितारतम्येनाधिकारः । स्नुषादीनां

तुयासाच्छादनमात्रभाक्तं। वचनविरोधे च पिराडवत्प्रयासतेर प्रयोजकत्वात्। तस्मात्स्त्रियो निरिन्द्रिया अदायादा इति श्रुतेः। अनिन्द्रिया ह्यदायाश्च स्त्रियोऽनृतमिति स्थितिरिति तन्मूलकमनुवचनाच्च। शृङ्गग्राहिकया यच्चकस्तैत्तिरीयकः पत्नीदुहितरः इत्यादौ यासां स्त्रीणां धनाधिकारस्तासामेव। अन्यासामनुश्रुतिमनुवचनाभ्यां दायग्रहणनिषेध एवेति स्मृतिचन्द्रिकाकारहरदत्तादीनान्दाक्षिणात्यनिबन्धृणाञ्जीमूतवाहनादिपौरस्त्यसर्वनिबन्धृणां सिद्धान्ताच्च। इति स्त्रीधनविभागः ॥ ● ॥ अथ विभागकाले केनचिदपहृतं तस्य पश्चाज्ज्ञातस्य विभागप्रकारः। तत्र मनुः। ऋणे धने च सर्वस्मिन्प्रविभक्ते यथाविधि। पश्चाद्दृश्येत यत्किञ्चित्तत्सर्वं समतां नयेत्। योगीश्वरः। अन्योन्यापहृतं द्रव्यं विभक्तैर्यत्र दृश्यते। तत्पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः। अत्र समपदादुद्धारविभागो निषिद्धः विभजेरन्निति वचनाद्यो नैव दृष्टन्ते नैव नयाह्यं नाप्यपहर्तुं न्यूनत्वात् तत्स्वामिनि बोध्यते। एतावता वचनार्थं वक्तस्तेयदोषाभावः समुदायद्रव्यापहारे। स्वबुद्ध्या गृहीतत्वादिति केषांचिद्वचनमप्रलापः। साधारणद्रव्येऽपरस्वत्वस्यापि सत्त्वेन परस्वापहारस्य स्तेयपदार्थस्यावारणीयत्वात्। अथ परकीयबुद्ध्या न गृहीतमिति न स्तेयमित्युच्यते। तत्र अपहृत्वे परकीयबुद्धेरावश्यकत्वात्। अत एवापहृतमित्युक्तम्। ननु मनुना ज्येष्ठस्यैव समुदायद्रव्यापहारे दोषो दर्शितो न कनीयसाम्। यो लोभाद्विनिकुर्वीत ज्येष्ठो भ्रातॄन्यवीयसः। सोऽज्येष्ठः स्यादभागश्च नियन्तव्यश्च राजभिरिति। अथम्परं मुख्यमभावित अस्य पितृस्थानीयस्य ज्येष्ठस्यापि दोष उक्तस्तत्परतन्त्राणां पुत्रस्थानीयानां दण्डापूपन्यायेन दोषः सुतरामुक्त एव भवतीति। अत एव समुदायद्रव्यापहारे समविभागवचनस्य स्तेयदोषाभावपरत्वमाचक्षाणा अनेन मनुवचनेन दूरापास्ताः। अपि च स्तेये या दोषप्रतिपादिकया श्रुत्या च। यथा। यो वै भागिनं भागान्नुदते चयते वैनं स यदि वैनं न चयतेऽथ पुत्रमथ पौत्रं चयत इति। यो भागिनं भागार्हं भागान्नुदते निरस्यति। भागं तस्मै कथञ्चिद्दलाद्वञ्चनया वा न प्रयच्छतीति यावत्। स भागान्नुन्न एवं लोभार् च्चयते नाशयति दोषवशात्। यद्येनं न नाशयति तस्य पुत्रं पौत्रं वा नाशयतीति श्रुतेरर्थः। अन्यज्ञास्तु प्रलपन्तु नाम साधारण

द्रव्यस्यापिपरस्वत्वेनापहारपदार्थनिषायादिष्युक्तमेव। यथामौद्गेचरौविपन्नेषादृश्यात्प्रतिनिधितयामाषेषुगृह्यमाणेषुमुद्गा
वयवबुद्ध्यागृह्यमाणत्वादयज्ञियावैमाषाइतिनिषेधोनप्रवर्त्ततेमुद्गावयवबुद्ध्यागृह्यमाणत्वादितिपूर्वपक्षितेनिषेधस्यप्राप्ति
मात्रापेक्षित्वात्तत्रापिमाषावयवानामप्यवर्जनीयग्रहणंयज्ञसाधनत्वञ्चेतिनिषेधप्रवृत्त्यनपायात्प्रतिनिधितयापितदनुपादानं
सिद्धान्तितम्। राज्ञेतुभागिभिर्न्ननिवेदनीयंराज्ञेनिवेदितमपितेनसामादिनैवदापनीयमितिप्रीत्यविच्छेदादिदृष्टप्रयोजन
कमेवकात्यायनस्त्वाह। बन्धुनापहृतन्द्रव्यम्बलान्नैवप्रदापयेत्। अविभागकालेऽनेनबद्धभुक्तमित्यपिनवक्तव्यंभुक्तमपिराज्ञान्या
ह्यमित्याशयेनाहसएव। बन्धूनामविभक्तानाम्भोगन्नैवनिवर्त्तयेदिति। नहिन्यूनाधिकभोगोवारयितुंशक्योऽवर्जनीयत्वा
दितिभावः। एवंदृष्टार्थतयैवोपपत्तौनास्यापिस्तेयदोषाभावपरत्वमदृष्टार्थत्वापत्तेस्तस्मादत्रापिस्तेयप्रायश्चित्तंराजदण्ड
श्चभवत्येवेत्यवधेयम्॥❀॥ अथाविभाज्यम्। तत्रयोगीश्वरः। पितृद्रव्याविरोधेनयदन्यत्स्वयमर्जितं। मैत्रमौद्वाहिकञ्चैवदा
यादानान्नतद्भवेत्। क्रमादभ्यागतन्द्रव्यंहृतमभ्युद्धरेत्तुयः। दायादेभ्योनतद्दद्याद्विद्ययालब्धमेवच। पितृद्रव्याविरोधेने
तिसर्वशेषः। स्वातंत्र्येपितृद्रव्योपघातेनयन्मैत्रादिकन्तस्याप्यविभाज्यत्वापत्तौमहाजनाचारविरोधोविद्यालब्धेनारदवचन
विरोधश्च। कुटुम्बम्बिभृयाद्भ्रातुर्योविद्यामधिगच्छतः। भागंविद्याधनात्तस्मात्सलभेताश्रुतोपिसन्निति। कात्यायनस्त्वविभा
ज्यविद्याधनलक्षणमुखेनैतदेवदृढयतियथाह। परभक्तोपयोगेनविद्याप्राप्तान्यतस्तुया। तयाप्राप्तन्धनंयत्तुविद्याप्राप्तंतदुच्य
तइति। मनुरपिस्पष्टमाह। अनुपघ्नन्पितृद्रव्यंश्रमेणयदुपार्जयेत्। दायादेभ्योनतद्दद्याद्विद्ययालब्धमेवच। श्रमेणसेवादि
ना। क्रमादभ्यागतायाम्पितृद्रव्याविरोधेनोद्धृतायामपिभूम्याम्विशेषउक्तःशङ्खेन। पूर्वनष्टान्तुयोभूमिमेकश्चेदुद्धरेत्क्रमा
मात्। यथाभागंलभन्तेभ्योदत्वांशन्तुतुरीयकमिति। उद्धर्त्तेचतुर्थांशमुद्धरणमूल्यमधिकन्दत्वांशत्रयंसर्वेसमंविभजेरन्नि
त्यर्थः। यद्यप्येतादृशाविभाज्यत्वंयद्येनलब्धन्तत्तस्यैवेतिन्यायादेवप्राप्तंतथापिप्रायोव्यवहारशास्त्रेन्यायसिद्धानुवादकान्येव

वचनानीतिपरिभाषाप्रकारोक्तप्रायश्चित्तमितिनदोषः। अविभाज्यान्तरमप्युक्तंमनुना। वस्त्रम्पत्रमलङ्कारं कृतान्नमुदकंस्त्रियः। योगक्षेमम्प्रचारञ्चमविभाज्यंप्रचक्ष्यते॥ प्रचक्ष्यतेपत्रम्वाहनम्। वस्त्रादियद्येनधृतन्ततस्यैव। अधृतन्तुविक्रयाद्यर्थे विभाज्यमेव। कृतान्नंपक्वान्नंसर्वैर्यथाप्राप्तिभोक्तव्यंनतुतोलयित्वाविभाज्यम्। उदकमुदकाधारःकूपादिःसर्वैर्यथोपयोगमुपभोज्यः। स्त्रियोदास्योविषमानविभाज्याः। पर्यायेणाकर्म्मकारयितव्याःपित्रवरुद्धास्तुसमाअपिनविभाज्याः। स्त्रीष्ववरुद्धासुनविभागइतिगौतमवचनात्। योगक्षेमशब्दाभ्यामिष्टापूर्त्तेउच्येते। तयोरविभाज्यत्वम्पितृद्रव्यविरोधेनार्जितयोरपिदृष्टान्ततयोच्यते। नहिस्वतःफलतोवातस्यविभागःसम्भवतिपैतृकस्यतुसुतरां। तथाचाहलौगाक्षिः। क्षेममपूर्त्तंयोगमिष्टमित्याहुस्तत्त्वदर्शिनः। अविभाज्येचतेप्रोक्तेशयनासनमेवचेतियोगक्षेमशब्देनतत्कारिणोराजमन्त्रिपुरोहितादयउच्यन्तेइतिकेचित्। शस्त्रचामरोपानत्प्रभृतयइत्यन्ये। प्रचारोगृहारामादिप्रवेशनिर्गममार्गाः। तस्याप्यविभाज्यत्वम्। पितृधृतंवस्त्रादिकंश्राद्धभोक्त्रेदातव्यम्। यथाहवृहस्पतिः। वस्त्रालङ्कारशय्यादिपितुर्य्यद्वाहनादिकम्। गन्धमाल्यैःसमभ्यर्च्यश्राद्धभोक्त्रेतदर्पयेदिति। स्त्रीधृतोप्यलङ्कारोनविभाज्यः। पत्यौजीवतियःस्त्रीभिरलङ्कारोधृतोभवेत्। नतम्भजेरन्दायादाभजमानाःपतन्तितेइति। धृतइत्यनेनाधृतस्यविभाज्यत्वमेव। पत्यौजीवतीत्यनेनपतिजीवनचिह्नतयायत्रदेशेयोधार्य्यतेसनविभाज्यइतिसूचितं। पितृप्रसादलब्धस्यापिनविभागः। पितृप्रसादाद्भुज्यन्तेवस्त्राण्याभरणानिच। भुज्यन्तेइतिवचनादविभाज्यत्वं। तथापितृदत्तस्यापिपितृभ्यांयस्ययद्दत्तन्तत्तस्यैवधनंभवेदितिचस्मरणात्। पितृप्रसाददानप्रीतिदानेश्वयोश्चिन्यानुरोधेनैवज्ञेये। नतुयथाकामं। महाजनाचारविरोधात्। पितृद्रव्याविरोधोपार्जितप्रपञ्चोभूयस्तुशौर्य्यादिविषयमादायस्मृतिवचस्सुदृश्यतेसयन्थविस्तरभियानलिख्यते। अथविभागानधिकारिणः॥●॥ तत्रयोगीश्वरः। क्लीबोथपतितस्तज्जःपङ्गुरुन्मत्तकोजडः। अन्धोऽचिकित्स्यरोगाद्याभर्त्तव्याःस्युर्निरंशकाः। तज्जः। पतितजः। क्लीबान्धौयदिजन्मतआरभ्यतदाविभागानर्हौवे

वयदित्वन्तरा । नष्टात्रष्टपगमश्चेद्दोषधार्दिना । तर्हि दृश्यात्तद्विभागः स्यादायविशोधितादितिरीत्या विभागार्हो वेवेतिध्येयम् । आतुरशब्देनाश्रमान्तरगतपितृद्वेष्युपपातकिबधिरमूकनिरिन्द्रियाणां ग्रहणम् । यथाह वशिष्ठः । अनंशास्त्वाश्रमान्तरगता इति । नारदोपि । पितृद्विट्पतितः षण्डो यश्च स्यादौपपातिकः । औरसा अपि नैते शं लभेरन् क्षेत्रजाः कुत इति । मनुरपि अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा । उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रिया इति । व्याधिना निर्गतमिन्द्रियं यस्य स निरिन्द्रियः ॥ तेनक्लीबोप्युक्तः । कश्चित्तु निरिन्द्रियाः पाणिपादादिहीना इत्याह । एते क्लीबादयोंऽशभाजो न भवन्ति किन्तु ग्रासाच्छादनदानादिना भर्त्तव्याः पोषणीयाः । अभरणे तु महान्दोषः । यथाह मनुः । सर्वेषामपि चैतेषान्दातुन्न्याय्यं मनीषिणा । ग्रासाच्छादनमत्यन्तम्पतितो ह्यददद्भवेदिति । अत्यन्तं यावज्जीवम् । तत्रापि पतितोपपातकिनोर्व्यावृत्प्रायश्चित्ताचरणमनंशित्वम् । औचित्यादिना प्रायश्चित्तमकुर्वतोस्तु निपतनमेव । एतेषां च विभागात्प्रागेव दोषभावेनानंशित्वम् । न पुनर्विभागोत्तरमपि तत्र विभागापहरणप्रमाणाभावात् । पश्चादप्यौषधादिना दोषनिर्हरणेऽस्त्येवांशभागितेति विज्ञानेश्वराचार्य्याः । युक्तञ्चैतत् । दोषप्रयुक्तत्वाद्विभागानर्हतायाः । विभक्तेषु सुतो जातः सवर्णायां विभागभागिति न्यायसाम्यात् । पतितादिषु लिङ्गमविवक्षितमनुपादेयत्वात् । ब्राह्मणो न सुरां पिबेदित्यादिवत् । तेन यथासम्भवं पत्नीदुहितर इत्यादेरप्ययमपवादः । क्लीबादीनामनंशत्वेपि तत्पुत्राणामंशोस्तीत्याह योगीश्वरः । औरसाः क्षेत्रजास्त्वेषां निर्दोषा भागहारिणः । निर्दोषाः पूर्वोक्तानंशत्वप्रयोजकदोषशून्याः । तत्र क्लीबस्य क्षेत्रजपुत्रः सम्भवत्यन्येषामौरसोपि पुत्रद्वयग्रहणमितरपुत्रव्युदासार्थं । पतितस्तु तयोर्न भरणम् । तथा च देवलः । मृते पितरि न क्लीबकुष्ठ्युन्मत्तजडान्धकाः । पतितः पतितापत्यं लिङ्गी दायांशभागिनः । तेषां पतितवर्ज्येभ्यो भक्तं वस्त्रञ्च दीयते । तत्सुताः पितृदायांशं लभेरन्दोषवर्जिता इति । लिङ्गी प्रव्रजितादिः । पतितपदेनात्र पतितसुतस्यापि ग्रहणम्पतितोत्पन्नत्वेन तस्यापि पतितत्वात् । पतितापत्यम्पतितमेवान्यत्र स्त्रियाः सा हि परगामिनी भवतीति स्मृतेः ।

मृतइति विभागकालोपलक्षणं जीवद्विभागेप्यनर्हत्वात् । कात्यायनोपि । अक्रमोढासुतश्चैव सगोत्राद्यश्च जायते । प्रव्रज्यावसि
तश्चैव न रिक्थं तेषु चार्हति । हीनस्त्रीपरिणयानन्तरमुत्तमस्त्रीपरिणयने द्वयोरप्यक्रमोढात्वन्तयोः सगोत्रादनियोगोत्पन्नः प्रे
त्यजः पुत्रो नार्हति धनं । अक्रमोढासुतस्तु क्षीसवर्णा यद्यदा पितुः । असवर्णाप्रसूतस्तु क्रमोढायामपि यो भवेत् । प्रतिलोमप्रसू
तायास्तस्याः पुत्रो न रिक्थभाक् । ग्रासाच्छादनमात्रन्तु देयन्तद्बन्धुभिर्मितम् । बन्धूनामप्यभावे तु पित्र्यन्द्रव्यन्तदाप्नुयात् ।
स्वपित्र्यन्तद्धनम्प्राप्नुन्त्यापनीयान बान्धवाः । क्लीबादीनामपि दारपरिग्रहे सपुत्रसम्भवश्चोक्तो मनुना । यदर्थिता तु दारैः स्यात्
क्लीबादीनां कथञ्चन । तेषामुत्पन्नतन्तूनामपत्यन्दायमर्हति । तन्तुरपत्यं । न च क्लीबादेरुपनयनाभावेन पतितत्वात्कथन्दा
रसम्बन्ध इति वाच्यम् । उपनयनानर्हे तथा चोपनीतशूद्रवत् पतितत्वात् । एतेषां क्लीबादीनां दुहितरो विवाहपर्यन्तं भर्तव्याः
संस्कर्तव्याश्च । नस्त्रियस्तु पुत्ररहिताः साध्व्यो भरणीया अप्रतिकूलाश्चेत् । अन्यथा वहिष्कारणीयाः । तदाह योगीश्वरः ।
सुताश्चैषां प्रभर्तव्या यावद्वै भर्तृसात्कृताः । अपुत्रा योषितश्चैषाम्भर्तव्याः साधुवृत्तयः । निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथै
व च । आपस्तम्बः । अप्रवृत्तिनश्च रिक्थपिण्डोदकानि निवर्तन्ते । अपपात्रितो भिन्नोदकीकृतः । तथा बृहस्पतिः । सवर्णाजोप्य
गुणवान्नार्हः स्यात्पैतृके धने । तत्पिण्डदाः श्रोत्रिया ये तेषां तदभिधीयते । उत्तमर्णाधमर्णेभ्यः पितरं त्रायते सुतः । अतस्त
द्विपरीतेन नास्ति तेन प्रयोजनम् । तया गवा किं क्रियते या न धेनुर्न गर्भिणी । कोर्थः पुत्रेण जातेन यो न विद्वान्न धार्मिकः । शा
स्त्रशौर्यार्थरहितस्तपोज्ञानविवर्जितः । आचारहीनः पुत्रस्तु मूत्रोच्चारसमः स्मृतः । अयमर्थः । पित्रादेरौर्ध्वदेहिककर्म
णः कर्ता सुतोऽसंस्कृतोपि वरः श्रेष्ठः । ज्येष्ठो वेदपारगोप्यपरो न वर इति । पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः ।
तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवेति स्मृतेः पुत्रकर्मकर्तुः पितृधनस्वाम्यमेव चेतनमतस्तदकुर्वतः कुतो वेतनाधिकार इ
ति भावः । मनुरपि । सर्व एव विकर्मस्था नार्हन्ति भ्रातरो धनमिति । श्रौतस्मार्तकर्मानधिकारिणो विकर्माः [illegible] भागानर्हाः ।

इतिभावः । इतिविभागानधिकारिणः ॥●॥ अथविभक्तकृतम् । तत्रनारदः । यद्येकजाताबहवःपृथग्धर्माःपृथक्क्रियाः । पृथक्कर्मगुणोपेतानचेत्कार्य्येषुसंमताः । स्वभागान्यदिदद्युस्तेविक्रीणीयुरथापिवा ॥ कुर्युर्य्यथेष्टन्तत्सर्वमीशास्तेस्वधनस्यहीति । अस्यार्थः । एकस्माज्जाताबहवोभ्रातरोयदिविभक्ताइतिशेषइतिकेचित्वयन्तुपृथग्धर्म्माइत्यादेरेवविभक्ताइत्यर्थः । तद्विधानस्यात्राप्रतीतेरानर्थक्याच्च । पृथग्विभिन्नोधर्मोदैवपितृद्विजार्चनरूपोयेषांनत्वग्निहोत्रादिरूपः । तस्यद्रव्यसाध्यत्वेप्यविभागेपिपृथक्त्वात् । तथाचबृहस्पतिः । एकपाकेनवसतांपितृदेवद्विजार्चनम् । एकम्भवेद्विभक्तानान्तदेवस्याद्गृहेगृहे । एतच्चप्राङ्निरूपितम् । पृथक्क्रियालौकिककृष्यादिरूपायेषांपृथग्विभिन्नायेकर्मगुणाङ्गाङ्गनपेषणादीनांगुणाउपसर्जनभूतामुसलोलूखलदृषदुपलादयस्तेयेषाम् । तेचेत्कार्य्येषुनसंमताःपरस्परमनुमतिंयद्यपिनकुर्वन्ति । तथापितेस्वभागान्यदिदद्युर्विक्रीणीयुर्वा । तत्सर्वमन्यदप्याधीकरणक्रयणादानादियथेष्टंस्वेच्छयाकुर्य्युः । विभक्तायद्यनुमतिंकुर्वन्तिव्यवहारसौकर्य्यमात्रंभवति । अथनकुर्वन्ति । तथापिनदानाद्यनिष्पत्तिः । तत्रहेतुःहियस्मात्तेस्वधनस्यासाधारणस्वत्वापन्नस्यधनस्येशाःस्वामिनः । साधारणेस्वत्वेहिपरस्परानुमत्यपेक्षानत्वसाधरणेपीतिभावः । यत्तुबृहस्पतिनोक्तम् । विभक्तावाऽविभक्तावासपिण्डाःस्थावरेसमाः । एकोह्यनीशःसर्वत्रदानाधमनविक्रयइति । तदप्यविभक्तानुमतिंव्यवहारसौकर्य्यार्थमेवप्रतिपादयतियामाद्यनुमतिवादिन्यत्रसत्यंस्थावरेहिचिरकालस्थापिनियतसाक्ष्यादिविगमेविभागाविभागनिर्णयोदुःशकःस्यात्कालान्तरे । सत्यान्त्वनुमतौविभागनिर्णयानपेक्षएवव्यवहारःसिद्ध्यतिसर्वानुमत्यादत्त्वादित्याशयइतिविज्ञानेश्वरादयोबहवश्चाहुः । स्मृतिचन्द्रिकारस्तुयदिविभक्ताअपिस्थावरविभागंदुष्करंमन्यमानास्तत्फलमेवफलकालेविभज्यभोक्ष्यामइत्यभिसन्धिनानादितरधनमेवपृथक्विभज्यगृहीत्वास्थावरंमध्यकमेवस्थापयन्तितादृशस्थावरविषयमिदमित्याह । तत्कल्पनामात्रम् । अविभक्तत्वादेवतत्रानुमत्यपेक्षणात् । सएवयेनांशोयादृशोलब्धःप्राप्य

न्नविषालयेदिति। प्राप्यस्त्रीकृत्य। विभागकाले मत्वा पश्चाद्विप्रतिपद्यमानो राज्ञा वारणीयोऽन्यायहेतद्राज्ञस्तेन्या हृ सएव।
स्वेच्छागतविभागो यः पुनरेव विसंवदेत्। सराज्ञांशे स्वके स्थाप्यः शासनीयोनुबन्धकृत्। अनुबन्धो निर्बन्ध आग्रह इतियावत्।
इति विभक्तकथ्यम् ॥०॥ अथ विभागप्रकारे उक्ते तत्सन्देहे निर्णयप्रकार उच्यते। तत्र याज्ञवल्क्यः ॥ विभागनिह्नवे ज्ञातिबन्धुसा
क्ष्यभिलेखितैः। विभागभावनाज्ञेया गृहक्षेत्रैश्च यौतकैः। विभागस्य निह्नवेऽपलापे विभक्तमध्ये केनचित्कृते ज्ञातिभिः पितृबन्धु
भिः। बन्धुभिर्मातुलादिभिः साक्षिभिश्चोदासीनैः साक्षिलक्षणलक्षितैः। यद्यपि ज्ञातिबन्धवोपि साक्षिविधयैव निर्णयकारणा
थापि बहिरङ्गसाक्ष्यपेक्षयान्तरङ्गास्ते भ्रात्रादिपृथग्भावरूपविभागचिह्नतत्त्वज्ञातिभागकर्त्तारश्चेति गोबलीवर्द्दन्यायेन पृथगु
पात्ताः। लेख्येन विभागपत्रेण च विभागस्य भावमानिर्णयो ज्ञातव्यः। तथा यौतकैः पृथक्कृतैः। युगिश्र्यामिश्रयोरितिधात्वनुसा
रात्। गृहैः क्षेत्रैश्च। नारदः। विभागधर्मसन्देहे दायादानां विनिर्णयः। ज्ञातिभिर्भागलेख्येन पृथक्कार्य्यप्रवर्त्तनात्। ज्ञावि
ग्रहणानेषु सत्स्वन्यसाक्षिपुरस्कार इत्येतदर्थम्। कार्य्यं कृष्यादि तस्य पृथक्प्रवर्त्तनात्। शङ्खः। गोत्रभागविभागार्थे सन्देहे
समुपस्थिते। गोत्रजैस्तत्प्रविज्ञाते कुलं साक्षित्वमर्हति ॥ कुलं बन्धवो मातुलादयः। अत एव नारदेन मुख्यत्वाज्ज्ञातय एव निर्दि
ष्टाः। ज्ञातृभिरिति पाठस्तु रत्नाकरः पुरातनपुस्तकेषु निबन्धेषु चादर्शनात्। लिखितन्तु साक्षिभ्यो बलवदिति परिभाषायां निरू
पितम्। नारदः। दानग्रहणपश्वन्नगृहक्षेत्रपरिग्रहाः। विभक्तानां पृथग्ज्ञेयाः पाकधर्मागमव्ययाः। साक्षित्वम्प्रतिभाव्यञ्च
दानं ग्रहणमेव च। विभक्ता भ्रातरः कुर्युर्नाविभक्ताः कथञ्चन। येषामेताः क्रिया लोके प्रवर्त्तन्ते स्वरिक्थतः। विभक्तानवगच्छेयु
र्लेख्यमप्यन्तरेण तान्। धर्म्मो वैश्वदेवादिः एकपाकेन वसतामिति प्रागुक्तवचनात्। भ्रातॄणामविभक्तानामेको धर्म्मः प्रवर्त
ते। विभागे सति धर्म्मोपि भवेत्तेषां पृथक्पृथगिति नारदेनैवोक्तत्वाच्च। बृहस्पतिः। साहसं स्थावरं न्यासः प्राग्विभागश्च रिक्थि
नाम्। अनुमानेन विज्ञेयं न स्यातां यत्र साक्षिणौ। न स्यातामित्यत्र यदीत्यध्याहारः। पृथगायव्ययधनाः कुसीदञ्च परस्परम्।

वणिक्पथस्थुयेकुर्य्युर्विभक्तास्तेनसंशयः। आयोव्ययोधनञ्चपृथग्येषामितिविग्रहः कुसीदं वृद्ध्यर्थे धनप्रयोगः। वणिक्पथो वाणि
ज्यम्। परस्परमिति। एकोभ्रातोत्तमर्णःपरस्त्वाधमर्णः। एकोविक्रीणीतेपरस्तु क्रीणाति। इत्येवमादिभिर्लिङ्गैर्विनावि
भागमनुपपद्यमानैर्विभागःप्रमातव्य इत्यर्थः। एताः क्रियाइतिबहुवचनान्निर्दिष्टानामेवैषां लिङ्गत्वमितिनभ्रमितव्यम्। वस्तु
समस्तानामपि तद्विधानात्। न्यायमूलकत्वाच्च वचनस्य अनुमानेनाप्यनिर्णये दिव्येश्शपथैस्तु विषयाल्पत्वभूयस्त्वानुसारे
णानिर्णयः। युक्तिष्वप्यसमर्थासु शपथैरेनमर्हयेदितिपरिभाषायांनिरूपितव्यँत्वनुमानुषंनिर्णायकत्वात्तियुक्त्यभावात्
। दिव्यशपथाध्यवसायस्यान्यतरस्यनभवति। तत्रपुनर्विभागःकार्य्यइत्याह मनुः। विभागेयत्रसन्देहोदायादानाम्परस्प
रम्। पुनर्विभागःकर्त्तव्यःपृथक्स्थानस्थितैरपीति। सचपरिशेष्योभयव्ययमित्यादिसंसृष्टिविभागादिरीत्यानुसन्धेयम्
। यच्चमनुनैवोक्तम्॥ सकृदंशोनिपततिसकृत्कन्याप्रदीयते। सकृदाहददानीतित्रीण्येतानिसकृत्सकृदिति। तत्सकृत्त्वमिद्का
रणाभावे। कन्यादानदानान्तरयोरप्येवम्। इतिविभागसन्देहेनिर्णयः॥ समाप्तञ्चेदन्दायभागाख्यंविवादपदम्॥ ० ॥
अथद्यूतसमाह्वयाख्यंव्यवहारपदम्। तस्यस्वरूपमाहनारदः। अक्षवध्रशलाकाद्यैर्देवनंजिह्मकारितम्। पणक्रीडावयो
भिश्चपदंद्यूतसमाह्वयमिति। अक्षाःपाशाः। वध्रश्चर्म्मपट्टिका। शलाकादन्तादिमय्योदीर्घचतुरस्राः। आद्यग्रहणाच्चतुरं
गादिक्रीडासाधनंकरितुरङ्गरथादिकंगृह्यते। तैरप्राणिभिर्य्योपणपूर्विकाक्रिया। तथावयोभिःपक्षिभिःपारावतादिभिःच
शब्दान्मल्लमेषादिभिश्चप्राणिभिर्योपणपूर्विकाक्रीडाक्रियतेतदुभयंयथाक्रमंद्यूतसमाह्वयाख्यंव्यवहारपदमित्यर्थः। द्यूत
ञ्चसमाह्वयश्चद्यूतसमाह्वयम्। अतएवमनुः। अप्राणिभिर्यत्क्रियतेतल्लोकेद्यूतमुच्यते। प्राणिभिःक्रियमाणस्तुसविज्ञेयः
समाह्वयइतिः। तत्रसभिकंप्रत्याहनारदः। सभिकःकारयेद्यूतंदेयंदेयाच्चतत्कृतम्। दशकन्तुशतंवृद्धिस्ततःस्याद्यूतकारि
णा॥ अथवाकितवोराज्ञेदत्वाचाभंयथोदितम्। प्रकाशन्देवनंकुर्य्यादेवन्दोषोनविद्यतइति। तस्यवृत्तिमाहयाज्ञवल्क्यः। ग्ल

द्विशतिकवृद्धेस्तु सभिकः पञ्चकं शतम्। गृह्णीयाद्धूर्त्तकितवादितराद्दशकं शतमिति। परस्परं सम्प्रतिपत्त्या कितवैः परिकल्पितः पणो ग्लहः तत्र ग्लहे तदा श्रयाशतिकाशतपरिमितात् तदधिकपरिमिताद्वा वृद्धिर्यस्यासौ शतिकवृद्धिः तस्मात्कितवात्पञ्चशतांशं तत्स्य ग्लहस्यात्मवृत्त्यर्थं विंशतितमभागं गृह्णीयादित्यर्थः। पञ्चकं शतं पञ्च पणा आयो यस्मिन् शते तत्पञ्चकं तदस्मिन्वृद्ध्येतिकन्॥ सभा कितवनिवासार्था यस्यास्त्यसौ सभिकः सभापतिस्तु कल्पिताक्षादिनिखिलक्रीडोपकरणस्तदुपचितद्रव्योपजीवी। इतरस्माद्पूर्णशतवृद्धेः कितवाद्दशकं शतं तच्छतस्य दशमभागं गृह्णीयादित्यर्थः। एवं क्लृप्तवृत्तेः सभिकस्य यत्कर्त्तव्यं तदाह स एव। स सम्यक्पालितो दद्यात् राज्ञे भागं यथाकृतम्। जितमुद्ग्राहयेज्जेत्रे दद्यात्सत्यं वचः क्षमीति। यः क्लृप्तवृत्तिर्द्यूताधिकारी स राज्ञा धूर्त्तकितवेभ्यो रक्षितस्तस्मै राज्ञे यथा प्रतिपन्नमंशं दद्यात्। तथा जितं द्रव्यं पराजितसकाशादासेधादिना उद्ग्राह्य जेत्रे जयिने दद्यात्। तथा क्षमी भूत्वा द्यूतकारिणो विश्वासार्थं सत्यं वचो वदेदित्यर्थः। नारदोऽपि। सभिकः कारयेद्द्यूतं देयं दद्याच्च तत्कृतमिति। बृहस्पतिरपि। सभिको ग्राहकस्तत्र दद्याज्जेत्रे त्वपायवेति द्यूतपराजितकितवानां बन्धनादिना पणग्राहको भवेत्। पणग्रहणात्प्रागेव स्वकीयं द्रव्यं चेन्तपायच यथाभागं सभिको दद्यादित्यर्थः। तथा च कात्यायनः। जेतुर्दद्यात्स्वकं द्रव्यं जितं ग्राह्यं त्रिपक्षिकम्। सद्यो वा कितवेनैव सभिकानु न संशय इति। त्रिपक्षिकमित्यनेन यथासामर्थ्यमा त्रिपक्षात्कालो देय इति दर्शितमिति स्मृतिचन्द्रिकायाम्। यदा तु जेत्रे जितं द्रव्यं सभिको दापयितुमशक्तस्तदा राजा दापयेदित्याह याज्ञवल्क्यः। प्राप्ते नृपतिना भागे प्रसिद्धे धूर्त्तमण्डले। जितं ससभिके स्थाने दापयेदन्यथा नत्विति। प्रसिद्धे अन्यथा प्रच्छन्ने सभिकरहितेऽदत्तराजभागे द्यूते जितपणो जेत्रे न दापयेदित्यर्थः। प्राणिद्यूते प्राणिनाश्वस्य पराजये तत्स्वामिनोरित्याह बृहस्पतिः। द्वन्द्वयुद्धेन यः कश्चिद्वसादमवाप्नुयात्। तत्स्वामिना पणो देयो यस्तत्र परिकल्पित इति। पणापरिकल्पनं कृतनाकृतमित्याह नारदः। परिहासकृतं व्यर्थं यच्चाप्यविदितं नृपे। तथापितान्नुयात्काममथवानुमतं तयोरिति। काम्यत इति कामः पणः। अजजयपराजयविप्रतिपत्तौ निर्णयप्र

कारमाह याज्ञवल्क्यः । द्रष्टारो व्यवहाराणां साक्षिणश्च त एव हीति । द्यूतव्यवहाराणां द्रष्टारः सभ्याः त एव कितवा एव नियोक्तव्या रा
ज्ञा । न तत्र श्रुताध्ययनसम्पन्नादिरूपाद्युक्तनियमोऽस्ति । साक्षिणोऽपि त एव द्यूते द्यूतकरा एव कार्याः न तत्र स्त्रीबालवृद्धकितवेत्यादि
साक्षिनिरूपणोक्तनिषेधोऽस्तीत्यर्थः । विष्णुरपि । कितवेष्वेव तिष्ठेरन् कितवाः संशयं प्रति । य एव तत्र द्रष्टारस्त एवैवानुसा
क्षिण इति । साक्षिणाम्परस्परविरोधे त्वाह बृहस्पतिः । उभयोरपि सन्दिग्धौ कितवाः स्युः परीक्षकाः । यदा विद्वेषिणस्ते तु
तदा राजा विचारयेदिति । अनियुक्तद्यूतकारिणो दण्डमाह नारदः । अनिर्दिष्टस्तु यो राज्ञा द्यूतं कुर्वीत मानवः । न स तत्प्राप्नुया
त्कामं विनयं चैव सोऽर्हतीति । ये तु कूटं द्यूतं कुर्वन्ति तेषां दण्डमाह याज्ञवल्क्यः । राज्ञा सचिह्नं निर्वास्याः कूटाक्षोपधिदेविन इति
। कूटैरक्षादिभिः उपधिना मणिमन्त्रादिना मतिवञ्चनेन ये दीव्यन्ति तान् श्वपदादिनाङ्कयित्वा राजा स्वराष्ट्रान्निर्वासयेदि
त्यर्थः निर्वासने विशेषमाह नारदः । कूटाक्षदेविनः पापान् राजा राष्ट्राद्विवासयेत् । कण्ठेऽक्षमालामासज्य स ह्येषां विनयः स्मृत इ
ति दण्डने विशेषमाह विष्णुः । द्यूते कूटाक्षदेविनां करच्छेदः । उपधिदेविनां साच्छेद इति । यानि तु द्यूतनिषेधकानि मनुवच
नानि । द्यूतं समाह्वयं चैव यः कुर्यात्कारयेत वा । तान् सर्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः । प्रकाशमेतत्तास्कर्यं यद्देवन
समाह्वयौ । तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान् भवेत् । द्यूतं समाह्वयं चैव राजा राष्ट्रे निवारयेदित्यादीनि तानि कूटाक्षदेवनवि
षयतया राजाध्यक्षसभिकरहिततया वा योज्यानि । अत एव बृहस्पतिः । द्यूतं निषिद्धं मनुना सत्यशौचधनापहम् । अभ्यनु
ज्ञातमन्यैस्तु राजभागसमन्वितम् । सभिकाधिष्ठितं कार्यं तस्करज्ञानहेतुनेति । याज्ञवल्क्योऽपि । द्यूतमेकमुखं कार्यं तस्क
रज्ञानकारणादिति । राज्ञा द्यूतं एकं मुखं प्रधानं यस्य तत् तथोक्तं कार्यम् । राजाध्यक्षाधिष्ठितं राज्ञा कारयितव्यमित्यर्थः । त
स्करज्ञानकारणात् । ल्यपलोपे पञ्चमी । तस्करज्ञानरूपं प्रयोजनं पर्यालोच्येत्यर्थः । प्रायशश्चौर्यार्जितधना एव कितवा भ
वन्त्यतश्चौरविज्ञानार्थमेकमुखं कार्यमित्याशयः । द्यूते विहितं धर्मं जातं समाह्वये अतिदिशति स एव । एष एव विधिर्ज्ञेयः प्रा

शिष्टाद्यूते समाह्वये इति । सभिकवृत्तिकल्पनादिलक्षणो धर्मः समाह्वयेपीत्यर्थः । इति द्यूतसमाह्वयाख्यं व्यवहारपदम् ॥ इ
ति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकमलश्रीमन्महाराजाधिराजप्रतापरुद्रतनूजश्रीमन्म
हाराजमधुकरसाहसूनुश्रीमन्महाराजाधिराजचतुरुदधिवलयवसुन्धराहृदयपुण्डरीकविकासदिनकरश्रीवीरसिंहदेवो
द्योजितश्रीहंसपण्डितात्मजश्रीपरशुरामसूनुसकलविद्यापारावारपारीणधुरीणजगद्दारिद्र्यमहागजपारीन्द्रवि
द्वज्जनजीवातुश्रीमन्मित्रमिश्रकृते वीरमित्रोदयाभिधनिबन्धे व्यवहारप्रकाशे समाप्तमष्टादशविवादपदनिरूपणाख्यं तृती
यम्प्रकरणम् ॥ ● ॥ अथ प्रकीर्णकाख्यं चतुर्थम्प्रकरणमारभ्यते ॥ तत्र बृहस्पतिः । एषवादिकृतः प्रोक्तो व्यवहारः समास
तः ॥ नृपाश्रयम्प्रवक्ष्यामि व्यवहारं प्रकीर्णकमिति । तल्लक्षणभेदावाह नारदः । प्रकीर्णके पुनर्ज्ञेया व्यवहारा नृपाश्रयात्
॥ राज्ञामाज्ञाप्रतीघातस्तत्कर्म्मकरणन्तथा । पुरः प्रमाणं सम्भेदः प्रकृतीनान्तथैव च । पाषण्डनैगमश्रेणिगणधर्मविपर्य
याः । पितापुत्रविवादश्च प्रायश्चित्तव्यतिक्रमः । प्रतिग्रहविलोपश्च कोपश्चाश्रमिणामपि । वर्णसंकरदोषश्च तद्वृत्तिनियम
स्तथा । नदृष्टं यच्च पूर्वेषु सर्वन्तत्स्यात्प्रकीर्णकमिति । प्रतीघातोभङ्गः । तत्कर्म्म । सिंहासनारोहणादिराजकर्म । पाष
ण्डादयः पूर्वमेव व्याख्याताः । प्रकीर्णके विवादपदे ये विवादास्तआज्ञोल्लंघनतदाज्ञाकरणतत्कर्मरक्षणादिविषयास्तेन्नपस्व
मवायिन एव । तत्र स्मृत्याचारव्यपेतेन मार्गेण वर्त्तमानानाम्प्रतिकूलतामासाद्य नृप एव व्यवहारनिर्णयं कुर्य्यात् । एवमवदता
योन्नपाश्रयो व्यवहारस्तत्प्रकीर्णकमित्युक्तम्भवति । विषयविशेषे दण्डविशेषमाह याज्ञवल्क्यः । न्यूनं वाभ्यधिकं वापि लिखेद्यो
राजशासनम् । पारदारिकचौरं वा मुञ्चतो दण्ड उत्तमः । यो राजदत्तभूमिनिबन्धयोर्मध्येऽन्यतरस्य परिमाणात्न्यूनत्वाधि
क्यान्यतरात्प्रकाशयन् राजशासनत्वेन लिखति । यश्च पारदारिकचौरं वा गृहीत्वा राज्ञेऽनिवेद्य मुञ्चति तावुभावप्युत्तमसाहसं
दण्डनीयावित्यर्थः । व्यासोपि । न्यायस्थाने गृहीत्वार्थमधर्मेण विनिर्णयम् । कुर्वन्त्युत्कोचकास्तेतु सभ्याद्रव्यविनाशकाः । क

कोषजीविनो द्रव्यहीनान्हत्वा विवासयेदिति । राज्ञः कोशापहरणे दण्डमाह मनुः । राज्ञः कोशापहर्तॄंश्च प्रतिकूलेषु च स्थि-
तान् । घातयेद्विविधैर्दण्डैर्हरेत्सर्वस्वमेव चेति । सर्वस्वहरणं साधारणं यद्वृत्त्युपजीवनोपकरणं तदतिरिक्तविषयम् ।
अत एव नारदः । आयुधानायुधीयानां वीजानि कृषिजीविनाम् । यच्च यस्योपकरणं येन जीवन्ति जीविकाम् । सर्वस्वहर-
णेऽप्येतन्न राजा हर्तुमर्हतीति । वधस्थाने मौण्ड्यं ब्राह्मणस्य कर्तव्यमित्याह मनुः । ब्राह्मणस्य वधो मौण्ड्यं पुरान्निर्वासनाङ्कने ।
ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेन चेति । तत्कर्मकरणे दण्डमाह याज्ञवल्क्यः । राजयानासनारोहे दण्डो मध्यमसा-
हस इति । कात्यायनोऽपि । राजक्रीडासु ये सक्ता राजवृत्त्युपजीविनः । अप्रियस्य च वक्ता च वधं तेषां प्रकल्पयेदिति । शू-
द्राणां प्रव्रज्यादिकरणे दण्डमाह स एव । प्रव्रज्यावसितं शूद्रं जपहोमपरं तथा । वधेन शासयेत्पापं दण्ड्यो वा द्विगुणं दम-
मिति । धर्मशास्त्रानुसारेण व्यवहारदर्शिनो राज्ञः फलमाह यमः । एवं धर्मप्रवृत्तस्य राज्ञो दण्डधरस्य च । यशोऽस्मिन्प्रथते
लोके स्वर्गे वासस्तथाक्षय इति ॥ ● ॥ इति प्रकीर्णकाख्यं चतुर्थं प्रकरणं समाप्तम् ॥ ● ॥ प्रत्याशम्पार्थिववर्द्धितेऽर्थिजनतानन्दे
न्यान्धकारापहे श्रीमद्वीरमृगेन्द्रशासनजलधिप्रोद्भूतचन्द्रोदये । राज्ञादेशितमित्रमिश्रविदुषस्तस्योक्तिभिर्निर्मिते ग्रन्थेऽस्मि-
न्व्यवहारजातविषयः पूर्णः प्रकाशोऽभवत् ॥ ● ॥ इति श्रीमत्सकलसामन्तचक्रचूडामणिमरीचिमञ्जरीनीराजितचरणकमल-
श्रीमन्महाराजाधिराजप्रतापरुद्रतनुजश्रीमन्महाराजमधुकरसाहसूनुश्रीमन्महाराजाधिराजचतुरुदधिवलयवसुन्धराहृ-
दयपुण्डरीकविकासदिनकरश्रीवीरसिंहदेवोद्योजितश्रीहंसपण्डितात्मजश्रीपरशुराममिश्रसूनुसकलविद्यापारावारपा-
रीणधुरीणजगद्दारिद्र्यमहागजपारीन्द्रविद्वज्जनजीवातुश्रीमन्मित्रमिश्रकृते वीरमित्रोदयाभिधनिबन्धे व्यवहारप्रका-
शः पूर्तिमगम् ॥ ● ॥ इति श्रीव्यवहारकाण्डं समाप्तम् ॥ ● ॥ शुभमस्तु ॥ * ॥

शाकेमुन्यग्निसप्तेन्दुसम्मितेवत्सरेशुभे । पक्षाद्रिवसुभूमानेविक्रमादित्यवत्सरे ॥ शाके १७३७ ॥ सम्वत १८७२ ॥

भूयुग्मदृष्टिधरणीसम्मितेयवनाह्वके । चैत्रिकस्यासितेपक्षेपञ्चम्यांगुरुवासरे ॥ सन १२२१ साल ॥

साब्धधरावसुचन्द्रले थोमनेमतारीख । मारिचमाहवखानियेई सबौगुरुसोमीख ॥

सन १८१५ ईसवी ॥ तारिख ३० मार्च ॥

श्रीमत्सम्राटमहाधिराजनृपतेराज्ञांसमादायतम् । सद्व्याख्यासहितन्विवेकनिपुणंश्रीवीरमित्रोदयम् ॥

श्रीचूडामणिमैथिलाकृतिवरान्संशोध्यसच्चीयुतंवाबूरामसुधीर्हितायविदुषामुद्राक्षरैर्लेखयत् ॥ ३ ॥

॥ संस्कृतयन्त्रे खिदिरपुरे श्रीमदनपालेनाङ्कितम् ॥

॥ अथमित्रमिश्रकृतवीरमित्रोदयस्यसूचीपत्रम् ॥

॥ इति वीरमित्रोदयस्य सूचीपत्रम् ॥



॥ अथ वीरमित्रोदयस्याशुद्धिपत्रम् ॥

| पत्र | पृष्ठ | पङ्क्ति | अशुद्ध | शुद्ध | पत्र | पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|---|---|---|---|---|
| २ | १ | ५ | इयं | इदं | ६ | २ | १२ | सान्य | सामान्य |
| २ | २ | ८ | लेखप् | लेखाप् | ८ | २ | १२ | बर्णी | बर्णा |
| ३ | १ | १३ | केवर्थः | कोप्यर्थः | ९ | १ | १३ | स्युदा | न्यदा |
| ३ | २ | ७ | न्याप्य | न्याय्य | १० | २ | १३ | नृपे | नृपे |
| ४ | १ | १ | विश्वे | विशे | ११ | १ | १० | अम्वे | अवे |
| ४ | २ | ५ | वृत्त | वृत्त | ११ | १ | १४ | गृक | गृहंक |
| ५ | १ | १० | गक | गच्छ | १३ | १ | १ | तद्रष्ट | मद्रष्ट |
| ५ | २ | ६ | मग्नि | अग्नि | १४ | १ | २ | धिक्तद | धिकृद |
| ६ | १ | ५ | योख्या | योया | १४ | २ | ७ | रज्ञा | रज्वा |

| | | | | |
|---|---|---|---|---|
| १५ | २ | १० | माति | मानि |
| १६ | १ | ४ | युत्वा | युक्त्वा |
| १६ | १ | ११ | गाधान्य | गाधप |
| १६ | २ | १६ | ऊसोर्म्मु | ऊन्मुखो |
| २१ | १ | ३ | चनुभि | चनुर्भि |
| २२ | १ | १३ | ज्ञाव | ज्ञाव |
| २४ | २ | १ | कारब्रोन्त | कारब्रोन |
| २५ | १ | ८ | योः | योऽर्थः |
| २५ | १ | १६ | ऊमसन्त | ऊमरेन |
| २६ | १ | ८ | ह्याधार | ह्याधार |
| २७ | १ | १३ | नूप्रति | नुप्रति |
| ३१ | १ | १६ | सम्यादी | सभ्यादी |
| ३१ | २ | ६ | र्दिशेत् | निर्दिशेत् |
| ३२ | १ | ७ | ग्रारोया | ग्रारोप्या |
| ३३ | १ | ८ | यादि | याह्रादि |
| ३८ | २ | १० | कायनौ | कात्यायनौ |
| ३७ | १ | ४ | सपश | सपक्ष |

| | | | | |
|---|---|---|---|---|
| ३७ | २ | ३ | नियतञ्चा | नियताञ्चा |
| ४२ | २ | ७ | संभवना | संभावना |
| ४३ | २ | ११ | सद्य्:तते | सद्योतीते |
| ४४ | १ | ३ | बष्टस्ते | बष्टभ्यस्ते |
| ४४ | १ | १० | साहस्तेषु | साहसेषु |
| ४४ | २ | १६ | दर्शनं | दर्शनं |
| ४५ | १ | ७ | दुच्छया | यदृच्छया |
| ४५ | १ | १३ | प्रवया | अवया |
| ४० | २ | २ | याचि | याचितम् |
| ४७ | १ | १० | क्षुत् | क्षुत् |
| ५० | १ | ५ | व्याख्यानस्य | व्याख्यानस्य |
| ५१ | १ | २ | यथिके | यथिके |
| ५२ | १ | १० | वासस्य | वासस्य |
| ५२ | २ | ७ | यद्वयो | यद्वयो |
| ५४ | २ | ३ | रिंग्रके | रिंग्राले |
| ५५ | १ | २ | प्रयार्थे | प्रत्ययार्थे |
| ५६ | २ | ६ | ननुद्दे | ननुनद्दे |

| ५७ | २ | १० | निगदस | निगदनब |
|---|---|---|---|---|
| ५८ | २ | १ | नधर्म्मी | योऽधर्म्मी |
| ५९ | १ | ७ | वेड्या | व्वेदंड्या |
| ६१ | १ | १२ | कश्चैव | कश्चैव |
| ६१ | २ | १३ | दृष्ट्व | दृष्ट्व |
| ६१ | २ | १४ | दृष्टारः | द्रष्टारः |
| ६९ | १ | ७ | विरुयां | विरुद्धं |
| ७० | १ | ११ | भिधया | विधया |
| ७० | २ | १ | वाक्या | वाक्या |
| ७० | २ | ४ | वोप्र | वोप्तं |
| ९७ | १ | ५ | म्यगन्त | म्यवगन्त |
| ११२ | २ | ९ | पिशः | पिसः |
| १२२ | २ | ५ | याज्ञल्क्यः | याज्ञवल्क्यः |
| १२९ | १ | ८ | नश्येनु | नश्येयु |
| १३४ | २ | ११ | विक्रिया | विक्रीया |

| १४८ | १ | ११ | रज्ञा | रज्ज्वा |
|---|---|---|---|---|
| १५९ | १ | ९ | भार्याया | भार्या |
| १६२ | २ | १ | स्वाम्य | स्वार्थे |
| १६२ | २ | १६ | भवाद | भवाद्य |
| १६५ | १ | ५ | वियोगाज्य | विनियोज्य |
| १६६ | २ | १६ | ह्यानेहि | दानेहि |
| १७० | १ | ११ | पादि | पाति |
| १७१ | १ | १४ | केषाञ्चि | केषाञ्चि |
| १७२ | २ | ३ | सम्नि | समम्नि |
| १७५ | १ | १६ | स्वस्ये | स्वस्वस्ये |
| १७७ | २ | १४ | दिष्टं | दिष्ट |
| १८८ | २ | १६ | पार्त्र्य | पारतन्त्र्य |
| २१३ | २ | १४ | धात्रा | भ्रात्रा |
| २२० | २ | ११ | ज्ञातु | ज्ञातु |
| २२१ | १ | १० | स्वएव | अतएव |

‖ इतिवीरमित्रोदयस्याशुद्धिपत्रं समाप्तम् ‖

*~*~*~*

